सर्वसंस्कारा इति या वासना स्थिरा । स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते । प्रत्यक्षमनुमानञ्च प्रमाणद्वितयं तथा । चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः । अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते । सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः । आकारसहिता बुद्धिर्योगाचारस्य सम्मता । केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः । रागादिज्ञानसन्तानवासनाच्छेदसम्भवा । चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्त्तिता । कृत्तिः कमण्डलुर्मौण्ड्यं चीरं पूर्वाह्णभोजनम् । सङ्घो रक्ताम्बरत्वञ्च शिश्रिये बौद्धभिक्षुभिरिति” ।

बुद्धगया स्त्री (बुधगया) प्रसिद्धे कीकटस्थे बुद्धानां गयाभेदे ।

बुद्धद्रव्य न० स्तौपिके स्तूपीकृते द्रव्ये त्रिका० ।

बुद्धधर्म्म पु० ६त० । बुद्धानामहिंसादौ धर्मे ।

बुद्धपुराण न० बुद्धस्याविर्भावादिज्ञापके पुराणभेदे ।

बुद्धान्त पु० बुध–भावे क्त तस्यान्तः परिच्छेदः । जीवस्यावस्थाभेदे जाग्रदवस्थायाम् शत० ब्रा० १४ । ७ । १ । १८ ।

बुद्धि स्त्री० बुध-क्तिन् । १ज्ञाने, २सांख्योक्ते सुखदुःखाद्यष्टविधधर्मयुते प्रकृतिपरिणामभेदे “महत्तत्त्वमिति प्रोक्तं बुद्धितत्त्वं तदुच्यते” सां० प्र० भा० धृतवाक्यम् । वेदान्तोक्ते निश्चयात्मकवृत्तियुते ३अन्तःकरणे च । “मनोबुद्धिरहङ्कारश्चित्तं करणमान्तरम् । संशयो निश्चयो गर्वः स्मरणं विषया अमी” वेदान्तप० ४धर्मपत्नीभेदे भा० आ० ६६ अ० । कणा० सूत्रोपस्कारवृत्तौ सांख्यमतसिद्धमहत्तत्त्वरूपबुद्धितत्त्वनिराकरणेन बुद्धेर्ज्ञानपर्य्यायता तद्भेदाश्चोक्ता यथा “द्रव्येषु ज्ञानं व्याख्यातम्” सू० “विषयेण विषयिणं तृतीयाध्यायस्थमुपलक्षयति । “इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः” “आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्यत्” इत्येताभ्यां सूत्राभ्यां ज्ञानं व्याख्यातमित्यर्थः” । तत्र “बुद्धिरुपलब्धिर्ज्ञानं प्रत्यय इति पर्य्यायाः” गौ० सू० समानतन्त्रे बुद्धिलक्षणे साङ्ख्यमतनिरासार्थं पर्य्यायाभिधानम् । साङ्ख्या हि बुद्ध्यादिशब्दानामर्थभेदमाचक्षते तथा हि सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, सा चैकैव पुरुषास्तु परं भिद्यन्ते ते च कूटस्था नित्या अपरिणामिनो नित्यचैतन्यस्वभावाः ते च पङ्गवोऽपरिणामित्वात् प्रकृतिस्त्वन्धा जड़त्वात् यदा विषयभोगेच्छा प्रकृतिपुरुषभेददिदृक्षा च प्रकृतेर्भवति तदा सा पुरुषोपरागवशात् परिणमेत् तस्याश्चाद्यः परिणामो बुद्धिरन्तःकरणविशेषः बुद्धिरेव महत्तत्त्वं तदुक्तम् “प्रकृतेर्महान्” इति सां० सू० । सा च बुद्धिस्त्रिगुणविकारा तस्याश्च बहिरिन्द्रियप्रणाडिकया विषयाकारो यः परिणतिभेदो घट इति पट इत्याद्याकारस्तज्ज्ञानं वृत्तिरिति चाख्यायते स्वच्छायां बुद्धौ वर्त्तमानेन ज्ञानेन चैतन्यस्य पुरुषस्य भेदाग्रहादहं जानामीति योऽभिमानविशेषः सैवोपलब्धिः । स्रक्चन्दनादिविषयसन्निकर्षादिन्द्रियप्रणाडिकयैव सुखदुःखाद्याकारो बुद्धेरेव यः परिणामविशेषः स प्रत्ययः । अतएव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्म्माऽधर्माः सर्व एव बुद्धेः परिणामविशेषाः सूक्ष्मात्मना प्रकृतावेव वर्त्तमाना अवस्थाभेदादाविर्भवन्ति तिरोभवन्ति च । पुरुषस्तु पुष्करपलाशवन्निर्लेपः प्रतिबिम्बते परं बुद्धाविति यन्मन्यन्ते । तदनेन पर्य्यायाभिधानसूचितप्रमाणेन निराक्रियते तथा हि बुद्धिशब्दो यदि बुध्यतेऽनयेति करणव्युत्पन्नस्तदा मन एव तत्पर्य्यवस्यति नच मनः प्रत्यक्षम् बुद्धिस्त्वहं बुध्ये इति प्रत्यक्षवेद्यैव । नचान्तःकरणस्य ज्ञानाद्याधर्माः कर्त्तृधर्मत्वेनैव तेषां सिद्धेः भवति हि अहं जाने अहं प्रत्येमि अहमुपलभे इत्यहङ्कारसामानाधिकरण्येन प्रतिभासः । अभिमानोऽसाविति चेत् तात्त्विकत्वे बाधकाभावात् । पुरुषस्यागन्तुकधर्माधारत्वं कूटस्थत्वं तदेव बाधकमिति चेन्नागन्तुकधर्माधारत्वेऽपि नित्यत्वसम्भवात् न हि धर्मी धर्मश्चेत्येकं तत्त्वं येन धर्मोत्पादविनाशाभ्यां धर्म्युत्पादविनाशौ स्यातां तथा च स एव चेतयते स एव बुध्यते जानात्युपलभ्यते प्रत्येति चेति नार्थान्तरकल्पना युक्तेति दिक् । तच्च ज्ञानं द्विविधं विद्या चाविद्या च विद्या चतुर्विधा प्रत्यक्षलैङ्गिकस्मृत्यार्षलक्षणा । अविद्याऽपि चतुर्विधा संशयविपर्य्ययस्वप्नानध्यवसायलक्षणा । तत्र यल्लैङ्गिकं तदनिन्द्रियजम् कुतस्तदित्याह” उप० वृ० । “तत्रात्मा मनश्चाप्रत्यक्षे” कणा० सू० । “आत्माऽत्र परात्मा स्वात्मा वा स्वात्मनि मानसस्य कादाचित्कत्वादयमस्त्वहं गौरः कृशः महाबाहुरित्यादिप्रत्ययतिरस्कृतत्वात् स्वात्मनोऽप्यप्रत्यक्षतोक्ता । चकारादाकाशकालदिशां वायोः परमाणूनाञ्च द्रव्याणामुपग्रहः । इन्द्रियजमपि द्विविधं सर्वज्ञीयमसर्वज्ञीयञ्च सर्वज्ञीयं योगजधर्मलक्षणया प्रत्यासत्त्या तत्तत्पदार्थसार्थज्ञानं तथा हि परमाणवः प्रत्यक्षप्रमेयाः प्रमेयत्वादभिधेयत्वात् सत्त्वात् । सामग्रीविरहात् कथमेवं महत्त्वस्यापि प्रत्यक्षं प्रति कारणत्वात् न च परमाणवो महान्तः रूपवत्त्वस्यापि चाक्षुषप्रत्यक्षकारणत्वात् न च दिगादयो रूपवन्तः

इति चेन्न योगजधर्मसहकारिणा मनसैव तत्सम्भवात् तदुपनीतचक्षुरादिना वा। अचिन्त्यप्रभावोहि योगजो धर्मो न सहकार्य्यन्तरमपेक्षते। विवादाध्यासितः पुरुषो न सर्वज्ञः पुरुषत्वादहमिवेत्यादि तु प्राभाकरो न मीमांसाभिज्ञः पुरुषत्वादहमिवेत्यादिवदिपक्षबाधकतर्काभावेन्य-त्वादप्रयोजकत्वात्। अपरैस्तीयत्तु प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकञ्च सविकल्पकं ज्ञानं न प्रमाणमिति कीर्त्तिदिङ्नागादयः तथा हि अभिलापसंसर्गयोग्यप्रतिभासं हि तत् तत्राभिलापेन नाम्ना सम्बन्धस्यार्थस्य सम्बन्धो येन घट इति पट इति वा नामानुरञ्जितः प्रत्ययः स्यात् नच जात्यादि परमार्थसत् येन तद्वैशिष्ट्यं विषयेषु इन्द्रियगोचरः तस्मादिन्द्रियेणालोचनं जन्यते आलोचनजन्यान्तु सविकल्पकज्ञानं तत्रार्थे प्रवर्त्तयत् प्रत्यक्षमिति प्रोच्यते इति। ननु तदनुपपन्नमभिलापसंसर्गयोग्यप्रतिभासञ्च भवेत् प्रमाणञ्चेन्द्रियार्थसन्निकर्षजन्यं स्यादिति इन्द्रियव्यतिरेकित्वं नामवैशिष्ट्यञ्च चाक्षुषज्ञाने यथाव-स्थैव सुरभि चन्दनमितिवदुपनीतभानसम्भवात्। यद्वा संज्ञावैशिष्ट्यं प्रत्यक्षज्ञाने न भासते संज्ञायाः स्मरणमात्रत्वात् तत्रैव सार्थव्यावर्त्तिका अभावज्ञाने प्रतियोगिस्मरणवत् जात्यादिकञ्च वस्तुभूतं साधितमेवातः सविकल्पकमपीन्द्रियार्थसन्निकर्षजत्वात् प्रत्यक्षम् प्रमाणम्। ननु निर्विकल्पकं न व्यवहारप्रवर्त्तकं न वा व्यवहारविषय इति कित्वत् प्रमाणमिति चेत् सविकल्पकमेव तद्धि विशिष्टज्ञानम् न च विशेषणज्ञानमन्तरेण तदुत्पद्यते विशिष्टज्ञाने हि विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य कारणत्वावधारणात्" चपक्षादहत्तिः।

"सा च सात्त्विकराजसतामसभेदेन त्रिविधा। तत्र सात्त्विकी यथा"प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये। बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी"। राजसी यथा "यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च। अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी"। तामसी यथा "अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी" गीता० तस्याः षड्गुणा यथा। "इष्टाऽनिष्टविपत्तिश्च व्यवसायः समाधिता। संशयप्रतिपत्तिश्च बुद्धेः षड् गुणान् विदुः" महाभारते मोक्षधर्मः "इष्टानिष्टविपत्तिः इष्टानिष्टानां इत्तिविशेषाणां विपत्तिर्नाशः निद्राद्यपा इत्तिरित्यर्थः। व्यवसायः उत्साहः। समाधिता चित्तस्थैर्य्यं चित्तवृत्तिनिरोध इत्यर्थः संशयः द्वयस्पृक् ज्ञानम्। प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः" तट्टीका। तस्याः अष्ट गुणा यथा। "शुश्रूषा श्रवणञ्चैव ग्रहणं धारणन्तथा। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः" हेमच०। तस्या वृत्तिः पञ्चधा यथा। "प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः" पात०सू० तल्लक्षणं च तत्तच्छब्दे दृश्यम्।

बुद्धिक्षयकरा यथा "शोकः क्रोधश्च लोभश्च कामो मोहः पराहुता। ईर्ष्या मानो विचिकित्सा हिंसाऽसूया जुगुप्सता। द्वादशैते बुद्धिनाशहेतवो मानसा मलाः"। कालिकापु० १८अ०। "बुद्धिक्षयकरा एते नाणकाहार-स्वचिकाः"। बुद्धिवृद्धिकरा यथा "निम्बाटरूपमन्त्रास्तु बुद्धिवृद्धिकरा मताः। बुद्धिक्षयकराच्चित्यं त्यजेद्राजा च भोजने। भोजयेदन्वहं बुद्धिवृद्धिहेतं नृपोत्तमः। कालिकापु० ८९ अ०।

**बुद्धिकामा** स्त्री कुमारानुचरमातृभेदे भा० श० ४७ अ०।

**बुद्धिजीविन्** त्रि० बुद्ध्या जीवति जीव-णिनि। बुद्धिरूपोपायेन जीविनि। "भूतानां प्राणिनां श्रेष्ठा प्राणिनां बुद्धिजीविनः" मनुः।

**बुद्धिसहाय** पु० ७त०। धीसचिवे अमात्यभेदे हारा०।

**बुद्धीन्द्रिय** न०६०त०। "मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके। बुद्धीन्द्रियमिति प्रोक्तम्" इत्युक्तेषु इन्द्रियेषु उभयोः ज्ञानकर्मेन्द्रिययोरुपकारकत्वात् मनसो ज्ञानमात्रसहकारित्वविवक्षया बाह्यान्तरज्ञानकरणतया च तथात्वम् "चक्षुः श्रोत्रे स्पर्शनञ्च रसनं घ्राणमेव च। बुद्धीन्द्रियाणि जानीयात्" इत्यत्र बाह्यापेक्षया पञ्चकत्वमुक्तम्।

**बुद्बुद** न०बुद्-क पृषो०द्वित्वम्। जलस्य गोलाकारे विकारभेदे अमरः। "पञ्चरात्रेण कललं बुद्बुदाकारतां व्रजेत्" सुश्रुतो० उक्ते गर्भावस्थाभेदे च।

**बुध** ज्ञापने भ्वा०प०सक०अनिट्। बोधति अबौत्सीत् शिष्यं गुरुः। बोद्धा बुद्धः।

**बुध** ज्ञाने भ्वा०उभ०सक०सेट्। बोधति ते। इरित् अबुधत् अबोधीत् अबोधि अबोधिष्ट। अस्मा० वा घ पक्षे क। बोधः बुधः।

**बुध** ज्ञाने दि० आ०सक० अनिट्। बुध्यते अबोधि अबोधिष्ट। बुबुधे। उद्+बुध—जागरणे विषयस्फुरणाभिमुखीभावरूपे संस्कारनिष्ठे व्यापारभेदे उद्बुद्धसंस्कारादेव स्मृतिर्भवतीति शास्त्रे स्थितम्।

**बुध** पु० बुध-क । १पण्डिते, बृहस्पतिभार्य्यायां तारायां चन्द्रेण जनिते २पुत्रे तस्य रोहिण्या प्रतिपालनात् रौहिणेयत्वम् । ३ग्रहभेदे । तस्योत्पत्तिकथा शिववरेण तस्य ग्रहत्वप्राप्तिकथा च काशीख० १५ अ० । "बृहस्पतेः स वै भार्य्यामैश्वर्य्यमदमोहितः । पुरोहितस्यापि गुरोर्भ्रातुराङ्गिरसस्य वै । जहार तरसा ताराम्" इत्युपक्रमे । "ददावाङ्गिरसे तारां स्वयमेव पितामहः । अथान्तर्गर्भमालोक्य तारां प्राह बृहस्पतिः । मदीयायां न ते योनौ गर्भो धार्य्यः कथञ्चन । इषिकास्तम्बमासाद्य सा गर्भं चोत्ससर्ज ह । जातमात्रः स भगवान् देवानामाक्षिपद्वपुः । ततः संशयमापन्नास्तारामूचुः सुरोत्तमाः । सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः । पृच्छ्यमाना यदा देवैर्नाह तारा ऽतिसत्रपा । तदा तां शप्तुमारब्धः कुमारः सोऽतितेजसा । तन्निवार्य्य तदा ब्रह्मा तारां पप्रच्छ संशयम् । प्रोवाच प्राञ्जलिः सा तं सोमस्येति पितामहम् । तदा स मूर्द्ध्न्युपाघ्राय तारागर्भं प्रजापतिः । बुध इत्यकरोन्नाम तस्य बालस्य धीमतः । ततः स सर्वदेवेभ्यस्तेजोरूपबलाधिकः । बुधः सोमं समापृच्छ्य तपसे कृतनिश्चयः । जगाम काशीं निर्वाणराशिं विश्वेशपालिताम् । तत्र लिङ्गं प्रतिष्ठाप्य स्वनाम्ना तु बुधेश्वरम् । तपश्चचार चात्युग्रतपं संशीलयन् हृदि" । इति तत्तप उक्तं तत्तपसा च तुष्टेन शिवेनोक्तं यथा "रौहिणेय ! महाभाग ! सौम्य ! सौम्यवचोनिधे ! । नक्षत्रलोकादुपरि तव लोको भविष्यति । मध्ये सर्वग्रहाणाञ्च सपर्य्यां लप्स्यसे पराम्" । बुधग्रहस्य कक्षाभगणादिकं खगोलशब्दे दृश्यम् ।

**बुधचक्र** न० बुधस्य राश्यन्तरसञ्चारकाले स्वनक्षत्रात् सुखादिस्थानस्थितिभेदेन शुभाशुभसूचके चक्रभेदे "भोगोत्सुखैकमथ मूर्ध्नि चतुष्टु रोगः षट् पाणिभेऽसुखहतं सुखदं स्तनेऽत्र । तुल्यं पदाक्षि सुखगो हृदि सप्त राज्यं नाभीन्दुभे द्विभ गले निधनं बुधस्य" इति समयामृतम् ।

**बुधचार** पु० ६त० । वृ०सं० ७अ० उक्ते बुधग्रहस्य शुभाशुभसूचके सञ्चारे यथा "नोत्पातपरित्यक्तः कदाचिदपि चन्द्रजो व्रजत्युदयम् । जलदहनपवनभयकृद्धान्यार्घक्षयविवृद्धये वा । विचरन् श्रवणधनिष्ठाप्राजापत्येन्दु४।५विश्वदैवानि२१ । मृद्गन् हिमकरतनयः करोत्यवृष्टिं सरोगभयाम् । रौद्रा६दीनि मघान्तान्युपाश्रिते चन्द्रजे प्रजापीडा । शस्त्रनिपातक्षुद्भयरोगानावृष्टिसन्तापैः । हस्तादीनि विचरन् षड्भान्युपपीडयन् गवामशुभः । स्नेहार्घवृद्धिं करोति चोर्वीं प्रभूतान्नाम् । आर्यम्णं१२ हौतभुजं३ भद्रपदामुत्तरां यमेशं२ च । चन्द्रस्य सुतो निघ्नन् प्राणभृतां धातुसङ्क्षयकृत् । आश्विनवारुण२४मूलान्युपमृद्नन् रेवतीं च चन्द्रसुतः । पण्यभिषग्नौजीविकसलिलजतुरगोपघातकरः । पूर्वात्रय११।२०।२६मितयादेकमपीन्दोः सुतोऽभिमृद्नीयात् । क्षुच्छस्त्रतस्करामयभयप्रदायी चरन् जगतः" । इतःपरं तस्य गतिविशेषास्तत्राभिहितास्तत्फलञ्च तत्र दर्शितं तच्च गतिशब्दे २५१५ पृ० दर्शितम् । अध्यायशेषे च ।
"पौषाषाढश्रावणवैशाखेष्विन्दुजः समाघेषु । दृष्टो भयाय जगतः शुभफलकृत् प्रोषितस्तेषु । कार्त्तिकेऽश्वयुजि वा यदि मासे दृश्यते तनुभवः शिशिरांशोः । शस्त्रचौरहुतभुग्गदतोयक्षुद्भयानि च तदा विदधाति । रुद्धानि सौम्येऽस्तमिते पुराणि यान्युद्गते तान्युपयान्ति मोक्षम् । अन्ये तु पश्चादुदिते वदन्ति लाभः पुराणां भवतीति तज्ज्ञाः । हेमकान्तिरथ वा शुकवर्णः सस्यकेन मणिना सदृशो वा । स्निग्धमूर्तिरलघुश्च हिताय व्यत्यये न शुभकृच्छशिपुत्रः" । [सुतादयोऽप्यत्र ।

**बुधतनय** पु० ६त० । पुरूरवसि इलाशब्दे दृश्यम् बुध-

**बुधतात** पु० ६त० । चन्द्रे शब्दच० ।

**बुधरत्न** न० बुधप्रियं रत्नं शाक०त० । मरकतमणौ गारुत्मते राजनि० । ग्रहयज्ञे २७६२ पृ० दृश्यम् ।

**बुधवार** पु० ६त० बुधपतिकदिवसे दिनपशब्दे ३५८२ पृ० दृश्यम् ।

**बुधसानु** पु० बुध-आनुक् सुक् च । यज्ञपुरुषे पर्णे च संक्षिप्तसा० ।

**बुधा** स्त्री बोधयति ज्ञापयति रोगिणं सेवनात् बुध-ज्ञापने क । जटामांस्यां शब्दच० ।

**बुधादित्य** पु० बुधसहित आदित्यः । जन्मकाले एकस्मिन् राशौ बुधादित्ययोर्योगे स च तयोरन्यतरस्थ एव भवतीति सम्प्रदायः ।

**बुधान** पु० बुध-आनच् कित् । १आचार्य्ये गुरौ २विज्ञे मेदि० ३कवौ जटा० । ४ब्रह्मवादिनि ५प्रियवादिनि सि० उणादिकोषः ।

**बुधाष्टमी** स्त्री० बुधवारयुताष्टमी शाक०त० । चैत्रपौषहरिशयनादोतरत्र शुद्धकाले बुधवारयुतायां १शुक्लपक्षाष्टम्यां, २तत्कर्त्तव्ये व्रते च । तस्याः पूर्व्ववृत्तेः हेमा० व्र० भविष्योत्तरे उक्तो यथा
"पुरा कृतयुगस्यादौ इलो राजा बभूव ह । ब्रह्मण्यः-

श्रुती मित्रमन्त्रिभिः परिवारितः। जगाम हिमवत्पार्श्वं महादेवाभिशापतः। योऽसौ प्रविशते भूमौ स स्त्री भवति निश्चितम्। स राजा मृगयासङ्गेन प्राविशत्तदुमावने। एकाकी तुरगोपेतः क्षणात् स्त्रीत्वं जगाम ह। सा बभ्राम वने शून्ये पीनोन्नतपयोधरा। का त्वं कस्य कुतः प्राप्ता अनुरोधोऽस्ति कश्चन। तां ददर्श बुधस्तन्वीं रूपौदार्य्यगुणान्विताम्। अष्टम्यां बुधवारेण तस्यां तुष्टो बुधो ग्रहः। ददौ स्वहान्नमन्नञ्चामानीयत प्रतोषिताम्। पुत्रमुत्पादयामास योऽसौ ख्यातः पुरूरवाः। चन्द्रवंशकरो राजा आद्यः सर्वमहीक्षिताम्। ततः प्रभृति पूज्येयमष्टमी बुधसंयुता"। सा च सम्पूर्णा ग्राह्या न भिन्ना यथोक्तं तत्रैव "बुधाष्टमी शुभा पूर्णा यथोक्तफलदायिनी" तच्च व्रतमष्टवर्षं कार्य्यं तत्र भक्ष्यभेदादिकं च तत्रैवोक्तं यथा

"अष्टम्यष्टविधानेन विचित्राद्यैः पृथक् पृथक्। प्रथमा मोदकैर्भक्ष्यैः द्वितीया धानकैस्तथा। तृतीया घृतपूरैश्च चतुर्थी वटकैर्नृप!। पञ्चमी शुभ्रकासारैः षष्ठी सोहालकैः शुभैः। अशोकवर्त्तिभिः शुभ्रैः सप्तमीं चातिवाहयेत्। अष्टमी फाणितैः पूर्णैः खण्डवेष्टैर्युधिष्ठिर!।" तत्र विहितनिषेधकालादि राजमार्त्तण्डे उक्तं यथा "पतङ्गे मकरे जाते देवे जाग्रति माधवे। बुधाष्टमीं प्रकुर्वीत वर्जयित्वा तु चैत्रकम्। प्रसुप्ते च जगन्नाथे सन्ध्याकाले मधौ तथा। बुधाष्टमीं न कुर्वीत कृता हन्ति पुराकृतमिति"। एतद्व्रतमारब्धमपि चैत्रादौ न कर्त्तव्यं यथाह स्मृतिः "मीने धनुषि देवेशे सुप्तेऽप्यशुद्धदिने तथा। बुधाष्टमीं न कुर्वीत पूर्वं विद्धामपि क्वचित्" अशुद्धदिने समवाप्तियुक्तदिने।

**बुधित** त्रि० ज्ञा° बुध–क्त इट्। ज्ञाते अमरः।

**बुधिल** त्रि० बुध–किलच्। विदुषि उणादि०।

**बुध्न** पु० बन्ध–नक् बुधादेशः। १मूले अमरः २शिवे भरतः ३अन्तरीक्षे ऋ० ४।१९।४ भाष्यम्। "पृथुबुध्नोदराकृतिः" वेदान्तप०। "अर्वाग्बिलश्चमस ऊर्द्ध्वबुध्नः" शा°भा° धृता श्रुतिः। निरुक्ते तु बद्धा अस्मिन् धृता आप इति अन्तरिक्षं बुध्नम्" तस्य निरुक्तिरुक्ता।

**बुध्न्य** पु० बुध्ने मूले भवः यत्। १गार्हपत्येऽग्नौ "अहिरसि बुध्न्यः" ताण्ड्यब्रा०१।४।११ "अहिरसि हन्ता रक्षःप्रभृतीनां बुध्न्यः बुध्ने मूले आदौ आधानकाले प्रथमं जातोऽसि" २अहिर्बुध्न्ये ३रुद्रभेदे च। "बुध्ने निवसति बुध्न्यः योऽहिः सः अग्निः बुध्न्यः बुध्नमन्तरीक्षं अन्तरिक्षे च तन्निवासाद्वा" निरु०। "मानोऽहिर्बुध्न्योरिषे" तद्धृता श्रुतिः।

**बुन्द** निशामने भ्वा० उभ० सक० सेट्। बुन्दति ते इरित् अबुदत् अबुन्दीत्। अबुन्दिष्ट। उदित् क्त्वा वेट्। निशामनमालोचनम् प्रणिधानमिति यावत्।

**बुन्ध** निशामने भ्वा० उभ० सक० सेट्। बुन्धति ते इरित् अबुधत्–अबुन्धीत् अबुन्धिष्ट। निशामनमालोचनम्। उदित् क्त्वा वेट्।

**बुन्ध** बन्धे चु° उभ° सक° सेट्। बुन्धयति ते अबुबुन्धत् त।

**बुबुर** न० उदके निघण्टौ बर्बुरमित्यत्र पाठान्तरम्।

**बुभुक्षा** स्त्री० भुज–सन्–भावे अ। भोजनेच्छायां क्षुधायाम्। सा च प्राणधर्मः यथोक्तं शा°ति° "बुभुक्षा च पिपासा च प्राणस्य" ऊर्मिशब्दे दृश्यम्। अन्नेऽजीर्णे च सा न भवति अथ भवति चेत् अनिष्टदा यथोक्तं सुश्रुते "उद्गारशुद्धावपि भक्तकाङ्क्षा न जायते हृद्गुरुता च यस्य" "रसं यदा दोषविदग्धमामं क्षीणं न तेजः पथमाप्नोति। भवत्यजीर्णेऽपि तदा बुभुक्षा सा मन्दबुद्धिं विषवन्निहन्ति"। छत्रादि°शीलार्थे अण्। बौभुक्ष तच्छीले त्रि०।

**बुभुक्षित** त्रि० बुभुक्षा+तार° इतच्। क्षुधायुक्ते "बुभुक्षितः किं द्विकरेण भुङ्क्ते" इत्युद्भटः।

**बुल** मज्जने चु° उभ° अक° सेट्। बोलयति ते अबूबुलत्। बोलयति प्लवः पयसि मज्जतीत्यर्थः।

**बुलि** स्त्री तुदा° बुड–इन् किच्च डस्य लः। भये हेमच°।

**बुल्व** त्रि० बुल–व उणा° नि°। तिरश्चीने शत°ब्रा° ११।५।४।१४।

**बुष(स)** न० बुस्यते उत्सृज्यते बुस–उत्सर्गे क पृषो° वा षत्वम्। (आगडा) १तुच्छधान्ये फलरहितधान्ये अमरः। अयं वोपधः २उदके वेदनिघण्टुः ततः कृशा° चतुरर्थ्यां स। बुसस तत्समीपादौ त्रि०। पृषो° दीर्घः। बूसमप्यत्र।

**बुस** उत्सर्गे दि°पर°सक°सेट्। बुस्यति। इरित् अबुसत् [अबोसीत् अबोस

**बुस्त** आदरे अनादरे च चु°उभ°सक°सेट्। बुस्तयति ते अबुबुस्तत् त।

**बुस्त** न० बुस्त्यते नाद्रियते आद्रियते वा बुस्त–घञ्। १पक्वमांसादिफलस्य त्याज्ये अंशे (भुषि) २मांसपिष्टकभेदे च अमरभरतौ।

**बूक्क** न० बुक्क+पृषो° दीर्घः। बुक्कशब्दार्थे रमानाथः।

**बृबदुक्थ** न० पदे निघण्टुः।

पत्ये नमो॰ यञ् । बार्हद्गन्य तदपत्ये तस्य छात्राः कण्वा॰ अण् यञोपः । बार्हद्गन तस्य छात्रेषु ब॰ व॰ सि॰कौ॰ । [स्त्रियां जात्यत्वात् ङीष् ।

बृ(वृ)हदङ्ग पुंस्त्री ६ब॰ । १गजे शब्दच॰ २महाकाये त्रि॰ ।

बृ(वृ)हदम्बालिका स्त्री कुमारानुचरमातृभेदे भा॰श॰४७अ॰

बृ(वृ)हदम्ल पु॰ बृहन् अम्लो रसोऽस्य । (कामराङ्गा) कामरङ्गे शब्दच॰ । [नृपभेदे हरिवं॰११अ॰ ।

बृ(वृ)हदश्व पु॰ १ऋषिभेदे भा॰व॰५२अ॰ । २श्रावस्तस्य पुत्रे

बृहदारण्यक न॰ । उपनिषद्भेदे ।

बृहदिषु पु॰ आजमीढपुत्रे १नृपभेदे हरिवं॰२०अ॰ । सूर्य्यवंश्ये २नृपभेदे च ६२ अ॰ ।

बृ(वृ)हदुक्थ न॰ कर्म॰ । १महति उक्थे २अग्निवंश्ये तपसः पुत्रे २अग्निभेदे पु॰ भा॰ व॰ २१९ अ॰ । "बृ(वृ)हदुक्थोह वै वामदेव्यः" शत॰ ब्रा॰ १३।२।२।१४ । तदुक्थेन साध्ये २यज्ञे अश्वमेधे पु॰ । [वेददीपे दृश्यम् ।

बृ(वृ)हदुक्ष पु॰ १जगत्सृष्टिकारके २प्रजापतौ च यजु॰८।८।

बृ(वृ)हदुत्तरतापनी स्त्री कर्म॰ । उपनिषद्भेदे ।

बृ(वृ)हदेला स्त्री कर्म॰ । स्थूलैलायां राजनि॰ ।

बृ(वृ)हद्गर्भ पु॰शिविनृपपुत्रे यो हि ब्राह्मणभोजनार्थं पक्वाप्य संस्कृतः पुनरपि जीवितः तत्कथा भा॰ व॰ ११७ अ॰ ।

बृ(वृ)हद्गु पु॰ राजभेदे भा॰ आ॰ १अ॰ ।

बृ(वृ)हद्(गु)गृह पु॰ कारूषदेशे हेमच॰ स च देशः विन्ध्यपर्वतस्य पश्चात्सनावमदेशसमीपे स्थितः (बृहद्गुह) इति त्रिकाण्डशेषः । [शब्दच॰ ।

बृ(वृ)हद्गोल न॰ नित्यक॰ । (तरमुज) फलप्रधानवृक्षे

बृ(वृ)हद्दर्भ पु॰ कक्षेयुवंश्ये नृपभेदे हरिवं॰ ३२अ॰ ।

बृ(वृ)हद्दल पु॰६ब॰ । १हिन्ताले २पट्टिकालोध्रे च राजनि॰ ।

बृ(वृ)हद्द्युम्न पु॰नृपभेदे भा॰व॰१३८अ॰ [महाधनयुते त्रि॰

बृ(वृ)हद्धनुस् पु॰ आजमीढवंश्ये नृपभेदे हरिवं॰२०अ॰ ।

बृ(वृ)हद्धर्म्मन् पु॰ आजमीढवंश्ये नृपभेदे । हरिवं॰२०अ॰ ।

बृ(वृ)हद्धर्म्मपुराण न॰ उपपुराणभेदे ।

बृ(वृ)हद्धन त्रि॰ बृहद्धनमस्य । १महाधने २इक्ष्वाकुवंश्ये नृपभेदे पु॰ हरिवं॰१५अ॰ ।

बृ(वृ)हद्बल न॰ कर्म॰ । महाबाकुचे त्रिका॰ ।

बृ(वृ)हद्ब्रह्मन् पु॰आङ्गिरसे ऋषिभेदे । "ब्रह्मणो यत् तोषय पुनः कुरुकुलोद्वह ! । तस्यामवत् सुता भार्य्या प्रजातासां च मे शृणु । बृहत्कीर्त्तिर्बृहज्ज्योतिर्बृहद्ब्रह्मा बृहन्मनाः । बृहन्मन्त्रो बृहद्भासस्तथा राजन् ! बृहस्पतिः" भा॰आ॰ २१७ अ॰ । बृहज्ज्योतिरादयस्तत्पुत्रे

बृ(वृ)हद्भट्टारिका स्त्री॰ कर्म॰ । दुर्गायां शब्दमाला ।

बृह(वृ)द्भय पु॰ सावर्णिमनोः पुत्रभेदे मार्कण्डेयपु॰९१अ॰ ।

बृ(वृ)हद्भानु पु॰ ६ब॰ । १अग्नौ २चित्रकवृक्षे च अमरः । ३आङ्गिरसे वह्निभेदे भा॰व॰ २२० । इन्द्रसावर्णिमन्वन्तरे ४हरेरवतारभेदे भाग॰ ८।१३ अ

बृ(वृ)हद्रण पु॰इक्ष्वाकुवंश्ये भाविनि नृपभेदे भाग॰९।१२।६।

बृ(वृ)हद्रथ पु॰ मौर्य्ये १नृपभेदे भाग॰१२।१। २आङ्गिरसे वह्नेः पुत्रभेदे भा॰२१९ ३मागधराजभेदे जरासन्धताते हरिवं॰१अ॰ । ४चेदिराजवसोःपुत्रभेदे हरिवं॰ ११७अ॰ ।

बृ(वृ)हद्रथन्तर न॰ सामभेदे १आङ्गिरसवंश्ये वह्निभेदे भा॰व॰२१९अ॰ ।

बृ(वृ)हद्राज पु॰ इक्ष्वाकुवंश्ये भाविनि नृपभेदे भाग॰ ९।१।२

बृ(वृ)हद्राविन् पु॰ बृहत् यथा तथा रौति रु-णिनि । क्षुद्रोलूके राजनि॰ ।

बृ(वृ)हद्रूप पु॰ मरुद्गणभेदे हरिवं॰ २०४ अ॰ ।

बृ(वृ)हद्वत् पु॰ बृहत् बृहत्साम तदस्यास्ति स्तोत्रतया मतुप् मस्य वः । बृहत्सामस्तोत्रस्तुत्ये इन्द्रे यजु॰७।२२ २तत्साध्ये यज्ञे च ३नदीभेदे स्त्री ङीप् भा॰भी॰९अ॰ ।

बृ(वृ)हद्वल्क पु॰ ६ब॰ । पट्टिकालोध्रे राजनि॰ ।

बृ(वृ)हद्वात पु॰७ब॰ । जूर्णाह्वे धान्यभेदे (देधान) रत्नमा॰

बृ(वृ)हद्वारुणी स्त्री कर्म॰ । महेन्द्रवारुण्याम् राजनि॰ ।

बृ(वृ)हद्वीज ६ब॰ । महापिण्डीते आम्रातवृक्षे शब्दच॰ ।

बृ(वृ)हन्नल पु॰ बृहन्नलेति आख्यात्येन अस्त्यस्य अच् । अर्जुने हेमच॰ "आदाय प्रययौ वीरः स बृहन्नलसारथिः" भा॰ वि॰३७अ॰ । "अर्जुन उवाच । प्रतिज्ञां षण्डकोऽस्मीति करिष्यामि महीपते ! । ज्याघातौ हि महान्तौ मे संवर्त्तुं नृप ! दुष्करौ । वलयैश्छादयिष्यामि बाहू किणकृताविमौ । कर्णयोः प्रतिमुच्याहं कुण्डले ज्वलनप्रभे । पिनद्धकम्बुः पाणिभ्यां तृतीयां प्रकृतिं गतः । वेणीकृतशिरा राजन् ! नाम्ना चैव बृहन्नला" इति तस्य च अज्ञातवासकाले तथात्वम् भा॰वि॰ १२अ॰ उक्तम् ।

बृहन्नारदीय न॰ उपपुराणभेदे ।

बृहन्नारायणोपनिषद् स्त्री॰उपनिषद्भेदे । [शब्दे दृश्यम् ।

बृहन्नौका स्त्री॰ चतुरङ्गशब्दोक्ते क्रीडनभेदे । चतुरङ्ग-

बृहस्पति पु॰ बृहत्या वाचः पतिः पारस्करा॰सुडादिष्टमनीपतिशब्दे दृश्यम् । आङ्गिरसे १ऋषिभेदे बृहद्ब्रह्मनशब्दे दृश्यम् । २देवपुरोहिते ३ग्रहभेदे च । तस्य गतिमग-

बादिकं खगोलशब्दे दर्शितम् । तच्चारश्च गुरुवर्षशब्दे २६२१ पृ० तस्य महत्वप्राप्तिकथा गुरुशब्दे दृश्या ।

**बृहस्पतिचक्र** न० बृहस्पतेः सञ्चारकाले नराकारचक्रस्य मूर्द्धादिषु स्वनक्षत्रस्य पातेन शुभाशुभसूचके चक्रभेदे तच्च ज्यो०त० उक्तं यथा “शीर्षे चत्वारि राज्यं जलधिरपि करे दक्षिणे चापि सौख्यं चैकं कण्ठे विभूतिं मदनशरमितं वक्षसि प्रीतिवृद्धिम् । पादस्थाः षट् च पीड़ां पुनरपि जलधिर्वामहस्ते च मृत्युं नेत्रे त्रीणि प्रदद्युः सुखमथ निजभे वाक्पतेः संक्रमणात्” ।

**बृहस्पतिपुरोहित** पु० ६ब० १इन्द्रे २देवमात्रे च यजु० २।११

**बृहस्पतिवार** पु० ६त० । जीवाधिपत्ययुक्ते दिने तदानयनादिकं दिनपशब्दे दृश्यम् ।

**बृहस्पतिसव** पु० यज्ञभेदे “वाजपेयेनेष्ट्वा राजा राजसूयेन यजेत ब्राह्मणो बृहस्पतिसवेन” आश्व० श्रौ० ९ । ९ ।

**बृ(ब्र)हस्पतिस्तोम** पु० यज्ञभेदे ताण्ड्य० २५।१।१ ।

**बृ** त्यां स्तौ च क्र्या०प्रा०पर०सक०सेट् । बृ(बॄ)णाति अबारीत् बबार बरि(री)ता बिबरी(रि)षति बुबूर्षति बूर्णः ।

**बेकनाट** पु० वे इत्यपभ्रंशः द्वित्वबोधकः एकं गुणं द्रव्यमृणिकाय दत्त्वा द्विगुणं मह्यं देयमिति स्वत्वेन नाटयति व्यवहरति नाटि-अच् वे एकशब्दयोः पृषो० वेकभावः । कुसीदिनि ऋ० ८।६६।१० भाष्ये दृश्यम् ।

**बेकुरा** स्त्री वाचि निघण्टुः ।

**बे(वे)ह** प्रयत्ने भ्वा० आत्म० सक० सेट् । बे(वे)हते अबे(वे)हिष्ट बे(वे)हे । ऋदित् चङि न ह्रस्वः ।

**बोकड़ी** स्त्री वन्दाल्यां राजनि० ।

**बोध** पु० बुध-भावे घञ् । १ज्ञाने त्रिका० । २जागरे च ३देशभेदे भा०भी०९अ० ।

**बोधक** त्रि० बुध-णिच् ण्वुल् । १ज्ञानजनके बोधकारे सू- [चके वैतालिके शब्दमा० ।

**बोधकर** त्रि० बोधं ज्ञानं जागरणं वा करोति कृ-ट । १ज्ञानकारके निशान्ते जागरणकारके २वैतालिके च अमरः

**बोधन** न० बुध-णिच्-ल्युट् । १विज्ञापने कालवशात् गन्धादेरुद्वतायां २तदुद्दीपने ३जागरणे च । “शयनं बोधनं हरेः” इति पुराणम् । “सायाह्ने बोधनं कुर्यात्” इति स्मृतिः । देवीबोधनकालादिः ति०त० प्रदर्शितो यथा लिङ्गपुराणम् “कन्यायां कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा । नवम्यां बोधयेद्देवीं महाविभवविस्तरैः” “इषे मासि सिते पक्षे नवम्यामार्द्रयोगतः । श्रीवृक्षे बोधयामि त्वां यावत् पूजां करोम्यहम् । ऐं रावणस्य बधार्थाय रामस्यानुग्रहाय च । अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा” इति मन्त्रलिङ्गाच्च । अकाल इति तु रात्रित्वेन दक्षिणायनस्य तथा च श्रुतिः “तपस्तपस्यौ शिशिरावृतुः । मधुश्च माधवश्च वासन्तिकावृतुः । शुक्रश्च शुचिश्च ग्रैष्मावृतुः । अथैतदुत्तरायणं देवानां दिनं, नभाश्च नभस्यश्च वार्षिकावृतुः इषश्च ऊर्जश्च शारदावृतुः । सहाश्च सहस्यश्च हैमन्तिकावृतुः । अथैतद्दक्षिणायनं देवानां रात्रिः” इति एतच्च “रात्रावेव महामाया ब्रह्मणा बोधिता पुरा । तथैव च नराः कुर्युः प्रतिसंवत्सरं नृप !” इति व्याख्ये तद्विषयत्वम् । अतएव लिङ्गपुराणे दिवेत्युक्तम् । एतच्च कालिकापुराणेऽपि बोधने रात्राविति पदं देवतारात्रिपरम् । ततश्च पूर्वाह्णे नवम्यामार्द्रानक्षत्रयुक्तायां बोधनं पूर्वाह्णेतरकाले आर्द्रालाभे नवम्यामार्द्रभे दिवेत्यत्र दिवापदात् तत्रापि बोधनम्, अन्यथा दिवापदं व्यर्थं स्यादिति । ज्योतिषार्णवे व्यक्तमुक्तं वराहेण “कन्यादित्रीनपर्यन्तं यत्र संप्राप्यते शिवः । तत्र बोधः प्रकर्तव्यो देव्या राज्ञः शुभप्रदः” । शिव आर्द्रा । एवञ्चोभय दिने पूर्वाह्णे नवमीलाभे परत्रार्द्रालाभे परत्र बोधनं न कुर्यात् पूर्वत्र, युग्मबाधकपूर्वाह्णस्य बाधकत्वबलानुरोधात् दिवानक्षत्रालाभे तु पूर्वाह्ण एव नवम्याम् उभयत्र पूर्वाह्णलाभे तु पूर्वदिन एव कुर्यात् । अत्र केवलनवम्यां बोधनविधेर्नक्षत्रस्यापि गुणफलत्वाच्च । “माघे वा फाल्गुने वापि भवेद् वै माघसप्तमी । भास्करीति च यत् प्रोक्तं तत् प्रायो दृष्टिदर्शनात्” इति सौरागमाद्भास्करीतिवत् आर्द्रायोगतः इत्यस्य प्रायिकत्वेनाभिधानं प्रतीयते । ततश्चार्द्रारहितबोधने मन्त्रान्तरानुपदेशात् तद्युक्तमन्त्रः प्रणवयुक्तत्वेन प्रयुज्यते । “यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम् । यदमेध्यमशुद्धञ्च यातयामञ्च यद् भवेत् । तदोङ्कारप्रयुक्तेन सर्वञ्चाविकलं भवेत्” इति योगियाज्ञवल्क्यवचनात् । षष्ठी बोधनेऽप्येवं नवम्यां बोधनासामर्थ्ये तु षष्ठ्यां सायं बोधनं यथाह भविष्ये “षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत्” । सन्ध्योक्ता वराहमिहिरेण “अर्द्धास्तमयात् सन्ध्या व्यक्तीभूता न तारका यावत्” । षष्ठ्यां बोधने तु प्रागुक्तः “ओं रावणस्य बधार्थाय” इति “अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः” इति च पठेत् । अत्र बोधनामन्त्रणयोः पृथक्त्वं नतु-

प्रकाशकमन्त्रभेदात् अत्र बोधनमन्त्रावुक्तावेव आमन्त्रणमन्त्रौ तु "मेरुमन्दरकैलासहिमवच्छिखरे गिरौ"। इत्यादौ प्रागुक्तदेवीपुराणे नवमीषष्ठ्योर्बोधनामन्त्रणयोः पृथक्त्वाभिधानाच्च। ततश्च षष्ठ्यामुभयकरणेऽपि पत्रीप्रवेशपूर्वदिने सायंषष्ठीलाभे एकदैवोभयकरणम्। यदा तु पूर्वदिने सायंषष्ठीलाभः न परदिने सायंषष्ठीलाभः तदा पूर्वेद्युर्बोधनं परदिने सायमामन्त्रणम्। यदा तूभयदिने सायंषष्ठ्यलाभस्तदा परदिने पूर्वाह्णे षष्ठ्यां बोधनं "बोधयेद् बिल्वशाखायां षष्ठ्यां देवीं फलेषु च। सप्तम्यां बिल्वशाखां तामाहृत्य प्रतिपूजयेत्"।

**बोधनी** स्त्री बोध्यतेऽनया अत्र वा बुध–णिच्–करणे आधारे वा ल्युट्। १पिप्पल्यां तया हि मूर्च्छितो बोध्यते। २कार्त्तिकशुक्लैकादश्यां तत्र हि हरेर्बोधनम्। "शयनीबोधनीमध्ये या कृष्णैकादशी भवेत्। सैवोपोष्या गृहस्थैर्न नान्या कृष्णा कदाचन" इति तिथ्यादित०। "तावद्गर्जन्ति तीर्थानि वाजिमेधादयो मखाः। मथुरायां प्रिया विष्णोर्यावन्न नायाति बोधनी" हरिभक्तिविलासे पद्मपु०वचनम्।

**बोधवासर** पु० ६त०। १हरिबोधनदिने कार्त्तिकशुक्लैकादश्याम् २तत्कर्त्तव्ये व्रते च। "जन्मप्रभृति यत् पुण्यं नरेणोपार्जितं भुवि। वृथा भवति तत् सर्वं न कृत्वा बोधवासरम्" हरिभक्तिविलासधृतस्कान्दपु०।

**बोधान** त्रि० बुध–आनच्। १विज्ञे २गीष्पतौ शब्दर०।

**बोधि** पु० बुध–इन्। १समाधिभेदे २पिप्पलवृक्षे ३बुद्धभेदे मेदि० ४बोधे त्रिका०। ५ज्ञातरि त्रि०। [ऽप्यत्र पु०

**बोधितरु** पु० कर्म०। अश्वत्थवृक्षे हेमच०। बोधिद्रुमादयो-

**बोधिसत्त्व** न० बोधि बोधयुतं सत्त्वम्। बुद्धभेदे हेमच०।

**बौद्ध** न० बुद्धेन प्रोक्तमण्। १बुद्धशास्त्रभेदे तच्च शास्त्रं प्रथमं बृहस्पतिना प्रयुक्तं तच्च बुद्धावतारे प्रपञ्चितम्। यथोक्तं मत्स्यपु० २४ अ०।

"आयुषो नहुषः पुत्रो वृद्धशर्मा तथैव च। रजिर्दम्भो विपाप्मा च वीराः पञ्च महारथाः। रजेः पुत्रशतं जज्ञे राजेयमिति विश्रुतम्" इत्युपक्रमे "रजिपुत्रैस्तदाच्छिन्नं बलादिन्द्रस्य वैभवम्। यज्ञभागश्च राज्यञ्च तपोबलगुणान्वितैः। राज्याद् भ्रष्टस्तदा शक्रो रजिपुत्रैर्निपीड़ितः। प्राह वाचस्पतिं दीनः पीड़ितोऽस्मि रजेः सुतैः। न यज्ञभागो राज्यं मे निर्जितस्य बृहस्पते!। राज्यलाभाय मे यत्नं विधत्स्व धिषणाधिप!। ततो बृहस्पतिः शक्रमकरोद्बलदर्पितम्। ग्रहशान्तिविधानेन पौष्टिकेन च कर्मणा। गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः। जिनधर्मं समास्थाय वेदबाह्यं स वेदवित्। वेदत्रयीपरिभ्रष्टांश्चकार धिषणाधिपः। वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान्। जघान शक्रो वज्रेण सर्वान् धर्मबहिष्कृतान्"। तदधीते वेत्ति वा पुनः अण्। २तच्छास्त्राध्यायिनि ३तद्वेत्तरि च त्रि०। बुद्धशब्दे तन्मतं दर्शितम्।

**बौध** पु० बुधस्यायम् शैषिकोऽण्। बुधात्मजे पुरूरवसि हेम०।

**बौधायन** पु० बोधस्य गोत्रापत्यम् आङ्गिरसभिन्नम् इञ्। ततो यूनि इञन्तत्वात् फक्। यूनि बोधगोत्रापत्ये ऋषिभेदे तेन च कल्पसूत्रसूपस्थितिश्च कृता।

**बौधि** पु० बोधस्य गोत्रापत्यमाङ्गिरसभिन्नम् इञ्। बोधस्य गोत्रापत्ये आङ्गिरसभिन्ने आङ्गिरसे तु यञ्। बौध्य इत्येव

**बौध्य** पु० बोधस्य गोत्रापत्यमाङ्गिरसः यञ्। आङ्गिरसे बोधगोत्रापत्ये तद्गीता च भा० शा० १७८अ० दर्शिता यथा "बौध्य उवाच। "उपदेशेन वर्त्तामि नानुशास्मीह कञ्चन। लक्षणं तस्य वक्ष्येऽहं तत्स्वयं परिमृश्यताम्। पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने। इषुकारः कुमारी च षडेते गुरवो मम"। भीष्म उवाच "आशाबलवती राजन्नैराश्यं परमं सुखम्। आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला१। सामिषं कुररं दृष्ट्वा बध्यमानं निरामिषैः। आमिषस्य परित्यागात् कुररः२ सुखमेधते। गृहारम्भो हि दुःखाय न सुखाय कदाचन। सर्पः३ परकृतं वेश्म प्रविश्य सुखमेधते। सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः। अद्रोहेणैव भूतानां सारङ्गा४ इव पक्षिणः। इषुकारो५ नरः कश्चिदिषावासक्तमानसः। समीपेनापि गच्छन्तं राजानं नावबुद्धवान्। बहूनां कलहो नित्यं द्वयोः सङ्कथनं ध्रुवम्। एकाकी विचरिष्यामि कुमारीशङ्खको६ यथा"। बोधो देशभेदोऽभिजनोऽस्य शण्डिकाद्य० ञ्य। पित्रादिक्रमेण २तद्देशवासिनि त्रि०।

**ब्य(व्य)ध** ताड़ने दिवा० पर० सक० अनिट्। वि(वि)ध्यति अव्या(व्या)त्सीत् वि(वि)व्या(व्या)ध वस्यादित्वे अभिविध्यतृमति। [अबुब्धत् त।

**बर्(व)ष** स्तुत्यं विभागे च चु०उभ०सक० सेट्। अबर्षयति–ते

**ब्र(व्र)ण** शब्दे भ्वा०पर०अक०सेट्। (व)रणति। अब्र(व्र)-णीत्-अ(व)ब्राणीत्। कविकल्पद्रुमेऽयमन्त्यस्थादिः।

**ब्रध्न** पु० बन्ध–नक् ब्रधादेशः। १सूर्ये २अर्कवृक्षे अमरः। ३शिवे हेमच०। ४दिने ५मूले निघण्टुः ६अश्वभेदे

तस्य गोत्रापत्यम् कुञ्जा० च्फञ् । ब्राह्मायन तद्गोत्रापत्ये पुंस्त्री० । ७भौत्यमनोः पुत्रभेदे मार्कपु० १००अ० । ८रोगभेदे "अभ्यभिष्यन्दिगुर्वामसेवनाच्चिचयं गतः । करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु । ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्दिशेत्" माधवनि०

ब्रध्नस्व पु० नृपभेदे भा०व० ९८अ० ।

**ब्रह्मकन्यका** स्त्री ६त० । १सरस्वत्यां त्रिका० (वामनहाटी) २ब्राह्म्यां राजनि० । [उ०२९अ० । २ईश्वरार्पितकर्मफलेत्रि०

**ब्रह्मकर्मन्** न० ब्रह्मविहित कर्म० । १वेदविहिते कर्मणि भा०

**ब्र(व्र)ह्मकर्मसमाधि** पु० ब्रह्मणि कर्मणां समाधिः "ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यम् ब्रह्मकर्मसमाधिना" गीतोक्ते सर्वकर्मणां कर्त्रादेश्च जातस्य ब्रह्मरूपेण चिन्तने ।

**ब्र(व्र)ह्मकुण्ड** न० ब्रह्मनिर्मितं कुण्डम् शा० त० । सरोवरभेदे तदाविर्भावकथा ।

"पाण्डुनाथस्योत्तरस्यां ब्रह्मकुण्डाह्वयं सरः । ब्रह्मणा निर्मितं पूर्वं स्नानाय स्वर्गवासिनाम् । आयामेन शतव्यामं विस्तीर्णेन तदर्द्धकम् । सर्वपापहरं पुण्यं देवलोकात् समागतम्" तत्र स्नानमन्त्रः । "कमण्डलु समुद्भूतः ब्रह्मकुण्डाख्यतत्त्व ! । हर मे सर्वपापानि पुण्यं स्वर्गञ्च साधय । इत्यनेन तु मन्त्रेण स्नायात् तस्मिन् सरोजले । पाण्डुनाथञ्च संपूज्य विष्णुसायुज्यमाप्नुयात् । ब्रह्मकुण्डजले स्नात्वा पूजयित्वा उमापतिम् । ब्रह्मकूटं समारुह्य मुक्तिमेवाप्नुयान्नरः" कालिकापु०८१ अ० ।

**ब्र(व्र)ह्मकूट** पु० पर्वतभेदे ब्रह्मकुण्डशब्दे दृश्यम् ।

**ब्र(व्र)ह्मकूर्च** न० "अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः । पञ्चगव्यं पिबेत् प्रातः ब्र(व्र)ह्मकूर्चमिति स्मृतम्" इत्युक्ते १पञ्चगव्यपानरूपे व्रतभेदे । २कुशोदकसहित पञ्चगव्ये च नारसिंहपु० "पञ्चगव्येन देवेशं यः स्नापयति भक्तितः । ब्रह्मकूर्चविधानेन विष्णुलोके महीयते" "ब्र(व्र)ह्मकूर्चविधानेन कुशोदकयुतेन" देव० प्र०त०रघु० प्रायश्चित्ताङ्ग ब्र(व्र)ह्मकूर्चप्रमाणादि शुद्धादानादिपद्धतौ २२६।१पृ० अस्माभिर्दर्शितम् ।

**ब्र(व्र)ह्मकृत्** त्रि० ब्र(व्र)ह्म तपः करोति कृ-क्विप् । १तपःकर्त्तरि २विष्णौ पु० "ब्र(व्र)ह्मण्यो ब्र(व्र)ह्मकृत् ब्रह्मा" विष्णुस०

**ब्र(व्र)ह्मकृत** त्रि० ३त० । ब्रह्मणा कृते । ततः शुभ्रा०अपत्ये ढक् । ब्राह्मकृतेय तदपत्ये पुंस्त्री० । [राजनि० ।

**ब्र(व्र)ह्मकोशी** पु० ब्र(व्र)ह्मणः कोशीव । अजमोदायाम्

**ब्र(व्र)ह्मगर्भा** स्त्री ब्र(व्र)ह्मेव गर्भोऽस्य । आदित्यभक्तायाँ राजनि० ।

**ब्र(व्र)ह्मगार्ग्य** पु० ऋषिभेदे हरिवं० १५९ अ० ।

**ब्र(व्र)ह्मगिरि** पु० कामाख्यानिलयपूर्वस्यां स्थिते गिरिभेदे "ततस्तु नीलकूटाख्यं कामाख्यानिलयं परम् । तत्पूर्वभागे वसति ब्रह्मा ब्रह्मगिरिः पुनः" कालिकापु० ८१अ०

**ब्र(व्र)ह्मगीता** स्त्री ६त० । भा० आनु० ३५ अ० दर्शितायां ब्रह्मणा कथितायां अनुशासनरूपगाथायाम् ।

"अत्र गाथाः पुरा गीताः कीर्त्तयन्ति पुराविदः । सृष्ट्वा द्विजातीन् धाता हि यथापूर्वं समादधत् । न चान्यदिह कर्त्तव्यं किञ्चिदूर्द्ध्वं यथाविधि । गुप्तो गोपायते ब्रह्म श्रेयो वस्तेन शोभनम् । स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति । प्रमाणं सर्वभूतानां प्रग्रहाश्च भविष्यथ । न शौद्रं कर्म कर्त्तव्यं ब्राह्मणेन विपश्चिता । शौद्रं हि कुर्वतः कर्म धर्मः समुपरुध्यते । श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी । स्वाध्यायं चैव माहात्म्यं विपुलं प्रतिपत्स्यथ । हुत्वा चाहवनीयस्थं महाभाग्ये प्रतिष्ठिताः । अग्रभोक्तारः प्रसूतानां श्रिया ब्राह्म्याऽनुकल्पिताः । श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया । दमस्वाध्यायनिरताः सर्वान् कामानवाप्स्यथ । यच्चैव मानुषे लोके यच्च देवेषु किञ्चन । सर्वं तु तपसा साध्यं ज्ञानेन नियमेन च । इत्येवं ब्रह्मगीतास्ते समाख्याता मयाऽनघ" ।

**ब्र(व्र)ह्मग्रन्थि** पु० यज्ञोपवीतस्य ग्रन्थिभेदे

**ब्र(व्र)ह्मघातक** पु० ब्रह्माणं विप्रं हन्ति हन-ण्वुल् । १ब्रह्महत्याकारके "पङ्क्तिभेदी वृथा पाकी नित्यं ब्राह्मणनिन्दकः । आदेशी वेदविक्रेता पञ्चैते ब्रह्मघातकाः" । व्यासोक्ते पारिभाषिके २पापभेदयुक्ते त्रि० । ब्रह्मघातोऽस्त्यस्याः "अत इनि ठनौ" । ठन् । ह्रादश्यां अज्ञाने ब्रह्महत्यापापयुतायां पूतिकायां "पूतिका ब्रह्मघातिका" त्रि०त० ।

**ब्र(व्र)ह्मघोष** पु० ६त० । वेदध्वनौ ।

**ब्र(व्र)ह्मघ्न** त्रि० ब्रह्माणं ब्राह्मणं हन्ति हन-क । ब्रह्महत्याकारके "ब्रह्मघ्नमपि चण्डालं कं पतन्तं पुनीमहे" म० त० । स्त्रियां ङीप् ।

**ब्र(व्र)ह्मचक्र** न० ब्रह्मनिर्मितं चक्रम् । १कार्य्यकरणात्मके संसाररूपे चक्रे । "सर्वाजीवे सर्वसंस्थे वृहन्ते अस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे" श्वेताश्वतरोप० । तद्रूपात्मकोऽस्मिन् २देवोपयोगिचक्रभेदे च ।

**ब(ब्र)ह्मचर्य्य** न० ब्रह्मणे वेदग्रहणार्थं चर्य्यम्। द्विजानां वेदग्रहणार्थव्रतभेदे। "प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा। ग्रहणान्तिकमित्येके" गरुडपु० ९४अ०। तत्प्रकारो मनुनोक्तो यथा

"कृतोपनयनस्यास्य व्रतादेशनमिष्यते। ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्वकम्। यद् यस्य विहितञ्चर्म यत् सूत्रं या च मेखला। यो दण्डो यच्च वसनन्तत्तदस्य व्रतेष्वपि। सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्। सन्नियम्येन्द्रियग्रामन्तपोवृद्ध्यर्थमात्मनः। नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम्। देवताभ्यर्चनञ्चैव समिदाधानमेव च। वर्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः। शुक्तानि यानि सर्वाणि प्राणिनाञ्चैव हिंसनम्। अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्। कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम्। द्यूतञ्च जनवादञ्च परिवादन्तथाऽनृतम्। स्त्रीणाञ्च प्रेक्षणालम्भमुपघातम्परस्य च। एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्। कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः। स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्। उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्। आहरेद्यावदर्थानि भैक्ष्यञ्चाहरहश्चरेत्। वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु। ब्रह्मचार्य्याहरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम्। गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु। अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत्। सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसम्भवे। नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत्। दूरादाहृत्य समिधः संनिदध्याद्विहायसि। सायंप्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः। अकृत्वा भैक्षचरणमसमिध्य च पावकम्। अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्। भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद् व्रती। भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता। व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत्। काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते। ब्राह्मणस्यैव कर्मैतदुपदिष्टं मनीषिभिः। राजन्यवैश्ययोस्त्वेवं नैतत् कर्म विधीयते"। ततः गुरुवृत्तिरुक्ता सा च गुरुशब्दे [illegible] पृ० दर्शिता। २योगाङ्गयमभेदे च "अहिंसासत्यास्तेयब(ब्र)ह्मचर्य्याऽपरिग्रहा यमाः" पात०। तत्र ब्रह्मचर्य्यं व्याकृतं भाष्यविवरणाभ्यां यथा "ब(ब्र)ह्मचर्य्यं गुप्तेन्द्रियस्योपस्थस्य संयमः" भा०। "संयतोपस्थोऽपि हि स्त्रीप्रेक्षणतदालापकन्दर्पायतनतदङ्गस्पर्शनसक्तो न ब(ब्र)ह्मचर्य्यवान् तन्निरासायोक्तं गुप्तेन्द्रियस्येति इन्द्रियान्तराण्यपि तत्र लोलुपानि रक्षणीयानि" विव०। तत्र अष्टाङ्गमैथुनशब्दे ५२४ पृ० दर्शितवाक्येन मैथुनस्य स्मरणाद्यष्टाङ्गतया तदुपयोगीन्द्रियाणि संयम्यानीत्यर्थः। तत्फलञ्च तत्रोक्तं यथा "ब(ब्र)ह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः" पात०। "यस्य लाभादप्रतिघान् गुणानुत्कर्षयति सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवति" भा०। "वीर्य्यं सामर्थ्यं यस्य लाभादप्रतिघान् गुणानणिमादीन् विनेयेषु शिष्येषु ज्ञानं योगतदङ्गविषयमाधातुं समर्थो भवति" विव०। तथाच अष्टाङ्गमैथुनवर्जनमेव ब(ब्र)चर्य्यं तच्च स्त्रीपुंसयोः साधारणं पुंसः स्त्रीस्मरणाद्यष्टाङ्गराहित्यस्येव स्त्रीणां पुंस्मरणादिशून्यत्वस्यापि तथात्वम् "अतएव ब(ब्र)ह्मचर्य्यं तदन्वारोहणं वा" विष्णुसू०। विधवानामपि ब(ब्र)ह्मचर्य्यं विहितम् "मृते भर्त्तरि साध्वी स्त्री ब(ब्र)चर्य्यव्यवस्थिता। स्वर्गं गच्छत्यपुत्रापि यथा ते ब(ब्र)ह्मचारिणः" मनुव्याख्यायां ब(ब्र)चर्य्ये व्यवस्थिता अकृतपुरुषान्तरमैथुना" कुल्लू०उक्तम्। भावे क्यप् ब्रह्मचर्य्या तत्रार्थे स्त्री।

**ब(ब्र)ह्मचारिन्** पु० ब(ब्र)ह्म वेदस्तद्ग्रहणार्थं चरति व्रतभेदम् चर+णिनि। १उपनयनानन्तराद्याश्रमयुते द्विजातौ उपचारात् २तदाश्रमे च। तस्य कर्त्तव्यादिकं मनूक्तं ब(ब्र)चर्य्यशब्दे दर्शितम्।

**ब(ब्र)ह्मचारिणी** स्त्री "वेदेषु चरते यस्मात् तेन सा ब्रह्मचारिणी" देवीपु०४५अ० निरुक्तियुक्तायां वेदमातृगम्यायां चिच्छक्तिरूपायां १दुर्गायां २ब्रह्मचर्य्ययुतायां स्त्रियाञ्च "आसीतामरणात् क्षान्ता नियता ब(ब्र)ह्मचारिणी" मनुः। ३करुणीवृक्षे राजनि०।४ब्राह्मीशाके रत्नमाला।

**ब(ब्र)ह्मज** पु० ब्रह्मणो जायते जन–ड। १हिरण्यगर्भे "यो वै ब(ब्र)ह्माणं विदधाति पूर्वं यस्मात् प्रहिणोति वेदम्" श्रुतेः "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः" इत्युपक्रमे "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति मनूक्तेश्च तस्य तथात्वम्। २ब्रह्मजातमात्रे पञ्चभूतादौ च "यतो वा इमानि भूतानि जायन्ते" इत्युपक्रमे "तद् विजिज्ञासस्व ब्रह्मेति" श्रुतौ ब्रह्मतः सर्वभूतोत्पत्तिश्रवणात्।

**ब्र(ब्र)ह्मज्ञ** त्रि० ब्रह्म जानाति ज्ञा–क । १ब्रह्मवेत्तरि २विष्णौ पु० "ब्रह्मज्ञो ब्राह्मणप्रियः" विष्णुस०। [राजनि०

**ब्र(ब्र)ह्मजटा** स्त्री ब्रह्मणो जटेव संहतत्वात् । दमनकवृक्षे

**ब्र(ब्र)ह्मजा(या)मल** न० यामलभेदे तन्त्रे ।

**ब्र(ब्र)ह्मजिज्ञासा** स्त्री ६त० । ब्रह्मावगतिफलके विचारे । शारीरकभाष्ये १सूत्रे तत्राधिकार्य्यादिकं दृश्यम् ।

**ब्र(ब्र)ह्मजीविन्** पु० ब्रह्म वेदस्तद्विहितेन श्रौतकर्मणा जीवति जीव–णिनि । वृत्त्यर्थं परकीयश्रौतादिकर्मकारके

**ब्र(ब्र)ह्मज्ञान** न० ब्रह्मणो ज्ञानं तेन सह आत्माभेदज्ञानम् । ब्रह्मविद्यायां तच्च अहं ब्रह्मास्मीत्येवंरूपम् "आत्मानं चेद् विजानीयादयमस्मीति पूरुषः । किमिच्छन् कस्य कामाय किमर्थमनुसंज्वरेत्" श्रुत्या तदभेदज्ञानस्यैव मोक्षहेतुत्वमुक्तं "वेदान्तसाङ्ख्यसिद्धान्तब्रह्मज्ञानं वदाम्यहम् । अहंब्रह्म परं ज्योतिः विष्णुरित्येव चिन्तयेत् । सूर्य्ये हृद्व्योम्नि वह्नौ च ज्योतिरेकं त्रिधा स्थितम् । यथा अग्निः शरीरस्थं नरां न कुरुते बलम् । निर्गतं कर्मसंयुक्तं दत्ते तासां महाबलम् । तथा विष्णुः शरीरस्थो न करोति हितं नृणाम् । विनाऽऽराधनया देवः सर्वगः परमेश्वरः । आरुरुक्षुयतीनाञ्च कर्मज्ञानमुदाहृतम् । आरूढयोगवृक्षाणां ज्ञानं योगः परं मतम्" गरुडपु० २४० अ० । न्यायादिमते तत्त्वारोपज्ञानं वेदान्तिमते प्रमारूपम् । तत्त्वमसि अहंब्रह्मास्मीत्यादिवाक्यजन्यमपि तज्ज्ञानं मननिदिध्यासनादिना पश्चात् प्रत्यक्षत्वमयते । तज्ज्ञानाभिलापादिकं विवेकचू० दर्शितं यथा "अव्यक्तादिस्थूलपर्य्यन्तमेतद्विश्वं यत्राभासमात्रं प्रतीतम् । व्योमप्रख्यं सूक्ष्ममाद्यन्तहीनं ब्रह्माद्वैतं यत्तदेवाहमस्मि । सर्वाधारं सर्ववस्तुप्रकाशं सर्वाकारं सर्वगं सर्वशून्यम् । नित्यं शुद्धं निश्चलं निर्विकल्पं ब्रह्माद्वैतं यत् तदेवाहमस्मि । यन्निर्दिष्टाशेषमायाविशेषं प्रत्यग्रूपं प्रत्ययागम्यमानम् । सत्यज्ञानानन्दमानन्दरूपं ब्रह्माद्वैतं यत् तदेवाहमस्मि । निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः । निर्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः । सर्वात्मकोऽहं सर्वोऽहं सर्वातीतोऽहमद्वयः । केवलाखण्डबोधोऽहमानन्दोऽहं निरन्तरम्" ।

**ब्र(ब्र)ह्मणस्पति** पु० ६त० अलुक्स० निघण्टौ तस्य वेदरूपत्वात्तैः एकपदत्वम् । १ब्राह्मणजातिस्वामिनि यजु० १५,२८ । २मन्त्राणां स्वामिनि च "पवित्रं विततं ब्रह्मणस्पते ! ।" ताण्ड्य० १।२।८ । "हे ब्रह्मणस्पते ! मन्त्रस्वामिन्" भा०

**ब्र(ब्र)ह्मण्य** पु० ब्रह्मणे हितः । १विष्णौ "ब्रह्मण्यो देवकीपुत्रः" विष्णुसं० । २ब्राह्मणहितमात्रे त्रि० ३ब्रह्मदारुवृक्षे पु० अमरः । ४मुञ्जतृणे ५तालवृक्षे राजनि० । ६शनैश्चरे ७ब्रह्मणि तपसि साधौ त्रि० मेदि० ।

**ब्र(ब्र)ह्मतीर्थ** ६त० । १पुष्करमूले राजनि० २पुष्करतीर्थे च । ३तीर्थभेदे यत्र स्नाने "तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः । ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम्" भा० व० ८३अ० । फलश्रुतम् ।

**ब्र(ब्र)ह्मत्व** न० ब्रह्मणो भावः त्व । १ऋत्विग्विशेषस्य ब्रह्मणो धर्मे २शुद्धतुरीयब्रह्मभावे च ।

**ब्र(ब्र)ह्मतुङ्ग** पु० कालपर्वतभेदे । "स्निग्धाञ्जनचयाकारं संप्राप्तः कालपर्वतम् । ब्रह्मतुङ्गं नदीश्चान्यास्तथा जनपदानपि" भा० द्रो० ८अ० ।

**ब्र(ब्र)ह्मद** पु० ब्रह्म वेदं ददाति । उपनीय वेददातरि आचार्य्ये "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता" मनुः दा–तृच ब्रह्मदातृ तत्रार्थे पु० ।

**ब्र(ब्र)ह्मदण्ड** पु० ब्रह्मणो दण्डः । १ब्राह्मणदण्डे २अभिशापरूपे दण्डे "ब्रह्मदण्डहता ये च विद्युदग्निहताश्च ये" ति० त० षोडशीश्राद्धमन्त्रः । ३वसिष्ठब्रह्मयष्टिरूपे दण्डे च । "धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं परम् । एकेन ब्रह्मदण्डेन बहवो नाशिता मम" रामा० अयो० विश्वामित्रवाक्यम् । ४ब्राह्मणयष्टिकायां शब्दच० । ५विप्रस्य यष्टौ च । ६केतुभेदे वृ०सं० ११अ० । केतुशब्दे दृश्यम् ।

**ब्र(ब्र)ह्मदण्डी** स्त्री क्षुद्रो दण्डः ङीप् ब्रह्मोपपदनाम्नि दण्डी । क्षुद्रक्षुपभेदे कण्टकपत्रफलायामजगन्धायां राजनि० ।

**ब्र(ब्र)ह्मदत्त** इक्ष्वाकुवंश्ये नृपभेदे ३त० । २हिरण्यगर्भेण दत्ते त्रि० ४त० । ३विप्राय दत्ते त्रि० । ४शुकदेवस्य कन्यायां कृत्वीसमाख्यायां अणुहस्य पुत्रभेदे पु० तत्कथा हरिवं० ११ अ० दृश्या । [याम् अमरः ।

**ब्र(ब्र)ह्मदर्भा** स्त्री ब्रह्मणो दर्भो गन्धयस्याः । यमानिका-

**ब्र(ब्र)ह्मदाय** पु० ब्र(ब्र)ह्म वे(वे)दो वा वेदाध्ययनसमाप्तौ विप्राय वा राज्ञा दीयते दा–कर्मणि घञ् । समावृत्तविप्राय देये धने "ब्र(ब्र)ह्मदायागतां भूमिं हरेद्ब्रह्मयोस्ततः" दायभागधृतस्मृतिः । [वृक्षभेदे अमरः ।

**ब्र(ब्र)ह्मदारु** पु० ब्रह्मणो विप्रस्य हितः दारुः । अश्वत्थाकारे

**ब्र(ब्र)ह्मद्विष्** त्रि० ब्रह्मणे वेदाय विप्राय द्वेष्टि द्विष–क्विप् । १वेदविप्रयोर्द्वेष्टरि २वेदनिन्दके च मनुः ३।१५ ।

बृ(ब्र)ह्मन् न० बृंह-मनिन् "बृंहेर्नोऽच्चेति" उणा० नकारस्याकारे ऋतो रत्वम्। १वेदे "तस्मादेतद् ब्रह्म नाम रूपमन्नञ्च जायते स्मृतिः"। "तेन ब्रह्म हृदा" भाग० १।१।१। २तपसि, ३सत्ये ४तत्त्वे यथार्थे अमरः। सर्वगुणातीते विशुद्धे तुरीये ५चित्स्वरूपे च। ६हिरण्यगर्भे ७विप्रे ८ऋत्विग्विशेषे च पुं० अमरः। विष्कम्भादिषु पञ्चविंशे ९योगे मेदि०। उज्ज्वलदत्तेन दन्त्योष्ठ्यादित्वेन साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्त्तनात्तथापि। ब्रह्म च सच्चिदानन्दात्मकम्। तत्र तस्य स्वरूपलक्षणम्। विवरणानुसारिणस्तु "आनन्दो विषयानुभवो नित्यत्वञ्चेति सन्ति धर्मा अपृथक्त्वेऽपि पृथगिवावभासन्ते" इति तत्रोक्तौ मिथ्याभावः सत्यत्वम् अज्ञानभावश्चित्त्वम्। दुःखाभाव आनन्द इत्याहुः। तेषामभावानाञ्च ब्रह्मरूपाधिकरणे स्थितत्वात् अभावस्याधिकरणस्वरूपतया ब्रह्मरूपत्वमिति। तस्य तटस्थलक्षणञ्च जगज्जन्मस्थितिप्रलयानां प्रत्येकमुपादानप्रत्यक्षचिकीर्षाकृतिमत्त्वं तेन नवलक्षणवत्त्वम्" वेदान्तप०। अतएवोक्तं श्रीधरेण "विश्वसर्गविसर्गादिनवलक्षणलक्षितमिति"। तच्च ब्रह्म द्विविधं निर्गुणं सगुणञ्च। सच्चिदानन्दात्मकस्यैव निर्गुणत्वं जगज्जन्मादिकर्तृ च सगुणत्वम्। जाग्रदाद्यवस्थात्रयसाक्षिणश्च सगुणत्वं अवस्थात्रयातीतस्य चतुरीयसंज्ञा "शिवमद्वैतं चतुर्थं मन्यन्ते" इति श्रुतेस्तुरीयत्वम्। तत्र तस्य तटस्थलक्षणाभिप्रायेण "जन्माद्यस्य यतः" शा०सू० "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व ब्रह्मेति" श्रुतिश्च प्रवृत्ते तस्य स्वरूपलक्षणाभिप्रायेण "निर्गुणं निष्कलं शान्तं निरवद्यं निरञ्जनम्" इत्याद्याः श्रुतयः प्रवृत्ताः। आत्मबोधे तु तस्य ब्रह्मणोऽखिलवस्त्वपेक्षया श्रेष्ठत्वाद्ब्रह्मत्वमुक्तं यथा "यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्। यज्ज्ञानान्नापरं ज्ञानं तद्ब्रह्मेत्यवधारयेत्। यद् दृष्ट्वा नापरं दृश्यं यद्भूत्वा न पुनर्भवः। यज्ज्ञात्वा नापरं ज्ञेयं तद्ब्रह्मेत्यवधारयेत्। तिर्य्यगूर्द्ध्वमधः पूर्णं सच्चिदानन्दमद्वयम्। अनन्तं नित्यमेकं यत्तद्ब्रह्मेत्यवधारयेत्। अतद्व्यावृत्तिरूपेण वेदान्तैर्लक्ष्यतेऽद्वयम्। अखण्डानन्दमेकं यत् तद्ब्रह्मेत्यवधारयेत्। दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत्। तत्त्वज्ञानाच्च तद्ब्रह्म सच्चिदानन्दमद्वयम्। सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते। अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत्"। तच्च निर्गुणमपि गुणभेदेन नानारूपं यथोक्तम् "ब्रह्मैकं मूर्त्तिभेदस्तु गुणभेदेन सन्ततम्। तद्ब्रह्म द्विविधं वस्तु सगुणं निर्गुणं शिव!। मायाश्रितो यः सगुणो मायातीतश्च निर्गुणः। स्वेच्छामयश्च भगवानिच्छया विकरोति च। इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा। केचिदेकं वदन्त्येवं ब्रह्म ज्योतिः सनातनम्। केचिद्वदन्ति द्विविधं ब्रह्मप्रकृतिपूर्वकम्। शृणु ये च वदन्त्येकं प्रकृतिपुरुषयोः परम्। तस्माद्भवति तौ द्वौ च तद्ब्रह्म सर्वकारणम्"। अथवैकं परं ब्रह्म द्विविधं भवतीच्छया। इच्छाशक्तिश्च प्रकृतिः सर्वशक्तिप्रसूः सदा" ब्रह्मवैवर्त्ते जन्मख० ४२ अ०। तस्य नवधा रूपं यथा "योगिनो यं वदन्त्येवं ज्योतीरूपं सनातनम्१। ज्योतिरभ्यन्तरे नित्यरूपं२ भक्ता वदन्ति यम्। वेदा वदन्ति सत्यं३ यं नित्यमाद्यं४ विचक्षणाः। यं वदन्ति सुराः सर्वे परं स्वेच्छामयं प्रभुम्५। सिद्धेन्द्रा मुनयः सर्वे सर्वरूपं६ वदन्ति यम्। यमनिर्वचनीयञ्च योगीन्द्रः शङ्करो वदेत्७। स्वयं धाता च प्रवदेत् कारणानाञ्च कारणम्८। शेषो वदेदनन्तं९ यं नवधारूपमीश्वरम्। तर्काणामेव सङ्ख्यां यं षड्विधं रूपमीश्वरम्। वैष्णवानामेकरूपं वेदानामेकमेव च। पुराणानामेकरूपं तस्मान्नवविधं स्मृतम्। न्यायोऽनिर्वचनीयञ्च यन्मतं शङ्करोऽब्रवीत्। नित्यं वैशेषिकास्त्वन्यं वदन्ति च विचक्षणाः। सांख्यो वदति तं देवं ज्योतीरूपं सनातनम्। मीमांसा सर्वरूपञ्च वेदान्तः सर्वकारणम्। पातञ्जलोऽप्यनन्तञ्च वेदाः सत्यस्वरूपकम्। स्वेच्छामयं पुराणञ्च भक्ताश्च नित्यविग्रहम्" इति तत्रैव १२८अ०। अन्यथाऽपि सत्त्वादिगुणभेदेन तस्य चतुर्धारूपं यथा "चतुर्विभागः संसृष्टौ चतुर्धा संस्थितः स्थितौ। प्रलयञ्च करोत्यन्ते चतुर्भेदो जनार्दनः। एकेनांशेन ब्रह्माऽसौ भवत्यव्यक्तमूर्त्तिमान्। मरीचिमिश्राः पतयः प्रजानामन्यभागतः। कालस्तृतीयस्तस्यांशः सर्वभूतानि चापरः। इत्थं चतुर्धा संसृष्टौ वर्त्ततेऽसौ रजोगुणः। एकांशेन स्थितो विष्णुः करोति परिपालनम्। मन्वादिरूपी चान्येन कालरूपी परेण च। सर्वभूतेषु चान्येन संस्थितिं कुरुते स्थितः। सत्त्वं गुणमुपाश्रित्य जगतः पुरुषोत्तमः। आश्रित्य तमसो वृत्तिमन्तकाले तथा प्रभुः। रुद्रस्वरूपी भगवानेकांशेन भवत्यजः। अग्न्यन्तकादिरूपेण भागेनान्येन वर्त्तते।

कालस्वरूपो भागोऽन्यः सर्व्वभूतानि चापरः। विनाशं कुर्व्वतस्तस्य चतुर्द्धैवं महात्मनः” विष्णुपु० १अंशे २१अ०। वेधाश्च रजोगुणप्रधानोपाधिकः कार्य्यब्रह्मा। ऋत्विग्भेदश्च अच्छावाकशब्दे ८५ पृ० दर्शितेषु प्रधानेषु चतुर्षु ऋत्विक्षु मध्ये एकतमः।“त्रयाणामपराधे तु ब्रह्मा परिहरेत् सदा” सामा० भाष्यधृतकारिका। “त्रयाणामध्वर्य्यूद्गातृहोतॄणां वेदत्रयविदां मध्ये ऋत्विगेको ब्रह्मनामको वेदत्रयमन्त्रतद्विहितकर्म्मविषये अपराधो न्यूनभावो यदि जायते तस्यापराधस्य परिहारं प्रतीकारं कुर्य्यात्” इति तदर्थः। “वरस्य हैष भिषक् ब्रह्मेति” भाष्यधृतस्मृत्यन्तरम्। अतएवास्य कृताकृतावेक्षणार्थं वरणमन्यत्रोक्तम्। १०इन्द्रस्तौ च ब्रह्मपुरोहितशब्दे दृश्यम्।

ब्(व्र)ह्मनाल न० ब्रह्मणो नालमिव। काश्यां मणिकर्णिकासमीपस्थे तीर्थभेदे। “पितामहेश्वरं लिङ्गं ब्रह्मनालोपरि स्थितम्। पूजयित्वा नरो भक्त्या ब्रह्मलोकमवाप्नुयात्। ब्रह्मस्रोतःसमीपे तु कृतं कर्म शुभाशुभम्। परामक्षयतामेति शुभमेव ततश्चरेत्। अनल्पमपि यत् कर्म कृतमत्र शुभाशुभम्। प्रलयेऽपि न तस्यास्ति प्रलयो मुनिसत्तम!। नाभीतीर्थमिदं प्रोक्तं नाभीभूतं यतः क्षितेः। अपि ब्रह्माण्डगोलस्य नाभिरेषा शुभोदया। सा मणिकर्णिकेयीयं नाभिगाम्भीर्य्यभूमिका। ब्रह्माण्डगोलकं सर्वं यस्यामेति लये लयम्। ब्रह्मनालं परं तीर्थं त्रिषु लोकेषु विश्रुतम्। तत्सङ्गमे नरः स्नातः कोटिजन्ममलं हरेत्। ब्रह्मनाले पतेद्धुयेषामपि कीकसमात्रकम्। ब्रह्माण्डमण्डपान्तस्ते न विशन्ति कदाचन” काशीख० ६१अ०।

ब्(व्र)ह्मनिर्वाण न० ब्(व्र)ह्मणि निर्वाणं निर्वृतिः। ब्(व्र)ह्मभावलाभे सकलानर्थनिवृत्तिरूपे परमानन्दे “एषा ब्राह्मी स्थितिः पार्थ! नैनां प्राप्य विमुह्यति। स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति” गीता।

ब्(व्र)ह्मपत्र न० ब्रह्मणः तन्नामकवृक्षस्य पत्रम्। पलाशपत्रे। “भोजनं ब्रह्मपत्रेषु कथया लोचनं हरेः। दर्शनं वैष्णवानाञ्च महापातकनाशनम्” पाद्मोत्तरख० ११८अ०।

ब्(व्र)ह्मपर्णी स्त्री ब्(व्र)ह्मेव विस्तीर्णानि मूलादारभ्य स्थितानि पर्णान्यस्याः ङीप्। पृश्निपर्ण्याम् राजनि०।

ब्(व्र)ह्मपवित्र पु० ब्(व्र)ह्मेव वेदोक्तकर्मणि वा पवित्रः। कुशे राजनि०।

ब्(व्र)ह्मपादप पु० ब्(व्र)ह्मणः प्रियः वैदिककर्म्मयोग्यत्वात् विप्रब्(व्र)ह्मचारिधार्य्यदण्डार्थत्वाद्वा ब्रह्मनामकत्वात् वा पादपः। पलाशवृक्षे हेमच०। “पलाशो वै ब्रह्म” शत०ब्रा० पलाशवृक्षशब्दे दृश्यम्।

ब्(व्र)ह्मपुत्र पु० ब्(व्र)ह्मणः पुत्र इव कपिलवर्णत्वात्। १विषभेदे अमरः। तद्विषस्य लक्षणं भावप्र० उक्तं यथा “वर्णतः कपिलो यः स्यात्तथा भवति सारकः। ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले”। २उत्तरदेशप्रसिद्धे ३नदभेदे ४क्षेत्रभेदे च। ५सरस्वत्यां नद्यां स्त्री। तस्याः पितामहजातत्वं ब्रह्माणीशब्दे दृश्यम्। तस्य नदस्योत्पत्तिकथा “हरिवंशे महावंशे शान्तनुर्नाम नामतः। मुनिरासीन्महाभागो ज्ञानवान् सुतपोधनः। तस्य भार्य्या महाभागा अमोघाख्या महासती। हिरण्यगर्भस्य मुनेः पत्न्यात्मसमुद्भवा। तया सार्द्धं स कैलासमर्य्यादापर्वतेऽवसत्। लौहित्याख्यस्य सरसस्तीरे वै गन्धमादने। एकदा स तपोनिष्ठो निजपुण्यादिगोचरे। जगाम वनमध्यन्तु चिन्वन् वस्त्रफलानि च। तस्मिन्नवसरे ब्रह्मा सर्व्वलोकपितामहः। तत्राजगाम यत्रास्ते अमोघा शान्तनोः प्रिया। तां दृष्ट्वा देवगर्भाभां युवतीमतिसुन्दरीम्। मोहितो मदनेनाशु तथाऽभूत् क्षुभितेन्द्रियः। उदीरितेन्द्रियो भूत्वा जिघृक्षुस्तां महासतीम्। अथाधावत्तदा ब्रह्मा सम्मुखो मदनार्दितः। धावमानं विधातारं दृष्ट्वाऽमोघा महासती। नैवं नैवमिति प्रोच्य पर्णशालां व्यलीयत। इदञ्चोवाच धातारममोघा कुपिता तदा। पर्णशालान्तरगता द्वारमाहृत्य तत्क्षणात्। अकार्य्यं न मया कार्य्यं मुनिपत्न्या विगर्हितम्। बलात् प्रमथ्या चाहं चेन्त्वया त्वाञ्च शपाम्यहम्। अमोघया चैवमुक्ते विधातुश्च तदा नृप!। रेतश्चस्कन्द च तदैवाश्रमे शान्तनोर्मुनेः। च्युते रेतसि धातापि हंसयानं समाश्रितः। लज्जयातिपरीतात्मा द्रुतं वै स्वाश्रमं ययौ। गते वेधसि शान्तनुर्निजमाश्रममागतः। आगत्य दृष्ट्वा हंसानां पदक्षोभं तथा भुवि। तेजश्च पतितं भूमौ विचार्य्य च वनोपमम्। अमोघां परिपप्रच्छ पर्णशालान्तरस्थिताम्। किमेतदत्र सुभगे! प्रहृत्तं इहासीत् तु यत्। पक्षिणाञ्च पदक्षोभस्तेजश्चेदञ्च कीदृशम्। सा तस्य वचनं श्रुत्वा शान्तनुं मुनिसत्तमम्। धर्षितेव न्यगदद्रात्रुका विकलानना। हंसयुक्तस्यन्दनेन कोऽप्यागत्य चतुर्मुखः।

कमण्डलुकरो भोक्तुं रतिं मां समयाचत । ततो मया भर्त्सितः स कुटजान्तरलीनया । प्रच्याव्य तेजः स गतो मम शापभयार्दितः । कुरु तत्र प्रतीकारं यदि शक्नोषि शान्तनो ! । न हि तां धर्षणां सोढुं कश्चित् शक्नोति जीवन्त्वत् । स तस्या वचनं श्रुत्वा स्वयं ब्रह्मा समागतः । इति निश्चित्य मनसा तत्र ध्यानपरोऽभवत् । दिव्यज्ञानेन स ज्ञात्वा देवकार्य्यमुपस्थितम् । तीर्थावतारणञ्चापि हिताय जगतां मुनिः । ज्ञात्वोदर्कं चिन्तयित्वा स्वभार्य्यामिदमब्रवीत् । इदं तेजो ब्रह्मणस्त्वं पिबामोघे ! ममाज्ञया । हिताय सर्वजगतां देवकार्य्यार्थसिद्धये । भवत्या निकटे ब्रह्मा स्वयमेव समागतः । त्वामप्राप्य स महात्मा ह्यावयोः स समर्प्य च । गतो निजास्पदं तच्च कर्त्तुमर्हसि मद्वचः । तत् श्रुत्वा शान्तनोर्वाक्यममोघातीव लज्जिता । सान्त्वयन्तीव तं प्राह पतिं नत्वा महासती । नान्यस्य तेजो धास्यामि न चेच्चे विमनस्कता । अवश्यं यदि कर्त्तव्यं पीत्वा त्वं मयि चोत्सृज । ततस्तस्या वचः श्रुत्वा युक्तं तथ्यञ्च शान्तनुः । स्वयं पीत्वा च तत्तेजस्तस्या गर्भेऽभ्यषेचयत् । संक्रामितैः शान्तनुना तेजोभिर्ब्रह्मणः सती । गर्भं दधारामोघाख्या हिताय जगतां ततः । तस्यां काले तु संप्राप्ते संजातोजलसञ्चयः । तन्मध्ये तनयश्चापि नीलवासाः किरीटधृक् । रत्नमालासमायुक्तो रक्तगौरश्च ब्रह्मवत् । चतुर्भुजः पद्मविद्यावरशक्तिधरस्तथा । शिशुमारशिरस्यश्च तुल्यकायो जलोत्करैः । तं जातञ्च तथाभूतं शान्तनुर्लोकशान्तनुः । चतुर्णां पर्वतानाञ्च मध्यदेशे न्यवेशयत् । कैलासस्योत्तरे पार्श्वे दक्षिणे गन्धमादनः । जारुधिः पश्चिमे शैलः पूर्वे संवर्त्तकाह्वयः । तेषां मध्ये स्वयं कुण्डं पर्वतानां विधेः सुतः । स त्वाऽतिवद्धृधे नित्यं शरदीव निशाकरः । तं तोयमध्यगं पुत्रमासाद्य द्रुहिणः स्वयम् । क्रमतस्तस्य संस्कारानकरोद्देहशुद्धये । अथ काले बहुतिथे व्यतीते ब्रह्मणः सुतः । तोयराशिस्वरूपेण ववृधे पञ्च योजनान् । तस्मिन् देवाः पपुः सस्नुर्दिवीय इव सागरे । शीतामलजले ह्रदे देवसाप्सरसां गणैः । तस्मिन्नवसरे रामो जामदग्न्यः प्रतापवान् । चक्रे मातृवधं घोरमत्युग्रं पितुराज्ञया । तस्य पापस्य मोचाय स्वपितुस्तोपदेशतः । स जगाम महाकुण्डं ब्राह्माख्यं स्नातुमिच्छया । तत्र स्नात्वा च पीत्वा च मातृहत्यां व्यपानयत् । शीर्घं परशुना कृत्वा तञ्च ब्राह्ममवातारयत्" तदुत्तरत्र "ब्रह्मकुण्डात् स्रुतः सोऽथ कासारे लोहिताह्वये । कैलासोपत्यकायान्तु न्यपतद् ब्रह्मणः सुतः । तस्यापि सरसस्तीरं समुत्पाद्य महाबलः । कुठारेण दिशं पूर्वामनयद् ब्रह्मणः सुतम् । ततोऽपरत्रापि गिरिं हेमशृङ्गं विभिद्य च । कामरूपान्तरं पीठमवाहयदसं हरिः । तस्य नाम विधिश्चक्रे स्वयंलोहितगङ्गकम् । लौहित्यात् सरसो जातो लौहित्याख्यस्ततोऽभवत् । स कामरूपमखिलं पीठमाप्लाव्य वारिणा । गोपयन् सर्वतीर्थानि दक्षिणं याति सागरम् । प्रागेव दिव्ययमुनां संत्यज्य ब्रह्मणः सुतः । पुनः पतति लौहित्ये गत्वा द्वादशयोजनम् । चैत्रे मासि सिताष्टम्यां यो नरो नियतेन्द्रियः । स्नाति लौहित्यतोयेषु स याति ब्रह्मणः पदम् । चैत्रन्तु सकलं मासं शुचिः प्रयतमानसः । लौहित्यतोये यः स्नाति स कैवल्यमवाप्नुयात्" कालिकापु० ८४.८५ अ० "मीने मधौ शुक्लपक्षे अशोकाख्यां तथाष्टमीम् । पिबेच्छोककलिकाः स्नायाल्लौहित्यवारिणि । पुनर्वसौ बुधे लग्ने चैत्रे मासि सिताष्टमीम् । लौहित्ये विरजे स्नायात् सर्वपापैः प्रमुच्यते" ति० त० ।

ब(ब्र)ह्मपुर न० ६त० । १ब्रह्मण उपासनार्थे हृदयस्थाने "अथ यदिदं ब्रह्मपुरे दहरं पुण्डरीकम्" छा० उ० । दहरशब्दे ३५१० पृ० दृश्यम् । "यः सर्वज्ञः सर्ववित् यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः" मुण्डकोप० । "ब्रह्मणोऽत्र चैतन्यस्वरूपेण नित्याभिव्यक्तत्वाद्ब्रह्मणः पुरं हृदयपुण्डरीकं तस्मिन्" भा । २विधातृनगर्य्यां ३काश्याञ्च वा स्त्री ङीप् तत्रार्थे । वृ०सं०१४अ०उक्ते ऐशानदिक्स्थे ४देशभेदे पु० (बरमा) देशे स्वार्थे क । तत्रार्थे मार्कपु० पूर्वोत्तरकूर्मभागस्थदेशोक्तौ ।

ब(ब्र)ह्मपुराण न० वेदव्यासप्रणीते महापुराणभेदे तत्प्रतिपाद्यविषयाश्च वृहन्नारदीये ४पा० ९२अ० उक्ता यथा "ब्राह्मं पुराणं तत्रादौ सर्वलोकहिताय वै । व्यासेन वेदविदुषा समाख्यातं महात्मना । तद्वै सर्वपुराणाग्र्यं धर्मकामार्थमोक्षदम् । नानाख्यानेतिहासाढ्यं दशसाहस्रमुच्यते" तत्पूर्वभागे "देवानामसुराणाञ्च यत्रोत्पत्तिः प्रकीर्त्तिता । प्रजापतीनाञ्च तथा दक्षादीनां मुनीश्वर ! । ततो लोकेश्वरस्यात्र सूर्य्यस्य परमात्मनः । वंशानुकीर्त्तनं पुण्यं महापातकनाशनम् । तत्रावतारः कथितः परमानन्दरूपिणः । श्रीमतो रामचन्द्रस्य चतुर्व्यूहाव-

तारिणः। ततश्च सोमवंशस्य कीर्त्तनं यत्र वर्णितम्। कृष्णस्य जगदीशस्य चरितं कल्मषापहम्। द्वीपानाञ्चैव सिन्धूनां वर्षाणां चाप्यशेषतः। वर्णनं यत्र पातालस्वर्गाणाञ्च प्रदृश्यते। नरकाणां समाख्यानं सूर्य्यस्तुतिकथानकम्। पार्वत्याश्च तथा जन्म विवाहश्च निगद्यते। दक्षाख्यानं ततः प्रोक्तमेकाम्रक्षेत्रवर्णनम्। पूर्वभागोऽयमुदितः पुराणस्यास्य मानद!"। तदुत्तरभागे। "अस्योत्तरे विभागे तु पुरुषोत्तमवर्णनम्। विस्तरेण समाख्यातं तीर्थयात्राविधानतः। अत्रैव कृष्णचरितं विस्तरात् समुदीरितम्। वर्णनं यमलोकस्य पितृश्राद्धविधिस्तथा। वर्णाश्रमाणां धर्माश्च कीर्त्तिता यत्र विस्तरात्। विष्णुधर्मयुगाख्यानं प्रलयस्य च वर्णनम्। योगानाञ्च समाख्यानं साङ्ख्यानां चापि वर्णनम्। ब्रह्मवादसमुद्देशः पुराणस्य च शंसनम्। एतद्ब्रह्मपुराणन्तु भागद्वयसमाचितम्। वर्णितं सर्वपापघ्नं सर्वसौख्यप्रदायकम्" तत्फलस्तुतिः। "सूतशौनकसंवादं भुक्तिमुक्तिप्रदायकम्। लिखित्वैतत् पुराणं यो वैशाख्यां हेमसंयुतम्। जलधेनुयुतञ्चापि भक्त्या दद्याद्द्विजातये। पौराणिकाय सम्पूज्य वस्त्रभोज्यविभूषणैः। स वसेद् ब्रह्मणो लोके यावच्चन्द्रार्कतारकम्। यः पठेच्छृणुयाद्वापि ब्रह्मानुक्रमणीं द्विज!। सोऽपि सर्वपुराणस्य श्रोतुर्वक्तुः फलं लभेत्। शृणोति यः पुराणन्तु ब्राह्मं सर्वं जितेन्द्रियः। हविष्याशी च नियमात् स लभेद् ब्रह्मणः पदम्। किमत्र बहुनोक्तेन यद्यदिच्छति मानवः। तत् सर्वं लभते वत्स! पुराणस्यास्य कीर्त्तनात्"

**ब्र(ब्र)ह्मपुरुष** पु० ब्रह्मणः पुरुष इव। ब्रह्मप्रापकेषु द्वारपालरूपेषु चक्षुः वाङ्मनःप्राणेषु। चक्षुरादीन् प्रक्रम्य "ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपालाः" छा० उ०। देवगुप्तिशब्दे २७४५।२७४६ पृ० एतद्भाष्यञ्च दृश्यम्।

**ब्र(ब्र)ह्मपुरोहित** पु० ब्रह्म बृहस्पतिः पुरोहितो यस्य देवे। "तस्मिन् यद्धि देवाः ब्रह्मपुरोहिता इति ब्रह्म वै बृहस्पतिर्ब्रह्मपुरोहिताः" शत० ब्रा० १२।८।३।२९।

**ब्र(ब्र)ह्मप्रसूत** त्रि० ३त०। १ब्रह्मजाते जगति २ब्राह्मणारब्धे कर्मणि न०। "यत् क्षत्रियोऽब्राह्मणो भवति स यत्र किं च कर्म कुरुतेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत् समृध्यते तस्मादु क्षत्रियेण कर्म करिष्यमाणेनोपसर्तव्य एव ब्राह्मणः सं हैवास्मै तद्ब्रह्मप्रसूतं कर्मर्ध्यते" शत० ब्रा० ४।१।४।६।

**ब्र(ब्र)ह्मबन्धु** पु० ब्रह्मा विप्रो बन्धुरुत्पादको यस्य ब्रह्मणो विप्रस्य बन्धुरिव या। १विप्राचाररहिते निन्द्यकर्मकारिणि जात्या विप्रे २विप्रतुल्ये भट्टादौ च। "अस्माकुलीनोऽननूच्य ब्रह्मबन्धुरिव भवति" छा० उ०। "हे सौम्याऽननूच्यानधीत्य ब्रह्मबन्धुरिव भवतीति ब्राह्मणान् बन्धून् व्यपदिशति न स्वयं ब्राह्मणवृत्तः" इति भा०। विप्रवंश्यापकृष्टब्राह्मणस्यापि दैहिकदण्डनिषेधो यथा "वपनं द्रविणादानं स्थानान्निर्वासनन्तथा। एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः" भाग० १स्क०

**ब्र(ब्र)ह्मबिन्दु** पु० ब्रह्मणि वेदाध्ययनकाले बिन्दुः। वेदाध्ययनकाले मुखनिःसरल्लालालेशे।

**ब्र(ब्र)ह्मबध्या** स्त्री बध–भावे क्यप् ६त०। ब्रह्महत्यायाम्।

**ब्र(ब्र)ह्मब्रुवाण** पु० आत्मानं ब्रह्माणं ब्रूते ब्रू–शानच्। विप्रतया आत्मनः कथके। यथा कर्णः आत्मानं विप्रं कथयित्वा परशुरामादस्त्रशास्त्रमधीतवान्" भा० उद्योग० ६१अ०। ब्राह्मणब्रुवि २अपकृष्टब्राह्मणे च। [मेदिनी०।

**ब्र(ब्र)ह्मभद्रा** स्त्री ७त०। विप्रहितायां त्रायमाणौषधौ

**ब्र(ब्र)ह्मभाग** पु० ६त०। ब्रह्मरूपर्त्विजे हरणीये यज्ञद्रव्यस्य भागभेदे "अथास्मै ब्रह्मभागं पर्याहरन्ति। ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता स एतं भागं प्रतिविद्वान आस्ते यत् प्राशित्रं तदस्मै पर्याहार्षुस्तत् प्राशीदथ यमस्य ब्रह्मभागं पर्याहरन्ति तेन भागी समदत अद्रसमं स्थितं यज्ञस्य तदभिगोपायति तस्माद्वाऽस्मै ब्रह्मभागं पर्याहरन्ति" शत० ब्रा० १।७।४।१८।

**ब्र(ब्र)ह्मभूति** स्त्री ब्रह्मणो भूतिरस्याः। १सन्ध्यायां शब्दच०। २ब्रह्मजातमात्रे त्रि०। [राजनि०।

**ब्र(ब्र)ह्मभूमिजा** स्त्री ब्रह्मभूमितो जायते जन–ड। सिंहल्यां

**ब्र(ब्र)ह्मभूय** न० भू–भावे क्यप् ६त०। ब्रह्मभावे शुद्धचैतन्यस्वरूपप्राप्तौ अमरः। [२५।७।१७ संग्रहव्याख्या।

**ब्र(ब्र)ह्ममण्डूकी** स्त्री मध्यपदलोपि ओषधीभेदे कात्या०श्रौ०

**ब्र(ब्र)ह्ममय** त्रि० ब्रह्मात्मके ब्रह्मन्+मयट्। ब्रह्मात्मके "दर्शनं तस्य लाभः स्यात् त्वं हि ब्रह्ममयो निधिः" भा० शा० ४६अ०। स्त्रियां ङीप्। काशी ब्रह्ममयीत्यादि। २ब्रह्मास्त्रे च भा० व० ६१अ०।

**ब्र(ब्र)ह्ममह** पु० ६त०। विप्रानुद्दिश्य उत्सवे। भा० आ० १६४अ०

**ब्र(ब्र)ह्ममित्र** पु० ब्रह्म मित्रमस्य। मुनिभेदे मार्कण्डे० ६२अ०।

**ब्र(ब्र)ह्ममीमांसा** स्त्री ६त०। ब्रह्मज्ञानार्थं वेदान्तवाक्यविचारात्मके व्यासप्रणीते ग्रन्थभेदे तत्प्रतिपाद्यविषयादि

वैयासिकन्यायमालायामुक्तं यथा "शास्त्रं ब्रह्मविचाराख्यमध्यायाः स्युश्चतुर्विधाः। समन्वयाविरोधौ २द्वौ साधनं३च फलं४ तथा। समन्वये स्पष्टलिङ्ग१मस्पष्टत्वे२ऽप्युपास्यगम्३। ज्ञेयगं४ पदमात्रञ्च चिन्त्यं पादेष्वनुक्रमात्। द्वितीये स्मृतितर्काभ्यामविरोधो१ऽन्यदुष्टता२। भूतभोक्तृश्रुतेर्३लिङ्गश्रुते४रप्यविरुद्धता। तृतीये विरति१स्तत्त्वम्पदार्थपरिशोधनम्२। गुणोपसंहृति३र्ज्ञाने बहिरङ्गादिसाधनम्४। चतुर्थे जीवतो मुक्ति१रुत्क्रान्ति२र्गतिरुत्तरा३। ब्रह्मप्राप्तिब्रह्मलोकाविति ४पादार्थसंग्रहः। तेन तत्र प्रत्येकं चतुष्टयपादयुताः चत्वारोऽध्यायाः। तच्च शास्त्रं बहुभिः स्वस्वमतानुसारेण व्याख्यातम् तत्र गौड़पादाचार्य्यशङ्कराचार्य्यादिभिरद्वैतपरतया व्याख्यातं रामानुजादिभिश्च विशिष्टाद्वैतपरतया, वल्लभाचार्य्यादिभिश्च विशुद्धाद्वैतपरतया माध्वाचार्य्यादिभिः द्वैतपरतया व्याख्यातं तत्तन्मतञ्च प्रायेण तत्तच्छब्दे दृश्यम्।

**ब्र(ब्र)ह्मयज्ञ** पु० ब्रह्मनिमित्तकस्तदध्ययनतदध्यापनानिमित्तको यज्ञः। वेदाध्ययनाध्यापनादौ अमरः। "अध्यापनं ब्रह्मयज्ञः" मनुः। "स्वाध्यायो ब्रह्मयज्ञः" विष्णुसू०। तेन वेदाध्ययनाध्यापनयोर्ब्रह्मयज्ञता।

**ब्र(ब्र)ह्मयष्टि** स्त्री ब्रह्मणो यष्टिरिवालम्बनत्वात्। (वामनहाटि) ख्याते शब्दरत्ना०।

**ब्र(ब्र)ह्मयुग** न० ब्रह्मा विप्रस्तदुपलक्षितं युगम्। हिरण्यगर्भस्य विप्रसृष्टिप्रधाने कालभेदे। तच्च हरिवं०२०८।२०९ अध्याये ततः क्षत्रादिसृष्ट्युपलक्षितं तद्युगं २१०अ०उक्तम्

**ब्र(ब्र)ह्मयोग** पु० ब्रह्मणस्तत्साक्षात्कारस्य योगः समाधिः। ब्रह्मसाक्षात्कारसाधने १समाधिभेदे हरिवं०२१० अ० "एष ब्रह्ममयो यज्ञो योगः सांख्यश्च तत्त्वतः। विज्ञानञ्च स्वभावश्च क्षेत्रं क्षेत्रज्ञ एव च। एकत्वञ्च पृथक्त्वञ्च सम्भवं निधनं तथा। कालः कालत्रयश्चैव ज्ञेयो विज्ञानमेव" च विष्कम्भादिषु पञ्चविंशे२ योगे च।

**ब्र(ब्र)ह्मयोनि** पु० ब्रह्मणो योनिरुत्पत्तिरत्र। १ब्रह्मगिरौ शब्दर०। २ब्रह्मप्राप्त्युपायज्ञाननिष्ठायाञ्च "ब्राह्मणा ब्रह्मयोनिस्थाः" मनुः ३ब्रह्मोत्पन्ने त्रि०। ४सरस्वत्यां स्त्री ङीप्। "सरस्वत्यास्तु तीरे यः संत्यजेदात्मनस्तनुम्। पृथूदके जप्यपरो नैनं श्वोमरणं स्पृशेत्। तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्मिता। पृथूदकं समाश्रित्य सरस्वत्यास्तटे स्थितः। चतुर्वर्णस्य सृष्ट्यर्थमात्मज्ञानपरोऽभवत्। तस्याभिध्यायतः सृष्टिं ब्रह्मणोऽव्यक्तजन्मनः। मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा। ऊरुभ्यां वैश्यजातीयाः पद्भ्यां शूद्रास्ततोऽभवन्। चातुर्वर्ण्यं ततो दृष्ट्वा आश्रमस्थान् सुतांस्ततः। एवं प्रतिष्ठितं तीर्थं ब्रह्मयोनीति संज्ञितम्। तत्र स्नात्वा मुक्तिकामः पुनर्योनिं न पश्यति" वामनपु० ३९अ० उक्ते तीर्थभेदे स्त्री वा ङीप्।

**ब्र(ब्र)ह्मरन्ध्र** न० उत्तमाङ्गस्य रन्ध्रभेदे। "तयोर्द्ध्वमायन्नमृतत्वमेति" श्रुत्या तद्रन्ध्रेण प्राणोत्क्रमणे ब्रह्मलोकप्राप्तिहेतुत्वात् तथात्वम्।

**ब्रह्मराक्षस** पु० ब्र(ब्र)ह्मा विप्रोऽपि कुकर्मभिः राक्षसः। कुकर्मणा विप्रयोनितो राक्षसरूपतां प्राप्ते भूतभेदे "संयोगं पतितैर्गत्वा परस्य योषितं तथा। अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः" इति मनुः। पतितप्रतिग्रहेऽपि तद्योनिप्राप्तिः भा० आनु० ११अ० दर्शिता। तच्च वाक्यं अधर्मशब्दे १२१ पृ० दर्शितं तच्च न हरिवंशवाक्यं किन्तु अनुशासनपर्वीयमिति बोध्यम्। पारिभाषिकब्रह्मराक्षसा यथा "मूर्खः स्त्री कच्छपश्चैव वाजी बधिर एव च। गृहीतार्थं न मुञ्चन्ति पञ्चैते ब्रह्मराक्षसाः" व्यवहारप्रदीपः। २शिवानुचरभेदे भाग० १०।६३अ०।

**ब्र(ब्र)ह्मरात** न० ब्रह्म तज्ज्ञानं रातं यस्मै। १शुकदेवे "ब्रह्मरातो भृशं प्रीतो विष्णुरातेन संसदि" भाग०२।८।२७। २याज्ञवल्क्ये मुनौ हेमच०ब्रह्मरातिरिति वा पाठः। तेन हि जनकाय ब्रह्मविद्यायाःदानात् तथात्वम् बृहदारण्यकोपनिषदि तत्कथा दृश्या।

**ब्र(ब्र)ह्मरात्र** पु० रात्रेरयम् अच् ६त०। ब्रह्मस्वामिके रात्रिशेषभागे मुहूर्ते "उपावृत्ते ब्रह्मरात्रे" भा० १०।२३।२९। व्याख्यायां श्रीधरः।

**ब्र(ब्र)ह्मरीति** ब्रह्मवर्णा रीतिः। पित्तलभेदे हेमच०।

**ब्र(ब्र)ह्मर्षि** पु० ब्र(ब्र)ह्मा विप्रः सन्नृषिः तत्तुल्यो वा ऋषिः वेदस्य वा ऋषिः स्रष्टा। ब्रह्मतुल्येषु वशिष्ठादिषु १वेदकर्तृषु २ऋषिषु हेमच०।

**ब्र(ब्र)ह्मर्षिदेश** ६त०। "कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः। एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरम्" मनूक्ते कुरुक्षेत्रादिदेशचतुष्टये। [ब्रह्मन्शब्दे दृश्यम्।

**ब्र(ब्र)ह्मलक्षण** न० ६त०। ब्रह्मणः स्वरूपतटस्थलक्षणे

**ब्र(ब्र)ह्मलोक** पु० ६त०। १ब्रह्माधिष्ठाने भुवने सत्यलोके "सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम्।

ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः” देवीपु० । “षड्गुणेन तपोलोकात् सत्यलोको विराजते । अपुनर्मारका यत्र ब्रह्मलोको हि स स्मृतः” । ब्रह्मणो लोकः । २तुरीयब्रह्मस्वरूपे च ब्रह्मानन्दशब्दे दृश्यम् ।

ब्र(ब्र)ह्मवर्चस न० ब्रह्मणा वेदाध्ययनेन वर्चः अच् समा० । वेदाध्ययनजनिते तेजसि “तपःस्वाध्यायजं यत्तु तेजस्तु ब्रह्मवर्चसम्” जटा० । “ब्रह्मवर्चसकामः स्तुवीत” ताण्ड्य० ब्रा० २।५।२ “ब्रह्मवर्चसकामस्य कुर्य्यात् विप्रस्य पञ्चमे” मनुः तदस्यास्ति इनि । ब्रह्मवर्चसिन् तद्युते त्रि० “ब्रह्मवर्चस्यन्नादो भवति” छा० उ० । “तपःस्वाध्यायजं तेजः ब्रह्मवर्चसम्” शाङ्करभाष्यम् ।

ब्र(ब्र)ह्मवर्चस्विन् पु० ६त० । ब्रह्मणवोर्चः समासान्तविधेरनित्यत्वात् न अच्समा० ततोऽस्त्यर्थे विनि । ब्रह्मवर्चसिनि । “ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसम्मताः” मनुः ।

ब्र(ब्र)ह्मवर्त्त पु० ब्रह्मणो वर्त्तो वर्त्तनं यत्र । ब्रह्मावर्त्ते देशे शब्दर० । [तान्ते हेमच० ।

ब्र(ब्र)ह्मवर्द्धन न० ब्रह्म वेधो रूपमिव वर्द्धते वृध—ल्यु ।

ब्र(ब्र)ह्मवाटीय पु० मुनिभेदे हरिवं० १४१ ।

ब्र(ब्र)ह्मवाद पु० ६त० । १वेदपाठे हारा० । २ब्रह्माधिकारेण तत्त्वनिर्णयार्थे वादे कथाभेदे च ।

ब्र(ब्र)ह्मवादिन् पु० ब्रह्म वेदं वदति पठति वद—णिनि । १वेदपाठके । ब्रह्म शुद्धं चैतन्यं सर्वात्मकतया वदति वद—णिनि । २वेदान्तप्रतिपाद्यसर्वात्मकब्रह्मनिर्णयार्थकथाभेदरूपवादयुते । “ब्रह्मवादिनो वदन्ति” छा० उ० । शुद्धचैतन्यं वदति बोधयति । ४ब्रह्मबोधके शास्त्रे जटा० । ५गायत्र्यां स्त्री ङीप् । सा च निर्गुणब्रह्मप्रतिपादिकेति तस्यास्तथात्वम् । “आयाहि वरदे ! देवि ! त्र्यक्षरे ! ब्रह्मवादिनि !” गायत्र्यावाहनमन्त्रः ।

ब्र(ब्र)ह्मवालुक न० तीर्थभेदे भा० व० ८२अ० ।

ब्रह्मवास पु० ६त० । ब्रह्मलोके हरिवं० २१२ अ० ।

ब्रह्मवाहस् त्रि० ब्रह्मणा मन्त्ररूपवेदेन उह्यते वह—कर्मणि बा० असिच् णिच्च । मन्त्रेण प्राप्यमाणे ऋ० १।१०।१८ ।

ब्र(ब्र)ह्मविद् ब्रह्मस्वरूपतया वेत्ति आत्मानम् विद—क्विप् । आत्मात्मैक्यवेत्तरि “ब्रह्मविद् ब्रह्म भवति” श्रुतिः । २विष्णौ पु० “ब्रह्मविद् ब्राह्मणो ब्रह्मी” विष्णुस० । वेदं वेदार्थं यथावद् वेत्तीति ब्रह्मविद्” भा० ३वेदार्थज्ञातरि त्रि० । [भेदेन ज्ञाने ।

ब्र(ब्र)ह्मविद्या स्त्री ६त० । शुद्धचैतन्यात्मकस्य ब्रह्मण आत्मा-

ब्र(ब्र)ह्मविवर्द्धन पु० ६त० । १तपोवर्द्धके विष्णौ “सत्यब्रह्मविवर्द्धनम्” विष्णुस० । वृध—णिच् भावे ल्युट् । २तपआदीनां विशेषेण वर्द्धने न० ।

ब्र(ब्र)ह्मवृक्ष पु० । पलाशवृक्षे हलायुधः । “ब्रह्म वै पलाशः” शत०ब्रा० १२।८।४।१ तपःसाधने २उडुम्बरवृक्षे रत्नमाला ।

ब्र(ब्र)ह्मवृत्ति स्त्री ६त० । १ब्राह्मणस्य जीवनोपाये “स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः । षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः” भाग० । २ब्रह्माकारान्तःकरणवृत्तौ च । [वेदान्ते च ।

ब्र(ब्र)ह्मवेद पु० ६त० । १ब्रह्मज्ञाने २ब्रह्मप्रतिपादके वेदभागे

ब्र(ब्र)ह्मवेदि स्त्री ब्रह्मणो वेदिरिव । “ब्रह्मवेदिः कुरुक्षेत्रे पञ्चरामहृदान्तरम्” इत्युक्ते देशे हेमच० ।

ब्र(ब्र)ह्मवेदिन् त्रि० ब्रह्म वेत्ति आत्माभेदेन विद—णिनि । ब्रह्मात्मैक्याभिज्ञे “ब्राह्मणेषु तु विद्वांसो विद्वत्सु कृतबुद्धयः । कृतबुद्धिषु कर्त्तारः कर्तृषु ब्रह्मवेदिनः” मनुः ।

ब्रह्मवैवर्त्त न० अष्टादशमहापुराणमध्ये अष्टादशसहस्रसंख्यके १महापुराणभेदे तत्प्रतिपाद्यविषयादिकं वृहन्नारदीये ४ पादे १०१अ० उक्तं यथा

“ब्रह्मा उवाच । शृणु वत्स ! प्रवक्ष्यामि पुराणं दशमं तव । ब्रह्मवैवर्त्तकं नाम वेदमार्गानुदर्शकम् । सावर्णिर्यत्र भगवान् साक्षाद्देवर्षयेऽर्थितः । नारदाय पुराणार्थं प्राह सर्वमलौकिकम् । धर्मार्थकाममोक्षाणां सारः प्रीतिर्हरौ हरे । तयोरभेदसिद्ध्यर्थं ब्रह्मवैवर्त्तमुत्तमम् । रथन्तरस्य कल्पस्य वृत्तान्तं यन्मयोदितम् । शतकोटिपुराणं तत् संक्षिप्य प्राह वेदवित् । व्यासश्चतुर्द्धा संव्यस्य ब्रह्मवैवर्त्तसंज्ञितम् । अष्टादशसहस्रन्तत् पुराणं परिकीर्त्तितम् । ब्रह्म१प्रकृति२विघ्नेश३कृष्णखण्ड४समाचितम् । तत्र सूतर्षिसंवादः पुराणोपक्रमो मतः” । तत्र प्रथमे ब्रह्मखण्डे । “सृष्टिप्रकरणं त्वाद्यं ततो नारदवेधसोः । विवादः सुमहान् यत्र द्वयोरासीत् पराभवः । शिवलोकगतिः पश्चाज्ज्ञानलाभः शिवान्मुनेः । शिववाक्येन तत् पश्चात् मरीचेर्नारदस्य । तु गमनञ्चैव सावर्णिर्मुनिनार्थे सिद्धसेविते । आश्रमे सुमहापुण्ये त्रैलोक्याश्चर्य्यकारिणि । एतद्धि ब्रह्मखण्डं हि श्रुतं पापविनाशनम्” । द्वितीये प्रकृतिखण्डे “ततः सावर्णिसंवादो नारदस्य समीरितः । कृष्णमाहात्म्यसंयुक्तो नानाख्यानकथोत्तरः । प्रकृतेरंशभूतानां कलानाञ्चापि

वर्णितम्। माहात्म्यं, पूजनाद्यस्य विस्तरेण यथास्थितम्। एतत् प्रकृतिखण्डं हि श्रुतं भूतिविधायकम्। तृतीये गणेशखण्डे। "गणेशजन्मसंप्रश्नः सपुण्यकमहाव्रतम्। पार्वत्याः कार्त्तिकेयेन सह विघ्नेशसम्भवः। चरितं कार्त्तवीर्य्यस्य जामदग्न्यस्य चाद्भुतम्। विवादः सुमहान् पश्चाज्जामदग्न्यगणेशयोः। एतद्विघ्नेशखण्डं हि सर्वविघ्नविनाशनम्" चतुर्थे श्रीकृष्णजन्मखण्डे "श्रीकृष्णजन्मसम्प्रश्नो जन्माख्यानं ततोऽद्भुतम्। गोकुले गमनं पश्चात् पूतनादिवधोऽद्भुतः। बाल्यकौमारजा लीला विविधास्तत्र वर्णिताः। रासक्रीड़ा च गोपीभिः शारदी समुदाहृता। रहस्ये राधया क्रीड़ा वर्णिता बहुविस्तरा। सहाक्रूरेण तत्पश्चान्मथुरागमनं हरेः। कंसादीनां वधे वृत्ते सदस्यद्विजसंस्कृतिः। काश्यसान्दीपनेः पश्चाद्विद्योपादानमद्भुतम्। यवनस्य वधः पश्चाद्द्वारकागमनं हरेः। नरकादिवधस्तत्र कृष्णेन विहितोऽद्भुतः। कृष्णखण्डमिदं विप्र! नृणां संसारखण्डनम्" तत्फलश्रुतिः "पठितञ्च श्रुतं ध्यातं पूजितं चाभिवन्दितम्। इत्येतद्ब्रह्मवैवर्त्तं पुराणं चातिलौकिकम्। व्यासोक्तं चादिसम्भूतं पठन् शृण्वन् विमुच्यते। विज्ञानज्ञानशमनात् घोरात् संसारसागरात्। लिखित्वेदञ्च यो दद्यान्माघ्यां धेनुसमान्वितम्। ब्रह्मलोकमवाप्नोति स मुक्तोऽज्ञानबन्धनात्। यश्चानुक्रमणीं वापि पठेद्वा शृणुयादपि। सोऽपि कृष्णप्रसादेन लभते वाञ्छितं फलम्"। विवर्त्त उपादानविषमसत्ताकं कार्य्यं स्वार्थे अण् इत०। २ब्रह्मणोऽतुल्यसत्ताके कार्य्ये च। [भेदे भा० स० ११अ०।

ब्र(ब्र)ह्मव्रत न० सहस्रवर्षसाध्ये ब्रह्मलोकदर्शनफलके व्रत-

ब्र(ब्र)ह्मशल्य पु० ब्रह्मेव शुभ्रं शल्यं कण्टकाग्रं यस्य। (बावला) वृक्षभेदे रत्नमाला। [शालायाञ्च।

ब्र(ब्र)ह्मशाला स्त्री १तीर्थभेदे भा० व० ८७अ०। २वेदपाठार्थं

ब्र(ब्र)ह्मशासन न० ६त०। तत्तत्कार्य्येषु ब्रह्मकर्त्तृके १नियोजने। तेन च यथा यस्य शासनं कृतं यथा पृथिव्या धारणाय वायोर्वहनाय सूर्य्यादीनां प्रकाशनाय इत्यादि तत्तथैव तैः शासनमनुपाल्यते एवं वर्णाश्रमादिकर्मानुशासनमपि तेनैव अनुशिष्टम् "श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्वेषी नरकं प्रतिपद्यते" भगवदुक्तेः। ब्रह्मणो वेदस्यानुशासने २कर्त्तव्यतोपदेशे च। अधिकरणे ल्युट्। ३ब्रह्मविचारार्थे शब्दरत्ना०।

ब्र(ब्र)ह्मशिरस् न० अस्त्रभेदे तच्चास्त्रं द्रोणेन सन्तुताय अश्वत्थाम्ने अर्जुनाय चाध्यापितं तदस्त्रप्रयोगसंहारादिकथा भा० सौ० १२अ०। [कृते ऋ० ६।७५।१६

ब्र(ब्र)ह्मसंशित त्रि० ३त०। ब्राह्मणा मन्त्रेण संशिते तीक्ष्णी-

ब्र(ब्र)ह्मसंहिता स्त्री वैष्णवाचारसिद्धान्ते अध्यायशतात्मके ग्रन्थभेदे। [निघण्टुः।

ब्र(ब्र)ह्मसती स्त्री ब्रह्मरूपा ब्रह्मणो वा जाता सती। सरस्वत्यां

ब्र(ब्र)ह्मसत्ता स्त्री० ६त०। ब्रह्मरूपजगदधिष्ठानसत्तायाम्। शुक्तिसत्तया रजतसत्तावत् तत्सत्तयैव जगतःसत्त्व वेदान्तमतम्।

ब्र(ब्र)ह्मसत्र न० ब्रह्म वेदस्तत्पाठरूपं सत्रम्। ब्रह्मयज्ञशब्दार्थे "नैत्यिके नास्त्यनध्यायो ब्रह्मसत्रं हि तत्स्मृतम्" मनुः।

ब्र(ब्र)ह्मसदन न० सीदत्यस्मिन् सद–आधारे ल्युट् ६त०। ब्रह्माख्य ऋत्विग्भेदस्य वारुणीदक्षादिजाते कुशास्तृते प्राग्ग्रे १आसने कात्या० श्रौ० २।१।२ सूत्रादौ दृश्यम्। २हिरण्यगर्भसदने च।

ब्र(ब्र)ह्मसरस् न० तीर्थभेदे तत्कथा भा०व० ८१अ० दृश्या।

ब्र(ब्र)ह्मसर्प पु० ब्रह्मेव वृहन् सर्पः। सर्पभेदे त्रिका०।

ब्र(ब्र)ह्मसात् अव्य० ब्रह्माधीनं करोति साति। ब्रह्माधीने कृभ्वादियोगे चास्य प्रयोगः ब्रह्मसात्-करोति भवति सम्पद्यते वा

ब्र(ब्र)ह्मसामन् न० सामभेदे तच्च साम ताण्ड्यब्रा० ४।४।१ दर्शितं यथा "अथास्मिन्नेवाहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रनिवर्त्तकमेकं साम विधत्ते भा० "अभीवर्त्तो ब्रह्मसाम भवति" ताण्ड्यब्रा० "तत्रोदस्य तीसहमित्यस्यां योनावुत्पन्नं साम अभीवर्त्ताख्यम् एतत् साम ब्राह्मणाच्छंसी पृष्ठस्तोत्रमनुशंसति, तच्च वक्ष्यमाणासु ऋक्षु कर्त्तव्यम् अथैतन्नामनिर्वचनेन प्रशंसति भा०। "अभीवर्त्तेन वै देवाः स्वर्गं लोकमभ्यवर्त्तन्त यदभीवर्त्तो ब्रह्मसाम भवति स्वर्गस्य लोकस्याभिजित्यै" ब्रा०। "अभीवर्त्ताख्येन साम्ना देवाः स्वर्गं लोकमभ्यवर्त्तन्त अगच्छन् अतएवास्याभिजित्साधनत्वादस्य साम्नोऽभीवर्त्त इति संज्ञा निष्पन्ना। अतएव शाट्यायनकं "यदभ्यवर्त्तन्त तदभीवर्त्तस्याभीवर्त्तत्वमिति"। अभिपूर्वाद्वृत वर्त्तने इत्यस्मात् करणे घञ्। उपसर्गस्य घञ्यमनुष्ये बहुलमिति पूर्वपदस्य दीर्घः। एवं सति अस्मिन्नहनि अभीवर्त्तो ब्रह्मणः पृष्ठसाम भवतीति यत् तत् स्वर्गस्य लोकस्याभिजित्यै अभिवर्त्तनायाभिगमनाय सत्रिणां

भवति” भा०। तस्य साम अङ्गगाने। ६प्र०१४क०दर्शितम्।

**ब्र(व्र)ह्मसायुज्य** न० सह युनक्ति युज–क्विप् तस्य भावः सायुज्यं ६त०। ब्र(व्र)ह्मभावे।

**ब्र(व्र)ह्मसार्ष्टिता** स्त्री ६त०। ब्रह्मतुल्यगतित्वे मनुः ४।२३२।

**ब्र(व्र)ह्मसावर्णि** पु० दशमे मनुभेदे “दशमो ब्रह्मसावर्णि रुपश्लोकसुतो महान्। तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः। हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः। सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः। विष्वक्सेनो विषूच्यान्तु शम्भोः सख्यं करिष्यति। जातः स्वांशेन भगवान् गृहे विश्वसृजो प्रभुः” भाग० [वशिष्ठादौ च। ८।१३।१०

**ब्र(व्र)ह्मसम्भव** पु० ६त०। १जैनभेदे हेम० २ब्रह्मणो जाते

**ब्र(व्र)ह्मसिद्धान्त** ६त०। पैतामहे ज्योतिषसिद्धान्तभेदे “पौलिशरोम(लोम)कवाशिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु” वृ०स०१अ०। [दृश्यम्। २मरीच्यादौ च

**ब्र(व्र)ह्मसुत** पु० ६त०। १केतुभेदे वृ०स० ११ अ० केतुशब्दे

**ब्र(व्र)ह्मसुवर्चला** स्त्री ओषधिभेदे तत्स्थानलक्षणादिकमुक्तं सुश्रुते “देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे। दृश्यन्ते च जलान्तेषु मध्ये ब्रह्मसुवर्चला”। “कनकाभा जलान्तेषु सर्वतः परिसर्पति। सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला”। तत्क्वथिते २जले च “पिबेत् ब्रह्मसुवर्चलाम्” मनुः।

**ब्र(व्र)ह्मसू** पु० ब्रह्माणं सूतवान् सू–क्विप्। चतुर्व्यूहात्मकस्य विष्णोर्मूर्त्तिभेदे अनिरुद्धे तस्यावतारभेदे २उषापतौ च अमरः। “अनिरुद्धात्ततो ब्रह्मा तन्नाभिकमलोद्भवः” ब्रह्मपु०। ब्रह्माणि तपांसि सुवति प्रेरयति सू–प्रेरणे क्विप्। तपःप्रवर्त्तके ३कामे च कामेनैव सर्वतपस्सु प्रेरणात्तस्य तथात्वम्। तदभिमानिदेवे ४कन्दर्पे च अमरः।

**ब्र(व्र)ह्मसूत्र** न० ब्रह्मणि वेदपठनकाले उचितं सूत्रम्। १यज्ञोपवीते त्रिका०। २ब्रह्मप्रतिपादके शारीरकसूत्रे च। “ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम्” गीता।

**ब्र(व्र)ह्मसूनु** पु० ६त०। इक्ष्वाकुवंशोद्भवे १राजभेदे ब्रह्मदत्ते हेमच० २वशिष्ठादौ च।

**ब्र(व्र)ह्मस्तेय** ६त०। स्वार्थमधीयानात् ततोऽनुज्ञामप्राप्य तदाक्यश्रवणेन वेदाध्येतरि। “ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात्। स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते” मनुः

**ब्र(व्र)ह्मस्थान** न० ६त०। तीर्थभेदे भा० व० ८१ अ०।

**ब्र(व्र)ह्मस्व** ६त०। ब्रह्मस्वामिके धने। “ब्रह्मस्वं वा सुरस्वं वा देवस्वं वापि यो हरेत्। स कृतघ्न इति ज्ञेयो महापापी च भारत!। अवटोदे वसेत् सोऽपि यावदिन्द्राः शतं शतम्। ततो भवेत् सुरापीति ततः शूद्रस्ततः शुचिः”। ब्रह्मवै० प्रकृ० ४८अ०।

**ब्र(व्र)ह्महत्या** स्त्री० हन–क्यप् ६त०। विप्रहनने। तस्य महापातकत्वमुक्तं मनुना “ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह” तदधिष्ठातृस्वरूपमुक्तं ब्रह्मवै० पु० जन्म० ४७ अ० यथा “रक्तवस्त्रपरीधाना वृद्धा स्त्रीवेशधारिणी। सप्ततालप्रमाणा सा शुष्ककण्ठौष्ठतालुका। दीर्घाग्रभागदशना महाभीतस्य कातरम्। धावन्तं परिधावन्ती वञ्चिताङ्गतचेतनम्। खड्गहस्ता हतास्यं तं दयाहीना च मूर्च्छितम्। इन्द्रो दृष्ट्वा च तां घोरां स्मारं स्मारं गुरोः पदम्। विवेश मानससरो मृणालस्थलखण्डतः। तत्र गन्तुं न शक्ता सा ब्रह्मणः शापकारणात्”। इन्द्रस्य वृत्रवधनिमित्तकब्रह्महत्यापनोदनार्थं शक्रेणाश्वमेधे कृते तस्या विभज्य स्थानविशेषे संक्रामणकथा भा० उ० उ० १२अ० यथा “तताश्वमेधः सुमहान् महेन्द्रस्य महात्मनः। वहते पावनार्थं वै ब्रह्महत्यापहो नृप!। विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च। पर्वतेषु पृथिव्याञ्च स्त्रीषु चैव युधिष्ठिर!” आतिदेशिकब्रह्महत्याः कतिचित् ब्रह्मवै०प्रकृ०२७अ० उक्ता यथा

“श्रीकृष्णे च तदर्च्चायां तन्मय्यां प्रकृतौ तथा। शिवे च शिवलिङ्गे वा सूर्य्ये सूर्य्यतनौ तथा। गणेशे वा तदर्च्चायामेवं सर्वत्र सुन्दरि!। यः करोति भेदबुद्धिं ब्रह्महत्यां लभेत् तु सः। स्वगुरौ स्वेष्टदेवेषु जन्मदातरि मातरि। करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत् तु सः। वैष्णवेष्वन्यभक्तेषु, ब्राह्मणेष्वितरेषु च। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। हरेः पादोदकैश्चान्यदेवपादोदके तथा। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। विमूढो विष्णुनैवेद्ये चान्यनैवेद्यके तथा। करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः। सर्वेश्वरेश्वरे कृष्णे सर्वकारणकारणे। सर्वाद्ये सर्वदेवानां सेव्ये सर्वात्मनात्मनि। मायया चैकरूपे वाप्येकत्वेन हि निर्गुणे। करोत्यनेन समतां ब्रह्महत्यां लभेत् तु सः। पितृदेवार्च्चनं पौर्वापर्यं वेदविनिर्मितम्। यः करोति तन्निषेधं ब्रह्महत्यां स विन्दति। ये निन्दन्ति हृषीकेशं तन्मन्त्रोपासकं तथा।

पवित्राणां पवित्रञ्च ब्रह्महत्यां लभन्ति ते। ये निन्दन्ति विष्णुमायां विष्णुभक्तिप्रदां सतीम्। सर्वशक्तिस्वरूपाञ्च प्रकृतिं सर्वमातरम्। सर्वदेवस्वरूपाञ्च सर्वाद्यां सर्ववन्दिताम्। सर्वकारणरूपाञ्च ब्रह्महत्यां लभन्ति ते। कृष्णजन्माष्टमीं रामनवमीं पुण्यदां पराम्। शिवरात्रिं तथा चैकादशीं वारं रवेस्तथा। पञ्च पर्वाणि पुण्यानि ये न कुर्वन्ति मानवाः। लभन्ते ब्रह्महत्यां ते चाण्डालाधिकपापिनः। अम्बुवाच्यां भूखननं जले शौचादिकञ्च ये। कुर्वन्ति भारते वर्षे ब्रह्महत्यां लभन्ति ते। गुरुञ्च मातरं तातं साध्वीं भार्य्यां सुतं सुताम्। अनाथां यो न पुष्णाति ब्रह्महत्यां लभेत् स सः। विवाहो यस्य न भवेत् न पश्यति सुतन्तु यः। हरिभक्तिविहीनो यो ब्रह्महत्यां लभेत् स सः। हरेरनैवेद्यभोजी नित्यं विष्णुं न पूजयेत्। पुण्यं पार्थिवलिङ्गं वा ब्रह्महत्यां लभेत् स सः"। आतिदेशिक्यास्तस्या विनाशनं हरिस्मरण गङ्गास्नानादि।

**ब(व्र)ह्महत्यासम** न० "अन्तञ्च समुत्कर्षे राजगामि च पैशुनम्। गुरोरलीकनिर्बन्धः समानि ब्रह्महत्यया" मनूक्ते अनुपातकभेदरूपे मिथ्याभेदकथनादौ।

**ब(व्र)ह्महन्** त्रि० ब(व्र)ह्माणं हतवान् हन-क्विप्। १विप्रहत्याकारिणि। "ब(व्र)ह्महा न भवत्यन्यो ब(व्र)ह्महा वृषलीपतिः। यस्तस्यामाहितोगर्भः स तेन ब्रा(व्रा)ह्मणो हतः" इत्युक्ते २वृषलीतौ च। "घृतोत्पतनजिह्वासु जीवोत्तिष्ठाङ्कुलिध्वनिः। गुरोरपि च कर्त्तव्यमन्यथा ब्रह्महा भवेत्" ३इत्यादिस्मृत्युक्तातिदेशिकब्(व्र)ह्महत्यापापयुक्ते च। तत्प्रायश्चित्तं मनुनोक्तं यथा

"ब्रह्महा द्वादश समाः कुटीं कृत्वा वने वसेत्। भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्१। लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः२। प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः३। यजेत वाश्वमेधेन४ स्वर्जिता५ गोसवेन वा६। अभिजिद्विश्वजिद्भ्यां७ वा त्रिवृताग्निष्टुतापि८ वा। जपन् वान्यतमं९ वेदं योजनानां शतं व्रजेत्११। ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः। सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत्१२। धनं वा जीवनायालं गृहं वा सपरिच्छदम्१३। हविष्यभुग्वाऽनुसरेत् प्रतिस्रोतः सरस्वतीम्१४। जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम्१५। कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा। आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः। ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजन्१६। मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च। त्र्यवरं प्रतिरोद्धा वा१७ सर्वस्वमवजित्य वा। विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते"।

**ब(व्र)ह्माङ्गभू** पु० ब्रह्मणोऽङ्गात् भवति भू-क्विप्। घोटके हारा०। ब्रह्मात्मभूशब्दे दृश्यम्।

**ब(व्र)ह्माञ्जलि** पु० ब(व्र)ह्मणे वेदपाठाय अञ्जलिः गुरौ कृतोविनयाञ्जलिः, स्वरविशेषज्ञापनार्थं वा कृतोञ्जलिः संकुचितपाणिः। वेदपाठार्थं गुरुनिकटे कार्य्ये १विनयाञ्जलौ स्वरविशेषार्थज्ञापनाय कृतसङ्कोचे२पाणिद्वये च अमरः।

**ब(व्र)ह्माणी** पु० ब्(व्र)ह्माणम् आनयति जीवयति अन-णिच्-अण् पूर्व०णत्वम्। ब्रह्मशक्तौ "हंसयुक्तविमानस्था साक्षसूत्रकमण्डलुः। आयाता ब्रह्मणः शक्तिः ब्रह्माणी साऽभिधीयते" इति देवीमा०। "ब्रह्माणी ब्रह्मजननात्" देवीपु०। ब्रह्मशब्दात् ङीष् आनुक् चेति त्वपाणिनीयम्। २रेणुकानामगन्धद्रव्ये रत्नमा०। ३राजरीतौ राजनि०। ४ब्रह्मणोऽर्द्धशरीरादुत्पन्नायां शतरूपायाम्। "ततः संजपतस्तस्य भित्त्वा देहमकल्मषम्। स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत्। शतरूपा च सा ख्याता सावित्री च निगद्यते। सरस्वत्यथ गायत्री ब्रह्माणीत्युच्यते च सा" मत्स्यपु० ३अ०।

**ब(व्र)ह्माण्ड** न० ६त०। "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति मनूक्ते ब्रह्मण उत्पादके अण्डाकारे १भुवनकोषे "ब्रह्माण्डभाण्डोदरभ्रान्त्यत्निपिण्डितचण्डिमेति" वीरचरितम्।

ब्रह्माण्डसंस्था स्क०सि० दर्शिता यथा

"वासुदेवः परं ब्रह्म तन्मूर्त्तिः पुरुषः परः। अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः। प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः। सङ्कर्षणोऽपः सृष्ट्वादौ तासु वीजमवासृजत्। तदण्डमभवद्धैमं सर्वत्र तमसावृतम्। तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः। हिरण्यगर्भो भगवानेष छन्दसि पठ्यते। आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य उच्यते। परं ज्योतिस्तमःपारे सूर्य्योऽयं सवितेति च। पर्य्येति भुवनान्येष भावयन् भूतभावनः" इत्युपक्रमे "गुणकर्मविभागेन सृष्ट्वा प्राग्वदनुक्रमात्। विभागं कल्पयामास यथास्वं वेददर्शनात्। ग्रहनक्षत्रताराणां भूमेर्विश्वस्य वा विभुः। देवा-

सुरमनुष्याणां सिद्धानां च यथाक्रमम्। ब्रह्माण्डमेतत् सुषिरं तत्रेदं भूर्भुवादिकम्। कटाहद्वितयस्यैव सम्पुटं गोलकाकृति(१)। ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाऽभिधीयते। तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा। मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्थाः सिद्धविद्याधरा घनाः। उपरिष्टात् स्थितास्तस्य सेन्द्रा देवा महर्षयः। अधस्तादसुरास्तद्वद्द्विषन्तोऽन्योन्यमाश्रिताः। ततः समन्तात् परिधिः क्रमेणायं महार्णवः। मेखलेव स्थितो धात्र्या देवासुरविभागकृत्। समन्तान्मेरुमध्यात्तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादिनगर्य्यो देवनिर्मिताः। भूवृत्तपादे पूर्व्वस्यां यमकोटीति विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा। याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी। पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्त्तिता। उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्त्तिता। तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथाः” सू० सि०।

(१) “एतत् प्रागुक्तं ब्रह्मणाधिष्ठितं सुवर्णाण्डं सुषिरमवकाशात्मकं तत्रावकाशे इदं जगत् भूर्भुवादिकं भूर्भुवःस्वर्गोलकमवस्थितं न बहिः। नन्वण्डस्य गोलाकारत्वेनान्तरवकाशात्मकत्वमसम्भवतीत्यत आह कटाहद्वितयस्येति। कटाहोऽर्द्धगोलाकारं सावकाशं पात्रं तस्य द्वितयं द्वयं समं तस्य। एवकारो न्यूनाधिकव्यवच्छेदकार्थः। सम्पुटमाभिमुख्येन मिलितं गोलकाकृतिर्गोलाकारः स्यात्। तथाच न क्षतिः” रङ्गना०।

“भूभूधरत्रिदशदानवमानवाद्या येऽयाश्च धिष्ण्यगगनेचरचक्रकक्षाः। लोकव्यवस्थितिरुपर्युपरि प्रदिष्टा ब्रह्माण्डभाण्डजठरे तदिदं समस्तम्” सि० शि०। इदानीमन्योदितं ब्रह्माण्डमानं पूर्वं कथितमपि प्रसङ्गादनुवदति स्म” प्रमिता०। “कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजङ्गेन्दुभिः १८७१२०६९२०००००००० ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः। तद्ब्रह्माण्डकटाहसंपुटतटे केचिज्जगुर्वेष्टनं केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः। करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम् दिनकरकरनिकरनिहततमसो नभसः स परिधिरुदितस्तैः। ब्रह्माण्डमेतन्मितमस्तु नो वा कल्पे ग्रहः क्रामति योजनानि। यावन्ति पूर्वैरिह तत्प्रमाणं प्रोक्तं खकक्षाख्यमिदं मतं नः”। प्रमाणशून्यत्वात् प्रयोजनाभावाच्चास्माभिर्ब्रह्माण्डमानं न कथितमित्यर्थः” प्रमि०।

दानार्थं कल्पिते महादानान्तर्गते ब्रह्माण्डात्मकस्वर्णादिघटिते २ पदार्थे तत्स्वरूपादि हेमा० दा० ख० मत्स्यपु० उक्तं यथा “अथातः संप्रवक्ष्यामि ब्रह्माण्डं विधिपूर्वकम्। यच्छ्रेष्ठं सर्वभूतानां महापातकनाशनम्। पुण्यं दिनमथासाद्य तुलापुरुषदानवत्। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। लोकेशावाहनं तद्वदधिवासनकं तथा” तुलापुरुषदानवदिति, कालदेशशुद्धिश्राद्धशिवादिपूजाब्राह्मणवाचनगुरुऋत्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिकासम्भारलोकेशावाहनाधिवासनादि सर्वं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यमित्यर्थः। “कुर्य्याद्विंशत्पलादूर्द्ध्वमासहस्राच्च शक्तितः। शकलद्वयसंयुक्तं ब्रह्माण्डं काञ्चनं बुधः”। शकलद्वयं, खण्डद्वयम्। तल्लक्षणन्तु ब्रह्माण्डपुराणे “कुम्भच्छाया भवेद्यादृक् प्रतीच्यां दिशि चन्द्रमाः। उदितः शुक्लपक्षादौ वपुरण्डस्य तादृशमिति” कुम्भच्छाया इति, कुम्भच्छाया ग्रीवाहीनकुम्भादिजेत्यवसेयम्। “दिग्गजाष्टकसंयुक्तं षड्वेदाङ्गसमन्वितम्। लोकपालाष्टकोपेतं मध्यस्थितचतुर्मुखम्। शिवाच्युतार्कशिखरमुमालक्ष्मीसमन्वितम्। वस्वादित्यमरुद्गर्भं महारत्नसमन्वितम्”। अथैतेषां दिग्गजप्रभृतीनां क्रमेण लक्षणान्युच्यन्ते आदित्यपुराणे “शुभ्राभश्च चतुर्दंष्ट्रः श्रीमानैरावतो गजः। पुष्पदन्तो उद्धृतमात्रः षड्दन्तः पुष्पदन्तवान्। सामान्यगजरूपेण शेषा दिक्करिणः स्मृताः”। तन्नामानि शास्त्रान्तरे “ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः”। वेदाङ्गानि स्कन्दपुराणे “शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां स्थितिः। छन्दश्चेति षडेतानि वेदाङ्गानि प्रचक्षते। मूर्त्तानि ब्रह्मणो लोके वाग्रूपाणि तानि तु। द्विजातिभिः शुभास्यानि वामे दधति कुण्डिकाम्”। तानि च पश्चिमदिशि वेदसन्निधौ निवेशनीयानि दिग्विशेषानाम्नानात् प्रधानं नीयमानं हि तदङ्गान्यपकर्षतीतिन्यायात्, वक्ष्यते च, “पश्चिमे चतुरो वेदानिति”। लोकपालरूपाण्याह विश्वकर्मा “चतुर्दन्तो गजारूढो वज्रपाणिः पुरन्दरः। प्राचीपतिः प्रकर्त्तव्यो नानाभरणभूषितः। पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः। छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिधारकः। दंष्ट्रपीनो यमः कार्य्यो दण्डहस्तो विजानता। रक्तदृक् पाशभृत् क्रुद्धो निर्ऋतिर्विकृताननः। पुंस्थितः

खड्गहस्तश्च भूतवान् राक्षसाहृतः। वरुणः पाशभृत् सौम्यः प्रतीच्यां मकराश्रयः। धावद्धरिणपृष्ठस्थो ध्वजधारी समीरणः। दक्षान्वरयगः सोमो गदापाणिर्वरप्रदः"। "शशकवाहनः" इत्यागमान्तरम्। "पूर्वोत्तरे त्रिनेत्रश्च वृषभस्थस्त्रिशूलधृक्। कपालपाणिश्चन्द्रार्द्धभूषणः परमेश्वरः"। चतुर्मुखरूपन्तु विष्णुधर्मोत्तरात् "पद्मपत्रासनस्थश्च ब्रह्मा कार्य्यश्चतुर्मुखः। अक्षमालास्रुवं बिभ्रत् पुस्तकञ्च कमण्डलुम्। वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च"। शिवलक्षणमुक्तं वायुपुराणे "पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः। कपालशूलखट्वाङ्गी चन्द्रमौलिः सदाशिवः"। विष्णुलक्षणमुक्तं तुलापुरुषदाने। सूर्य्यलक्षणमुक्तं विष्णुधर्मोत्तरे "रविः कार्य्यः शुभश्मश्रुः सिन्दूरारुणसुप्रभः। पद्मासनः पद्मकरो भूषितो रशनाधरः"। उमालक्ष्मीसमन्वितमित्यत्र, शिवाच्युतयोः सन्निहिते उमालक्ष्म्यौ विधेयौ। उमालक्षणमुक्तं देवीपुराणे "गौरीं शङ्खेन्दुवर्णाभां सर्वदोषविवर्जिताम्। वृत्तपद्मासनासीनां साक्षसूत्रकमण्डलुम्। वरदोद्यतहस्ताब्जां सर्वमाल्यफलप्रियाम्"। वरदोद्यतहस्ताब्जां, वरदाभयपाणिकामित्यर्थः। लक्ष्मीलक्षणमुक्तं पञ्चरात्रे "पद्मासनस्थां कुर्वीत श्रियं त्रैलोक्यमातरम्। गौरवर्णां सुरूपाञ्च सर्वालङ्कारभूषिताम्। रौक्मपद्मकरव्यग्रां वरदां दक्षिणेन तु"। वस्वादित्यरूपाणि, नारदीये, "प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः। पद्मासनस्था द्विभुजाः कर्त्तव्या वसवः सदा। पद्मासनस्था द्विभुजाः पद्मगर्भान्तकान्तयः। करादिस्कन्धपर्य्यन्तनालपङ्कजधारिणः। अधःसंस्थितमेषादिराशयः प्राहुतार्द्धिकाः। इन्द्राद्या द्वादशादित्यास्तेजोमण्डलमध्यगाः" तथा। वायुतुल्येन रूपेण मरुतो नाम देवताः"। कर्त्तव्या इति शेषः, वस्वादिनामानि, तुलापुरुषोक्तानि वेदितव्यानि। महारत्नसमन्वितमिति, महारत्नानि परिभाषायामुक्तानि, अनन्तमिथुनान्वितमिति क्वचित्पाठः। "फणासप्तान्वितोऽनन्तः पृथ्वी स्त्रीरूपधारिणीत्यनन्तमिथुनम्। अथ प्रकृतमुच्यते "वितस्ते रङ्गुलशतं यावदायामविस्तरम्। कौशेयवस्त्रसंवीतं तिलद्रोणोपरि न्यसेत्। तथाष्टादश धान्यानि समन्तात्परिकल्पयेत्"। वितस्ते रङ्गुलशतमिति, द्वादशाङ्गुलमारभ्याङ्गुलशतं यावच्छक्त्यनुसारेण कार्य्यमित्यर्थः। द्रोणमानमष्टादश धान्यानि च परिभाषायां द्रष्टव्यानि। स च तिलद्रोणो वेदिकायां लिखितचक्रस्योपरि स्थापनीयः। "पूर्वेणानन्तशयनं प्रद्युम्नं पूर्वदक्षिणे। प्रकृतिर्दक्षिणे देशे संकर्षणमतः परम्। पश्चिमे चतुरो वेदाननिरुद्धमतः परम्। अग्निमुत्तरतो हैमं वासुदेवमतः परम्। समन्ताद्गुणपीठस्थानर्चयेत् काञ्चनान् बुधः। स्थापयेद्वस्त्रसंवीतान् पूर्णकुम्भान् दशैव तु"। पूर्वेणेत्यादि, ब्रह्माण्डात् पूर्वदेशे अनन्तशयनं शेषशायिनं गुण(सत्त्वादि)पीठे स्थापयेत्, तन्मूर्त्तिलक्षणं विष्णुधर्मोत्तरात् "देवदेवश्च कर्त्तव्यः शेषसुप्तश्चतुर्भुजः। एकपादोऽस्य कर्त्तव्यो लक्ष्म्युत्सङ्गगतः प्रभोः। तथाऽपरश्च कर्त्तव्यः शेषभोगाङ्कसंस्थितः। एको भुजोऽस्य कर्त्तव्यस्तत्र जानौ प्रसारितः। कर्त्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः। तथैवान्यः करः कार्य्यो देवस्य तु शिरोधरः। सन्तानमञ्जरीधारी तथा चास्य करः परः। नाभिसम्भूतकमले सुखासीनः पितामहः। नालंलग्नौ तु कर्त्तव्यौ पद्मस्थौ मधुकैटभौ। शङ्खचक्रगदादीनि मूर्त्तीनि परितो न्यसेदिति"। प्रद्युम्नलक्षणं पञ्चरात्रादिषु "दक्षिणोर्द्धकरे पद्मं दद्याच्छङ्खमधः करे। चक्रमूर्द्धे ततो वामे गदां दद्यात् तथा द्विज!। चापेषुभृत्वा प्रद्युम्नो रूपवान् विश्वमोहनः" इति। अत्र यद्यपि प्रकृतेरव्यक्तरूपतया विधानमशक्यं तथापि लक्ष्म्यादिशब्दव्यपदेश्यं सुकरमस्ति तद्रूपमित्यतस्तदन्यतमरूपनिर्माणमेव न्याय्यम्। तदुक्तं मार्कण्डेयपुराणे "सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी। मातुलुङ्गं गदां खेटं पानपात्रञ्च बिभ्रती। नागं योनिञ्च लिङ्गञ्च बिभ्रती नृप! मूर्द्धनीति"। संकर्षणरूपम् विष्णुधर्मोत्तरे "वासुदेवस्य रूपेण कार्य्यः संकर्षणः प्रभुः। स तु शुक्लवपुः कार्य्यो नीलवासा यदूत्तम!। गदास्थाने च मुसलञ्चक्रस्थाने च लाङ्गलमिति"। वेदमूर्त्तयो भूतघटे वक्ष्यन्ते। अनिरुद्धरूपं नारदीये। "कृष्णं चतुर्भुजं दक्षे शरं खड्गं तदुत्तरे। धनुःखेटधरं वीरमनिरुद्धं प्रचक्षते"। अग्निलक्षणमुक्तम्। वासुदेवरूपमपि नारदीये "वासुदेवः शिवः शान्तः सिताभश्च चतुर्भुजः। योगमूर्त्तिश्च शङ्खञ्च हृद्देशार्पितहस्तकः। धारयेदुत्तरे चक्रं करे वै दक्षिणे गदामिति"। एते च देवताविशेषाः, ब्रह्माण्डनिर्माणकप्रसुवर्णात् पृथक् सुवर्णेनैव घटनीयाः ब्रह्माण्डस्य किल, विंशतिपलात्प्रभृति पलसहस्रावधिरिह नियमः, पुराणेषु दृश्यते ततोऽवकृष्य-

माणकाञ्चने तस्मिन् न्यूनसंख्यत्वादयथावद्विहितत्वमापद्यते । न च दिग्गजाष्टकसंयुक्तं लोकपालोपेतमित्यादिना एक एव तावद्भिरङ्गैरङ्गी निष्पाद्यत इति ब्रह्माण्डवत्कल्पतरुवर्णनेव दिग्गजादिप्रतिमानिर्मितौ न कश्चिद्बाध इति वाच्यं, "काञ्चनान् कारयेदिति" पुनः काञ्चनोपदेशानार्थक्यापत्तेः । अत्र यमाणपरिमाणानां प्रतिमानामङ्गुष्ठपर्वप्रभृतिवितस्तिपर्य्यन्तं यथाशक्ति परिमाणं कल्पनीयम् । "पूर्णकुम्भान् स्थापयेदित्यत्र समन्तादिति योज्यम् । "दशैव धेनवो देया सहेमाम्बरदोहनाः । पादुकोपानहच्छत्रचामरासनदर्पणैः । भक्ष्यभोज्यान्नदीपेक्षुफलमाल्यानुलेपनैः । होमाधिवासनान्ते च स्नापितो वेदपुङ्गवैः । इत्थमुच्चारयेन्मन्त्रं त्रिःकृत्वाथ प्रदक्षिणम्" । सहेमाम्बरदोहना इति, हेमश्रृङ्गाः ताम्रदोहनाः सवस्त्राः पार्श्वतो दक्षिणार्थमुपकल्पनीयाः । तत्राचार्य्याय द्वे, ऋत्विग्भ्योऽष्टौ संप्रदेया, जापकादीनां अन्यैव यथाशक्ति दक्षिणेति, । भविष्योत्तरे तु "द्येयं निष्कशतं पार्घेत्यादिना सुवर्णमेव दक्षिणार्थमुपकल्पनीयमित्युक्तं, आद्याधिवासनदिनादन्ये द्युरग्निकुण्डेषु ऋत्विगुपवेशनादिकर्मशेषसमाप्तौ तुलापुरुषदानवद्विहितायां, पूर्ववदेव स्नापितः शुक्लमाल्याम्बरधरो गृहीतकुसुमाञ्जलिर्यजमानो ब्रह्माण्डं त्रिःप्रदक्षिणीकृत्य मन्त्रमुच्चारयेत् । मन्त्रः । "नमोऽस्तु विश्वेश्वर! विश्वधामन्! जगत्सवित्रे भगवन्नमस्ते । सप्ताधिलोकामरभूतलेन गर्भेण सार्द्धं वितराभिरक्षाम् । ये दुःखितास्ते सुखिनो भवन्तु प्रयान्तु पापानि चराचराणाम् । त्वद्दानशस्त्राहतपातकानां ब्रह्माण्डदोषाः प्रलयं व्रजन्तु । एवं प्रणम्यामरविश्वगर्भं दद्याद् द्विजेभ्यो दशधा विभज्य । भागद्वयं तत्र गुरोः प्रकल्प्य समम्भजेच्छेषमतः क्रमेण" । दानवाक्यं तुलापुरुषवद्वेदितव्यं तच्च दशधा विभज्य गुरोर्भागद्वयं प्रकल्प्य अवशिष्टाष्टभागानामेकैकं भागं त्रिधा विभज्य चतुर्विंशतिसंख्येभ्य ऋत्विगादिभ्यः समं दद्यात्, तदनुज्ञयान्येभ्योऽपि ब्राह्मणेभ्यो दद्यात् । "स्वल्पं होमं गुरुरेक एव कुर्य्यादथैकाग्निविधानयुक्त्या । स एव संपूज्यतमोऽल्पवित्तैर्यथोक्तवस्त्राभरणादिकेन" । विंशतिपलादारभ्य पलसहस्रावधिद्रव्ये ब्रह्माण्डे सहस्रतदर्द्धादित्युत्तममध्यमादित्रैविध्यकल्पनायां कनीयोभागस्याल्पत्वमवधेयं, विंशतिपलनिर्मितस्यैवाल्पत्वमित्येके उक्तविंशतिपलादर्वाक् यथाशक्तिविधाने स्वल्पत्वमवगन्तव्यमिति केचित् । एकाग्निविधानम्

एकस्मिन्नेव कुण्डे होमकरणम् कुण्डमपि वरुणदिग्भागस्थितं हस्ताकारञ्च कार्य्यं तदेतत्परिभाषायामुपपादितम् । अथ पुण्याहवाचने कृते देवतावेदीसमीपं गत्वा पूर्ववद्यजमानेन देवतापूजायां विहितायामाचार्य्यो विसर्जनं विदध्यात् । "इत्थं य एतदखिलं पुरुषोऽत्र कुर्य्याद्ब्रह्माण्डदानमधिगम्य महद्विमानम् । निर्धूतकल्मषविशुद्धतनुर्मुरारेरानन्दकृत् पदमुपैति सहाप्सरोभिः । सन्तारयेत् पितृपितामहपुत्रपौत्रबन्धुप्रियातिथिकलत्रशताष्टकं सः । ब्रह्माण्डदानशकलीकृतपातकौघमानन्दयेच्च जननीकुलमप्यशेषम् । इति पठति शृणोति वा य एतत् सुरभवनेषु गृहेषु धार्मिकाणाम् । मतिमपि च ददाति मोदते सोऽमरपतिभवने सहाप्सरोभिः" । "राजोवाच विधिं ब्रह्माण्डदानस्य कृत्वा यं मोक्षभाग्भवेत् । कालं देशं द्विजं तीर्थं सर्वमेतद्वदस्व मे । कृतेन येन सर्वस्य फलभागी भवाम्यहम् । कुत्सितस्यास्य भावस्य मोक्षः स्यादचिराच्च मे । वशिष्ठ उवाच "एवं श्रुत्वा ततो राजन्! पुरोधास्तस्य तं द्विजः । ब्रह्माण्डं कारयामास सौवर्णं सर्वधातुभिः । पीठं निष्कसहस्रेण पद्मं तत्र प्रकल्पयेत् । तत्र ब्रह्मा तस्य मध्ये पद्मरागैरलङ्कृतः । सावित्र्या चैव गायत्र्या ऋषिभिर्मुनिभिः सह । नारदाद्यैः स्तुतैः सर्वैरिन्द्राद्यैश्च सुरैस्तथा । सौवर्णविग्रहाः सर्वे ब्रह्मणस्तु पुरःसराः । वाराहरूपो भगवान् लक्ष्म्या सह सनातनः । नीलान्मरकतांश्चैव भूषायांस्तस्य कारयेत् । रजतस्य विशुद्धस्य देहं रुद्रस्य कारयेत् । गोमेदकैस्तस्य शोभाङ्कारयेदत्र बुद्धिमान् । मौक्तिकैश्चापि सोमस्य शोभां वत्रकैर्दिवाकरैः" । सावित्रीगायत्र्यौ तु, ब्रह्मणः पार्श्वभागे स्थापनीयौ । तदाह नारदः "सावित्री दक्षिणे पार्श्वे गायत्री नाम वामतः । विलोकयन्त्यौ ब्रह्माणं साक्षसूत्रकमण्डलुम्" । ऋषयः सप्त गोतमाद्याः तदुक्तमादित्यपुराणे "गोतमश्च भरद्वाजो विश्वामित्रश्च काश्यपः । जमदग्निर्वशिष्ठोऽत्रिः सप्त वैवस्वतेऽन्तरे" । सप्तर्षिलक्षणमाह यमः "सप्तर्षयस्तु जटिलाः कमण्डल्वक्षसूत्रिणः । ध्याननिष्ठा वशिष्ठस्तु कार्य्यो भार्य्यासमन्वितः" । मुनयो वानप्रस्थाः, नारदाद्यैरिति तेषां विशेषणम्" । तानाह मनुः "अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् । पतीन् प्रजानामसृजं महर्षीनादितो दश । मरीचिमत्र्यङ्गिरसं पुलस्त्यं पुलहं क्रतुम् । प्रचेतसं वशिष्ठञ्च

भृगुन्नारदमेव च”। तल्लक्षणमाह विश्वकर्म्मा “जटिलाः श्मश्रुलाः शान्ता दण्डाऽऽश्रमनिषण्णकाः। कुशकमण्डलुधराः कार्य्या मुनयो द्विभुजाः सदा। तेषु सव्यभुजामूलश्लिष्टचीरस्तु नारदः। कर्पूरगौरदेहस्य वामहस्तकमण्डलुः”। इत्यादिरूपाण्यपि प्रागभिहितानि। वाराहरूपं विष्णुधर्म्मोत्तरे “वाराहरूपः कार्यस्तु शेषोपरिगतः प्रभुः। शेषश्चतुर्भुजः कार्य्यश्चारुरत्नफणान्वितः। कर्त्तव्यौ सीरमुसलौ करयोस्तस्य यादव!। सर्परूपस्य कर्त्तव्यस्तथैव रचिताञ्जलिः। आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान् भवेत्। वामारत्निगता तस्य योषिद्रूपा वसुन्धरा। नमस्कारपरा तस्य कर्त्तव्या द्विभुजा शुभा। यस्मिन् भुजे धरा देवी तत्र शङ्खः करे भवेत्। अन्ये तस्य कराः कार्य्याः पद्मचक्रगदाधराः। पद्मासनस्थां कुर्वीत श्रियं त्रैलोक्यमातरम्। गौरवर्णां सुरूपाञ्च सर्व्वालङ्कारभूषिताम्। रौक्मपद्मकरव्यग्रां वरदां दक्षिणेन तु”। रुद्ररूपं प्रागभितं ग्रहलक्षणानि तद्वर्णाश्च नवग्रहदाने वक्ष्यन्ते। सर्व्ववर्णानि ग्रहसमानवर्णानि, रत्नानि भूषणार्थं दापयेदित्यर्थः। सर्व्वधातुभिः ब्रह्माण्डं कर्त्तव्यमित्युक्तं, तत्र सुवर्णस्य पीठनिर्म्माणादिविनियोगमभिधायेदानीं धात्वन्तरैः कर्त्तव्यं तदुच्यते “पीठात् सप्तगुणं रौप्यं रौप्यात्ताम्रं तथाविधम्। ताम्रात् सप्तगुणं कार्य्यं कांस्यमत्र नराधिप!। त्रपुणः परतः सीसं तावल्लौहं च कारयेत्। सप्तद्वीपाः समुद्राश्च सप्तैव कुलपर्व्वताः। अनया संख्यया ज्ञात्वा निपुणैः शिल्पिभिः कृताः”। तथाविधं सप्तगुणमित्यर्थः सप्तद्वीपा इत्यादि एतेषामेकैकधातुना एकैकं द्वीपं समुद्रं कुलाचलञ्च रचयेदित्यर्थः। “यादसानि च भूतानि राजतान्येव कारयेत्। आरण्यानि च सत्त्वानि सौवर्णानि च कारयेत्। वृक्षान् वनस्पतींश्चात्र तृणवल्लीः सवीरुधः”। यादसानि, जलसम्भवानि, पुष्पफलवन्तो वृक्षाः अपुष्पाः फलिनो वनस्पतयः, वीरुधो गुच्छगुल्मादयः। “सर्वं प्रकल्प्य विधिवत्तीर्थे देयं विचक्षणैः। कुरुक्षेत्रे गयायां च प्रयागेऽमरकण्टके। द्वारवत्यां प्रभासे च गङ्गाद्वारे च पुष्करे। तीर्थेष्वेतेषु वै देयं ग्रहणे सोमसूर्य्ययोः। दिनच्छेदेषु सर्व्वेषु अयने दक्षिणोत्तरे। व्यतीपाते बहुगुणं विषुवे च विशेषतः। दातव्यमेतद्राजेन्द्र! विचारं नैव कारयेत्। कालाग्निहोत्रिणं विप्रं सुरूपञ्च गुणान्वितम्। सपत्नीकं च संपूज्य भूषयित्वा विभूषणैः। पुरोहितं मुख्यतमं कृत्वान्यांश्च तथर्त्विजः। चतुर्विंशत्तु गुणोपेतान् सपत्नीकान्निमन्त्रितान्। अहताम्बरसञ्छन्नान् स्रग्विणः सुविभूषितान्। अङ्गुलीयककङ्कणानि कर्णवेष्टांश्च दापयेत्। एवंविधांश्च संपूज्य तेषामग्रे स्वयं स्थितः। अष्टाङ्गप्रणिपातेन प्रणम्य च पुनः पुनः। पुरोहिताय पुरतः कृत्वा वै करसंपुटम्। यूयं वै ब्रह्मणा धात्रा, मैत्रत्वेनानुगृह्यताम्। सौहृद्येनेह भवताम्भवेत् पूतो नरः स्वयम्। भवतां प्रीतियोगेन स्वयं प्रीतः पितामहः। ब्रह्माण्डेन तु दत्तेन तेषां प्रीतो जनार्द्दनः। पिनाकपाणिर्भगवान् शक्रश्च त्रिदशेश्वरः। एते वै तोषमायान्ति अनुध्याता द्विजोत्तमैः। एवं स्तुत्वा ततो राजा ब्राह्मणान् वेदपारगान्। ब्रह्माण्डं गुरवे प्रादात् सविधानं पुनः पुनः। सर्व्वकामैस्ततस्तृप्तो ययौ स्वर्गं नराधिपः। तेनापि गुरुणा तत्र विभक्तं ब्राह्मणैः सह। दत्तस्तैरपि चान्येभ्यो ब्रह्माण्डांशो नराधिप!। ब्रह्माण्डं भूमिदानं च ग्राह्यं नैकेन तद्भवेत्। स्वल्पेऽप्येनमवाप्नोति ब्रह्महत्यां न संशयः। सर्व्वेषाञ्चैव प्रत्यक्षं दातव्यं तन्नराधिप!। दीयमानञ्च पश्यन्ति तेऽपि पूता भवन्ति हि। दर्शनादेव ते पूता भवेयुर्नात्र संशयः”। पद्मपुराणोक्तस्तद्विधिर्यथा

“शृणु वत्स! प्रवक्ष्यामि ब्रह्माण्डाख्यं पुरातनम्। तच्च द्वादशसाहस्रं भाविकल्पकथायुतम्। प्रक्रियाख्यो१ऽनुषङ्गाख्य२ उपोद्घातस्तृतीयकः। चतुर्थ उपसंहारः४ पादाश्चत्वार एव हि। पूर्व्वपादद्वयं पूर्व्वो भागोऽत्र समुदाहृतः। तृतीयो मध्यमो भागश्चतुर्थस्तूत्तरो मतः। तत्र पूर्व्वभागे प्रक्रियापादे “आदौ कृत्यसमुद्देशो नैमिषाख्यानकं ततः। हिरण्यगर्भोत्पत्तिश्च लोककल्पनमेव च। एष वै प्रथमः पादो द्वितीयं शृणु मानद”। पूर्व्वभागे अनुषङ्गपादे “कल्पमन्वन्तराख्यानं लोकज्ञानं ततः परम्। मानसस्टष्टिकथनं रुद्रप्रसववर्णनम्। महादेवविभूतिश्च ऋषिसर्गस्ततःपरम्। अग्नीनां विचयश्चाथ कालसद्भाववर्णनम्। प्रियव्रतान्वयोद्देशः पृथिव्यायामविस्तरः। वर्णनं भारतस्यास्य ततोऽन्येषां निरूपणम्। जम्ब्वादिसप्तद्वीपाख्या ततोऽधोलोकवर्णनम्। ऊर्द्ध्वलोकानुकथनं ग्रहचारस्ततःपरम्। आदित्यव्यूहकथनं देवग्रहानुकीर्त्तनम्। नीलकण्ठाह्वयाख्यानं महादेवस्य वैभवम्। अमावास्यानुकथनं युगतत्त्वनिरूपणम्। यज्ञप्रवर्त्तनं चाथ युगयोरन्त्ययोः कृतिः। युगप्रजालक्षणञ्च ऋषि-

स्थानान्तरे शङ्खे पृष्ठे मूर्ध्नि च वर्जयेत्। आदितो यच्च दुर्ज्जातमस्थिसन्धिरथापि वा। सम्यक् संहितमप्यस्थि दुर्न्यासाद् दुर्निबन्धनात्। सङ्क्षोभाद्वापि यद्गच्छेद्विक्रियां तत् तु वर्जयेत्। मध्यस्य वयसोऽवस्थास्तिस्रो याः परिकीर्त्तिताः। तत्र स्थिरो भवेज्जन्तुरुपक्रान्तो विजानता। तरुणास्थीनि नम्यन्ते भज्यन्ते नलकानि तु। कपालानि विभिद्यन्ते स्फुटन्ति रुचकानि च"।

**भग्नपाद्** न॰ ज्यो॰त॰ उक्ते कृत्तिकादिनक्षत्रे यस्य नक्षत्रस्य तृतीयपादस्य आद्यपादस्य वा राश्यन्तरघटकता तादृशे नक्षत्रे। "पुनर्वसूत्तराषाढ़ाकृत्तिकोत्तरफल्गुनी। पूर्वभद्रा विशाखा च षड़ेते पुष्कराः स्मृताः भग्नपादत्त्वसंयोगात्"।

**भग्नपृष्ठ** त्रि॰ भग्नं पृष्ठं यस्य। १त्रुटितपृष्ठके २सम्मुखे च त्रिका॰।

**भग्नप्रक्रम** पु॰ भग्नः प्रक्रमो यत्र। काव्यगते वाक्यदोषभेदे ४७६३।६४ पृ॰ दोषशब्दे दृश्यम्। तदुदाहरणं सा॰द॰ "एवमुक्तो मन्त्रिमुख्यैः रावणः प्रत्यभाषत" अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितं तेन "रावणः प्रत्यवोचतेति" पाठो युक्तः। एवञ्च सति न कथितपदत्वदोषः तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वात् इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिर्देश्यत्वम्। यथा "उदेति सविता ताम्रस्ताम्र एवास्तमेति च" इत्यत्र। यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति। यथा वा। "ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्। सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः"। अत्र "अस्मा इति" इदमा प्रक्रान्तस्य तेनैव तत्समानार्थाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन। यथा वा। "उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्"। अत्र "मिता भूः पत्यापां स च पतिरपामिति" युक्तः पाठः। एवं "यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा। निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः" अत्र सुखमीहितुमित्युचितम्। अत्राद्ययोः प्रकृतिविषयः प्रक्रमभेदः। तृतीये पर्य्यायविषयः चतुर्थे प्रत्ययविषयः"।

**भग्नसन्धि** पु॰ भग्नः सन्धिरत्र। रोगभेदे गरुड़पु॰१५७अ॰

**भग्नसन्धिक** न॰ भग्नः सन्धिः सन्धानमवयवयोजनमत्र कप्। तक्रे (घोल) शब्दच॰।

**भग्नात्मन्** पु॰ ६त॰। चन्द्रे शब्दचन्द्रिका। तस्य कृष्णप्रतिपदादिक्रमेण एकैककलाविच्छेदेन भग्नदेहत्वात् तथात्वम्

**भग्नाश** त्रि॰ ६त॰। १हताशे इष्टविषयाया इच्छायाः प्रतिघातयुक्ते।

**भग्नी** स्त्री भगिनी+पृषो॰। भगिन्यां द्विरूपकोषः।

**भङ्कारी** स्त्री भमित्यव्यक्तशब्दं करोति कृ—अण् गौरा॰ङीष्। मशकराजिकायां दंशे त्रिका॰।

**भङ्ग** पु॰ भन्ज—भावादौ घञ्। १तरङ्गे अमरः २पराजये। ३खण्डे ४रोगभेदे मेदि॰५कौटिल्ये ६भये ७पत्ररचनाभेदे हेम॰। ८गमने ९जलनिर्गमे च अजयपालः १०मातुलावास्, अमरः। ११भागाख्ये १२शब्दे त्रिवृतायां (तेउड़ी) १३विजयायाञ्च (भाङ्) स्त्री। १४रोगमात्रे पु॰राजनि॰।

**भङ्गकार** पु॰ अविक्षितो नृपस्य १पुत्रभेदे भा॰ आ॰ ९४अ॰। २सत्राजित्पुत्रभेदे हरिवं ३८ अ॰।

**भङ्गवासा** स्त्री भङ्गे सति वासः सौरभं यस्याः। हरिद्रायां शब्दरत्ना॰ तस्याः पेषणे एव वासनाधर्म्मात्तथात्वम्।

**भङ्गसार्थ** त्रि॰भङ्गस्तद्युतः सार्थः मायायुतत्वात् समवोजनः। कुटिले हारा॰। [रजसि

**भङ्गाकट** न॰ भङ्गाया रजः भङ्गा+रजसि कटच्। भङ्गारेणौ।

**भङ्गान** पुंस्त्री भङ्गेन तरङ्गेण अनिति अन—अच्। (भाङ्गन) मत्स्यभेदे शब्दमा॰ स्त्रियां जातित्वात् ङीष्।

**भङ्गारी** स्त्री भमित्यव्यक्तं गिरति गृ—अण् गौरा॰ ङीष्। दंशे त्रिकाण्डे पाठान्तरम्।

**भङ्गासन** पु॰ नृपभेदे तत्कथा भा॰ अनु॰ १२अ॰।

**भङ्गि(ङ्गी)** स्त्री भन्ज—इन् न्यङ्क्वा॰ कुत्वम् वा ङीष्। १विच्छेदे २कौटिल्ये ३विन्यासे ४कल्लोले ५भेदे ६व्याजे च।

**भङ्गिमन्** पु॰ भङ्ग+वा॰ स्वार्थे इमनिच्। भङ्गयाम्।

**भङ्गुर** त्रि॰भन्ज—घुरच्। १स्वयं भञ्जनशीले जटा॰। २कुटिले ३नदीनां वक्रे च शब्दमा॰ ४प्रियङ्गौ ५अतिविषायाम् च (आतइच्) स्त्री राजनि॰।

**भङ्ग्य** न॰ भङ्गानां भवनं क्षेत्रं तदर्हति वा यत्। भङ्गाभवनयोग्ये क्षेत्रे २भङ्गार्हे त्रि॰।

**भचक्र** न॰ भानां नक्षत्राणां राशीनां वा चक्रम्। १राशिचक्रे २नक्षत्रचक्रे च "भ्रमावर्तो भचक्रेऽस्मिन् ध्रुवा नाभौ व्यवस्थितः। ताराचक्रे त्विन्दुभौमौ शुक्रजीवशनैश्चराः। राहुः केतुरगस्त्यश्च नक्षत्राण्यथ राशयः। यदा दिनं च खटाश्च मेरोर्भूगोलकोद्भवा। छाया भवेत्तदा रात्रिः स्याच्च तद्विरहाद्दिनम्। सूर्य्येन्द्वोरुपरागस्तु गोलकच्छायया भवेत्। अन्योन्ययोस्तयोरेव छाययोरेव तार-

स्यात्। ग्रासमोक्षौ तु जायेते तस्मात् पूर्वपश्चिमौ। तत्र पुण्यफलाङ्गागः कृतो राहोस्तु विष्णुना" वह्निपु०। अधिकं खगोलशब्दे दृश्यम्।

भज भागे पृथक्करणे सेवायाञ्च भ्वा० उभ० सक० अनिट्। भजति-ते अभाक्षीत् अभक्त बभाज भेजतुः भेजे। [त

भर्ज पाके दाने च चु० उ० सक० सेट्। भाजयति-ते अबीभजत्

भजि दीप्तौ चु० उभ० सक० सेट् इदित्। भञ्जयति-ते अबभञ्जत्-त

भजमान त्रि० भज-शानच्। १न्यायागतद्रव्यादौ २विभाजके ३सेवके च। सात्त्वतो नृपस्य कौशल्यागर्भजाते ४पुत्रभेदे पु० हरिवं० ३८अ०।

भजि पु० भज-धातुनिर्देशे इन्। १भजधातौ। इन्। सत्वतो नृपस्य २पुत्रभेदे भाग० ९।२४।४श्लो०। हरिवं० ३८ अ०। भजिन् इति पाठान्तरम् तत्रार्थे

भजेन्य त्रि० भज-बा० कर्मणि एन्य। भजनीये भाग० ५।१७।२०

भजेरथ पु० राजभेदे ऋ० १।१६०२।

भञ्जनक पु० मुखरोगभेदे "वक्त्रं वक्रं भवेद्यस्य दन्तभङ्गश्च जायते। कफवातकृतो व्याधिः स भञ्जनकसंज्ञितः" माधवकरः।

भञ्जनागिरि पु० ह्रस्व०। किंशुलुका० दीर्घः। पर्वतभेदे

भञ्जरु पु० भनज-बा० अरु। देवकुलोद्भवे द्रुमे त्रिका०।

भञ्जा स्त्री अन्नपूर्णायाम् रुद्रयामले॥

भट भृतौ कर्मसूल्यग्रहणे भ्वा० पर० सक० सेट् भटति। अभाटीत्-अभटीत्। यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति। भाटं न दद्यात् दाप्योऽसाववरूढस्यापि भाटकम्" इति मनुः।

भट भाषणे भ्वा० पर० सक० सेट्। भटति अभा(भ)टीत्।

भट पु० भट-अच्। १योद्धरि अमरः "तद्भटचातुरीतुरी" नैष०। २म्लेच्छभेदे हेम० ३वीरे ४नीचभेदे ५राक्षसे च मेदि० ६इन्द्रवारुणयाम् (राखालशशा) स्त्री रत्न०।

भटित्र न० भट-इत्र। शूलपक्वे मांसादौ (काबाब) अमरः।

भट्ट पु० भट-तन्। स्तुतिपाठवृत्तियुते (भाट) १जातिभेदे "वैश्यायां शूद्रवीर्य्येण पुमानेको बभूव ह। स भट्टो वावदूकश्च सर्वेषां स्तुतिपाठकः" ब्रह्मवै० ब्रह्मख० ७अ० "क्षत्रियाद्विप्रकन्यायां भट्टो जातोऽनुवाचकः"। तेन द्विविधा जातिः। २स्वामिनि, ३वेदाभिज्ञे ४पण्डिते च। भट्टश्च तुतातभिधः मीमांसकभेदः तन्मतं च १०१ पृ० दर्शितम्। दिग्मात्रं लौगाक्षिभास्करेण दर्शितं यथा "स च यागादिर्यजेत स्वर्गकाम इत्यादि वाक्येन स्वर्गमुद्दिश्य पुरुषं प्रति विधीयते। तथाहि यजेतेत्यत्रांशद्वयं यजिधातुः प्रत्ययश्च। प्रत्ययेऽप्यंशद्वयमाख्यातत्वं लिङ्त्वञ्च। तत्राख्यातत्वं दशलकारसाधारणं, लिङ्त्वं पुनर्लिङ्मात्रे। उभाभ्यामप्यंशाभ्यां भावनैवोच्यते। भावना नाम भवितुर्भवनानुकूलो व्यापारविशेषः। सा द्विधा—शाब्दी आर्थी चेति। तत्र पुरुषप्रवृत्त्यनुकूलो भावयितृव्यापारविशेषः शाब्दी भावना। सा च लिङंशेनोच्यते लिङ्श्रवणेऽयं मां प्रवर्त्तयति मत्प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः। यद्यस्माच्छब्दान्नियतं प्रतीयते तत् तस्य वाच्यं गामानयेत्यस्मिन् वाक्ये यथा गोशब्दस्य गोत्वम्। स च व्यापारविशेषो लौकिकवाक्ये पुरुषाभिप्रायविशेषः वैदिकवाक्येषु पुरुषाभावात् लिङादिशब्दनिष्ठ एव। अतएव शाब्दी भावनेति व्यवह्रियते। सा च भावनांशत्रयमपेक्षते—साध्यं साधनमितिकर्त्तव्यताञ्च। किं भावयेत्? केन भावयेत्? कथं भावयेत्?—इति तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थी भावना साध्यत्वेनान्वेति, एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः सङ्ख्यादीनामेकप्रत्ययगम्यत्वेऽप्ययोग्यत्वान्न साध्यत्वेनान्वयः। साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेनान्वेति, तस्य च करणत्वं न भावनोत्पादकत्वेन तत्पूर्वमपि तस्याः शब्दे सत्त्वात् किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्त्तकत्वेन वा। इतिकर्त्तव्यताकाङ्क्षायामर्थवादज्ञाप्यप्राशस्त्यमितिकर्त्तव्यत्वेनान्वेति। प्रयोजनेच्छाजनितक्रियाविषयव्यापार आर्थी भावना। सा चाख्यातवाच्या, आख्यातसामान्यस्य व्यापारवाचित्वात्। साप्यंशत्रयमपेक्षते साध्यं साधनमितिकर्त्तव्यताञ्च। किं भावयेत्? केन भावयेत्? कथं भावयेत्? इति। तत्र साध्याकाङ्क्षायां स्वर्गादिफलं साध्यत्वेनान्वेति। साधनाकाङ्क्षायां यागादिः करणत्वेनान्वेति, इतिकर्त्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्त्तव्यत्वेनान्वेति"।

भट्टाचार्य्य पु० भट्टस्तुतातभट्टश्च आचार्य्य उदयनाचार्य्यश्च तौ तुल्यतया तन्मताभिज्ञतया वाऽस्त्यस्य। तुतातभट्टेन उदयनाचार्य्येण च १तुल्ये २तयोर्मताभिज्ञे च। द्वन्द्वः। ३तयोः द्वि० व०। "नास्तिकानां निग्रहाय भट्टाचार्य्यौ भविष्यतः"।

भट्टार त्रि० भट्टं स्वामित्वमृच्छति ऋ अण्। १पूज्ये

त्रिका० मूर्खे पु० स्वार्थे क। मूर्खे त्रि० जटा०। नाट्योक्तौ नृपे संज्ञायां कन्। २वेदे तपोधने पु० मेदि० अमरः। "सखे! स्नायुनिर्मिताः पाशास्तदद्य भट्टारकवारे कथमेतान् दन्तैः स्पृशामि" हितो०।

**भट्टि** पु० १द्वाविंशतिसर्गात्मके महाकाव्यभेदे तच्च जयमङ्गलेन श्रीधरस्वामिसूनो महाब्राह्मणस्य महावैयाकरणस्य भट्टेः कृतिरित्युक्तं भरतमल्लिकेन भर्तृहरिणा कृतमित्युक्तं तच्चिन्त्यं "काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम्" तत्र द्वाविंशसर्गश्लोके उक्तेः न भर्तृहरिकृतत्वम् भर्तृहरेरुज्जयिनीवास्तव्यत्वेन तन्नृपतित्वेन च नृपान्तरराजधानीवास्तव्यत्वोक्तेरनुचितत्वात्।

**भट्टिनी** स्त्री भर्तृ स्वामित्वमस्त्यस्य इनि ङीप्। नाट्योक्तौ १अकृताभिषेकायां राज्ञः स्त्रियाम् अमरः। २विप्रभार्य्यायाम् मेदि०।

**भट्टोजि** पु० सिद्धान्तकौमुदीशब्दकौस्तुभादिग्रन्थकारके दीक्षितोपनामके वैयाकरणभेदे। [कमलजे।

**भड** परिभाषणे भ्वा०आ०सक०सेट् इदित्। भण्डते अभण्डिष्ट

**भड** कल्याणभाषणे चु० उ०सक० सेट् इदित्। भण्डयति–ते अबभण्डत्–त। प्रतारणे च भण्डयति प्रतारको मुग्धं धनदानाङ्गीकारेण, सनिन्दोपलम्भे परिहासे च उणा० स्तु० भडिभण्ड्योः पृथगनिर्देशात् अयमिदिदुभिन्नोऽपि।

**भड** पु० भडि–अच्। वर्णसङ्करभेदे "लेटस्तीवरकन्यायां जनयामास भड नरान्। मालं मल्लं मातरं च भड़ं कोलं च कन्दरम्" ब्रह्मवै०ब्रह्मख०२०अ०।

**भडिल** पु० भड–इलच्। १वीरे २सेवके उज्ज्वलः। ३ऋषिभेदे ततः गर्गा० अपत्ये यञ्। भाडिल्य तदपत्ये अश्वा० फञ्। भाडिल्यायन तदपत्ये बहुत्वे तस्य लुक्।

**भण** कथने भ्वा०पर०द्विक०सेट्। भणति। अभाणीत्–अभणीत्। णिचि वा ह्रस्वः। अबीभणत्–त अबभाणत्–त। कथनमिह व्यक्तवाक्यम्।

**भणिति** स्त्री भण–क्तिन् यहादित्वादिट्। कथने। गौडोर्वीशकुलप्रशस्तिभणितेः" नैष०। [२उक्त्यां रत्नमाला।

**भण्टाकी** स्त्री भटि–आकन् ङीप्। १वार्त्ताक्याम्, अमरः।

**भण्टु(ण्टू)क** पु०भटि–उक ऊक वा। श्योनाकवृक्षे रत्नमा०

**भण्ड** पु० भडि–अच्। अश्लीलवाक्यभाषके (भाँड़) "त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तपिशाचकाः" सर्व०सं०चार्वाकदर्शनम्

**भण्डक** पुंस्त्री० भण्ड+संज्ञायां कन्। खञ्जनखगे जटा०। स्त्रियां जातित्वात् ङीष्।

**भण्डन** न० भडि–भावाधारादौ ल्युट् १खलीकारे (प्रतारणे) २कवचे मेदि०। [३युद्धे च ४ सेनायां शब्दर०।

**भण्डहासिनी** स्त्री भण्डेन सह हसति णिनि ङीप्। [वेश्यायां शब्दर०।

**भण्डि** स्त्री भडि–इन्। १वीचौ हारा०। वा ङीप् ङीबन्तः २शिरीषवृक्षे राजनि०। [शब्दर०

**भण्डिका** स्त्री भण्ड–ण्वुल् कापि अत इत्वम्। मञ्जिष्ठायां

**भण्डित** पु०भडि–क्त। १ऋषिभेदे ततः गर्गा० यञ्। भाण्डित्य तद्गोत्रापत्ये पुंस्त्री अश्वा०फञ्। भाण्डित्यायन तद्गोत्रापत्ये पुंस्त्री०। तस्य बहुत्वे वा लुक्।

**भण्डिर(ल)** पु०भण्ड–इरच् पृषो०रस्य वा लः। १शिरीषवृक्षे अमरः। रान्तः वाचस्पतिः। लान्तः शुभे दूते त्रि० उणादिको०।

**भण्डीतकी** स्त्री भण्डी सती तकति तक–स्थाने अच् गौरा० ङीष्। मञ्जिष्ठायां भावप्र०।

**भण्डीर** पु० भडि बा०ईर। १समष्ठिलक्षुपे २तण्डुलीयशाके ३शिरीषवृक्षे च राजनि०हरिवं०६५ अ०। तद्वनवर्णनम्

**भण्डीरलतिका** स्त्री भण्डीर इव लतते लत–अच् स्वार्थे क कापि अत इत्वम्। मञ्जिष्ठायां राजनि०।

**भण्डीरी** स्त्री भडि। बा० ईर गौरा० ङीष्। मञ्जिष्ठायाम् अमरः। रस्य लः। तत्रार्थे पु० शब्दच०।

**भण्डु** पु० भडि–उण्। देशभेदे ततः सुवास्त्वा० चतुरर्थ्यां अण्। भाण्डव तद्दूरदेशादौ त्रि०।

**भण्डु(ण्डू)क** पु० भडि–उक ऊक वा। (भाङ्गन) मत्स्यभेदे रत्नमाला। दीर्घमध्यः २श्योनाकवृक्षे रत्नमाला।

**भद** शुभकथने प्रीतौ च भ्वा० आ० अक० सेट् इदित्। भन्दते अभन्दिष्ट। [भन्दत्–त।

**भद** कल्याणकरणे चु०उ०अक०सेट् इदित्। भन्दयति–ते अब॰

**भदन्त** पु० भदि–झच् नलोपः। १बौद्धभेदे। २पूजिते त्रि० उणादि० ३प्रव्रजिते उज्ज्वल०।

**भदाक** न०भदि कल्याणे आकन् नलोपः। कल्याणे उज्ज्वल०

**भद्र** न० भदि-रक् नि० नलोपः। १मङ्गले उणा०२सुवर्णे ३स्वर्णे च मेदि०। ज्योतिषोक्ते बवादितः सप्तमे करणे स्त्री न०। ४महादेवे ५वृषे ६खञ्जने ७कदम्बे ८हस्तिजातिभेदे ९बलदेवे १०रामचरभेदे पु० मेदि०। ११सुमेरुशैले पु० हेमच० १२मुस्तीवृक्षे च पु० राजनि०। ज्योतिषोक्तासु १३द्वितीयासप्तमीद्वादशीतिथिषु च स्त्री। १४साधौ १५श्रेष्ठे च त्रि० मेदि०। १६देवदारुवृक्षे पु०। १७कृष्णभगिन्यां स्त्री "रामं मां भद्रया सह" ति० त०।

१८मध्यदेशभेदे पु० वृ० स० १४ अ० कूर्म्मविभागे दर्शनम्। १९वसुदेवपुत्रभेदे पु० भाग० ९।२४।२५ श्लो०। २०तुषितदेवगणभेदे भाग० ४।१।८। २१वैश्रवणपत्न्यां स्त्री० भा० १९८ अ०। २२सोमस्य दुहितरि उतथ्यपत्न्यां स्त्री भा० अ० १५४ अ०। २३रौद्राश्वस्य कन्याभेदे हरिवं० २६ अ०। २४नटभेदे पु० हरिवं० १५० अ०। २५भारतवर्षस्थे नदीभेदे स्त्री मार्कं पु० ५८ अ०। विष्टिभद्रायाः सर्वकार्य्यवर्ज्जनप्रतिप्रसवादिकं मु० चि० पी० धा० दर्शितं यथा "अयोगे सुयोगोऽपि चेत् स्यात् तदानीमयोगं निहत्यैष सिद्धिं तनोति। परे लग्नशुद्ध्या कुयोगादिनाशं दिनार्द्धोत्तरं विष्टिपूर्वं च शस्तम्(१)। शुक्ले पूर्व्वार्द्धेऽष्टमीपञ्चदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्द्धे। कृष्णेऽन्त्यार्द्धे स्यात् तृतीयादशम्योः पूर्वे भागे सप्तमीशम्भुतिथ्योः(२)। पञ्चद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा विष्टेरास्यमसद्गजेन्दुरसरामाद्यश्विबाणाब्धिषु। यामेष्वन्त्यघटीत्रयं शुभकरं पुच्छं तथा वासरे विष्टिस्तिथ्यपरार्द्धजा शुभकरी रात्रौ तु पूर्वार्द्धजा(३)। कुम्भकर्कद्वये मर्त्ये स्वर्गेऽब्जेऽजात्रयेऽलिगे। स्त्रीधनुर्जूकनक्रे धो भद्रा तत्रैव तत्फलम्(४)" मू०।

"अथावश्यकशुभकृत्ये कालान्तरप्रतीक्षाऽयोग्यतायां परिहारमाह विष्टिपूर्वं विष्टिर्भद्रा तत्पूर्वं तदादि व्यतीपातादिकं दिनार्द्धोत्तरं मध्याह्नादनन्तरं शस्तं प्राह्णः अर्थात् मध्याह्नं यावत्कालो निषिद्धः "विष्टिरङ्गारकश्चैव व्यतीपातश्च वैधृतिः। प्रत्यरं जन्मनक्षत्रं मध्याह्नात् परतः शुभम्" इति तेनैवोक्तत्वात्(१)। अथ भद्रा निषिद्धेति पूर्वमुक्तं तदधुना प्रस्तावात् तन्निषिद्धकालं शालिनीच्छन्दसाह शुक्ले इति। शुक्लपक्षे अष्टम्यां पूर्णिमायाञ्च पूर्वार्द्धे भद्रा भवति एकादश्यां चतुर्थ्यां चोत्तरार्द्धे भद्रा। अथ कृष्णे कृष्णपक्षे तृतीयायां दशम्यां चान्त्यार्द्धे उत्तरार्द्धे भद्रा स्यात् सप्तम्यां शम्भुतिथौ चतुर्दश्याञ्च पूर्वे भागे पूर्वार्द्धे भद्रा स्यात् पूर्वे इति पूर्वादिभ्यो नवभ्यो वेति स्मिनभावपक्षे रूपम्। अष्टम्यादीनां तिथीनां गतभोग्यघटिकायोगार्द्धं भद्राप्रमाणमिति यावत् "तिथेर्गतैष्यैक्यदलं तन्मानं करणं भवेत्" वोपदेवोक्तेः "तिथ्यर्द्धभागं सर्वेषां करणानां प्रकल्पयेत्" इति सूर्य्यसिद्धान्तोक्तेश्च। उक्तञ्च दीपिकायाम् "तृतीयादशमीशेषे तद्युग्मान्योस्तु पूर्वतः। कृष्णे विष्टिः सिते तद्वत्तासां परतिथिष्वपि" बृहस्पतिना तु सप्तदृक्तम्। "सिते चतुर्थ्यामन्त्यार्धमष्टम्याद्यार्द्धमेव च। एकादश्यां परार्द्धे तु पूर्वार्द्धे पूर्णशीतगौ। कृष्णे तृतीयान्त्यार्द्धे हि सप्तम्याद्यार्द्धमेव च। दशम्यास्तूत्तरार्द्धे तु चतुर्दश्यर्द्धमादितः। विख्यातोऽयं महादोषः कथितोऽत्र समस्तगः। तदानीं कृतं तत्कर्म कर्त्रा सह विनश्यति" इति। पूर्णशीतगौ पूर्णिमायाम्। रत्नकोषे प्रत्येकं भद्रानामानि "हंसी नन्दिन्यपि च त्रिशिराः सुमुखी करालिकाचैव वैकृतिरौद्रमुखी च चतुर्मुखी विष्टयः क्रमशः"। चतुर्थ्यादितिथिसम्बन्धि भद्रानामानाभिधानं नामसाहश्येन फलतारतम्यसूचनार्थम्। भद्रास्वरूपं रत्नमालायाम् "उद्वद्धोद्भटतरपीडिताऽतिकृष्णा दंष्ट्रोग्रा पृथुहनुगण्डदीर्घनासा। कार्य्यप्रोद्गतबहुबद्धलं सदुद्गिरन्ती विश्रान्तः पतति समन्ततोऽत्र विष्टिरिति"(२)। अथ चतुर्थ्यादितिथिषु भद्रायास्तत्पुच्छविभागादिकं शार्दूलविक्रीडितेनाह। पञ्चेति चतुर्थ्यादितिथीनां क्रमशः पञ्चादिप्रहरेषु शराः पञ्च नाड्यः आदिमा विष्टेर्भद्राया आस्यं मुखं यथा चतुर्थ्याः पञ्चमप्रहरे, आदिभूताः पञ्च घट्यो भद्रामुखम् एवमष्टम्या द्वितीयप्रहरे, एकादश्याः सप्तमप्रहरे, पौर्णमास्याश्चतुर्थप्रहरे, तृतीयाया अष्टमप्रहरे, सप्तम्यास्तृतीयप्रहरे, भद्रामुखमित्यर्थः तच्च भद्रायामुखमसदशुभमित्यर्थः अथ पुनश्चतुर्थ्यादितिथीनां क्रमेण गजादिप्रहरेषु अन्त्यम् अन्ते भवमन्त्यं दिगादिभ्यो यदिति यत् घटीत्रयं पुच्छं पुच्छसंज्ञं तच्छुभकरं समस्तकार्य्येष्वित्यर्थः। यथा चतुर्थ्यां अष्टमप्रहरस्यान्त्यं घटीत्रयं भद्रापुच्छम् एवमष्टम्याः प्रथमप्रहरस्य, एकादश्याः षष्ठप्रहरस्य, पूर्णिमायास्तृतीयप्रहरस्य, तृतीयायाः सप्तमप्रहरस्य, सप्तम्या द्वितीयप्रहरस्य, दशम्याः पञ्चमप्रहरस्य, चतुर्दश्याश्चतुर्थप्रहरस्यान्त्यं घटीत्रयं भद्रापुच्छमित्यर्थः। यदाह गुरुः "भूतदस्रस्वराम्भोधिवसुवक्त्राङ्करूपकाः। यामेष्वेषु क्रमादास्यं भवेत् तिथ्यर्द्धविष्टिष्विति"। व्यवहारसमुच्चये "दशम्यामष्टम्यां प्रथमघटिकापञ्चकपरं हरिस्तुः सप्तम्यां विदश १२घटिकान्ते त्रिघटिकम्। तृतीयाराकायां खयम २०घटिकाभ्यः परभवं शुभं विष्टेः पुच्छं शिवतिथिचतुर्थ्योस्तु विरमे" इति। हरिस्तुरेकादशी राका पूर्णिमा। ननु भद्रा देवतेत्यभिधीयते तस्याः पुच्छकथनात्तु पशुत्वसिद्धिर्दृश्यते देवता च कथं पशुर्भवितुमर्हति। सत्यं दैत्येन्द्रैर्देवेषु पराजितेषु रुद्रस्य ज्वालामालाकुलनेत्रावीक्षितदेहात् देवी भद्रासंज्ञा मुखपुच्छादिमत्येव

समुत्पन्ना दैत्यान् जघान यदुक्तं श्रीपतिना दैत्येन्द्रैः समरेऽमरेषु विजितेष्वीशः क्रुधा दृष्टवान् स्वं कायं किल निर्गता खरमुखी लाङ्गूलिनी च त्रिपात्। विष्टिः सप्तभुजा मृगेन्द्रगलका क्षामोदरी प्रेतगा दैत्यघ्नी मुदितैः सुरैस्तु करणप्रान्ते नियुक्ता सदेति"। भद्राकृत्यमाह वशिष्ठः "बधबन्धविषाग्न्यस्त्रच्छेदनोच्चाटनादि यत्। तुरङ्गमहिषोष्ट्रादि कर्म विष्ट्यान्तु सिध्यति। न कुर्य्यात् मङ्गलं विष्ट्यां जीवितार्थी कदाचन। कुर्व्वन्नज्ञस्तदा क्षिप्रं तत् सर्व्वं नाशतां व्रजेत्"। तस्या अङ्गविभागः कश्यपसंहितायाम् "मुखे पञ्च गले त्वेका वक्षस्येकादश स्मृताः। नाभौ चतस्रः षट् कट्यां तिस्रः पुच्छे तु नाड़िकाः। कार्य्यहानिर्मुखे मृत्युर्गले वक्षसि निःस्वता। कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवो जयः"। अयञ्च भद्राङ्गविभागो नाड़ीनां त्रिंशतोन्यूनाधिकत्वे तु त्रैराशिकेन मुखादीनामङ्गानां विभागज्ञानं यथा यदि नाडी त्रिंशता इष्टमुखाद्यङ्गपरिमाणं इष्टपरिमाणेन किमिति त्रैराशिकम् एवं सति उक्ताङ्गपरिमाणं भद्राभोगमितघटीभिः सङ्गुण्य त्रिंशता भाज्यं लब्धसमोऽङ्गविभागः। तत्र सुधादिकाया रत्नमालायाम् "जलधिशिखिशशिरसाः सर्व्वकीनाशवायुत्रिदशपतिककुप्सु प्रोक्तमास्यं हि विष्टेः। नियतबहुभिराशासंख्यया प्रक्रमेण स्फुटमिह परिहार्य्यं मङ्गलेष्वेतदेव"। जलं चतुरः कीनाशो यमः शुक्लचतुर्थ्यां उत्तरार्द्धे पश्चिमदिशि भद्रामुखं तच्चाशासंख्यक्रमेण पञ्चमे प्रहरे भवति अर्थाद्दिव भद्रायाः प्रहरचतुष्टयाधिकस्थितभावादन्त्ये एव घटिकात्रयं पुच्छं ततोऽष्टम्यां द्वितीयप्रहरेऽनेन प्रकारेण आग्नेय्यां दिशि मुखं मुखाच्च प्राक् पुच्छमिति प्रथमप्रहरान्त एव पुच्छघटिका इत्येवं सर्व्वास्वपि भद्रातिथिष्ववगन्तव्यं प्रयोजनमपि तत्रैव "मनुवसुशनितिथियुगदशशिवगुणसंख्यासु तिथिषु पूर्व्वस्याः। यायाति विष्टिरेषा पृष्ठे शुभदा पुरस्त्वशुभेति" तदेतदात्ययिककार्य्यसम्भवे सति मुखदिक्‌संमुखयात्रानिषेधकमथ धेयम्। ग्रन्थान्तरे अन्यदप्युक्तम्। "सविते सर्पिणी ज्ञेया सिते विष्टिस्तु वृश्चिकी। सर्पिण्यास्तु मुखं त्याज्यं वृश्चिक्याः पुच्छमेव च"। अथ परिहारमाह. तथेति विष्टिस्तिथ्यपरार्द्धजा तिथ्युत्तरार्द्धे संभूता प्रागरे दिवसे यदि स्याद् भद्रा तदा शुभकरी तत्रैव प्रकारेण तिथिपूर्व्वार्द्धजा भद्रा रात्रौ चेत् स्यात् तदा शुभा शुभकरी स्यात्। उक्तञ्च "रात्रिभद्रा यदाह्नि स्याद् दिवा भद्रा यदा निशि। न तत्र भद्रादोषः स्यात् सा भद्रा भद्रदायिनी" इति। रात्रिभद्रा तिथ्युत्तरार्द्धोद्भवा दिवाभद्रा तिथिपूर्व्वार्द्धोद्भवा अत्तुमर्थं स्पष्टमाह गुरुः। "निशि पूर्व्वार्द्धजा विष्टिर्दिवा चापरतः शुभा। क्रमागता तु या विष्टिः सैव हालाहलोपमा" इति। लल्लोऽपि "दिवा परार्द्धजा विष्टिः पूर्व्वार्द्धोत्था यदा निशि। तदा विष्टिः शुभायेति कमलासनभाषितम्"। ब्रह्मसिद्धान्तेऽपि "दिवा परार्द्धजा विष्टिर्विष्टिरेव दिवानिशोः। सा त्याज्या त्वन्यथा विष्टिः सर्व्वकर्म्मशुभप्रदा"। ननु यत् तु नारदकश्यपादिभिरुक्तम्। "करणानि ववादीनि शुभसंज्ञानि षट् क्रमात्। क्रमायाता क्रमायाता विष्टिर्नेष्टा तु मङ्गले"। अत्र क्रमायाता दिवारात्रिक्रमायाता दिवाभद्रा रात्रौ रात्रिभद्रा च दिवेत्यर्थः। एवं सति द्विविधाया अपि भद्राया दोषवत्त्वोक्तेः पूर्व्वोक्तपरिहाराभिधानमयुक्तम् उच्यते इदमेव क्रमायातेति वचनं ज्ञापकमुत्तार्थस्य अन्यथा सामान्यतो भद्राद्वये इत्युक्ते द्विविधभद्राया दोषवत्त्वसिद्धेरनर्थकमिदं स्यात्तस्मात् शुभकार्य्याणां भद्रारूपदुष्टदिनव्यतिरिक्तकालप्रतीक्षाऽयोग्यत्वे तदैव कार्य्यं न दुष्टदिने कथञ्चनोपपत्तौ बाधो न न्याय्य इति न्यायात् वचनस्य निषेध एव तात्पर्य्यात्। अवश्यकर्त्तव्यस्य तु शुभकर्म्मणः कालान्तरप्रतीक्षासहमानत्वेनमादिपरिहारमाश्रित्य दुष्टदिने क्रतिरुचितैव विष्टिरङ्गारकश्चेत्यपि परिहार एतत्पर एवेत्यलं पल्लवितेन। अथ भद्रानिवासं तत्फलञ्चानुष्टुभाह (२)। कुम्भेति अजे चन्द्रमसि कुम्भद्वये कुम्भमीनस्थे कर्कद्वये कर्कसिंहराशिस्थिते सति भद्रा मर्त्ये मनुष्यलोके तिष्ठति। अथाजात्त्रये मेषवृषमिथुनस्थितेऽलिगे वृश्चिकस्थिते चन्द्रे स्वर्गे भद्रा तिष्ठति। कन्याधनुस्तुलामकरराशिस्थितेऽधः पाताललोके भद्रा तिष्ठति। अथ भद्रा तत्रैव मर्त्यस्वर्गपातालेषु फलं ददातीत्यथवादद्वारा प्रयोजनमुक्तं भवति। उक्तञ्च "मेषोक्षकौर्प्यमिथुने घटसिंहमीनकर्केषु चापमृगतोलिकुलासु चन्द्रे। स्वर्मर्त्यनागनगरीः क्रमशः प्रयाति विष्टिः फलान्यपि ददाति हि तत्र देशे" इति। भूपालवल्लभे "कन्यातुलामकरधन्विषु नागलोके मेषालिवैषिक कर्कषु सुरालये स्यात्। पाठीनसिंहघटकर्कटकेषु मर्त्ये चन्द्रे वदन्ति मुनयस्त्रिविधां द्विविष्टिम्" (४)पी॰धा॰

भद्रशब्दात् परिवापणे (मुण्डने)ऽर्थे गम्ये डाच्। तस्योऽ-नुप्रयोगः सत्यादा०स०। भद्राकरोति माङ्गल्यं मुण्डनेन संस्करोतीत्यर्थः सि०कौ०। एवं मद्रशब्देऽपि बोध्यम्।

भद्रक त्रि०भद्र-स्वार्थे संज्ञायां वा कन्। १मनोहरे त्रिका०। २भद्रमुस्तके न० शब्दमाला। ३देवदारुवृक्षे शब्दर०। "भ्रौ नरनारनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम्"। वृ०र०उक्ते द्वाविंशत्यक्षरपादके ४छन्दोभेदे।

भद्रकण्ट पु० भद्रः कण्टोऽस्य। गोक्षुरक्षुपे राजनि०।

भद्रकर्ण पु० भद्रस्य हृषस्य कर्णो यत्र। गोकर्णरूपे तीर्थभेदे।

भद्रकर्णेश्वर पु०६त०। गोकर्णस्थे शिवलिङ्गभेदे भा०व०८१अ०।

भद्रकार त्रि० भद्रं करोति कृ-अण् उप०स०। १मङ्गलकारके २देशभेदे पु० भा० स० १२ अ०।

भद्रकाय पु०। १नाग्नजित्यां जाते श्रीकृष्णस्य पुत्रभेदे हरिवं० १६२ अ०। ६व०। २मङ्गलदेहके त्रि०।

भद्रकाली स्त्री १दुर्गाशक्तिभेदे "जयन्ती मङ्गला काली भद्र-काली कपालिनी" दुर्गापूजामन्त्रः। तदाविर्भावकथा च कालिपु० ५०अ० दृश्या। तन्मन्त्रादिकं तन्त्रसारे दृश्यम्। २कुमारानुचरभेदे भा० श० ४७ अ०।

भद्रकाशी स्त्री भद्राय काशते काश-अच् गौरा० ङीष्। भद्रमुस्तायाम् राजनि०।

भद्रकाष्ठ न० ६व०। देवदारुवृक्षे सुश्रुतः। [अमरः।

भद्रकुम्भ पु० भद्रकारकः कुम्भः शा०त०। पूर्णकुम्भे जलपूर्णघटे

भद्रगन्धिका पु० भद्रो गन्धोऽस्त्यस्या बाहुल्येन ठन्। मुस्तके रत्नमाला।

भद्रगौर पु० देशभेदे स च पूर्वदिग्वर्त्ती मार्कं०५८ अ०।

भद्रङ्कर त्रि०भद्रं करोति कृ-खच् मुम्। मङ्गलकारके।

भद्रङ्करण न०भद्रं क्रियतेऽनेन कृ-ल्युट् मुम्। मङ्गलसाधने।

भद्रचारु पु०रुक्मिण्यां जाते वासुदेवस्य पुत्रभेदे हरिवं११८अ०

भद्रचूड़ पु० भद्रा चूड़ा यस्य। (लङ्काशिज) वृक्षभेदे शब्दच०।

भद्रज पु० भद्राय जायते जन-ड। इन्द्रयवे राजनि०।

भद्रतरुणी स्त्री भद्रः तरुणीव। कुब्जकवृक्षे राजनि०।

भद्रतुङ्ग पु० तीर्थभेदे भा०व० ८२अ०॥

भद्रतुरग न० भद्रास्तुरगा यत्र। जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे। "माल्यवज्जलधिमध्यवर्त्ति यत्तत् भद्रतुरगं जगुर्बुधाः" सि० शि० जम्बुद्वीपशब्दे भद्राश्वशब्दे च विवरणं दृश्यम्।

भद्रदन्तिका स्त्री कर्म० स्वार्थे कन्। दन्तीवृक्षभेदे।

भद्रदारु पुंन०। कर्म०। देवदारुवृक्षभेदे अमरः।

भद्रद्वीप पु० कुरुवर्षान्तर्गते उपद्वीपभेदे मार्कपु० ५९ अ०।

भद्रनामन् पु०६व०। (काटठोकरा) खगभेदे त्रिका०।

भद्रनामिका स्त्री भद्रं मङ्गलं नामयति प्रापयति नम-णिच्-ण्वुल्। त्रायन्तीलतायां रत्नमा०।

भद्रनिधि पु० दानार्थकल्पिते ताम्रादिघटितघटे तद्दानविधिश्च हेमा० दा० वामनपु० उक्तो यथा "पुण्यान्तिथिं प्राप्य तु पौर्णमास्यां तथोपरागे शशि-सूर्ययोर्वा। चतुर्युगादिष्वयनद्वये वा प्रबोधने प्रस्व-पनेऽथ विष्णोः। कुर्यादथोदुम्बरमेव कुम्भं हिरण्य-भारेण यथात्मशक्त्या। तथाविधानञ्च सुराजतं स्या-द्धिरण्यभारेण तु पूरयेत् तम्। तदर्द्धतोऽर्द्धेन तद-र्द्धतो वा स्वशक्तितः स्वर्णपलैः शतेन। तदर्द्धमर्द्धेन तु वित्तशक्त्या पलत्रयादूर्द्धमपि प्रकुर्यात्। तत्ताम्र-भाण्डे कनकं निधाय सवज्रनीलोत्पलपद्मरागम्। सकु-न्तवैदूर्यसविद्रुमञ्च तद्राजतं पात्रमधोमुखं स्यात्। एवन्तु तं भद्रनिधिं सुविद्वान् कृत्वासने प्रावरणोप-युक्ते। कुशोत्तरे दर्पणचामराद्ये सपादुकोपानहच्छत्र-युक्तम्। सतुच्चैर्नवक्षौमयुग्मयुक्तं संपूजयेन्मन्त्रवरै-रथैतैः" "आदौ तु पञ्चामृतकेन विष्णुं संस्नाप्य संसा-रहरं समर्च्य। तथेश्वरं पावकमेव हुत्वा आमन्त्र-येद्भद्रनिधिं ततस्तम्। श्रीखण्डकर्पूरसकुङ्कुमेन पद्मा-चरं नाम श्रियः प्रलिख्य। नमस्तथोङ्कारयुतं च पात्रे तद्राजतेऽर्घ्येवमथार्चयेत। त्वया समस्तामर-सिद्धयक्षविद्याधरेन्द्रोरगकिंनरेन्द्रैः। गन्धर्वविद्याधर-दानवेन्द्रैर्युतं कृतं विश्वमिदं नमस्ते। समस्तसंसार-करी त्वमेव विभोः सदानन्दमयी च माया। समस्त-कल्याणनिधिः सदाधिः। हरिप्रिये! भद्रनिधिर्नमस्ते। एवं प्रपूज्य विधानेन ततो विप्रमथार्चयेत्। किरीटा-ङ्गदनिष्काग्र्यकुण्डलाङ्गुलिभूषणैः। अलङ्कृत्य हरिं तद्वत् पीताम्बरधरं ततः। पूजयेदच्युतं ध्यात्वा कन्येषा-नेन भक्तिमान्। भूदेवोऽसीत्यतो नित्यं नित्यानन्दमयो हरे!। हर मे दुष्कृतं कृष्ण! कृपाकर! नमस्तु ते। भूदेव! भगवन्नर्क! भवभङ्गकरेश्वर!। भवभूतिकरो जिष्णो! प्रभविष्णुर्नमोऽस्तु ते। एवं पूज्य द्विजं ध्यात्वा तं द्विजं विष्णुरूपिणम्। ततो भद्रनिधिं दद्यान्मन्त्रेणानेन मानवः। स्वगोत्रोच्चारणेनादौ वपुर्नाम तथात्मनः। यवदर्भतिलैः सार्द्धमुदकं संपरित्यजेत्। पितृसन्तार-णार्थाय नित्यानन्दविवृद्धये। सर्वाघौघविनाशाय विष्णो-

दीनं मया कृतम्। तदनेन सरत्नेन धातुत्रययुतेन च। सक्षौमाम्बरयुक्तेन सादर्शपादुकेन च। आसनेन सच्छत्रेण चामरोपानहेन च। सदानन्दविधानेन प्रीयतां विष्णुरीश्वरः। एवमुच्चार्य्य तन्दद्याद् द्विजाय हरि-रूपिणे। गोप्येन विधिना दद्यादेमसंख्यां न कीर्त्त-येत्। अकीर्त्तिते कोटिगुणायुतं फलं प्रगोपिते कल्प-गुणैर्न संशयः। इतीदमन्यस्य न कीर्त्तयेत् सुधीः निधानमध्ये निहितस्य यद्वत्। एवं कृते स्यान्मनुजः कृतात्मा तपेत्त्वया स्यान्मरणं कदाचित्। प्रयाति विष्णोः पदमव्ययं तत् शिवात्मकानन्दमयं स्वसंस्थम्"।

**भद्रपदा** स्त्री ब॰व॰ भद्रस्य वृषस्येव पदं यासाम्। पूर्वोत्तर-भाद्रपदासु रायमु॰। तत्र जातः अण् उत्तरपदवृद्धिः। भद्रपाद तज्जाते त्रि॰।

**भद्रपर्णी** स्त्री भद्रं पर्णमस्याः अजादि॰ टाप्। १कट्फला-वृक्षे शब्दमाला। २प्रसारिण्याम् अमरः। ३गाम्भार्य्याञ्च जटाध॰। ङीप्। [पीठभेदे भद्रासनशब्दे दृश्यम्।

**भद्रपीठ** पुंन॰ भद्रार्थं पीठः। नृपदेवादीनामभिषेकार्थे

**भद्रबलन** पु॰ भद्रं बलनं बलमस्य। बलरामे शब्दमा॰।

**भद्रब(व)ला** स्त्री भद्राय बलति चलति ब(व)ल–अच्। (गन्धभादाल) १लताभेदे २गन्धिकायां, ३माधवीलतायाञ्च अमरः। बलायां राजनि॰। [न्याभेदे भा॰आ॰६६अ॰

**भद्रभीमा** स्त्री कश्यपपत्न्यां दक्षसुतायां क्रोधायां जाते क-

**भद्रमल्लिका** स्त्री कर्म॰। मल्लिकाभेदे नवमल्लिकायाम् शब्दमाला।

**भद्रमुख** त्रि॰भद्रं सुखं तद्व्यापारोऽस्य कप्। सुवक्तरि "ततो भद्रमुखात्ताहं स्याखे स्थाणुरिवाचलः" मार्कपु॰ ३५अ॰।

**भद्रमुञ्ज** पु॰ कर्म॰। शरभेदे भावप्र॰।

**भद्रमुस्तक** पु॰ कर्म॰। नागरमुस्तके। अमरः।

**भद्रमुस्ता** स्त्री कर्म॰। भद्रमुस्तके "भद्रमुस्ता च गुन्द्रा च तथा नागरमुस्तकः। मुस्तं कटु हिमं ग्राहि तिक्तं दी-पनपाचनम्। कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तु-हृत्। अनूपदेशे यज्जातं मुस्तकं तत् प्रशस्यते। तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम्" भावप्र॰।

**भद्रयव** पु॰ भद्रो यव इव। इन्द्रयवे अमरः।

**भद्ररथ** पु॰ कश्येयुवंश्ये हर्य्यङ्गनृपस्य पुत्रे हरिवं॰ ३१अ॰।

**भद्ररेणु** हृव॰। ऐरावते गजे त्रिका॰।

**भद्ररोहिणी** स्त्री भद्रार्थं रोहति रुह–णिनि ङीप्। कटु-रोहिण्यां (कटकी) सुश्रुतः तस्याः भद्रदायकत्वात् तथात्वम्। "दार्वी त्वक् पिप्पली शुण्ठी लाक्षाशक्रयवै-र्युतम्। संयुक्तं भद्ररोहिण्या पक्वं मेदादिमिश्रितम्"।

**भद्रवट** पु॰७त॰। १आश्रमभेदे भा॰व॰२१०अ॰, २तीर्थभेदे च।

**भद्रवत्** न॰ भद्र+मतुप् मस्य वः। देवदारुवृक्षे राजनि॰।

**भद्रवती** स्त्री भद्राणि पर्णानि सन्त्यस्या मतुप् मस्य वः ङीप्। १काश्मार्य्याम्। माद्रवतीजातायां भरत-कन्यायां स्त्री हरिवं॰ १६१ अ॰।

**भद्रवर्मन्** पु॰भद्रं वृणाति वृ–मनिन्। नवमल्लिकायाम् शब्दच॰

**भद्रवल्लिका** स्त्री नित्यक॰। संज्ञायां कन् ह्रस्वः अत इत्वम् कर्म॰। (अनन्तमूलख्याते) लताभेदे रत्नमा॰।

**भद्रवल्ली** स्त्री नित्यक॰। (अनन्तमूल) गोपवल्ल्याम् राजनि॰।

**भद्रविराज्** "ओजे तपरौ जरौ गुरुश्चेन् समे सगौ भद्रविराड् भवेदनोजे" वृ॰ उक्ते अर्द्धसमे वृत्तभेदे।

**भद्रशर्मन्** पु॰भद्रं शर्म सुखं यस्य। शुभाद्यानन्दयुते। ततो बाह्वा॰अपत्ये इञ् भाद्रशर्मि तदपत्ये पुंस्त्री। [२२७अ॰

**भद्रशाख** पु॰भद्राः शाखाः वक्त्रायाः यस्य। कार्त्तिकेये भा॰व॰

**भद्रश्रय** न॰भद्राय श्रीयते श्री–कर्मणि अच्। चन्दनवृक्षे रत्न॰

**भद्रश्रवस्** पु॰ धर्मस्य पुत्रभेदे भाग॰ ५।१८।१।

**भद्रश्री** पु॰ भद्रा श्रीर्यस्य। चन्दनवृक्षे अमरः।

**भद्रश्रेण्य** पु॰ दिवोदासात् पूर्वं वाराणस्यधीशे नृपभेदे हरिवं॰ २९ अ॰।

**भद्रसरस्** न॰ नित्यक॰। सुपार्श्वाचलस्थे सरोभेदे धान्या॰ चलशब्दे दृश्यम्। [७अ॰।

**भद्रसालवन** न॰ ६त॰। भद्राश्ववर्षस्थे वनभेदे भा॰ भी॰

**भद्रसेन** पु॰ देवक्यां जाते वसुदेवस्य १पुत्रभेदे भाग॰९।२४।२५ २कुन्तिनृपपुत्रभेदे च भाग॰ ९।२२।

**भद्रसोमा** स्त्री भद्रः सोम इव द्रवोऽस्याः। १गङ्गायां शब्दमा॰ २कुरुवर्षस्थे नदीभेदे मार्कपु॰ ५९अ॰। [दृश्यम्।

**भद्रा** स्त्री भद्राश्ववर्षस्थे १नदीभेदे २विष्टिभद्रादौ भद्रशब्दे

**भद्राकरण** न॰भद्र+डाच् कृ–ल्युट् शाब्दा॰स॰। मुण्डने हे म॰

**भद्राङ्ग** पु॰ भद्रमङ्गमस्य। बलरामे हेमच॰।

**भद्रात्मज** पु॰ खड्गे त्रिका॰।

**भद्रारक** पु॰ अष्टादशद्वीपान्तर्गते द्वीपभेदे शब्दमाला।

**भद्रालपत्रिका** स्त्री भद्रायालति पर्य्याप्नोति अल–अच् तादृशं पत्रं यस्याः कप् अत इत्वम्। गन्धाल्याम् (गान्धाल) शब्दमा॰।

**भद्राली** स्त्री भद्रायालति पर्य्याप्नोति अच् गौरा॰ ङीष्। १गन्धाल्याम् (गान्धाल) शब्दमा॰। ६त॰। २मङ्गलश्रेणौ च।

**भद्रावती** स्त्री भद्र—अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्वपद-दीर्घः । कट्फलवृक्षे राजनि० ।

**भद्राश्रय** पु० ६त० । चन्दनवृक्षे ।

**भद्राश्व** न० भद्रा अश्वा यत्र । १जम्बुद्वीपस्य नववर्षान्तर्गते वर्ष-भेदे । २तद्वर्षस्थे जनपदे पु०ब०व० । तद्वर्षविवरणञ्च "माल्य-वतः पूर्वपार्श्वे पूर्वगण्डिका एकत्रिंशद् योजनसहस्राणि आनन्तत्र च भद्राश्वा नाम जनपदाः भद्रसालवनञ्च तत्र व्यवस्थितं, कालाम्रवृक्षाः, पुरुषाः श्वेताः, पद्मवर्णिनः, स्त्रियः कुमुदवर्णाः दशवर्षसहस्राणि च तेषामायुस्तत्र च पञ्च कुलपर्वताः तद्यथा शैलवर्णः मालाख्यकोऽवरज-श्चः त्रिपर्णो नीलश्चेति तद्विनिर्गता नद्यस्तदन्तःस्थितानां देशानां तान्येव नामानि ते च देशाः एताः नदीः पि-बन्ति तद्यथा सीता सुवाहिनी हंसवती कावेरी सुरसा शाखावती इन्द्रनदी अङ्गारवाहिनी हरितोया सोमा-वर्त्ता शतह्रदा वनमाला वसुमती हंसा पर्णा पञ्चगङ्गा धनुष्मती मणिवप्रा सुब्रह्मभागा विलासिनी कृष्णतोया पुण्योदा नागवती शिवा शैवालिनी मणितटा क्षीरोदा वरुणावती विष्णुपदी महानदी हिरण्यस्कन्धवाहा सुरावती वामोदा पताका चेत्येता महानद्यः एताश्च गङ्गासमाः कीर्त्तिताः आजन्मान्तं पापं विनाशयन्ति क्षुद्रनद्यश्च कोटिशताश्च नदीर्यै पिबन्ति ते दशवर्षसह-स्रायुषः रुद्रोमाभक्ता इति" वराहपु० गद्यम् । अधिकं जम्बुद्वीपशब्दे ३०४५ पृ० दृश्यम् ।

**भद्रासन** न० भद्राय लोकक्षेमायास्यतेऽत्र आस-आधारे ल्युट् । नृपासने अमरः । तल्लक्षणादि वृ०सं० ४८अ० उक्तं यथा "आद्यावनडुहश्चर्म जरया संहृतायुषः । प्रशस्तलक्षण-स्यतः प्राचीनग्रीवमास्तरेत् । ततो वृषस्य योधस्य चर्म रोहितमस्ततम् । सिंहस्याथ तृतीयं स्याद्व्याघ्रस्य च ततः परम् । चत्वार्येतानि चर्माणि तस्यां वेद्यामुपा-स्तरेत् । शुभे मुहूर्त्ते संप्राप्ते पुष्ययुक्ते निशाकरे । भद्रासनमेकतमेन कारितं कनकरजतताम्राणाम् । क्षीरतरुनिर्मितं वा विन्यस्तं चर्मणामुपरि । त्रिविध-स्तस्योच्छ्रायो हस्तः पादाधिकोऽर्द्धयुक्तश्च । माण्डलिका नन्तरजित् समस्तराज्यार्थिनां शुभदः । अन्तर्धाय हि-रण्यं तत्रोपविशेन्नरेश्वरः सुमनाः" ।

**भद्रिका** स्त्री भद्रा+स्वार्थे क । १पक्षयोः द्वितीयासप्तमी-द्वादशीषु तिथिषु । २योगिनीदशान्तर्गतायां पञ्चम्यां दशायाम् "मङ्गला पिङ्गला धान्या भ्रामरी भद्रिका तथा" दशाशब्दे दृश्यम् । "भद्रिका भवति रो नरौ" वृ० र० उक्ते नवाक्षरपादके ३छन्दोभेदे "ननरलगुरुभिश्च भद्रिका" वृ०र० उक्ते ४एकादशाक्षरपादके छन्दोभेदे च ।

**भद्रेश्वर** पु० १शिवलिङ्गभेदे । २कल्पग्रामस्थे शिवलिङ्गभेदे च वामनपु० ४६ अ० ।

**भद्रैला** स्त्री स्थूलैलायाम् राजनि० ।

**भद्रोदनी** स्त्री भद्रमुदनित्यनया उद्+अन-बा० घञर्थे क गौरा० ङीष् । बलायां राजनि० । [अमान ।

**भन** अर्चने भ्वा०प०सक०सेट् निघण्टुः । भनति अभा(भ)नीत

**भन्द** अर्चने दीप्तौ च भ्वा० आ० सक० सेट् निघण्टुः । भन्दते अभन्दिष्ट बभदे बभन्दे । कर्मणि भद्यते ।

**भन्दिल** त्रि०भदि—इलच् ।१शुभे २कम्पे ३दूते च संक्षिप्तसा०

**भन्दुक** पु० वक्रेश्वरसमीपस्थे देशभेदे स्कान्दपु० ।

**भपञ्जर** न० भानां पञ्जरमिव । नक्षत्रचक्रे त्रिं०शि० ।

**भपति** पु० ६त० । १नक्षत्रेशे चन्द्रे हेमच० भनाथादयोऽ-प्यत्र । २राशीश्वरे मङ्गलादौ च ।

**भमण्डल** न० ६त० । राशिचक्रे सू०सि० ।

**भम्भ** पु० भमित्यव्यक्तशब्देन भाति भा—क । मक्षिकाभेदे दंशे हारा० । २तत्तुल्यगतिके धूमे हेमच० ।

**भम्भराली** स्त्री भमित्यव्यक्तशब्दस्य भरमालाति स्वल्हाति आ+ला—क गौ० ङीष् । (डाँश) मक्षिकायाम् । स्वार्थे क अत इत्त्वम् । भम्भरालिका तत्रैवार्थे त्रिका० ।

**भम्भासार** पु० मगधदेशनृपभेदे हेमच० ।

**भय** न०बिभेत्यस्मात् भी—अपादाने अच् ।१भयहेतौ । भावेऽच् । २दैन्यात्मके परतः स्वानिष्टसम्भावनाजन्ये वा चित्तवृत्तिभेदे ३नाटकप्रसिद्धे भयस्थायिभावके रसभेदे च । भयञ्च "रौद्रशक्त्या तु जनितं चित्तवैकल्यजं भयम्" सा० द० लक्षितम् । भयानकशब्दे दृश्यम् । ४निर्ऋतिपुत्रभेदे पु० भा० आ० ६६अ० । [क० १५५२ श्लो० ।

**भयकर** त्रि० भयं करोति कृ—अच् ६त० । भयकारके भा०

**भयकृत्** त्रि०भयं करोति कृ—क्विप् ।१भयकारके भयं कृन्तति कृत—छेदने क्विप् । २परमेश्वरे । "भयकृद् भयनाशनः" विष्णुस० ।

**भयङ्कर** पु०भयं करोति कृ—खच् मुम् च । १भयजनके २रस-भेदे ३डुण्डुलविहगे च पुस्त्री० स्त्रियां ङीष् । भा०स० ३५अ०उदा०४विश्वदेवगणभेदे पु० भा० अनु० ९१ अ० । ५कुमारानुचरमातृभेदे स्त्री ङीप् भा० श० ४७ अ० ।

**भयडिण्डिम** पु० भयजनको डिण्डिमः । रणवाद्ये

**भयद्रुत** त्रि० भयेन द्रुतः ३त० । भयेन पलायिते अमरः ।

**भयनाशन** त्रि० भयं नाशयति नाशि–ल्यु । १भयनिवारके २विष्णौ पु० "भयकृत् भयनाशनः" विष्णुस० ।

**भयनाशिनी** स्त्री भयं रोगभयं नाशयति नश–णिच–णिनि । त्रायमाणालतायाम् राजनि० । [त्वनः स्वापके ।

**भयब्राह्मण** पु० भयेन ब्राह्मणः सम्पद्यते । भीत्या विप्रत्वेना·

**भयभ्रष्ट** त्रि० द्रुत० । भयेन पलायिते जटाधरः ।

**भयव्यूह** पु० भये सति व्यूहः । पार्श्वादितो भयभेदेन राज्ञा कर्त्तव्ये व्यूहभेदे भयभेदेन तत्प्रकारः काम० नी० उक्तो यथा "यायाद्व्यूहेन महता मकरेण पुरोभये । श्येनेनोभयपक्षेण सूच्या वाधीरचक्रया । पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसञ्ज्ञितम् । सर्वतः सर्वतोभद्रं भयव्यूहं प्रकल्पयेत्" ।

**भयानक** पु० बिभेत्यस्मात् भी–आनक । १व्याघ्रे २राहौ ३रसभेदे च मेदि० । ४भयङ्करे त्रि० । ५भीतेः अपादाने अमरः । तद्रसलक्षणादि सा०द० उक्तं यथा "भयानको भयस्थायिभावः कालाधिदैवतः । स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः । यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् । चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः । अनुभावोऽत्र वैवर्ण्यं गद्गदस्वरभाषणम् । प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः । जुगुप्सावेगसंमोहसंत्रासग्लानिदीनताः । शङ्कापस्मारसंभ्रान्तिमृत्याद्या व्यभिचारिणः" ।

**भयापह** त्रि० भयमपहन्ति अप+हन–ड । १भयनाशके २नृपे पु० त्रिका० ३विष्णौ पु० "जितमन्युर्भयापहः" विष्णुस० ।

**भयावह** त्रि० भयमावहति आ+वह–अच् द्रुत० । भयकारके हेमच० ।

**भय्य** न० भी–भावे यत् वेदे नि० । भये पञ्चभी० १०।५।६ । लोके तु भेयमित्येव । [त्रि० अमरः ।

**भर** पु० भृ–अप् । १अतिशये । कर्त्तरि अच् । २भरणकर्त्तरि

**भरग** त्रि० भरमतिशयं गच्छति गम–ड । १अतिशयगन्तरि भरगेति वर्णत्रयद्योत्ये २भर्गशब्दार्थे परब्रह्मणि यथोक्तं आह्नि०त० योगियाज्ञवल्क्येन "भेति भासयते यस्मात् रेति रञ्जयति प्रजाः । गेति च गच्छतेऽजस्रं भरगात् भर्ग उच्यते" । तत्र भासि–ड भः रञ्जि ड–रः । गम–ड गः तेषां समाहारः भरगम् । तद्वर्णत्रययोगात् भर्ग इत्युच्यते इष्टो० ।

**भरट** पु० भृ–अटन् । १कुम्भकारे तेन हरति भस्त्रा०ष्ठन् भरटिक तेन हर्त्तरि त्रि० स्त्रियां षित्त्वात् ङीष् भरटिकी ।

**भरण** न० भृ–भावकरणादौ ल्युट् । १वेतने २पोषणे ३धारणे च । अश्विन्यवधिके द्वितीये ४नक्षत्रे शब्दर० ५घोषकलतायाञ्च स्त्री ङीप् । नक्षत्रभेदे पु० मेदि० । तस्यायोगतारादिकम् अश्लेषाशब्दे उक्तम् सा च राशिचक्रस्य४०अंशोत्तरं १३।२० कलाविकलात्मिका । उग्रगणान्तर्गता अधोमुखान्तर्गता च । भरणेन हरति भस्त्रादि०ष्ठन् भरणिक वेतनेन हारिणि त्रि० स्त्रियां ङीष् ।

**भरणीभू** पु० भरण्यां भवति भू–क्विप् । राहुग्रहे हेमच० भगदैवतशब्दे दृश्यम् ।

**भरण्ड** पु० भृ–अण्डन् । १स्वामिनि २नृपे च उणादिको० ।

**भरण्य** कण्ड्वा० नामधातुः भुरण्येत्यत्र पाठान्तरम् धारणे पोषणे पर० सक० सेट् भरण्यति भुरण्यति वा ।

**भरण्यभुज्** त्रि० भरण्यं वेतनं भुङ्क्ते भुज–क्विप् । वैतनिके कर्मकरे अमरः । [इवे (रामदूती) शब्दच० ।

**भरण्याह्वा** स्त्री भरण्या आह्वा आह्वा यस्याः । पर्वपुष्पी-

**भ(भु)रण्यु** पु० कण्ड्वा० भ(भु)रण्य उन् । १शरण्ये २मित्रे च शब्दमाला । ३अग्नौ ४चन्द्रे ५स्वामिनि च सं-क्षिप्तसा० । भुरण्युरिति पाठान्तरम् ।

**भरत** पु० भरं तनोति तन–ड । (जड़भरत) इति ख्याते १मुनिभेदे जड़भरतकथा च २०१५पृ० दृश्या नाट्यशास्त्रस्य अलङ्कारशास्त्रस्य च २कर्त्तरि मुनिभेदे ३शबरे ४तन्तुवाये ५नटे ६कैकयीसुते रामानुजे च । भरतेन प्रोक्तम् भारतं नाट्यशास्त्रमधीयते अण् तस्य लुक् । ७तच्छास्त्राध्येतृषु ब०व० । ८दुष्मन्तेन शकुन्तलायामुत्पादिते पुत्रभेदे पु० तस्यापत्यानि इञ् तस्य बहुषु लुक् । ९भरतवंश्ये नृपे पु०ब०व० । दौष्मन्तिभरतकथा भाग०९।१०अ० दृश्या १०ऋषभदेवपुत्रभेदे भाग०५।४अ० । ११वह्निपुत्रभेदे "पावनो लौकिको ह्यग्निः प्रथमो ब्रह्मणः सुतः । ब्रह्मौदनाग्निस्तत्पुत्रो भरतो नाम विश्रुतः" भार०व० ४८ अ० । रामानुजभरतस्य जन्म यथा "भरतो नाम कैकय्यां जज्ञे सत्यपराक्रमः । साक्षाद्विष्णोश्चतुर्भागः सर्वैः समुदितो गुणैः" । १२भौत्यमनुपुत्रभेदे मार्क०पु०१००अ० । १३आयुधजीविसंघभेदे पु० ततः यौधेया० स्वार्थे अण् । भारत तदर्थे ब०व० । १४क्षत्रियेषु ब० व० निघण्टुः ।

**भरतखण्ड** कुमारिकाखण्डे "कुमारिकेति विख्याता यस्या नाम्ना प्रकथ्यते । इदं कुमारिकाखण्डं चतुर्वर्गफलप्रदम् । यथा कृतावनीयस्य कानापामादिकल्पना ।

इदं भरतखण्डस्य मया सम्यक् प्रकाशितम्” स्कन्दपु० ।

**भरतद्वादशाह** पु० भरतकृते द्वादशाहसाध्ये यज्ञभेदे “सर्वाग्निष्टोमो भरतद्वादशाहः” कात्या०श्रौ०२४।७।१२। “तत्र यज्ञे सर्वाग्निष्टोमा भवन्ति प्रायणीयोदनीयवर्जम्। तेन दशरात्रस्य स्थाने दशाप्यग्निष्टोमाः भवन्ति आद्यन्तयोः प्रायणीयोदनीययोरतिरात्रावेव” संग्रहव्याख्या आश्व० श्रौ० १०।५।८ सूत्रादौ तु अन्यथोक्तं यथा “अथ भरतद्वादशाहः” सू० “अथशब्दोऽहीनकैवल्यबुद्धिविच्छेदार्थः। अत्राहीनसाधारणाश्चत्वारो द्वादशाहा उक्ताः। तत्र एकोऽहीन उक्तः। उत्तमश्च साधारण एवअतस्तद्विच्छेदार्थमथशब्दः प्रयुक्तः” नारा०। “इममेवैकाहं पृथक् संस्थाभिरुपेयुः” सू० “भरतद्वादशाहस्याहःक्लृप्तिः। इममेव प्रकृतैकाहं पृथग्भूताभिः संस्थाभिर्युक्तं द्वादशकृत्वः कुर्युः। विकृतिषु प्रकृतेः संनिहितत्वादिदमुच्यते। उत्तरत्र संस्थाविधानादेव संस्थासम्बन्धे सिद्धे पृथक्संस्थाभिरितिवचनं वचनादेव स्थाननियमो नातिदेशादिति ज्ञापनार्थम्” नारा०। “अतिरात्रमध्येऽग्निष्टोमसप्तकम् उकथ्यानयाग्निष्टोमप्रयातिरात्रम्” सू० “द्वादशाहसामान्येन प्राप्तानां संस्थानां विधीयमानो भरतद्वादशाहे अयमपवादः” नारा०।

**भरतपुत्रक** पु० भरतस्य नाट्यशास्त्रकर्त्तुः पुत्र इव कायति कै–क। नटे हेम०। [२ऋषभदेवपत्न्यां च।

**भरतप्रसू** स्त्री ६त०। १कैकय्यां शब्दर०। २शकुन्तलायाम्

**भरतवर्ष** न० ६त०। भारते वर्षे।

**भरताग्रज** पु० ६त०। दाशरथौ श्रीरामे।

**भरद्वाज** पु० ज्येष्ठस्य भ्रातुरुतथ्यस्य पत्न्यां ममतायां वृहस्पतिना जनिते मुनिभेदे। तदुत्पत्तिकथा विष्णु पु० ४अं० १९अ०। भाग०९।२०अ०। द्वाजशब्दे २७६१पृ०तन्निरुक्तिरुक्ता। भा०अनु०९३अ०अन्यथा निर्वचनमुक्तं यथा “भरेऽसुतान् भरेऽशिष्यान् भरे देवान् भरे द्विजान्। भरे भार्य्यां भरद्वाजं भरद्वाजोऽस्मि शोभने!”। “प्रजा वै वाजस्ता एष बिभर्त्ति यद्बिभर्त्ति तस्माद्भरद्वाज इति श्रुत्यनुसारेण स्वनामाह “भरे इति अशिष्यान् शाचितमयोग्यानपि राक्षसान् शनूंश्च वशीकृत्य करुणया पालयामि तथा असुतान् अपुत्रानुदासीनानपि दीनानदीनान् पालयामि भार्य्यां भार्य्येति पुत्रध्यादेरुपलक्षणम् ईदृविधोऽन्योऽपि वाजं वेगं शत्रूणां साहसमन्नं वा अरेवस्य पूर्णिवीवत् सर्वं सहोऽन्नदश्च भवतीति तस्माद्द्वन्द्वमपि तथास्तीत्यर्थः। भरे द्वाजमिति च्छेदे तु द्वाभ्यां जातं सङ्करजमित्यर्थः ननु “माता भस्त्रा पितुः पुत्रो येन जातः स एव सः” इति स्मृतेश्चर्मकोशतुल्या मातेत्यतः सर्वोऽप्येकज एवेति नास्ति कश्चिद् द्वाजः न हि द्वाभ्यां रेतःसेकाभ्यामेको जायत इति सम्भवति सत्यम् आण्डवबीयादीनामपि संस्कारवतां सर्वेषां द्विविधं जन्म योनितः संस्कारतश्च तत्र सङ्करोऽन्यस्माज्जातोऽन्येन स्वपुत्र इति बुद्ध्या संस्कृत इति स एव द्वाजः द्विर्जायत इति द्विजोऽन्यः द्वाभ्यां स्त्रीपुरुषाभ्यां जायत इत्यर्थः द्वाजादयो निपात्यन्ते तत्र एव द्वाजा अपि सन्तीति “वशी वशं नयसि एकजात! त्वमिति” मन्त्रे मन्योः संकल्पस्य एकजेति विशेषणं द्वाजे तु वीजसंस्कार सङ्कराद्वश्यं संकल्पयोर्वाङ्मनसयोर्वा पौर्वापर्य्यविरोधो भवतीति विश्वासघातकादयो द्वाजा इति ज्ञेयं तदयं संग्रहः “कौशिके कौशतपसी राधेये शौर्य्यभीरुते। स्वर्वाक्चित्तवैमत्ये वीजसंस्कारसङ्करादिति” नीलक०। २मनोरूपे सचेतने ऋषिभेदे तन्निरुक्तिर्यथा “भरद्वाज ऋषिरिति। मनो वै भरद्वाज ऋषिरन्नं वाजो यो वै मनो बिभर्त्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिः” शत० ब्रा० ८।१।१।९। अस्यार्थः “भरद्वाज ऋषिः विभर्त्तीति भरन् वाजमन्नं यः स भरद्वाजोऽन्नवती मनः मनसि सत्ये अन्नादनेच्छोत्पत्तेः ऋषिः सचेतनो मनोरूपः” यजु० १३।५५ वेददी०। (भारुइ) ३खगभेदे पुंस्त्री० अमरः। ४देशभेदे भा० भी० ९अ०। भरद्वाज ऋषिश्च गोत्रप्रवर्त्तकः तच्छब्दे २७८६ पृ० दृश्यम्।

**भरम** त्रि० भृ–बा० अमच्। भरणकर्त्तरि। ततः शुभ्रादि० अपत्ये ढक्। भारमेय तदपत्ये पुंस्त्री०।

**भरस्** पु० भृ–असुन्। भरणे। ऋ०५।१५।४।

**भरित** त्रि० भरो जातोऽस्य तारका० इतच्। १जातभरणे हरित+पृषो०हस्य भः। २हरितवर्णे ३तद्वति त्रि० स्त्रियां ङीप् तस्य नः। भरिणी तद्वर्णयुक्तायां स्त्रियाम्।

**भरित्र** न० हि०व० भृ–इत्र। बाह्वोः निघण्टुः।

**भरिमन्** पु० भृ–कर्मणि इमनिच्। १कुटुम्बे उज्ज्वल०। भावे इमनिच्। २भरणे उणादिको० कर्त्तरि इमनिच् ३विष्णौ सि० कौ०।

**भरु** पु०भृ–उन्। १स्वामिनि उज्ज्वल०। २स्वर्णे ३शिवे मेदि०।

**भरुक** पु० दक्षिणदेशभेदे कू०म० १४अ०।

**भरुज** पुंस्त्री० भेतिशब्देन रुजति रुज–क । शृगाले ततः जातित्वेऽपि स्त्रियां बह्वा० वा ङीष् । भरुजा भरुजी । ततः इवार्थे अङ्गुल्या० ठक् । भारुजिक तदर्थे ।

**भरुटक** न० भृ–उट संज्ञायां कन् । भृष्टामिषे हेमच० ।

**भरे** अव्य० भृ–बा० ए । संग्रामे निघण्टुः ।

**भर्ग** पु० भ्रस्ज–घञ् भर्जादेशे कुत्वम् । १शिवे २ज्योतिःपदार्थे ३आदित्यान्तर्गते ऐश्वरे तेजसि, "आदित्यान्तर्गतं वर्चो भर्गाख्यं तन्मुमुक्षुभिः । जन्ममृत्युविनाशाय दुःखस्य त्रितयस्य च । ध्यानेन पुरुषैर्यच्च द्रष्टव्यं सूर्यमण्डले" योगियाज्ञ० । तस्य तेजस ऐश्वरत्वञ्च "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति गीतायामुक्तम् । भावे घञ् । ४भर्जने च ।५धृष्टकेतुवंश्ये नृपभेदे हरिवं० २९अ० । ६देशभेदे । तत्र भवः तस्य राजा वा अण् । भार्ग । तद्देशरूपे तत्र भवे च स्त्रियां न लुक् भार्गी ।

**भर्गस्** पु० भ्रज–असुन् न्यङ्क्वा० । तेजसि ऋ० १।१४१।१ ।

**भर्गादि** पु० तद्राजार्थे प्रत्ययस्य स्त्रियां लुगनिमित्ते शब्दगणे स च गणः "भर्ग करूष केकय कश्मीर साल्व सुस्थाल उरस् कौरव्य" ।

**भर्गायण** पु० प्रवरर्षिभेदे प्रवराध्यायः ।

**भर्ग्य** पु० भ्रस्ज–ण्यत् भर्जादेशे कुत्वम् । शिवे रायमु० ।

**भर्जन** न० भ्रस्ज–भावे ल्युट् भर्जादेशः (भाजा) तण्डुलादेः पाकभेदे शब्दमा० ।

**भर्णस्** त्रि० भृ–असुन् नुगागमः । भरणकारके ऋ० ८।६०।२

**भर्तृ** पु० भृ–तृच् ।१स्वामिनि २अधिपतौ अमरः । ३राजनि ४पोषके ५धातरि च त्रि० मेदि० याजका० षष्ठी समासः । ६विष्णौ पु० "भवनो भावनो भर्त्ता" विष्णुस० तस्य सत्त्वगुणेन पालनात् तथात्वम् ।

**भर्तृघ्नी** स्त्री भर्त्तारं हन्ति हन–टक् ङीप् । पतिघातिन्यां पाणिरेखायां "पाषण्डग्रानाश्रितास्तेनाभर्तृघ्न्यः कामगादिकाः" याज्ञ० । आर्षत्वात् मनुष्यकर्तृकत्वेऽपीह टक् ।

**भर्तृदारक** पु० भर्त्तुरधिपस्य राज्ञः दारकः पुत्रः । नाट्योक्तौ १राजकुमारे । २तत्कन्यायां स्त्री । भर्तृदारिका० अमरः ।

**भर्तृस्थान** न० तीर्थभेदे भा०व० ८४ अ० ।

**भर्तृहरि** पु० भर्त्ता हरिरिव । वाक्यपदीयादि ग्रन्थकर्त्तरि विक्रमादित्यस्य ज्येष्ठे भ्रातरि राजभेदे । [भर्त्सवत् त ।

**भर्त्स** अधिक्षेपे चुरा०उभ०सक०सेट् । भर्त्सयति ते अब-

**भर्त्सन** न० भर्त्स–ल्युट् । अपकारवचने अधिक्षेपे तिरस्कारायापकारार्थकवाक्योक्तौ । युच् । भर्त्सनाप्यत्र स्त्री

**भर्त्स्यपत्रिका** स्त्री भर्त्स्यं भर्त्सनीयं पत्रमस्याः कप् कापि अत इत्वम् । महानीलीवृक्षे राजनि० ।

**भर्भ** हिंसायां भ्वा०पर०सक०सेट् । भर्भति अभर्भीत् ।

**भर्म(न्)** न० भृ–मन् मनिन् वा । १स्वर्णे अमरः । २भृतौ ३नाभौ ४धुस्तूरे च हेमच० । नान्तः अदन्तश्च द्विरूपकोषः

**भर्मण्या** स्त्री भर्मणि साधु यत् । भृतौ हेमच० ।

**भर्माश्व** पु० भरतवंश्ये नृपभेदे भाग० ९।२१।२४ ।

**भर्व** हिंसायां भ्वा०पर०सक०सेट् । भर्वति अभर्वीत् । भोजने निघण्टुः । [विष्ट बभले ।

**भल** वधे दाने निरूपणे च भ्वा०आ०सक०सेट् । भलते अभ-

**भल** निरूपणे चु०आ०सक०सेट् । भालयते अबीभलत ।

**भलता** स्त्री भाति–भा–क कर्म० । राजवल्लालतायाम् शब्दर०

**भलन्दन** पु० १दिष्टवंश्ये नृपभेदे भाग०९।२।१६ । २कान्यकुब्जदेशीये नृपभेदे ब्रह्मवै० प्रकृ०ख० १७ अ० ।

**भलानस्** त्रि० भद्रमुखे ऋ० ७।१८।७ । [लीत् ।

**भल्ल** दाने वधे निरूपणे च भ्वा०प०सक०सेट् । भल्लति अभ-

**भल्ल** पु० भल्ल–अच् । १भल्लूके । २अस्त्रभेदे पुंन० । स्वार्थे क भल्लूके पुंस्त्री०वा गौरा०ङीष् पक्षे टाप् । भल्लकाप्यत्र । ततः चतुरर्थ्यां निर्वृत्ताद्यर्थे अण् । भाल्ल भल्लकृते त्रि० चतुरर्थ्यां सख्या० ठञ् । भाल्लिक तस्यादूरदेशादौ त्रि० । द०स०१४ उक्ते रैवान्यां स्थिते ३देशभेदे पु० ।४तद्देशभवे च ब०व० । स्वार्थे क । भल्लक तत्रार्थे ततः स्वार्थे छ । भल्लकीय तदर्थे तस्यापत्यं छ । भल्लकीय तदपत्यादौ त्रि० ।

**भल्लपाल** पु० भल्लं पालयति पालि–अण् उप०स० । भल्लपालके ततः सख्या०चतुरर्थ्याम् ठञ् । भाल्लपालिक तेन निर्वृत्तादौ । [तण्डुला) क्षुपभेदे शब्दच० ।

**भल्लपुच्छी** स्त्री भल्लस्य पुच्छमिव पुष्पमस्याः ङीप् । (गोरक्ष-

**भल्लवि** पु० ऋषिभेदे तस्यापत्यमिञ् । भाल्लवि तदपत्ये तस्यापत्यं ढकञ् । भाल्लवेय तदपत्ये पुंस्त्री० । इन्द्रद्युम्ने ऋषिभेदे पु० का०छ० । [का०छ० ।

**भल्लाक्ष** पु०भल्लस्येवाक्षि यस्य षच्समा० । मन्ददृष्टौ हंसभेदे

**भल्लाट** पु० १अग्निध्वजराजपुत्रे कल्किपु० २२अ० । २भद्रदत्तवंश्ये ३नृपभेदे हरिवं०२०अ० ।

**भल्लात** पु०न० भल्लं भल्लास्त्रमिवातति स्पर्शेनम् अत–अच् । (भेला) वृक्षभेदे स्वार्थे क । तत्रैव पुंस्त्री०गौ०ङीष् । भल्लातक्यप्यत्र रत्नमा० । भल्लातकं त्रिषु मोक्षसक्ष्मोऽरुष्कारो-

ऽग्निकः। तथैवाग्नीमुखी भल्ली वीरवृक्षश्च शोफहृत्। भल्लातकफलं पक्वं स्वादुपाकरसं लघु। कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेदनम्। मेध्यं वह्निकरं हन्ति कफवातव्रणोदरम्। कुष्ठार्शोग्रहणीगुल्मशोफनाहज्वरक्रिमीन्। तन्मज्जा मधुरो वृष्यो बृंहणो वातपित्तहा। वृन्तमायुष्करं स्वादु पित्तघ्नं केश्यमग्निकृत्। भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः। वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान्। हन्ति गुल्मज्वरं श्वित्रवह्निमान्द्यक्रिमिव्रणान्" भावप्र०। गुड़भल्लातकशब्दे भल्लातकीगुड़पाकविधिर्दृश्यः।

**भल्लातकतैल** सुश्रुतोक्ते भल्लातकफलच्यवनजाते तैलभेदे "दुरूढत्वात् तु शुक्लानां कृष्णकर्म हितं भवेत्। भल्लातकान्वासयेत् तु क्षीरे प्राङ्मूत्रभावितान्। ततो द्विधा छेदयित्वा लौहे कुम्भे निधापयेत्। कुम्भेऽन्यस्मिन्निखाते तु तं कुम्भमथ योजयेत्। मुखं मुखेन सन्धाय गोमयैर्दाहयेत् ततः। यः स्नेहस्रवते तस्मात् तमादद्यात् शनैर्भिषक्। ग्राम्यानूपशफान्दग्ध्वान् त्वङ्मांसचूर्णानि कारयेत्। तैलेनानेन संसृष्टं शुक्लमालेपयेत् व्रणम्। भल्लातकविधानेन सारस्नेहांस्तु कारयेत्। ये च केचित्फलस्नेहा विधानं तेषु कीर्त्तितम्। दुरूढत्वात्तु कृष्णानां पाण्डुकर्म हितं भवेत्। सप्तरात्रं स्थितं क्षीरे छागले रोहिणीफलम्। तेनैव पिष्टं सुश्लक्ष्णं सवर्णकरणं हितम्"। [औषधभेदे

**भल्लातकलौह** न० चक्रदत्तोक्ते भल्लातकादिपक्वे लौहरूपे "चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता। हस्तिपिप्पल्यपामार्गदण्डोत्पलकुठेरकाः। एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत्। भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत्। तेन पादावशेषेण लौहपात्रे पचेद्भिषक्। तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुडवद्वयम्। त्र्यूषणं त्रिफलावह्निसैन्धवं विड़सौद्भिदम्। सौवर्चलविडङ्गानि पलिकांशानि कल्पयेत्। कुडवं वृद्धदारस्य तालमूल्यास्तथैव च। शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिःक्षिपेत्। सिद्धे शीते प्रदातव्यं मधुनः कुडवद्वयम्। अर्शांसि प्रातर्भोजनकाले च ततः खादेद् यथाबलम्। अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम्। क्रिमिगुल्माश्मरीमेहान् शूलञ्चाशु व्यपोहति। करोति शुक्रोपचयं वलीपलितनाशनम्। रसायनमिदं श्रेष्ठं सर्वरोगहरं परम्"।

**भल्लातकविधान** सुश्रुतोक्ते सहस्रतत्फलसेवनप्रकारभेदे "अत ऊर्द्ध्वं भल्लातकविधानमुपदेक्ष्यामः। भल्लातकानि परिपक्वान्यनुपहतान्याहृत्यैकमादाय द्विधा त्रिधा चतुर्द्धा वा छेदयित्वा कषायकल्पेन विपाच्य कषायस्य शुक्तिमनुष्णां घृताभ्यक्ततालुजिह्वौष्ठः प्रातः प्रातरुपसेवेत ततोऽपराह्णे क्षीरं सर्पिरोदन इत्याहार एवमेकैकं वर्द्धयेत् तावद्यावत्पञ्चेति ततः पञ्च पञ्चाभिवर्द्धयेद्यावत् सप्ततिरिति प्राप्य च सप्ततिमपकर्षयेद्भूयः पञ्च पञ्च यावत्पञ्चेति पञ्चभ्यश्चैकैकं यावदेकमिति। एवं भल्लातकसहस्रमुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायुर्भवति। द्वितीयोक्तेन विधानेन भल्लातकनिस्रुतिं स्नेहमादाय प्रातः प्रातः शुक्तिमात्रमुपयुञ्जीत जीर्णे पूर्ववदाहारः फलप्रकर्षश्च। भल्लातकमज्जभ्यो वा स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तो निवातमागारं प्रविश्य यथाबलं प्रसृतिं प्रकुञ्चं चोपयुञ्जीत। तस्मिन् जीर्णे क्षीरं सर्पिरोदन इत्याहारः"।

**भल्ली** स्त्री भल्ल हिंसे अच् गौरा० ङीष्। भल्लातके शब्दरत्ना० तत्फलस्य स्पर्शिनां व्रणकारितया हिंसकत्वात्तस्यास्तथात्वम्। स्वार्थे क भल्लिका तत्रार्थे शब्दच०।

**भल्लु(ल्लू)क** पु०स्त्री भल्ल–उ(ऊ) क। (भालुक) १जन्तुभेदे अमरः स्त्रियां ङीष्। २श्योनाकभेदे राजनि०। स च वीरभल्लादिगणे सुश्रुते उक्तः। द्रव्यगणशब्दे दृश्यम्। ३कोषस्थे जलजन्तुभेदे "शङ्खशङ्खनखशुक्तिशम्बूकभल्लूकप्रभृतयः कोषस्थाः" सुश्रुतः।

**भव** पु० भवत्यस्मात् भू–अपादाने अप्। १महादेवे तस्य तन्नामनिरुक्तिः शत० ब्रा० ६।१।३।१५। "तमब्रवीद्भवोऽसीति। तद्यदस्य तन्नामाकरोत् पर्जन्यस्तद्रूपमभवत् पर्जन्यो वै भवः पर्जन्याद्धीदं सर्वं भवति सोऽब्रवीज्ज्यायान् वाऽतोऽस्मि धेह्येव मे नामेति" जलस्य पर्जन्यहेतुकत्वात् तस्य जलमूर्त्तित्वम्। अतएवाष्टमूर्त्तिमध्ये जलरूपेण भवनाम्ना तस्यार्चा। भावे अप्। २जन्मनि ३उत्पत्तौ ४प्राप्तौ ५संसारे मेदि०। कर्त्तरि अच् (चालता) ६फले न० राजनि०।

**भवक** त्रि० भू–वुन्। १उत्पन्ने २आशीर्वादके संक्षिप्तसा०।

**भवकेतु** पु० केतुभेदे वृ० स० ११अ० केतुशब्दे दृश्यम्।

**भवघस्मर** पु० ६त०। दावानले शब्दमा०।

**भवत्** त्रि० भा–डवतु। १युष्मदर्थे, सर्वनामता चास्य। भवत्याः पुत्रः भवत्पुत्रः। भू–शतृ। २वर्त्तमानकालार्थे

३भवनकर्त्तरि च। भवन् स्त्रियामुभयत्र ङीप् शवन्तस्य नुम्। ङीवन्तः ४विशालनाम्ये शब्दरत्ना०।

**भवदा** स्त्री स्कन्दानुचरमातृभेदे भा० श० ४७ अ०।

**भवदादि** पञ्चमीप्रभृतितरविभक्त्यन्तादपि "इतराभ्योऽपि दृश्यन्ते" पा०तसिलादिप्रत्ययनिमित्ते शब्दगणे तत्र "दृशि-ग्रहणात् भवदादियोग एव" वार्त्ति०। स च गणः "भवान् दीर्घायुः देवानांप्रियः आयुष्मान्"। तेन स भवान् ततो भवान् तत्रभवान् तत्रभवन्तम् इत्यादि एवम् सदीर्घायुः ततो दीर्घायुरित्यादि।

**भवदारु** पुंन० भवप्रियं दारु। देवदारुवृक्षे राजनि०।

**भवदीय** त्रि० भवतोऽयम् छस् सित्त्वात् पदत्वे तस्य दः। त्वत्सम्बन्धिनि।

[१जन्मनि ४सत्तायाञ्च मेदि०।

**भवन** न०भू-आधारे ल्युट्।१गृहे अमरः भावे ल्युट्। २भावे

**भवनपति** पु० ६त०। १गृहस्वामिनि २राशिधीशे च भवन-नाथादयोऽप्यत्र।

**भवन्त** पु० भू-झच्। काले उज्ज्वल० संक्षिप्तसा०।

**भवन्ति** पु०भू-झिच् अस्य स्त्रीत्वमपि। वर्त्तमानकाले अन्मादौ स्त्रीत्वे ङीप्। "भवन्तर्भवन्तीपरः प्रयोक्तव्यः"महाभाष्यम्।

**भवभूत** न० भवरूपे अविततस्वरूपे परमेश्वरे "विश्वरूपं भव-भूतमीड्यम्" श्वेता०उ०।

**भवभूति** पु० ६त०। १महादेवविभूतौ। महावीरचरितो-त्तररामचरितमालतीमाधवादिनाटककर्त्तरि २विद्वद्भेदे।

**भवरुत्** पु० भवे जन्मान्ते रोदित्यनेन रुद-करणे क्विप्। प्रेतपटहे त्रिका०।

**भवाचल** पु० ६त०। मन्दरस्य पूर्ववर्त्तिनि शैलभेदे कैलासे। "शीतार्त्तश्चक्रमुञ्जश्च कुलीरोऽथ सुकङ्कवान्। मणिशैलो-ऽथ वृषवान् महानीलो भवाचलः। सबिन्दुर्मन्दरो वेणुस्तामसो निषधस्तथा। देवशैलश्च पूर्वेण मन्दरस्य महाचलाः" मार्कण्डे०५५अ०।

[स्त्री शब्दमा०

**भवात्मज** पु० ६त०। १कार्त्तिकेये २गणेशे च ३मनसादेव्यां

**भवादृक्ष(श)श्** त्रि० भवत इवेव दर्शनमस्य भवत्+दृश-क्विप् टक् क्स क्विप् वा सर्वनामत्वात् आत्। भवत्तुल्ये जने। टकि क्विपि च ङीप् भवादृशी।

**भवानी** स्त्री भवस्य पत्नी भव+ङीष् आनुक् च। शिव-भार्य्यायाम् दुर्गायाम् अमरः।

[गुरुत्वात् तथात्वम्।

**भवानीगुरु** पु० ६त०। हिमाचले तस्य तदुत्पादकत्वेन तद्-

**भवानीपति** पु०६त०।महादेवे तत्पदस्य काव्ये प्रयोगे भवा-न्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धार्थद्योतकत्वं काव्यदोषः।

**भवान्तकृत्** पु० ६त०। १वेधसि तस्य स्वल्पकाले सर्वभूतानां जन्मविनाशकत्वात् तथात्वम्। "यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते" मनुः। २संसारनाशके ज्ञाने च।

**भवाभीष्ट** पु० भवस्य महादेवस्याभीष्टः। १गुग्गुलौ राजनि० ७त०। २भवेऽभीप्सिते त्रि०।

**भवायनी** स्त्री भवे महादेवशिरसि अयनं स्थानमस्याः गौरा०ङीष्।१गङ्गायाम् शब्दर०२शिवतत्परे शैवे त्रि०।

**भविक** न० भवो भूतिस्तत्पाद्यत्वेनास्त्यस्य ठन्। १कुशले कुश-लस्य भूतिहेतुत्वात्तथात्वम्। अर्श० अच् २तद्वति त्रि० अमरः।

[पत्तिके जटा०।

**भवित** त्रि० भवो जातोऽस्य तार० इतच्। भूते अतीते।

**भवितव्य** न० भू-भविष्यति कर्त्तरि च नि० तव्यत्। अवश्य भव्ये "भवितव्यं भवत्येव यद्विधेर्मनसि स्थितम्"।

**भवितव्यता** स्त्री भवितव्यस्य भावः तल्। १अवश्यम्भावे। २भाग्ये च जटाधरः।

[त्रिका०

**भविन** त्रि० भू-चिन्तायाम् वा० इन। काव्यस्य कर्त्तरि

**भविल** पु०भू-भविष्यति इलच्। १भव्ये भविष्यति उज्ज्वल० २जारे पु० त्रिका०।

**भविष्णु** त्रि० भू-इष्णुच्। भवनशीले अमरः।

**भविष्य(त्)** पु० भू-"लृटः सदेति" शतृ-स्यट् च पृषो० वा तलोपः। भाविनि १काले २तत्कालवर्त्तिनि पदार्थे त्रि० स्त्रियां ङीप् नुम् च "अव्याक्षेपो भविष्यन्त्याः" रघुः। तलोपपक्षे क्लीवता। उत्तर-पदस्थः त्रि०। "यज्ञविघ्नो विनश्यति" पञ्चत० ३भवि-ष्यमधिकृत्य कृते पुराणभेदे न०। तच्च महापुराणान्त-र्गतं पुराणं तत्प्रतिपाद्यविषयादिकं नारदीयपु० ४पा० १००अ० उक्तं यथा

"अथ ते संप्रवक्ष्यामि पुराणं सर्वसिद्धिदम्। भविष्यं भवतः सर्वलोकाभीष्टप्रदायकम्। तत्राहं सर्वदेवाना-मादिकर्त्ता समुद्यतः। सृष्ट्यर्थं तत्र सञ्जातो मनुः स्वायम्भुवः पुरा। स मां प्रणम्य पप्रच्छ धर्मं सर्वार्थ-साधकम्। अहं तस्मै तदा प्रीतः प्रावोचं धर्मसंहि-ताम्। पुराणानां यदा व्यासो व्यासञ्चक्रे महामतिः। तदा तां संहितां सर्वां पञ्चधा व्यभजन्मुनिः। अघो-रकल्पवृत्तान्तनानाश्चर्यकथाचिताम्"। तत्र प्रथम-पर्वणि। "तत्रादिमं स्मृतं पर्व ब्राह्मं यत्राप्युप-क्रमः। सूतशौनकसंवादे पुराणप्रश्नसंक्रमः। आदित्य-चरितः प्रायः सर्वाख्यानसमाचितः। सृष्ट्यादिलक्षणो-

श्लोकाः संख्यातास्तत्त्वदर्शिना" (१४ आश्वमेधिकपर्व्व)।

"ततस्त्वाश्रमवासाख्यं पर्व पञ्चदशं स्मृतम्। यत्र राज्यं समुत्सृज्य गान्धार्य्या सहितो नृपः। धृतराष्ट्राश्रमपदं विदुरश्च जगाम ह। यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा। पुत्त्रराज्यं परित्यज्य गुरुशुश्रूषणे रता। यत्र राजा हतान् पुत्त्रान् पौत्त्रानन्यांश्च पार्थिवान्। लोकान्तरगतान् वीरानपश्यत् पुनरागतान्। ऋषेः प्रसादात् कृष्णस्य दृष्ट्वाश्चर्य्यमनुत्तमम्। त्यक्त्वा शोकं सदारश्च सिद्धिं परमिकां गतः। यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः। सञ्जयश्च महामात्यो विद्वान् गावल्गणिर्वशी। ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः। नारदाच्चैव शुश्राव वृष्णीनां कदनं महत्। एतदाश्रमवासाख्यं पर्वोक्तं सुमहाद्भुतम्। द्विचत्वारिंशदध्यायाः पर्वैतदभिसंख्यया। सहस्रमेकं श्लोकानां पञ्च श्लोकशतानि च। षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना" (१५ आश्रमवासपर्व्व)

"अतःपरं निबोधेदं मौषलं पर्व दारुणम्। यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शहता युधि। ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः। आपाने पानकलिता दैवेनाभिप्रचोदिताः। एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम्। यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ। नातिचक्रमतुः कालं प्राप्तं सर्वहरं महत्। यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम्। दृष्ट्वा विषादमगमत् परां चार्त्तिं नरर्षभः। स संस्कृत्य नरश्रेष्ठं मातुलं शौरिमात्मनः। ददर्श यदुवीराणामापाने वैशसं महत्। शरीरं वासुदेवस्य रामस्य च महात्मनः। संस्कारं लम्भयामास वृष्णीनाञ्च प्रधानतः। स वृद्धबालमादाय द्वारवत्यास्ततो जनम्। ददर्शापदि कष्टायां गाण्डीवस्य पराभवम्। सर्वेषाञ्चैव दिव्यानामस्त्राणामप्रसन्नताम्। नाशं वृष्णिकलत्राणां प्रभावाणामनित्यताम्। दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः। धर्मराजं समासाद्य सन्न्यासं समरोचयत्। इत्येतन्मौषलं पर्व षोडशं परिकीर्त्तितम्। अध्यायाष्टौ समाख्याताः श्लोकानाञ्च शतत्रयम्। श्लोकानां विंशतिश्चैव संख्यातास्तत्त्वदर्शिना" (१६ मौषलपर्व्व)।

"महाप्रस्थानिकं तस्मादूर्द्ध्वं सप्तदशं स्मृतम्। यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः। द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः। यत्र तेऽग्निं ददृशिरे लौहित्यं प्राप्य सागरम्। यत्राग्निना चोदितश्च पार्थस्तस्मै महात्मने। ददौ सम्पूज्य तद्दिव्यं गाण्डीवं धनुरुत्तमम्। यत्र भ्रातॄन् निपतितान्द्रौपदीञ्च युधिष्ठिरः। दृष्ट्वा हित्वा जगामैव सर्वाननवलोकयन्। एतत् सप्तदशं पर्व महाप्रस्थानिकं स्मृतम्। यत्राध्यायास्त्रयः श्लोकाः श्लोकानाञ्च शतत्रयम्। विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना"। (१७ महाप्रस्थानिकपर्व्व)।

"स्वर्गपर्व ततो ज्ञेयं दिव्यं यदमानुषम्। प्राप्तं दैवरथं स्वर्गान्नेष्टवान् यत्र धर्मराट्। आरोढुं सुमहाप्राज्ञ आनृशंस्याच्छुना विना। तामस्यापि चलां ज्ञात्वा स्थितिं धर्मे महात्मनः। स्वरूपं यत्र तत्त्यक्त्वा धर्मेणासौ समन्वितः। स्वर्गं प्राप्तः स च तथा यातनां विपुलां भृशम्। देवदूतेन नरकं यत्र व्याजेन दर्शितम्। शुश्राव यत्र धर्मात्मा भ्रातॄणां करुणा गिरः। निदेशे वर्त्तमानानां देशे तत्रैव वर्त्तिनाम्। अनुदर्शितश्च धर्मेण देवराज्ञा च पाण्डवः। आप्लुत्याकाशगङ्गायां देहं त्यक्त्वा स मानुषम्। स्वधर्मनिर्जितं स्थानं स्वर्गे प्राप्य स धर्मराट्। मुमुदे पूजितः सर्वैः सेन्द्रैः सुरगणैः सह। कर्णस्य नरकप्राप्तिः प्रसोत्तस्यात्र कीर्त्यते। समागमश्च वीराणां स्वर्गलोके महात्मना। कीर्त्त्यते यत्र विधिवत् स्वर्गसंवाद एव च। स्थानि स्थानानि च प्राप्ता यत्र ते पुरुषर्षभाः। एतदष्टादशं पर्व प्रोक्तं व्यासेन धीमता। अध्यायाः पञ्च संख्याताः पर्वण्यस्मिन्महात्मना। श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः। नव श्लोकास्तथैवान्ये संख्याताः परमर्षिणा। (१८ स्वर्गारोहणिकपर्व्व)।

अष्टादशैवमेतानि पर्वाण्युक्तान्यशेषतः। खिलेषु हरिवंशश्च भविष्यञ्च प्रकीर्त्तितम्। विष्णुपर्व शिशोश्चर्य्या विष्णोः कंसवधस्तथा। भविष्यं पर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत्। दश श्लोकसहस्राणि विंशत् श्लोकशतानि च खिलेषु हरिवंशे च संख्यातानि महर्षिणा"।

"भारतं शृणुयान्नित्यं भारतं परिकीर्त्तयेत्। भारतं भवने यस्य तस्य हस्तगतो जयः" भा॰ आ॰ १अ॰। भरतस्य अपत्यादि शुभ्रा॰ ढक्। भारतेय तदपत्यादौ पुंस्त्री॰।

**भारतवर्ष** पुंन॰ जम्बुद्वीपान्तर्गते वर्षभेदे जम्बुद्वीपशब्दे २०४६ पृ॰ दृश्यम्।

**भारती** स्त्री भृ–अतच्। स्वार्थे प्रज्ञाद्यण्। १वाक्ये तदधिदेवतायां २सरस्वत्यां ३पक्षिभेदे "भारती संस्कृतप्रायो वाग्व्यापारो नराश्रय" इति सा॰ द॰ उक्तलक्षणे

४द्युत्तिभेदे च ५सन्न्यासिनामुपाधिभेदे च स्त्री ।

**भारद्वाज** पु० भरद्वाजस्य गोत्रापत्यम् अण् । गोत्रप्रवर्त्तके १मुनिभेदे २द्रोणाचार्य्ये मेदि० ३अगस्त्यमुनौ शब्दर० ४व्याघ्राटविहगे ५बृहस्पतिपुत्रे च हेमच० ६वनकार्पास्यां स्त्री ङीप् । पृषो० । भाद्वाजीत्यप्यत्र । विदा० अञ् ततः अश्वा० फक् । भारद्वाजायन तद्गोत्रापत्ये पुंस्त्री० । स्त्रियां ङीप् । भारद्वाजी इत० । भारद्वाजीपुत्र तत्पुत्रे स च यजुर्वेदस्य वंशस्थः ऋषिभेदः शत०ब्रा०१४।९।४।२।

**भारभृत्** त्रि० भारं बिभर्त्ति भृ–क्विप् । १भारधारके । २विष्णौ पु० "भारभृत् कथितो योगी" विष्णु स० ।

**भारमेय** त्रि० भारमस्येदम् शुभ्रा० ढक् । भरमसम्बन्धिनि स्त्रियां ङीप् ।

**भारय** पु०भारा रयो वेगो यस्य ।(भारुइ) खगभेदे शब्दच० ।

**भारयष्टि** स्त्री भारस्य वहनार्थं यष्टिः शाक०त० । भारवहनदण्डे (बाँक) अमरः ।

**भारव** न० भारं वाति वा–क । धनुर्गुणे त्रिका० ।

**भारवाह(क्)** त्रि० भारं वहति अण् ण्वि वा । भारवाहिनि ण्वुल् । भारवाहकोऽप्यत्र । अमरः स्त्रियां ङीप् ण्विप्रत्ययान्तस्य मत्स्यादावजादौ ङीपि च ऊठ् । भारौहः भारौही ।

**भारवि** पु० किरातार्जुनीयकाव्यकारके १कविभेदे । "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः । उदिते च पुनर्माघे भारवेर्भा रवेरिव" उद्भटः । तत्कृते २काव्ये च "उपमा कालिदासस्य भारवेरर्थगौरवम्" उद्भटः ।

**भारवृक्ष** पु० भारीभूतो वृक्षः । काचीनामगन्धद्रव्ये शब्दच०

**भार(ह)हार** त्रि० भारं हरति हृ–अच् अण् वा । भारवाहके तत्रानुद्यमने अच् । उद्यमने तु अण् इतिभेदः ।

**भाराक्रान्त** त्रि० ३त० । १भारेणाक्रान्ते "भाराक्रान्ता नमनरसना गुरुः श्रुतिरसहयैः" छन्दोम०उक्ते २सप्तदशाक्षरपादके वर्णवृत्तभेदे स्त्री ।

**भारि** पु० इभस्यारिः पृषो० । सिंहे हेमच० ।

**भारिक** त्रि० भारं वहति भार+ठञ् । भारवाहके अमरः

**भारिट** पु० भारा रेटति रिट–क । ग्रामचटके खगभेदे राजनि० ।

**भारिन्** त्रि० भारोऽस्त्यस्य वाह्यत्वेन इनि । भारवाहके एतत्परस्य मालाशब्दस्य ह्रस्वः । मालभारी । "मल्लिकामालभारिण्यः" काव्याद० ।

**भारुण्ड** पु० उत्तरकुरुवर्षस्थे १खगभेदे तदुपक्रमे "भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा भयानकाः । ताम्निर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च" भा०मो० ७अ० । २सामभेदे तत्र भारुण्डेति पाठभेदः । तत्सामद्रष्टरि ३ऋषिभेदे "भारुण्डसामगीताभिरथर्वशिरसोद्गतैः" भा०आ०६७ अ० । तच्च सामार्च्चिके १।२।२ "इमं स्तोमर्हते" इत्यादिमन्त्रे गेयं साम, मत्कृत तुलादानादिपद्धतौ १०२ पृ०दृश्यम् । "आज्यदोहानि सामानि शान्तिकं भारुण्डानि च । पश्चिमे द्वारपालौ तु पठेताम् सामगौ तथा" विधानपा० ।

**भारूप** न० भारूपमस्य । चिदात्मके १ब्रह्मणि २आत्मनि पु० ।

**भार्ग** पु० भर्गस्य देशभेदस्य राजा अण् । १भर्गदेशनृपे तत्र तद्राजस्य भार्गी० स्त्रियां न लुक् । भार्गी । २प्रतर्दनस्य पुत्रभेदे पु० हरिवं० २९ अ० ।

**भार्गभूमि** पु० आङ्गिरसे भार्गवपुत्रभेदे हरिवं० ३अ० ।

**भार्गव** पुंस्त्री० भृगोरपत्यम् तद्गोत्रापत्यं वा अण् ।।१भृगुवंश्ये बहुत्वे तु यस्कादिभ्यश्चेत्यादिना अणो लुक् । भृगवः तद्गोत्रापत्येषु । २शुक्राचार्य्ये ३धन्विनि ४गजे च पु० मेदि० । तेन प्रोक्ता तेनाधीता ज्ञाता वा अण् । ५वेदप्रसिद्धे विद्याभेदे ६पार्वत्यां ७लक्ष्म्यां ८दूर्वायां च स्त्री मेदि० ङीप् । प्राच्ये ९देशभेदे पु० । "ब्रह्मोत्तराः प्रविजया भार्गवाश्चेयमल्लकाः" मार्कपु० । १०द्रुपदनगरस्थे कुम्भकारभेदे पु० भा०आ०१९०अ० । ११महादेवे पु० भा० द्रो० २०२अ० ।

**भार्गवन** न० द्वारकास्थे वनभेदे हरिवं० ११७ अ० ।

**भार्गवप्रिय** पु० ६त० । हीरके तस्य शुक्रग्रहप्रियत्वात् तथात्वम् ।

[भर्गगोत्रापत्ये ।

**भार्गायण** पुंस्त्री०भर्गस्य गोत्रापत्यं त्रैगर्त्त: फञ् । त्रैगर्त्ते

**भार्गी** स्त्री भार्गस्येदम् अण् । (वामनहाटि)वृक्षभेदे राजनि० ।

**भार्ग्य** पु० भर्गस्य गोत्रापत्यं गर्गा०यञ् । शुक्लगोत्रे नृपभेदे भाग० ९।२१।२४ ।

**भार्य्या** स्त्री भृ–ण्यत् । १विधिनोढायां स्त्रियाम् २स्त्रीमात्रे ३भरणीयमात्रे त्रि० । भार्य्याशब्दश्च यूपाहवनीयादिवत् अलौकिकसंस्कारसहितस्त्रीबोधकः । तस्याः गुणदोषा यथा "सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा । सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता । नित्यस्नाता सुगन्धा च नित्यञ्च प्रियवादिनी । अल्पभुक् अल्पभाषी च सततं मङ्गलैर्युता । सततं धर्मबहुला सततञ्च पतिप्रिया । सततं प्रियवक्त्री च सततं भर्त्तृकामिनी । पितृदेवक्रियायुक्ता सर्वसौभाग्यवर्द्धिनी ।

यस्य देवी भवेद्भार्य्या देवेन्द्रो न च मानुषः"। "यस्य भार्य्या विरूपाक्षी कश्मला कलहप्रिया। उत्तरोत्तरवादा स्यात् सा जरा न जरा जरा। यस्य भार्य्या श्रिताऽन्यत्र परवेश्माभिकाङ्क्षिणी। कुक्रिया त्यक्तलज्जा च सा जरा न जरा जरा। यस्य भार्य्या गुणज्ञा च भर्त्तारमनुगामिनी। अल्पाल्पेन तु सन्तुष्टा सा प्रिया न प्रिया प्रिया। दुष्टा भार्य्या शठो मित्रं भृत्याश्चोत्तरदायकाः। ससर्पे च गृहे वासो मृत्युरेव न संशयः। आपत्सु मित्रं जानीयात् युद्धे शूरं धने शुचिम्। भार्य्याञ्च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम्"। गारुडे १०८।१०९ अ०। "वृहस्पतिरुवाच "यस्य नास्ति सती भार्य्या गृहेषु प्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। सुशीला सुन्दरी शान्ता गता यस्य गृहोदरात्। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। भावानुरक्ता वनिता मृता यस्य च सत्नुषा। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। दैवेनापहृता यस्य पतिसाध्वी पतिव्रता। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। यस्य माता गृहे नास्ति भार्य्या चाप्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। प्रियाशून्यं गृहं यस्य पूर्णं स्त्रीधन बन्धुभिः। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। भार्य्याशून्या वनसमाः सभार्य्याश्च गृहा गृहाः। गृहिणी च गृहं प्रोक्तं न गृहं गृहमुच्यते। अशुचिः स्त्रीविहीनश्च दैवे पैत्रे च कर्म्मणि। यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत्। दाहकशक्तिहीनश्च यथा वह्नी हुताशनः। प्रभाहीनो यथा सूर्य्यः शोभाहीनो यथा शशी। शक्तिहीनो यथा जीवो यथात्मा च तनुं विना। विनाधारं यथाधेयो यथेशः प्रकृतिं विना। न च यज्ञो यथा यज्ञः फलदां दक्षिणां विना। कर्मिणे च फलं दातुं सामर्थ्यमेव च। विना स्वर्णं स्वर्णकारो यथाऽशक्तः स्वकर्म्मणि। यथाऽशक्तः कुलालश्च मृत्तिकाञ्च विना द्विजाः!। तथा गृही न शक्तश्च सततं सर्वकर्म्मणि। भार्य्यामूलाश्च पुत्राश्च भार्य्यामूला गृहाश्रमा। भार्य्यामूलं सुखं यस्य गृहस्थानां गृहे सदा। भार्य्यामूलो सदा हर्षः भार्य्यामूलञ्च मङ्गलम्। भार्य्यामूलश्च संसारो भार्य्यामूलञ्च सौरतम्। यथा रथश्च रथिनां गृहिणाञ्च तथा गृहम्। सारथिश्च यथा तेषां गृहस्थानां तथा प्रिया। सर्वरत्नप्रधाना च स्त्रीरत्नं दुष्कुलादपि। सा गृहीता गृहस्थेन भवेत्याह कमलोद्भवः। यथा जलं विना पद्मं पद्मं शोभां विना यथा। तथैव च गृहं यस्य गृहिणीं गृहिणीं विना"। ब्रह्मवै॰पु॰ प्र॰ ख॰ ५६ अ॰। "तोषयेत् सततं भार्य्यां विधिवत् पाणिपीडिताः। ताशं दृष्ट्वा तु कल्याणमकल्याणमतोऽन्यथा। सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च। यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्। यथा विरुद्ध्यते स्वामी सौभाग्यमदेहतया। असतीसङ्गमं कर्त्तुं सा स्यादेष्या भवान्तरे। दृष्ट्वापि लोकेऽवाच्यत्वमधर्मञ्चापि विन्दति। न च पितृकुलं स्वामिकुलं तस्याः प्रमोदते। विरुध्यमाने पत्यौ तत सपत्न्या वा प्रवर्त्तते। अतीव दुःखं भवति तदकल्याण कृतयोः" कालिकापु॰ २० अ॰।

**भार्य्याट** पु॰ भार्य्यां तद्गानमटति अट कर्म॰ उप॰ स॰। अन्यस्मै स्वभार्य्यादानार्थं गन्तरि त्रिका॰।

**भार्य्याटिक** पु॰ भार्य्यया आटो गतिः प्रयोजनमस्य ठक्। १स्त्रीजिते २हरिणभेदे च मेदि॰।

**भार्य्यारु** पु॰ भार्य्यं धार्य्यमृच्छति ऋ उण्। १शैलभेदे २हरिणभेदे। भार्य्यां परभार्य्यामृच्छति ऋ—उण्। ३अनियोगेन परभार्य्यागामिनि च मेदि॰।

**भार्य्यावृक्ष** पु॰ भार्य्येव प्रियत्वात् वृक्षो यस्य। रक्तके राजनि॰। [रूढभार्य्ये के

**भार्य्योढ़** पु॰ ऊढा भार्य्या येन आहिता॰ वा परनिपातः।

**भाल** न॰ भा—लच्। १ललाटे भ्रुवोरूर्ध्वभागे २तमसि मेदि॰।

**भालकृत्** पु॰ गोत्रप्रवर्षिभेदे प्रवराध्यायः।

**भालचन्द्र** पु॰ भाले चन्द्रोऽस्य। १शिवे २गणेशे ३दुर्गायां स्त्री

**भालदर्शन** न॰भाले दृश्यते कर्म्मणि ल्युट्। १सिन्दूरे गन्धद्र॰ भाले दर्शनं नेत्रमस्य। २कपाललोचने महादेवे।

**भालदृश्** पु॰ भाले दृगस्य। त्रिनयने महादेवे शब्दच॰।

**भालनेत्र** पु॰भाले नेत्रमस्य।१शिवे। भालस्थलोचनादयोऽप्यत्र। २त्रिनयनायां दुर्गायां स्त्री।

**भालाङ्क** पु॰भालचेवाङ्को यस्य भाले अङ्को यस्य वा। १शाकभेदे २करपत्रे(करात्) ३रोहितमत्स्ये महालक्षणविशेष ललाटचिह्नयुक्ते ४पुरुषभेदे ५शिवे ६कच्छपे च मेदि॰। [कच्छप॰।

**भालु** पु॰भ्रमणाति रोगान् भ उदयने अच् रक् वा। आदित्ये

**भालु(लू)क** पुंस्त्री॰पु॰ भल-अपरोधे ऊक स्वार्थे वा। भल्ला-

मख्याते पशुभेदे अमरः पाठान्तरम्। स्त्रियां जातित्वात् ङीष्।

भाल्लवि पु० १सामशाखाभेदे २तदध्येतरि च। “तामेतां भाल्लवय उपासते” शाण्डि० सू० २।२।४ “तामेतां परिवर्त्तिनीं विष्टुतिम् भाल्लविशाखाध्यायिन उपासते” भा०।

भाल्ल(ल्लु)क पुंस्त्री० भल्लूक+स्वार्थे अण् वा पृषो० ह्रस्वः। जन्तुभेदे भल्लूके स्त्रियां ङीष्।

भाव पु० भावयति चिन्तयति पदार्थान् चु०भू–अच्। माध्योक्ते नानापदार्थचिन्तके १पण्डिते। भावयति ज्ञापयति हृदयगतम् भू–णिच्–अच्। २हृद्गतावस्थावेदके मानसविकारे स्वेदकम्पादौ व्यभिचारिभावे। ३रत्यादिभावे मेदि० भू-भावे घञ्। साध्यरूपे सिद्धरूपे वा ४क्रियारूपे धातोरर्थे। ४राले ५आशये च ६सत्तायां ७चेष्टायाम् ८जन्मनि च अमरः ९विभूतौ। कर्त्तरि घ। १०आत्मनि ११बुधे १२जन्तौ करणे घञ्। १४गौरविते १५अभिनयभेदे त्रिका०। १६योनौ १७उपदेशे धरणिः। संसारे भवशब्दार्थे च। ज्यो० उक्ते १९लग्नादितः तन्वादिद्वादशभावे तत्कल्पे १८०२ पृ० तदानयनञ्च दृश्यम्। २०स्त्रीणां यौवनकाले सत्त्वभवाष्टाविंशत्यलङ्कारान्तर्गतेऽङ्गजे प्रथमालङ्कारे। यथा “यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः। अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः। तत्र भावः “निर्विकारात्मके चित्ते भावः प्रथमविक्रिया”। जन्मतः प्रकृतिनिर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः। यथा “स एव सुरभिः कालः स एव मलयानिलः। सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते” सा० द०। भावस्य लक्षणान्तरं यथा “शरीरेन्द्रियवर्गस्य विकाराणां विधायकाः। भावा विभावजनिताश्चित्तवृत्तय ईरिताः पुराणे नाट्यशास्त्रे च द्वयोस्तु रतिभावयोः। समानार्थतया चात्र द्वयमैक्येन लक्ष्यते”। २१ग्रहाणां द्वादशविधचेष्टाभेदे तदानयनं फलं च ज्यो० त० उक्तं यथा

“शयनञ्चोपवेशञ्च नेत्रपाणिः प्रकाशनम्। गमनं गमनेच्छा च सभायां वसतिस्तथा। आगमनं भोजनञ्च नृत्यलिप्सा च कौतुकम्। निद्रा ग्रहाणां भावाश्च द्वादशैते प्रकीर्त्तिताः”। भावानयनक्रमो यथा “यस्मिन् ऋक्षे स्थितः खेटस्तेन तं परिपूरयेत्। पुनरंशेन संपूर्य स्वर्क्षं तत्र नियोजयेत्। जातदण्डं तथा लग्नमेकीकृत्य सदा बुधैः। रविणा भागहारेण शेषं कार्य्यं नियोजयेत्”। अंशेन स्ववर्गसंख्यया। ऋक्षं ग्रहाणां जन्मनक्षत्रम्। तद्यथा। “विशाखानलतोयानि वैष्णवं भगदैवतं पुष्या पौष्णोयमः सर्पी जन्मभान्यर्कतः क्रमात्। अथ राशिः। यदा मेषे ग्रहस्तदा १एकपूरितग्रहसंख्याङ्कः। यदा वृषे ग्रहस्तदा २द्विपूरितो ग्रहसंख्याङ्कः कार्य्यः। जायासुतमृत्युतनुलग्नद्वित्रिकोणस्थानस्थितपापग्रहाणां निद्राशयनभावयोः फलम् “निद्रायाञ्च यदा पापो जायास्थाने शुभं वदेत्। यदि पापः शुभैर्दृष्टो नाशुभैश्च कदाचन। यदि वा शत्रुगेही स्याच्छयने यदि वेक्षितः। तदा नारीवधं तस्य नाशो भवति निश्चितम्। शुभाशुभैर्यदा दृष्टः शुभग्रहसमन्वितः। नारी च म्रियते तस्य प्रथमा च विशेषतः। सुतस्थाने स्थितः पापो निद्रायां शयनेऽपि वा। तदा शुभं भवेत्तस्य नात्र कार्य्या विचारणा। लग्नस्थाने लग्नद्वे वा त्रिकोणे वा यदा भवेत्। अपत्यस्य तदा नाशो जायते नात्र संशयः। शुभग्रहो यदा तत्र क्रूरो वा यदि वेक्षितः। तदा प्रथमापत्यस्य नाशो भवति निश्चितम्। मृत्युस्थाने स्थितः पापो निद्रायां शयनेऽपि वा। तदात्मनोऽपमृत्युः स्याद्राजतोऽपरतोऽपि वा। शुभग्रहो यदा तत्र मृत्युस्थानेऽपि संस्थितः। तदा च मरणं तस्य मृत्युस्थाने विशेषतः। पापग्रहैर्यदा दृष्टः शुभो वा शत्रुवीक्षितः। तदा तस्य शिरश्छेदो मुनिना परिकीर्त्तितः। एवं क्रमेण बोद्धव्यं ग्रहभावे सुबुद्धिना। बलाबलविचारेण जायते च शुभाशुभम्। ज्योतिर्विद्भ्यश्च सर्वेषु परिहारः कृतो मया। शयनादिकभावेषु ज्ञातव्यश्चोपदेशतः। एकादशे वा दशमालये वा धनालये वा यदि वा विलग्ने। पापेन युक्तो न शुभग्रहश्चेत्तथापि सिद्धिं महतीं वदन्ति”। ग्रहभेदेन दशाभेदे फलं यथा

“मन्दाग्निः पित्तशूली च जायते शयने नरः१। उपवेशे भवेच्छूली श्यामवर्णस्तथा नरः२। नेत्रपाणौ भवेत् क्रूरो जलदोषी भवेन्नरः३। पुण्यवान् धार्मिकश्चैव धनवांश्च प्रकाशने४। गमने च रवेर्जातः कृपणो धनसंयुतः। बहुभाषी क्षमी क्रोधी लुब्धचित्तः सदा भवेत् ५। अल्पभोक्ता शीघ्रगामी दीर्घायुर्नृपवल्लभः। शूरः श्रीमान् सुशीलश्च गमनेच्छाभवो नरः६। सभायाश्च रवेर्जातः स्वजो दाता क्षमी भवेत्। दयालुः पण्डितो धीमान् गुणवान् पण्डितप्रियः७। आगमने भवेन्मूर्खः कुरूपो धनवान् स-

वेत्८ । भोजने भक्षको मांसलुब्धो महावपुर्बली९ । नृत्यलिप्सौ सुन्दरो वाग्मी पण्डितश्च महाधिपः१० । उत्साही च महाभोगी कौतुके च दिवाकरे११ । दाता भोक्ता प्रियः पुत्रकलत्राणां न संशयः । लिङ्गे देहे करे चैव गुदे रोगी तथैव च । निद्रायाञ्च भवेद्भानोः क्रोधनो रक्तनेत्रकः"१२ । इति रवेः ।

"शयने च विधौ क्रोधी दरिद्रो बहुलम्पटः१ । उपवेशे महारोगी धनवांश्च भवेन्नरः२ । नेत्रपाणौ नेत्ररोगी श्लीपदी बहुभाषकः । क्रूरः खलोऽतिशूरश्च जायते च विधौ तदा३ । प्रकाशने निशानाथे धनवांश्च भवेन्नरः । दक्षो बुद्धिमान् दाता च परदारेषु लम्पटः ४ । करोगी वित्तहा चैव क्रूरकर्मा धनान्वितः । शिरोरोगी दन्तशूली जायते गमने विधौ५ । नानामतिर्महाक्रोधी सम्पद्युक्तो भवेन्नरः । गमनेच्छुविधौ जातो धनहीनो भवेत् तदा६ । दाता च धार्म्मिकश्चैव राजपालो भवेत् सदा । सभायाञ्च विधौ नित्यं जायते पुरुषोत्तमः७ । नित्यक्रोधी महादुःखी भवेदागमने विधौ८ । भोजने च भवेल्लुब्धो भक्षकश्च महानरः९ । यो जातो नृत्यलिप्सायां गुणवान् धार्म्मिको भवेत् । बहुपुत्रो धनी दाता जायते नात्र संशयः१० । कौतुके च भवेद्भोगी नानाविद्यासु तत्परः । उत्साही च महाक्रोधी जायते च सुनिश्चितम्११ । निद्रायां दद्रुरोगी स्यात् क्लेशपापरुजान्वितः । पुत्रशोकमहादुःखी नित्यं भ्रमति मेदिनीम्"१२ । इति चन्द्रस्य ।

"शयने च कुजे जातो बल्लीवद्बहिरङ्गकः । क्षयक्रोधी महादक्षः कृपणो जायते नरः१ । उपवेशे यदा भौमे जायते च नराधमः । धनवान् क्रूरकर्मा च निष्ठुरो जातिवर्जितः२ । नेत्रपाणौ च यो जातोऽक्षिरोगी भवेन्नरः । पुत्रदारधनैर्युक्तो दारिद्र्येणैव दह्यते३ । प्रकाशने कुजे जातो धनवान् पण्डितः सुधीः । नारी च म्रियते तस्य प्रथमा च विशेषतः४ । गमने च यदा जातः प्रवासी नित्यदुःखितः । शरीरे च भवेद्रोगी कण्ड्वादिकुष्ठदद्रुकः५ । प्रवासी गमनेच्छायां गुदरोगी भवेच्च सः । धनहीनः कुकर्मा च जायते क्षितिजस्य च६ । सभायाञ्च यदा जातो धार्म्मिको बहुसम्पदा । गुणवांश्च महादाता शिरोरोगी भवेद् ध्रुवम्"७ । कुजस्यागमने नित्यं [illegible] भवति नान्यथा । कर्णरोगी पित्तशूली जायते च नराधमः८ । भोजने भूमिजस्यापि यो जातो मांसलुब्धकः । हृष्टकायो महाक्रोधी मिथ्योत्साही धनान्वितः९ । कुजस्य नृत्यलिप्सायां यो जातो धनवान् भवेत् । दाता भोक्ता सदा मानी राजपालो भवेच्च सः१० । कौतुके क्षितिजस्यापि जातो भवति पण्डितः । नानाधनेन संयुक्तो बहुपुत्रो द्विभार्य्यकः११ । निद्रायां भूमिपुत्रस्य यो जातो मूर्खशठः सः । कलही बान्धवैः सार्द्धं शोकक्लेशरुजान्वितः१२" इति मङ्गलस्य ।

"बुधस्य शयने जातो धनवान् सुखितः सदा । [illegible] भवेद्वापि खञ्जो भवति नान्यथा१ । उपवेशे च यो जातः प्रवासी जायते ध्रुवम् । कवितागुणधीयुक्तो गौरवर्णो महाशयः२ । नेत्रपाणौ च यो जातः श्लीपदादिरुजान्वितः । चक्षूरोगी विशेषः स्यात् पुत्रनाशी भवेद्ध्रुवम्३ । प्रकाशने भवेज्जातो राजपालो धनान्वितः । नानाधनेन संयुक्तो जायते वेदपारगः४ । गमने यो नरो जातः प्रवासी नित्यदुःखितः । शरीरे क्षतमाप्नोति नित्यक्षयी भवेच्च सः५ । यो जातो गमनेच्छायां लम्पटो दुष्टचित्तकः । जीवघ्नो दुष्टभार्य्यश्च स नरो बहुभाषकः६ । सभायाञ्च बुधे जातो मूर्खो भवति पण्डितः । धनवान् धार्म्मिकश्चैव चिररोगी भवेच्च सः७ । क्रूरः खलो हतो मूर्खः पापशीलो भवेन्नरः । बुधस्यागमने नित्यं जायते च नराधमः८ । भोजने च भवेत् शोच्यं धनहीनो भवेन्नरः । परद्वेषी प्रवासी च शोधनात्मव्ययान्वितः९ । यो जातो नृत्यलिप्सायां धनवान् पण्डितः कविः । उत्साही च महाहृष्टो भुनक्ति सुखमद्भुतम्१० । कौतुके च यदा जातो भवेत् सर्व्वजनप्रियः । अर्शोरोगी दद्रुयुक्तो धनवानलसश्च सः११ । निद्रायाञ्च यदा जातः सर्व्वदासैकपात्रताम् । नानाक्लेशमवाप्नोति रोगशोकसमन्वयम्"१२ । इति बुधस्य ।

"धनवान् लम्पटः श्यामः स्थूलवक्षरुजान्वितः । जीवस्य शयने जातो मानवो नात्र संशयः१ । उपवेशे गुरोर्जातो बहुभाषी च रोगवान् । पशुघाती महाशिल्पी श्लीपदीरोगसंयुतः२ । नेत्रपाणौ गुरोर्जातः कामरोगी धनी भवेत् । वृत्तादिवरश्च नित्यं जायते नात्र संशयः३ । गुरोः प्रकाशे धनवान् विद्यायुक्तो रुजान्वितः । दक्षो लम्पटपापी च श्यामवर्णो रुजान्वितः४ । धर्म्मभीतो गूढकर्मा साहसी गमने गुरौ । परवित्तेन धनवान् गुणवान् भवति

वाक्पतौ५ । गुरोश्च गमनेच्छायां जातो भवति मानवः । शूली धनी प्रवासी च सेवाकर्म्मणि तत्परः६ । वक्ता दाता च धनवान् राजसेवान्वितो नरः । शूलरोगी भवेन्नित्यं सभायां वाक्पतौ स्थिते७ । धार्म्मिकस्तीर्थकामी धनी चागमने गुरोः । परदारेषु संलुब्धो जायते नात्र संशयः । भोजने बहुसौख्याढ्यो मांसलुब्धो महाशूरः । कामुकः प्रियवाक्यश्च जायते नात्र संशयः८ । नृत्यलिप्सोः शठो वाग्मी धनवान् सात्त्विकस्तथा । महदैश्वर्य्यसंयुक्तो जीवस्य च भवेन्नरः१० । कौतुके च गुरोर्जातो धनवान् धार्म्मिकः सदा । नृत्योत्साही महत्सङ्गी भुनक्ति सुखमद्भुतम्११ निद्रायाञ्चैव यो जातश्चक्षूरोगी भवेच्च सः । कृपणो बहुभाषी च दुःखितो भ्रमते महीम्"१२ । इति गुरोः ।

"शुक्रस्य शयने जातो लम्पटो बहुभाषकः । दन्तरोगी महाक्रोधी नीचो भवति निश्चयः१ । उपवेशे तथा जातो बलवान् दाम्भिकः सदा । नित्यप्रवासी रोगी च जायते नीचसंस्थिते२ । नेत्रपाणौ भृगोर्दुःखी रोगशोकसमन्वितः । धनहीनो महारोगी मानवः स्यान्न संशयः३ । भृगोः प्रकाशने जातो विद्याधनसमन्वितः । दाता च धार्म्मिकश्चैव कीर्त्तिमान् जायते नरः४ । शुक्रस्य गमने जातः पादमूले रुजान्वितः । नित्योत्साही महाशिल्पी भवेत्तीर्थगतो रतः५ । गमनेच्छो यदा जातो भ्रातृनाशो भवेद्ध्रुवम् । माता च म्रियते तस्य शैशवे व्याधिसंयुतः६ । सभायाञ्च भृगोर्जातो राजपात्रो महाधनी । कुलशीलो महादक्षः केवलं शूलरोगवान्७ । भृगोरागमने जातो दुःखितो बहुलम्पटः । दद्रुरोगी पुत्रशोकी जायते च नराधमः । शुक्रस्य भोजने जातो बलवान् दाम्भिकः सदा । महाधनी भवेन्नित्यं वाणिज्येन विशेषतः९ । यो जातो नृत्यलिप्सायां स वाग्मी जायते ध्रुवम् । पाण्डित्यं कविता चैव वर्द्धते च दिने दिने । यदि चैव भवेन्नीचे मूर्खो भवति निश्चयः । तुङ्गस्थाने विशेषेण राजपात्रो महाधनी । कौतुको बहुकान्तश्च परयोषित्प्रियः सदा । महाहृष्टो महावक्ता कौतुकी च भवेत् सदा । बहुपुत्रकलत्रश्च नानासुखसमन्वितः । नीचे तद्विपरीतः स्यात् दुःखशोकसमन्वितः११ । निद्रायाञ्च भृगोर्जातो भवेद्रोगी स निश्चितम् । नित्यक्रोधी महादुःखी जायते नात्र संशयः । जायायाश्च सुतस्थाने यदि निद्रा भृगोर्भवेत् । तदा सर्व्वविनाशः स्याद्विष्णुना परिकीर्त्तितम्" १२ । शुक्रस्य ।

"शयने च शनेर्जातो लम्पटो बहुभाषकः । गुह्यस्थाने भवेद्रोगी कोपदृष्टिश्च जायते । लग्नात् सप्तमे चैव शयनस्थः शनैश्चरः । तदा नित्यप्रवासी स्यात्खलुदयी भवेच्च सः१ । उपवेशे यदा जातः श्लीपदीदद्रुसंयुतः । धनहीनो भवेत् तस्य पीड़ा भवति नित्यशः२ । नेत्रपाणौ यदा जातो मूर्खो भवति पण्डितः । धनवान् धार्म्मिकश्चैव द्विभार्य्यो बहुभाषकः३ । प्रकाशने च यो जातो राजपात्रो भवेच्च सः । नानागुणेन गुणवान् धार्म्मिकः पण्डितः शुचिः" "मतान्तरे 'जायास्थाने च लग्ने च प्रकाशने यदा शनिः । तदा सर्व्वविनाशः स्याज्जातिध्वंसो भवेद्ध्रुवम्४ । गमने च यदा जातः पादमूले रुजान्वितः । तीर्थे च गतिमान्नित्यं पुत्रदारैर्विवर्ज्जितः५ । यो जातो गमनेच्छायां श्लीपदीरोगसंयुतः । हन्ताघाती महाक्रोधी कृपणः परनिन्दकः६ । सभायाञ्च शनौ जातः पुत्रदारधनैर्युतः । सर्व्वत्र लभते वित्तं नानारत्नसमन्वितम्७ । आगमने यदा जातो महाक्रोधी रुजान्वितः । सर्पादिभिश्च संदष्टो भ्रातृनाशो भवेद्ध्रुवम्८ । भोजने चैव यो जातो मन्दाग्निश्च महानपि । अर्शोरोगी तथा शूली चक्षूरोगी भवेच्च सः । यो जातो नृत्यलिप्सायां नर्त्तको बहुभाषकः । जीवने दुःखितश्चैव प्रवासी परदेशगः१० । कौतुके च शनेर्जातो राजपात्रो महाशयः । दाता भोक्ता महादक्षो धार्म्मिकः पण्डितः शुचिः११ । निद्रायाञ्च शनेर्जातो धनवान् पण्डितः शुचिः । चक्षूरोगी पित्तशूली द्विभार्य्यो बहुपुत्रकः । विशेषतश्च धर्म्मज्ञे कर्म्मज्ञे च कदाचन । यदि दैवाद्भवेन्निद्रा नाशो भवति निश्चितम् । कर्म्मनाशो धर्म्मनाशः क्षुधार्त्तः दुःखितः सदा । नित्यप्रवासी रोगी च कार्य्यनाशः पदे पदे । अमित्रगेहे षष्ठे वा केन्द्रे वा अष्टमे पुनः । तदा सर्व्वं विचार्य्यञ्च वैपरीत्येन चिन्तनम् । जायायाञ्च सुतस्थाने यदि निद्रा भवेत् पुनः । तदा सर्व्वं शुभं विद्याद्विष्णुना परिकीर्त्तितम्"१२ । शनेः ।

"शयने च यदा राहोर्जन्म यस्य भवेत् पुनः । तस्य क्लेशो महादुःखं जायते च न संशयः१ । उपवेशे च यो जातः श्लीपदीरोगसंयुतः । बहुहानिर्नरेन्द्रस्य पीड़ा भवति नित्यशः२ । नेत्रपाणौ यदा जातश्चक्षूरोगी भवेद्ध्रुवम् । सर्पघाती महाभीतिर्द्विभार्य्यो बहुभाषकः३ । प्रकाशने च यो जातो धनवान् धा-

र्म्मिकः पुनः। नित्यप्रवासी चोत्साही सात्त्विको धार्म्मिकः शुचिः४। गमने चैव यो जातो नानारोगैर्धनक्षयः। दन्तघाती महाक्रोधी पिशुनः परनिन्दकः५। यो जातो गमनेच्छायां बहुपुत्रो महाधनः। पण्डितो गुणवान् दाता जायते च नरोत्तमः६। सभायाञ्च यदा जातः कृपणो धनसंयुतः। नानागुणेन गुणवान् धार्म्मिकः पण्डितः शुचिः७। आगमने च यो जातो लम्पटो बहुभाषकः। सुहृद्बन्धुविनाशः स्यात् ज्ञानाकोशश्च जायते८। भोजने च महादुष्टो मन्दाग्निश्च रुजान्वितः। कृपणः कटुवाक्यश्च दुःखितो नित्यसेवकः९। यो जातो न्त्यलिप्सायां खड्गी भवति नान्यथा। पुत्रनाशो भवेत् तस्य जायानाशो भवेद् ध्रुवम्१०। कौतुके च यदा जातो गुणैः सर्वैः समन्वितः। नानाधनेन धनवान् राजसेवासु तत्परः। यदि दैवाद् भवेत् तस्मी खण्टकी वा कदाचन। तदा सर्वं वैपरीत्यं जायते च न संशयः११। यो जातो राहुनिद्रायां दुःखितः सर्वतः सदा। नानास्थाने गतो वापि धनपुत्रविवर्जितः। जायायाश्च मृतस्थाने यातो निद्रां विधुन्तुदः। तदा सर्वं वैपरीत्यं मृतजायासमन्वितः१२। राहोः एवं वेदनाम्।

२२वैशेषिकोक्तेषु द्रव्यगुणकर्मसामान्यविशेषसमवायात्मकेषु षट्सु पदार्थेषु "द्रव्यादयः पञ्च भावा अनेके समवायिनः" भाषा० "तथा हि पदार्थो द्विविधः भावोऽभावश्च। तत्र भावाः षट् सप्तमस्याभावत्वकीर्त्तनात्" सि० मु०। अभाव एक इति पदार्थाः सप्त। तत्र द्रव्यादिपञ्चकस्य अनेकत्वविशिष्टं भावत्वं लक्षणं समवायस्य भावत्वेऽपि एकत्वात् न तत्र प्रसङ्गः। तत्र च द्रव्यादिषट्कान्यतमत्वम् भावत्वमिति सि०मु०। सत्तासम्बन्धित्वमिति दिनकरप्रभृतयः। सम्बन्धित्वं समवायसम्बन्धेन तादात्म्येन एकार्थसमवायेन वा बोध्यम्। तेन द्रव्यादित्रिके समवायेन, सत्तायां तादात्म्येन विशेषेषु एकार्थसमवायेन, समवाये स्वात्मकसमवायेन स्वरूपसम्बन्धविशेषेण सत्तासम्बन्धसत्त्वान्नाप्रसङ्गः"। भावो यथा 'तथाऽभावः कार्य्यमत्कारणं मतः' कुसुमा०।

भू-चिन्तायाम् करणे घञ्। २३अन्तःकरणे "भावदुष्टो न शुध्यति" आ० त०। २४तन्त्रोक्ते पश्चाचारादित्रये "भावस्तु त्रिविधो देवि! दिव्यवीरपशुक्रमात्। दिव्यवीरौ महाभावौ अधमः पशुभावकः। वैष्णवः पशुभावेन पूजयेत् परमेश्वरम्। शक्तिमन्त्रे वरारोहे! पशुभावो भयानकः। दिव्ये वीरे महेशानि! जायते सिद्धिरुत्तमा"।

यास्केन साध्यरूपायाः क्रियाया भावत्वमुक्तं यथा "तद् यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्य्यन्तं, मूर्त्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यादिभिः सत्त्वानामुपदेशो गौरश्वः पुरुषो हस्तीति भवतीति भावस्य, आस्ते शेते व्रजति तिष्ठतीति"। आलङ्कारिकोक्तभावस्य द्विविधता सञ्चारिव्यभिचारिभेदात् तत्तच्छब्दे दृश्यम्। २५सङ्गीतसङ्केतपदार्थद्योतकहस्तादिचेष्टाभेदे च। "यस्य च क्रियया क्रियान्तरं लक्ष्यते स भावः" इति व्याकरणपरिभाषिते २५पदार्थे च तत्र च सप्तमीत्याकरे स्थितम्। भवतीति भू-कर्त्तरि ण। २७उत्पत्तियुते षड्विकारयुते च पदार्थे भावविकारशब्दे दृश्यम्। २८सांख्यमतसिद्धेषु धर्माधर्मादिषु बुद्धिधर्मेषु "संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" सां०का०। "भावैरधिवासितं धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्य्याणि भावास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पककुसुमसम्पर्कात् वस्त्रं तदामोदवासितं भवति तस्माद्भावैरेवाधिवासितत्वात् संसरति" तत्त्वकौ०। तेषां करणाश्रितत्वं कार्य्याश्रितत्वञ्च दर्शितं यथा "सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिकाश्च धर्माद्याः। दृष्टाः करणाश्रयिणः कार्य्याश्रयिणश्च कललाद्याः" सां० का० "वैकृतिका नैमित्तिकाः प्राकृतिकाः, स्वाभाविकाः सांसिद्धिकाः भावाः यथा सर्गादावादिविद्वान् भगवान् कपिलो महात्मा धर्मज्ञानवैराग्यैश्वर्य्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति। वैकृतिकाश्च भावाः असांसिद्धिकाः उपायानुष्ठानोत्पन्नाः यथा प्राचेतसप्रभृतीनां महर्षीणाम्। एवमधर्माज्ञानावैराग्यानैश्वर्य्याण्यपि। कार्य्यं शरीरं तदाश्रयिणस्तस्यावस्थाः कललबुद्बुदमांसपेशीकरण्डाङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य, ततो निर्गतस्य बालस्य बाल्यकौमारयौवनवार्द्धकानीति" त० कौ०। २९तत्तत्पदार्थासाधारणधर्मे च "भावे त्वतलौ" पा०। भावशब्देनासाधारणधर्म उच्यते। स च तदितरावृत्तित्वे सति तावद्वृत्तिधर्मः यथा गोत्वमित्यादौ भावार्थकत्वप्रत्ययेन गवेतरावृत्तित्वे सति सकलगोव्यक्तिवृत्तिधर्मो बोध्यते।

**भावक** पु० भाव+स्वार्थे क। १भावशब्दार्थे मनोविकारे हला०। भू-भावि-वा ण्वुल्। २सत्ताश्रये उत्पादके च त्रि०।

**भावत** त्रि० भू-शतृ भवत् तस्येदम् अण्। उत्पाद्योत्पादकसम्बन्धिनि स्त्रियां ङीप्।

**भावत्क** त्रि० युष्मदर्थकात् भवच्छब्दात् इदमर्थे पक्षे ठक् । भवत्सम्बन्धिनि पक्षे छस् । सित्त्वात् पदत्वम् । भवदीय तत्रार्थे त्रि० ।

**भावन** न० भू–णिच्–ल्यु । (चालता) १फलभेदे २विष्णौ पु० । भावे ल्युट् । ३अधिवासने ४चिन्तायाम् ५ध्याने ६पर्य्यालोचनायां वैद्यकोक्ते ७औषधसंस्कारभेदे । भावि–युच् । “व्यापारो भावना सैवोत्पादना सैव च क्रिया” उक्ते ८भवितुर्भवनानुकूलव्यापारभेदे स्त्री भट्टशब्दे दृश्यम् । अनुभवजन्ये स्मृतिहेतौ ९संस्कारभेदे स्त्री । “संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने” “अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम् । भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः । उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् । स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते” भाषाप० । “भावनाख्य इति । तस्य संस्कारस्य, उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मकनिश्चय इत्युक्तम् । तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः । ननु स्मरणं प्रत्युपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षादिस्थले न स्मरणम् इत्यस्य संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् । किञ्च उपेक्षास्थले संस्कारकल्पनाया गुरुत्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात् । तत्र प्रमाणं दर्शयति । स्मरणे इति । असौ संस्कारः स्मरणं प्रत्यभिज्ञानञ्च जनयति । अतः संस्कारः कल्प्यते । विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यं स्वस्वव्यापारान्यतराभावे कारणत्वासम्भवात् । न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वेन प्रत्यभिज्ञायाः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम् । अप्रयोजकत्वात् । परे तु अनुद्बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः” सि० मु० । भू–चिन्तायां युच् । १०चिन्तायां स्त्री । चिन्ता च मानसवृत्तिभेदः सा च त्रिविधा यथोक्तं विष्णुपु० ६ अं० ७ अ० । “त्रिविधा भावना विप्र! विश्वमेतन्निबोधत । ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका । ब्रह्मभावात्मिका ह्येका कर्मभावात्मिका परा । उभयात्मिका तथैवान्या त्रिविधा भावभावना । सनन्दनादयो ब्रह्मभावभावनया युताः । कर्मभावनया चान्ये देवाद्याः स्थावरास्वराः । हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा । बोधाधिकारयुक्तेषु विद्यते भावभावना” । बुद्धशब्दे दर्शितं बौद्धमतसिद्धभावनाचतुष्टयञ्च दृश्यम् । पु० भू–मिश्रणे भावे युच् । ११निर्यासादिना चूर्णद्रव्यस्य मिश्रीकरणे चूर्णद्रव्यस्य निर्यासादिना संस्कारभेदो भावना तत्प्रमाणमुक्तं भावप्र० यथा “द्रवेण यावन्मानेन चूर्णं सर्वं प्लुतं भवेत् । भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः” ।

**भावबोधक** पु० भावस्य रत्यादेर्बोधकः अनुभावकः । रत्याद्यनुभावके १भ्रूभङ्गादिदेहचेष्टाविशेषे २मुखरागादौ च अमरः ।

**भावयु** त्रि० भावमिच्छति क्यच् उन् वेदे नि० । भावेच्छौ । ऋ० १०।८६।१५ । [ङीप् ।

**भाववत्** त्रि० भाव+अस्त्यर्थे० मतुप् मस्य वः । भावयुते स्त्रियां

**भावविकार** पु० ६त० । यास्कोक्तेषु उत्पत्तियुतपदार्थस्य जन्मादिषु षट्सु धर्मेषु “षड्भावविकारा भवन्तीति वार्ष्यायणिः, जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति, जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं विपरिणमत, इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्धत इति स्वाङ्गाभ्युच्चयं, सांयोगिकानां वार्थानां, वर्धते विजयेनेति वा वर्धते शरीरेणेति वा, अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति” ।

**भाववृत्त** पु० भावे वृत्तः प्रवृत्तः भावो वृत्तो जातो यस्माद्वा । सृष्टिकर्त्तरि ब्रह्मणि “अनुष्टुप् च भवेच्छन्दो भाववृत्तस्तु दैवतम्” स्मृतिः ।

**भावाट** पु० भावं भावेन वा अटति अट–अण् अच् वा । १भावके २साधौ ३कामुके ४नटे ५निवेशे च मेदि० । भावे घञ् ६त० । ६भावप्राप्तौ ।

**भावानुगा** स्त्री भावं पदार्थमाश्रयं वानुगच्छति गम–ड । १छायायाम् २अभिप्रायानुगन्तरि त्रि० राजनि० ।

**भावालीना** स्त्री भावे पदार्थे आलीना । छायायां राजनि० ।

**भाविक** त्रि० भावेन निर्वृत्तम् ठक् । १भावसाध्ये पदार्थे २अर्थालङ्कारभेदे ४०१ पृ० दृश्यम् ।

**भावित** त्रि० चु० भू–शुद्धौ चिन्तायां मिश्रणे वा कर्मणि क्त । १वासिते २प्राप्ते मेदि० । ३शुद्धे ४चिन्तिते ५मिश्रिते वैद्यकोक्तनिर्यासादिना मिश्रिते ६चूर्णादौ च । बीजग० उक्ते अव्यक्तानेकवर्णसमीकरणेन ७व्यक्तीकरणे ।

**भावित्र** त्रि॰ भू–सत्तायां णित्रन्। त्रैलोक्ये उज्ज्वल॰।

**भाविन्** त्रि॰ भू–गत्या॰ भविष्यति णिनि। १भविष्यत्पदार्थे "भाविनि भूतवदुपचारः" न्यायः। स्त्रियां ङीप्। भावो रत्यादिभावः सात्त्विकभावो वाऽस्त्यस्य एकाचरत्वादन्तत्वेऽपि बाहुल्यार्थे इनि ङीप्। २वेशभावान्वितायां स्त्रियाम् भरतः ३स्त्रीमात्रे राजनि॰। ४गन्धर्वकन्याभेदे स्त्री मार्कपु॰१२८ तत्र भामिनीति पाठान्तरम्।

**भावुक** न॰ भू–उकञ्। १मङ्गले २तद्वति त्रि॰ अमरः। ३भावनायुते त्रि॰ हेमच॰। "मुहुरहो रसिका भुवि भावुकाः" इति भाग॰१।१।३।

**भाव्य** न॰ भू–आवश्यके भावे ण्यत्। १अवश्यभवितव्ये। भू–कर्त्तरि यत् भव्य स्वार्थे अण्। २भव्यशब्दार्थे "भावीत्यवश्यं यत् भाव्यं तत्र मेधा न बाधकः" कालि॰पु॰२८अ॰

**भाष** वचने भ्वा॰ आत्म॰ द्विक॰ सेट्। भाषते अभाषिष्ट। ऋदित् चङि न ह्रस्वः। उपसर्गपूर्वकस्तु तत्तदुपसर्गद्योतार्थयुक्तकथने। परि+शब्दकारमञ्जु ते।

**भाषण** न॰ भाष–भावे ल्युट्। कथने अमरः। सा॰द॰ उक्ते निर्वहणाङ्गभेदे "सन्धिर्विरोधो ग्रथनम्" इत्युपक्रमे "भाषणं पूर्ववाक्यस्य" इत्यादिनोद्दिश्य लक्षितं यथा "सामदानादि भाषणम्"।

**भाषा** स्त्री भाष–अ। १वाक्ये २संस्कृतादिवाक्ये च "अष्टादशभाषावारविलासिनीभुजङ्गः" इति सा॰द॰। भाषाभेदाश्च प्राकृतशब्दे ४५४९पृ॰ दर्शिताः। व्यवहारे ३प्रतिज्ञासूचकवाक्ये "यदावेदयते राज्ञे तद्भाषेत्यभिधीयते" इति स्मृतिः। पूर्वपक्षशब्दे ४४०६ पृ॰ दृश्यम्। ४रागिणीभेदे हला॰।

**भाषासम** न॰ शब्दालङ्कारभेदे यथोक्तं सा॰द॰ १०परि॰। "शब्दैरेकविधैरेव भाषासु विविधास्वपि। साम्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते" यथा "मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे। विरसासि केलिकीरे किमालि! धीरे च गन्धसारसमीरे" एष श्लोकः संस्कृतप्राकृतशौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव"।

**भाषापाद** पु॰कर्म॰। चतुष्पाद्व्यवहारे प्रतिज्ञासूचके वाक्यरूपे प्रथमेऽंशे पूर्वपक्षशब्दे ४४०६ पृ॰ दृश्यम्।

**भाषिक** त्रि॰भाषया निर्वृत्तः ठञ्। वेदादिपरिभाषानिर्वृत्ते निरु॰२।१२। [कात्या॰श्रौ॰१।१।१८।१० भाष्ये दृश्यम्।

**भाषिकस्वर** पु॰ कर्म॰। मन्त्रेतरवेदभागरूपब्राह्मणे पठितस्वरे

**भाषित** न॰भाष–भावे–क्त। १कथने कर्मणि–क्त। २कथिते त्रि॰। "भाषितपुंस्कात्" पा॰। भाषित उक्तः पुमान् येन क्व

**भाष्य** न॰ "सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो जनाः" इत्युक्ते लक्षणे १सूत्रव्याख्याग्रन्थभेदे "फणिभाषितभाष्यफक्किका" नैष॰। २कथनीये त्रि॰।

**भाष्यकार** पु॰ भाष्यं करोति कृ–अण् उप॰स॰। पाणिन्यादिसूत्रभाष्यकारके पतञ्जलिप्रभृतौ भाष्यकाराश्च सूत्रभेदे विभिन्ना यथा पाणिनिसूत्रस्य पतञ्जलिः ब्रह्मसूत्रस्य शङ्कररामानुजादयः। योगसूत्रस्य वेदव्यासः, सांख्यसूत्रस्य विज्ञानभिक्षुः, गौतमसूत्रस्य वात्स्यायनः, कणादसूत्रस्य प्रशस्तपादः। मीमांसासूत्रस्य शबरस्वामी इत्यादयः। "अहस्य भाष्यकारस्य कृपाप्रीयधियाहुभौ। नैव शब्दाम्बुधेः पारं किमन्ये जडबुद्धयः" दुर्गसिंहः नैव न इव गतवन्ताविन्त्यर्थः। क्विप् ह्रत॰। भाष्यकर्तरि च।

**भास** दीप्तौ भ्वा॰आत्म॰सक॰सेट्। भासते अभासिष्ट। चङि वा ह्रस्वः। अबीभसत् त अबभासत् त। ज्ञानविषयत्वे च "प्रकारीभूय भासते"। [मेदि॰ ३इच्छायां धर्षणे।

**भास्** स्त्री भास–सम्प॰भावे क्विप्। १प्रभायाम् अमरः २मयूखे

**भास** पु॰ भास–भावे घञ्। १दीप्तौ विश्वः आधारे घञ् २गोष्ठे। कर्त्तरि अच्। ३कुक्कुटे ४गृध्रे च ५शकुन्तव्यभ्रपगे हेमच॰ "यस्तार्थमददत् वस्तु भासः काकोऽथवा भवेत्" स्मृतिः। ६कविभेदे "भासो हासः कविकुलगुरुः कालिदासो विलासः" प्रसन्नरा॰।

**भासद्** न॰जसदः कटिदेशस्थे दस अण्। नितम्बे यजु॰१०।१६ भाष्यम्। यजु॰२५।३ वेददीपे तु भासेते भास–बा॰अदि। भासदु दान्तः तदर्थे इत्युक्तम्।

**भासन्त** पु॰ भास–झच्। १सूर्य्ये २चन्द्रे उणा॰ ४नक्षत्रे हेमच॰। ५सुन्दराकारे त्रि॰ ६भासपक्षिणि पुंस्त्री॰ मेदि॰। ७तारायां स्त्री गौरा॰ ङीष्।

**भासस्** न॰ भास–भावे असुन्। दीप्तौ द्विरूपकोषः।

**भासाकेतु** पु॰ भास–भावे अ। भासा दीप्तिः केतुः इव॰, दीप्तिकारके वह्नौ ऋ॰ १०।२०।३।

**भासापुर** न॰ पुरभेदे इ॰स॰ १६अ॰।

**भासु** पु॰ भास–उण्। सूर्य्ये त्रिका॰।

**भासुर** त्रि॰भास–घुरच्। १दीप्तिशीले २स्फटिके च त्रिका॰ ३वीरे पु॰ धरणिः ४कुष्ठौषधे न॰ शब्दार्थ॰। [(विषादि) राजनि॰।

**भासुरपुष्पी** स्त्री॰ भासुराणि पुष्पाण्यस्याः। वृश्चिकाली

**भास्कर** पु॰ भासं करोति भास्+कृ–टच् कस्का॰। १सूर्य्ये

२अग्नौ मेदि०३वीरे धरणिः। ४अर्कवृक्षे ५सिद्धान्तशिरोमणिग्रन्थकर्तृपण्डिते। ६स्वर्णे न० राजनि०। ७महादेवे पु० भा० आनु० ८अ०। ८भास्करेण कृते पक्वलवणभेदे न० चक्रदत्तः। भास्करलवणशब्दे दृश्यम्।

**भास्करद्युति** पु० भास्करे द्युतिरस्य। १विष्णौ पु० "चन्द्रांशुर्भास्करद्युतिः" विष्णुस०। "यदादित्यगतं तेज" इत्युक्तेस्तस्य तथात्वम्। ६त०। २सूर्य्यस्य द्युतौ स्त्री।

**भास्करप्रिय** पु० ६त०। पद्मरागमणौ (चुनि)।

**भास्करलवण** न० भास्करनिर्मिते लवणभेदे "पिप्पली पिप्पलीमूलं धन्याककृष्णजीरकम्। सैन्धवञ्च विडञ्चैव पत्रं तालीशकेशरम्। एषां द्विपलिकान् भागान् पञ्चसौवर्चलस्य च। मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम्। त्वगेले चार्द्धभागे च सामुद्रात् कुडवद्वयम्। दाड़िमात् कुड़वञ्चैव द्वे पले चाम्लवेतसात्। एतच्चूर्णीकृतं सूक्ष्मं गन्धाढ्यममृतोपमम्। लवणं भास्करं नाम भास्करेण विनिर्मितम्। जगतस्तु हितार्थाय वातश्लेष्मामयापहम्। वातगुल्मं निहन्त्येतद्वातशूलानि यानि च। तक्रमस्तुसुरासीधुशुक्तकाञ्जिकयोजितम्। जाङ्गलानान्तु मांसेन रसेषु विविधेषु च। मन्दाग्नेरश्नतः शक्तो भवेदाश्वेव पावकः। अर्शांसि ग्रहणीदोषकुष्ठामयभगन्दरान्। हृद्रोगमामदोषांश्च विविधानुदरस्थितान्। प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन्। विशेषतः शर्करादीन् रोगान्नानाविधांस्तथा। पाण्डुरोगांश्च विविधान् शमयत्यशनिर्यथा" चक्रद०।

**भास्करावर्त्त** पु० सुश्रुतोक्ते शिरोरोगभेदे "सूर्य्योदयं या प्रतिमन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढ़म्। विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनिवर्त्तते च। शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च। तं भास्करावर्त्तमुदाहरन्ति सर्वात्मकं कष्टतमं विकारम्"। [२मुनिभेदे भा० शा० ४७ अ०।

**भास्करि** पु० भास्करस्यापत्यम् इञ्। १वैवस्वते मनौ २कर्णे च।

**भास्करेष्टा** स्त्री ६त०। आदित्यभक्तालतायां राजनि०।

**भास्मन** त्रि० भस्मनो विकारः अण् अनन्तत्वात् न टिलोपः। भस्मविकारे।

**भास्मायन** पु० भस्मनो गोत्रापत्यम् फञ्। भस्मर्षिगोत्रापत्ये ततः स्वार्थे अण् स्त्रियां ञ्र भास्मायन्या तस्यार्थे स्त्री

**भास्वत्** पु० भास्+अस्त्यर्थे मतुप् मस्य वः। १सूर्य्ये २अर्कवृक्षे ३वीरे मेदि० ४दीप्ते त्रि० हेमच०। स्त्रियां ङीप् सा च ५नद्यां श०र० ६उषसि च स्त्री निघण्टुः। ७ज्योतिषनिबन्धभेदे स्त्री यत्र सूर्य्यग्रहचारादिनिरूपणमस्ति।

**भास्वर** त्रि० भास-वरच्। १दीप्तियुक्ते २सूर्य्ये ३अग्नौ मेदि० ४दिने ५अर्कवृक्षे च पु०। ६कुष्ठौषधे (कुड़) न० राजनि० ७स्कन्दानुचरभेदे पु० भा० श० ४६ अ०।

**भिक्ष** लाभे लाभाभावोक्तौ सक० याचने द्विक० क्लेशे अक० भ्वा० आत्म० सेट्। भिक्षते अभिक्षिष्ट बिभिक्षे।

**भिक्षा** स्त्री भिक्ष-अ। १याच्ञायाम् अमरः। २सेवायां ३भृतौ च मेदि०। उपचारात् ४भिक्षिते वस्तुनि। तत्र ब्रह्मचारिभिक्षाप्रकारः ब्रह्मचर्य्यशब्दे ४५८६ पृ० उक्तः। तस्या दानावश्यकत्वम् प्रमाणं च आ०त० मार्कपु० उक्तं यथा "भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा। अदत्त्वा नैव भोक्तव्यं यथाविभवमात्मनः। ग्रासप्रमाणा भिक्षा स्यात् अग्रं ग्रासचतुष्टयम्। अग्राच्चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः"। ग्रासं पलमात्रमिति नव्यवर्द्धमानः। भिक्षाया दानपात्राणि उक्तानि विष्णुपु० "दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम्। इच्छया तु नरो दद्यात् विभवे सत्यवारितम्। इत्येतेऽतिथयः प्रोक्ताः संप्राप्ता भिक्षुकाश्च ये। चतुरः पूजयन्नेतान् नृयज्ञऋणात् प्रमुच्यते"। चकारः पूर्वोक्तातिथिभोजनेन समुच्चयार्थः। सन्यासिभिक्षादाने तु "यतिहस्ते जलं दद्यात् भैक्ष्यं दद्यात् पुनर्जलम्। तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम्"। विष्णुधर्मोत्तरे "चाण्डालो वाथ पापो वा शत्रुर्वा पितृघातकः। देशकालात्ययगतो भरणीयो मतो मम" विष्णुपु०। "व्याधितस्यान्नहीनस्य कुटुम्बात् प्रच्युतस्य च। अध्वानं वा प्रपन्नस्य भिक्षाचर्य्यं विधीयते"। अत्र भिक्षाप्रदाने भोजननिषेधात् मनुष्ययज्ञस्य नित्यत्वाच्च अतिथिप्राप्तेरनित्यत्वात् यज्ञसिद्धये ब्राह्मणमात्राय भिक्षादिदानमावश्यकम्। अतएव बौधायनः "अहरहर्ब्राह्मणेभ्योऽन्नं दद्यात् आमूलफलशाकेभ्यः अथैवं मनुष्ययज्ञसमाप्नोति"। विष्णुः "भिक्षुकाभावे चाग्रं गोभ्यो दद्यात् अग्नौ वा क्षिपेत्"।

**भिक्षाटन** न० भिक्षार्थमटनम्। भिक्षार्थे गमने तस्य सायं प्रातश्च निषेधो यथा "सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत्" कूर्मपु० १५ अ०।

**भिक्षादि** पु० "समूहार्थे भिक्षादिभ्योऽण्" पा० उक्ते अण्प्रत्ययनिमित्ते शब्दगणे स च गणो यथा "भिक्षा गर्भिणी

भिण्ड पुंस्त्री० भण–ड पृषो०। कराङ्गतिरक्तवर्णपर्णे वर्त्तुलाकारबीजे क्षुपभेदे। स्त्रीत्वे टाप् राजनि० गौरा० ङीष् तत्रार्थे [भिण्डीक्षुपे राजनि०।

भिण्डीतक पु० भिण्डी सती तकते तक–हासे अच्।

भित्त न० भिद–क्त नि० तस्य न नः। खण्डे अमरः।

भित्ति स्त्री भिद–क्तिन्। १गृहादेः कुड्ये (देयाल) २प्रभेदे शब्दरत्ना०। ३अवकाशे ४संविभागे विश्वः। स्वार्थे क। तत्रार्थे संज्ञायां कन्। पल्ल्यां हेमच०।

भित्तिचोर पु० भित्त्या कुड्यादिभेदनेन चोरयति चुर-अच्। (सिँधेल) सन्धिभेदकचौरे।

भित्तिपातन पुंस्त्री० भित्तिं कुड्यं पातयति भेदनेन पाति–ल्यु। महामूषिकभेदे राजनि० स्त्रियां जातित्वात् ङीष्।

भिद द्विधाकरणे विशेषकरणे च रुधा०उभ० सक० अनिट्। भिनत्ति भिन्ते इरित् अभिदत् अभैत्सीत् अभित्त। बिभेद बिभिदे। भिन्नः। भेत्ता।

भिद क्लेदकरणे भ्वा०पर०सक०सेट् इदित्। भिन्दति अभिन्दीत्

भिद् स्त्री भिद्–सम्प० भावे क्विप्। १भेदे २विशेषकरणे च। कर्त्तरि क्विप्। ३भेत्तरि त्रि०।

भिदक न०भिद–कुन्। वज्रे १हीरके। २खड्गे उणा०को०

भिदा स्त्री भिद–भावे अङ्। १विदारणे द्वैधीकरणे २विशेषकरणे च।

भिदादि स्त्री अङ्प्रत्ययनिर्द्दिष्टे शब्दगणे स च गणः पा० ग० उक्तो यथा "भिदा छिदा विदा क्षिपा गुहा श्रद्धा मेधा गोधा आरा हारा कारा (बन्धनस्थाने) क्षिपा तारा (ज्योतिषि) धारा रे(ले)खा चूड़ा पीड़ा वपा वसा मृजा कृपा। अत्र छिदा द्वैधीकरण एवान्यत्र छित्तिः। आरा शस्त्र्यामन्यत्र आर्त्तिः। धारा जलप्रवाहेऽन्यत्र धृतिः। गुहा गिर्य्योषध्योः अन्यत्र गूढ़िरिति बोध्यम्"।

भिदि पु० भिद–कि। वज्रे द्विरूपको०।

भिदिर न० भिद–किरच्। वज्रे त्रिका०।

भिदु न० भिद–कु। वज्रे त्रिका०।

भिदुर न० भिद–कुरच्।१स्वयंभेदनशीले अमरः। २प्लक्षवृक्षे राजनि०।तस्य शौधभेदकाङ्कुरवत्त्वात् तथात्वम्।

भिदेलिम त्रि० भिद–कर्मकर्त्तरि केलिम। स्वयं भिद्यमाने।

भिद्य पु० भिद–कर्त्तरि क्यप् नदे नि०। नदे हेमच०।

भिद्र न० भिद–रक्। वज्रे त्रिका०।

भिन्दिपाल पु० भिदि·विदारणे इन् भिन्दिं भेदनं पालयति पालि-अण्। १हस्तक्षेप्ये नालिकास्त्रे, अमरटीकायां भरतः। हस्तप्रमाणे अस्त्रभेदे क्षीरस्वामी। हेमा० प० तल्लक्षणमन्ययोक्तं यथा "भिन्दिपालस्य लक्षणं प्रोच्यते तस्य य आयामो यत्प्रमाणं दण्डस्य च यः परिणाहो यत्संस्थानं दूर्व्यादिप्रमाणं यच्छणमोक्षौ दुष्टादुष्टाश्च गतयस्तत्सर्वं यथोक्तं वक्ष्यामि वत्स! निबोध। तत्र भिन्दिपालस्य दण्डः फलाचितः सप्तहस्तो ज्येष्ठो भवति द्वादशाङ्गुलहीनो मध्यमो वितस्तिहीनस्तु कनिष्ठो मानतः स्याद्दण्डस्य सप्ताङ्गुलपरिणाहः श्रेष्ठो भवति मध्यमो द्व्यङ्गुलहीनस्त्र्यङ्गुलहीनश्च कनिष्ठो भवति मूले परीणाहो ग्राह्यः स च गोपुच्छवत् वेदितव्यो दण्डार्थं पुनः कूटजहत्त्वजं वैणवं भद्रसिंहकं कदम्बकं वा दारुमयं वा कारयेत् तन्मया हि दण्डा दृढ़ाः ऋजुः कालाकुलोल्लासकारिणः कलमषा विवर्द्धयन्ति चतुस्त्रिंशद्वका अवनोदकारकानमोक्षनष्टा पूर्वभारपरीक्षमाश्च भवन्ति ते नित्यं दण्डेषु कुशलैः शुभलक्षणा विज्ञेया दण्डस्योपरि पत्रं कर्णिकासंस्थानं प्रयोजयेत् कर्णिका च द्व्यङ्गुलोत्सेधा षड़ङ्गुला च लेख्या स्यात् यथा दण्डपरीणाहं वलित्यां कारयेत् सौवर्णं रजतमयं वा कांस्यं वा ताम्रं वा लौहमयं शाङ्गं जातमस्थिजं योजयेत् तदालाभे तु वैणवं दृढं वा विदध्यात् भिन्दिपालफलन्तु विंशत्यङ्गुलप्रमाणं भवति निस्त्रिंशसदृशम् पीतं सुनिशितधारमुत्तमं कुर्वीत अष्टादशाङ्गुलप्रमाणं मध्यं षोड़शाङ्गुलप्रमाणं नीचं निर्दिष्टं तत्र यावत्यः फलपत्रपुष्पाणां योनयो दृश्यन्ते तावत्यो भिन्दिपालफलकाः, कर्त्तव्या तथा विस्तारे त्र्यङ्गुलमूले वोच्छ्रायमहदङ्गोर्द्धमष्टाङ्गुलं दण्डमूलं यावद्वेष्टयेत् पूर्वभागे मध्यान्तादिपातैरित्युत्तमाधममध्यमानां भवेत् दण्डस्य प्रमाणद्विगुणं फलं तस्य गौरवात् भवति तत्राष्टदशाङ्गुलं भिन्दिपालफलाग्रम् ऋजु कार्य्यं पञ्चभिः पञ्चभिः पलैर्वर्द्धितया यावच्छतपलं श्रेष्ठं पलाधिक्येन शतिकः उत्तमः कर्त्तव्यः अशीतिपलोमध्यमः षष्टिपालो नीचः"।

भिन्न त्रि० भिद–क्त। १विदारिते अमरः २सङ्गते ३अन्यार्थे ४प्रस्फुटिते च मेदि०। ५रोगभेदे न०। "शक्तिकुन्तेषुखड्गाग्रविषाणैराशयो हतः। यत्किञ्चित् प्रस्रवेत्तद्धि भिन्नमित्यभिधीयते" भावप्र०। आशयः कोष्ठः।

भिन्नक पु० भिन्नं कं यस्य। बौद्धे त्रिका०। तन्मते विश्वस्य क्षणभङ्गुरत्वेन स्थायिसुखराहित्यात्तस्य तथात्वम्।

भिन्नकूट न० कामन्द० उक्ते बलव्यसनभेदे। तत्र च बल-

व्यसनं नानाविधमुक्तं यथा "उपरुद्धं परिच्छिन्नं विमानितमसमानितम्। असतं व्यथितं श्रान्तं दूरायातं नवागतम्। परिक्षीणापरहितं प्रहतामजवं तथा। आशानिर्वेदभूयिष्ठमन्ततप्राप्तमेव च। कलत्रगर्भं निक्षिप्तमन्तःशल्यं तथैव च। भिन्नगर्भं त्वपसृतमभियुक्तं तथैव च। क्षुद्रमौलाविनिस्रस्तं विशिष्टस्यापि विद्विषा। दूष्ययुक्तं स्वविच्छिन्नं भिन्नविच्छिन्नमेव च। विच्छिन्नविविधासारं शून्यमूलं तथैव च। अस्वामिसङ्घातस्यापि भिन्नकूटं तथैव च। दुष्पार्ष्णिग्राहमन्यच्च बलव्यसनमुच्यते"। भिन्नगर्भमप्यत्र।

**भिन्नक्रम** पु० भिन्नः क्रमो यत्र। वाक्यगते उपक्रमराहित्यरूपे भग्नप्रक्रमाख्ये काव्यदोषभेदे। [कर्कटग्राम् राजनि०

**भिन्नगात्रिका** स्त्री भिन्नं विदारितं गात्रमवयवो यस्याः।

**भिन्नगुणन** न० लीला० उक्ते पूरणभेदे "अंशाहतिश्छेदवधेन भक्ता लब्धं विभिन्ने गुणने फलं स्यात्" उदा०। तत्र दृश्यम्।

**भिन्नपरिकर्म्मन्** न० लीला० उक्ते छेदस्य सङ्कलनव्यवकलनादिरूपाङ्कसंस्काराष्टके परिकर्म्मनृशब्दे दृश्यम्।

**भिन्नभिन्नात्मन्** पु० भिन्नप्रकारः प्रकारे द्वित्वम् तादृश आत्मा यस्य। चणके (छोला) शब्दच०।

**भिन्नयोजनी** स्त्री भिन्नं युज्यतेऽनया युज–करणे ल्युट् ङीप्। पाषाणभेदके वृक्षे राजनि०। [मल्लके सुश्रुतः।

**भिन्नवर्चस्(स्क)** त्रि० भिन्नं वर्चो यस्य वा कप्। द्रवीभूत-

**भिन्नविट्का** स्त्री० भिन्ना विट् मलं यया। १वल्लाख्यलतायां सुश्रुतः। द्रव०। २द्रवीभूतमलके त्रि०। [अमरः।

**भिन्नार्थ** त्रि० भिन्नोऽर्थो वाच्यो यस्य कप्। अन्यपदार्थे

**भियस्** न० भी–बा० असुन्। भये ऋ० १।५२।८। उदा०

**भिरिण्टिका** स्त्री श्वेतगुञ्जायाम् राजनि०।

**भिल** भेदने वा चु० उ०पक्षे तु०पर०सक०सेट्। भेलयति-ते भिलति अबीभिलत् त अभेलीत्।

**भिल्ल** पु० भिल–लक्। म्लेच्छजातिभेदे। (भिल) स च ब्राह्मणकन्यायां तीवराज्जातः। "पुलिन्दमेदभिल्लाश्च" इत्युपक्रमे "एते वै तीवराज्जाताः कन्यायां ब्राह्मणस्य च" पराशरपद्धतिः। [स्त्रियां राजनि०।

**भिल्लगवी** स्त्री भिल्लानां गौरिव अच् समा० ङीष्। गवयजाति

**भिल्लतरु** पु० भिल्लप्रियः तदुपजीव्यत्वात् तरुः। लोध्रे राजनि०

**भिल्लभूषणा** न० भिल्लं भूषयति भूषि–ल्यु। गुञ्जावृक्षे राजनि० तत्फलस्य तेषां भूषकत्वात् तस्य तथात्वम्।

**भिल्लोट** पु० भिल्लप्रियमटम् पत्रं यस्य। लोध्रवृक्षे सुश्रुतः।

**भिल्ली** स्त्री भिल–लक् गौ० ङीष्। लोध्रे राजनि०।

**भिष** रोगप्रतीकारे सौ०पर०सक०सेट्। भेषति अभेषीत्।

**भिषक्प्रिया** स्त्री ६त०। गुडूच्याम् राजनि०।

**भिषग्जित** न० ३त०। औषधे त्रि०।

**भिषग्भद्रा** स्त्री ७त०। भद्रदन्तिकायाम् राजनि०।

**भिषग्मातृ** स्त्री भिषजां मातेव। वासकवृक्षे राजनि०।

**भिषज्** चिकित्सायां कण्ड्वा०प०सक०सेट्। भिषज्यति अभिषजी(ज्यी)त्।

**भिषज्** पु० बिभेत्यस्मात् रोगः "भियः षुक् ह्रस्वश्च" उणा० कर्म्मणि कण्ड्वा० भिषज–क्विप् वा। १चिकित्सके। २विष्णौ पु०। तस्य संसाररोगहारित्वात् "भीषास्माद्वातः पवते" इत्यादिश्रुत्या सर्वेषां भीतिजनकत्वाद्वा तथात्वम्। ततः अपत्ये गर्गा० यञ् भैषज्य वैद्यपुत्रे स्त्रियां ङीप् यलोपः भैषजी। भिषजो भावः अण् "भेकजात्र" पा० निर्द्देशात् षुणः न वृद्धिः। भेषज चिकित्सायाम् न०। ततः स्वार्थे ष्यञ्। भैषज्य न० तत्रार्थे।

**भिष्णज्** उप० सेवायां कण्ड्वा० प०सक०सेट्। भिष्णज्यति अभिष्णजी(ज्यी)त्।

**भिस्सटा** स्त्री भिस्सामन्नं टीकते टीक–ड पृषो०। दग्धान्ने अमरः। पृषो०। भिस्सटा भिस्सिटा भिस्सिकाप्यत्र पाठान्तराणि।

**भिस्सा** स्त्री भिदु–क्विप् सो–क पृषो० दस्य सः। अन्ने अमरः

**भी** भये जु०पर० अक०अनिट्। बिभेति अभैषीत् बिभयाञ्चकार बिभयाम्बभूव बिभयामास चकार बिभाय। भीरुः भीतः। एतद्योगे भीत्रार्थानां भयहेतुः" पा० भयहेतोरपादानता। व्याघ्रात् भीतः।

**भी** भये अक० भरणे सक० क्र्यादि० वा प० पर० अनिट् भीनाति भिनाति। अभैषीत्।

**भी** स्त्री भी–सम्प० क्विप्। भये अमरः।

**भीणी** स्त्री कुमारानुचरमातृभेदे भा०श० ४७अ०।

**भीत** न० भी–भावे कर्त्तरि वा क्त। १भये २तद्युते त्रि०। ३मन्त्रभेदे पु० "शिवो वा शक्तिरथ वा भीताख्यः स प्रकीर्त्तितः" तन्त्रसारः

**भीति** स्त्री भी–क्तिन्। १भये अमरः। २कम्पे च त्रिका०।

**भीम** त्रि० बिभेत्यस्मात् भी–अपादाने मक्। १भयहेतौ २भयानकरसे अमरः। ३महादेवे ४भीमसेने ५अम्लवेतसे च पु० मेदि०। ६परमेश्वरे पु० तस्य "भीषास्माद्वातः पवते" इत्यादिश्रुतेः सर्वेषां भयहेतुत्वात् तथात्वम्। महादेवस्याष्टमूर्त्ति मध्ये आकाशरूपे मूर्त्तिभेदे

श्वेरञ्जितान्याहुः खञ्जनाभाद्दतान्यपि"। "वर्णैः श्वेतादिभिर्भूतवर्णैरजोभिरञ्जितानीति पदार्थादर्शः। तत्रैतद्व्याख्या विस्तरेण द्रष्टव्या। मन्त्रमहोदधौ तेषां स्पष्टं स्वरूपं कर्मविशेषे विनियोगश्चोक्तो यथा "अर्द्धचन्द्रनिभं पार्श्वद्वये पद्मद्वयाङ्कितम्। जलस्य मण्डलं प्रोक्तं प्रशस्तं शान्तिकर्मणि। त्रिकोणं स्वस्तिकोपेतं वह्नेस्तु मण्डलम्। चतुरस्रं वज्रयुक्तं स्वर्णं भूमेस्तु मण्डलम्। वृत्तं दिवस्तु विद्वेषे विन्दुषट्काङ्कितं तु तत्। वायुमण्डलमुच्चाटे मारणे वह्निमण्डलम्"।

**भूतमारिन्** पु० भूतान् पिशाचान् मारयति अपसारयति मृ-णिच्-णिनि। चिड़ानामगन्धद्रव्ये राजनि०।

**भूतयज्ञ** पु० भूतानि प्राणिनो वायसादीन् उद्दिश्य यज्ञो बलिः। नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गते बलिवैश्वदेवकर्मणि "भूतेभ्यो बलिहरणं भूतयज्ञः" हारीतस्मृतिः।

**भूतयोनि** स्त्री ६त०। भूतानामाकाशादीनां कारणे परमेश्वरे वेदान्तोप०। [भूमेरधोभागे।

**भूतल** न० भूरेव तलम्। १पृथिव्याम्। ६त०। २पाताले

**भूतलिका** स्त्री भूतलं पातालं मूलत्वेनास्त्यस्याः ठन्। पृक्कायाम् (पिड़िङ्शाक) राजनि० बहुदूरगमूलत्वात्तस्यास्तथात्वम्।

**भूतलिपि** स्त्री ६त०। भूतदैवत्ये वर्णभेदे "वाय्वग्निभूजलाकाशाः पञ्चाशल्लिपयः क्रमात्। पञ्च ह्रस्वाः पञ्च दीर्घाः बिन्द्वन्ताः सन्धिसम्भवाः। पञ्चशः कादयः पञ्चयवहान्ताः प्रकीर्त्तिताः" शा० ति०। कुलाकुलचक्रशब्दे २१२४पृ० दृश्यम्।

**भूतलोन्माद** पु० दानवभेदे हरिवं० २४अ०।

**भूतवर्ण** पु० ६त०। ध्येये भूतानां श्वेतादिवर्णे यथोक्तं शा०ति० "स्वच्छं वियन्मरुत्कृष्णो रक्तोऽग्निर्विशदं पयः। पीता भूमिः पञ्चभूतान्येकैकाधारतो विदुः"। "स्वच्छं श्वेतं तत्र वैशद्यस्वच्छपिङ्गलानां वर्णकथनमुपादानार्थं स्वच्छस्वानुरोधेन" राघवः। भूतदैवते ह्रस्वदीर्घबिन्द्वन्ते वर्णादिवर्णे च। भूतलिपिशब्दे कुलाकुलचक्रशब्दे च दृश्यम्।

**भूतवास** पु० ७त०। (बयड़ा) विभीतकवृक्षे। भूतावासादयोऽप्यत्र [यत्र। अपस्माररोगे राजनि०

**भूतविक्रिया** स्त्री भूतानां तदाविशिष्टानामिव विक्रिया

**भूतविद्या** स्त्री भूतादिनिवारणार्था विद्या। सुश्रुतोक्ते देवाद्युपसर्गोपशमार्थं बलिहरणादौ "भूतविद्या नाम देवासुरगन्धर्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्मबलिहरणादि ग्रहोपशमनार्थम्" सा च तत्र उत्तरतन्त्रे दर्शिता "ब्रह्मविद्या क्षत्रविद्या नक्षत्रविद्या भूतविद्या सर्पविद्या" छा० उ०। [पिशाचिकायाम् अमरः।

**भूतवेशी** स्त्री भूतानामिव वेशोऽस्याः गौरा० ङीष्। श्वेत-

**भूतब्रह्मन्** पु० भूतः पिशाच इव ब्रह्मा। देवले ब्राह्मणे।

**भूतशुद्धि** स्त्री० भूतानां देहारम्भकपृथिव्यादीनां शुद्धिर्भावनाविशेषात् शोधनम्। तन्त्रादौ प्रसिद्धे देहारम्भकचतुर्विंशतितत्त्वानां भावनाविशेषेण संस्कारेण देवरूपतासम्पादने। भूतशुद्धिप्रकारस्तन्त्रसारे उक्तो यथा गौतमीये "सुषुम्नावर्त्मना सोऽहमिति मन्त्रेण योजयेत्। ब्रह्मरन्ध्रे शिवे स्थाने परमात्मनि देशिकः। धूम्रवर्णं ततो वायुबीजं(यं) षड्बिन्दुलाञ्छितम्। पूरयेदिड़या वायुं सुधीः षोडशमात्रया। मात्रया तु चतुःषष्ट्या कुम्भयेत् सुषुम्नया। द्वात्रिंशन्मात्रया मन्त्री रेचयेत् पिङ्गलाख्यया। पूरयेदनया चैव संचिन्त्य नीलमारुतम्। रक्तवर्णं वह्निबीजं (रं) त्रिकोणं स्वस्तिकान्वितम्। तेन पूरकयोगेन मात्रया षोड़शाख्यया। चतुःषष्ट्या मात्रया च निर्दहेत् कुम्भकेन च। वामपार्श्वस्थितं पापपुरुषं कज्जलप्रभम्। ब्रह्महत्याशिरस्कञ्च स्वर्णस्तेयभुजद्वयम्। सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम्। तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम्। उपपातकरोमाणं रक्तश्मश्रुविलोचनम्। खड्गचर्मधरं क्रुद्धमेवं कुक्षौ विचिन्तयेत्। मूलाधारोत्थितेनैव वह्निना निर्दहेत्तु तम्। एवं सन्दह्य परितो द्वात्रिंशन्मात्रया ततः। भस्मना सहितं मन्त्री रेचयेदिड़या पुनः। शशिनाड्यां चन्द्रबीजं (ठं) कुन्देन्दुधवलप्रभम्। भालेन्दुबीजे संयोज्य ततः षोडशमात्रया। सुषुम्नया चतुःषष्टिमात्रया तोयबीजकम् (वं)। ध्यात्वाऽमृतमयीं वृष्टिं पञ्चाशद्वर्णरूपिणीम्। तया देहं विरचय्यैवं मनसा पिङ्गलाध्वना। द्वात्रिंशन्मात्रया मन्त्री लंबीजेन दृढं नयेत्। स्वस्थाने हंसमन्त्रेण पुनश्चैव वर्त्मना। जीवं तत्त्वानि चानीय स्वस्थाने स्थापयेत् ततः। इति कृत्वा भूतशुद्धिं प्राणस्थापनमाचरेत्"। ततो हंस इति बीजं हृदयमानीय कुण्डलिनीं पृथिव्यादीनि च यथास्थाने स्थापयेत्। विशेषतस्तु शक्तिविषये। हंस इति जीवादिकं परशिवे संयोज्य सोऽहमिति मन्त्रेण स्थाने नयेत्। तन्त्रान्तरे "सोऽहमेवं

समानाय्य जीवं हृदि समानयेत्”। शूद्रे तु विशेषो वाराहीतन्त्रे “हंसाख्यं न चरेत् शूद्रो भूतशुद्धौ कदाचन। चरणात्तरकं याति दीक्षा च विफला भवेत्”। शारदायाम् “जीवं तेजोमयं ध्यात्वा नमो मन्त्रेण योजयेत्”। भूतशुद्धिपदव्युत्पत्तिमाह विशुद्धेश्वरे “शरीराकारभूतानां भूतानां यद्विशोधनम्। अव्ययब्रह्मसंयोगात् भूतशुद्धिरियं मता” वाराहीये “मूलाधारात्ततो वीजं ब्रह्ममार्गेण देशिकः। हंसेन पुष्करस्थाने परमात्मनि योजयेत्”। ब्रह्ममार्गः सुषुम्णा। त्रिपुरासारसमुच्चये “संयोज्य वीजमथ दुर्गमसध्यनाडी-मार्गेण पुष्करनिविष्टशिवे सुसूक्ष्मे”। ज्ञानार्णवे “प्राणप्रतिष्ठया पश्चात् जीवं देहे निधापयेत्। सुखहत्त्व समुच्चार्य्य हंसस्तु विपरीतकः। उच्चरेत् परमेशानि! विद्येयं खेचरी मता। प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्माणि साधयेत्। तेनैव विधिना देवि! स्थिरीकुर्य्याच्चिरं ततम्”। तारादौ विशेषस्तत्रैव दृश्यः।

**भूतसञ्चार** पु० ६त०। भूतावेशे राजनि०।

**भूतसञ्चारिन्** पु० भूत इव सञ्चरति सम्+चर–णिनि। दावानले शब्दमा०। [हि भाषते”।

**भूतसंप्लव** पु० ६त०। प्रलये “आभूतसंप्लवस्थानममृतत्वं

**भूतसर्ग** पु० ६त०। भूतसृष्टौ स च चतुर्दशविधः यथोक्तं वह्निपु० “ब्राह्मं प्राजापत्यं सौम्यमैन्द्रन्तथैव च। गान्धर्वमथ कौवेरं रक्षःपैशाचमानुषम्। स्थावरं पार्थवं नागं सार्पं शाकुनिकन्तथा। चतुर्दशविधं ह्येतद्भूतसर्गं प्रकीर्त्तितम्” क्लीवत्वमार्षम्।

**भूतसाधनी** स्त्री भूतानि प्राणिनः साधयति अत्र आधारे ल्युट् ङीप्। भूमौ। भूमिं विना जन्तुमात्राणामुत्पत्तेरभावात् तस्यास्तथात्वम् यजु०२६।१ वेददीपः। [राजनि०

**भूतसार** पु० भूत इव कृष्णत्वात् सारोऽस्य। श्योनाकवृक्षे

**भूतहन्त्री** स्त्री भूतान् तद्भयं हन्ति हन-तृच् ङीप्। १वन्ध्याकर्कोट्यां, २श्वेतदूर्वायाञ्च तद्धारणे हि स्त्रीणां प्रजोत्पत्तिरोधकभूतभयनाशः। [राजनि०

**भूतहर** पु० भूतान् हरति अपसारयति हृ-अच्। गुग्गुलौ

**भूतहारिन्** पु० भूतान् हरति स्थानान्तरं नयति हृ-णिनि। देवदारुवृक्षे राजनि०।

**भूतांश** पु० १ऋषिभेदे ऋ० १०।१०६।११ २काश्यपर्षौ निरु० १२।४०। ६त० ३भूतानामंशे च। [जनामख्याते वृक्षे।

**भूताङ्कुश** पु० भूतानां पिशाचानामङ्कुश इवापसारकत्वात्।

**भूतात्मन्** पु० भूतानि पृथिव्यादीनि पञ्च द्रव्याणि आत्मा स्वरूपं यस्य। १देहे भूतानि पञ्च द्रव्याणि भूताः प्राणिनश्च आत्मा स्वरूपं यस्य। २परब्रह्मणि “सर्वं खल्विदं ब्रह्म तज्जलानिति” श्रुतिः। ३सर्वभूतात्मके हिरण्यगर्भे ४विष्णौ ५बटुकभैरवे च ‘भूतात्मा भूतभावनः’ इति तयोः स्तोत्रे।

**भूतादि** पु० ६त०। “परमेश्वरे भूतादिर्निधिरव्ययः” विष्णुस० सांख्यमतसिद्धे २अहङ्कारतत्त्वे “अहङ्कारात् पञ्चतन्मात्राणि” सां०सू०। स्वार्थे क तत्रार्थे।

**भूतारि** पु० ६त०। हिङ्गौ राजनि० तद्गन्धेन हि भूतापसरणमिति तस्य तथात्वम्।

**भूतार्त्त** त्रि० ३त०। पिशाचाविष्टे हेमच०।

**भूतार्थ** पु० भूतः सत्यभूतोऽर्थो यस्य। यथार्थे

**भूताली** स्त्री० भूतानीव अलति पर्य्याप्नोति अल-अच् गौरा० ङीष्। १भूमिपाटल्यां, २भूतत्याञ्च राजनि०।

**भूतावास** पु० भूतानां प्राणिनामावासः अधिष्ठानत्वात्। १विष्णौ, “भूतावासो वासुदेवः” विष्णुस०। “वसन्ति त्वयि भूतानि भूतावासस्ततो हरिः” हरिवं० ६त०। २विभीतकवृक्षे राजनि०।

**भूताविष्ट** त्रि० भूतेनाविष्टः। पिशाचग्रस्ते “भूताविष्टेषु पञ्चाशत् स्वतापस्थासु वै शतम्” ज्यो०त०।

**भूतावेश** पु० ६त०। पिशाचप्रवेशे (भूते पाओया) त्रिका०।

**भूति** स्त्री भू-क्तिन्। १भवने २अणिमाद्यष्टविधैश्वर्य्ये ३शिवाङ्गस्थभस्मनि ४गजवेशे च मेदि० ५भूतृणे ६सम्पत्तौ ७आर्य्यविश्वः ८वृद्धिनामौषधे च राजनि०।

**भूतिक** न०भूत्या सम्पत्त्या कायति कै-क। १भूनिम्बे २कत्तृणे च अमरः। ३यमान्याम् ४चन्दने ५कट्फले हेमच०। पु० वा दीर्घः। भूतीकोप्यत्र त्रिलके भावप्र०। [शब्दमा०।

**भूतिकील** पु० भूतेः सम्पत्तेः कील इव। (खाना) भूमिखाते

**भूतितीर्था** स्त्री कुमारानुचरमातृभेदे भा० श० ४७अ०।

**भूतियुवक** पु०कूर्म्मचक्रस्य वामकुक्षिस्थे देशभेदे मार्कपु०५८अ०

**भूतिलय** पु० तीर्थभेदे भा०व० १२९अ०।

**भूतृण** न० भुव इव तृणं गन्धवत्त्वात् (गन्धवेन) १तृणभेदे रत्नमा० २रोहिषतृणे पु० राजनि०।

**भूतेश** ६त०। १प्रथमाधीशे २परमेश्वरे च भूतेश्वरादयोऽप्यत्र।

**भूतेष्टा** स्त्री ६त०। आश्विनकृष्णचतुर्दश्याम्।

**भूतोड्डामर** न० तन्त्रभेदे।

**भूतोन्माद** पु० भूतकृत उन्मादः। पिशाचकृते उन्मादे।

**भूत्तम** न० भुवि उत्तमम्। सुवर्णे हेमच०।

**भूदरीभवा** स्त्री० भूदर्य्यां भूमिविले भवति भू-अच्। आखु-कर्ण्याम् (उन्दुरकानि) भावप्र०।

**भूदार** पुंस्त्री० भुवं दृणाति खनति दन्तादावर्त्तम् दृ-अण्। शूकरे अमरः स्त्रियां जातित्वात् ङीष्।

**भूदेव** पु० भुवि देव इव। विप्रे अमरः। भूसुरादयोऽप्यत्र

**भूधन** पु० भूरेव धनमस्य। नृपे हेमच०।

**भूधर** पु० भुवं धरति धृ-अच्। पर्वते अमरः।

**भूध्र** पु० भुवं धरति धृ–क। महीध्रे पर्वते हेमच०।

**भूधात्री** स्त्री भुवि जन्या धात्री आमलकी शाक०त०। भूम्या-मलक्याम् राजनि०।

**भूनाग** पु० भुवि नाग इव। उपरसभेदे राजनि०। [राजनि०

**भूनिम्ब** पु० भुवि जन्यः निम्बः शाक०त०। (चिराता) क्षुपभेदे

**भूनिम्बाद्य** न० चक्रदत्तोक्ते औषधभेदे "भूनिम्बकटुका-व्योषमुस्तकेन्द्रयवान् समान्। द्वौ चित्रकात् वत्सक-त्वग्भागान् षोडश चूर्णयेत्। गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत्। कामलाज्वरपाण्डुत्वमेहारु-च्यतिसारनुत्। गुडयोगाद् गुडाम्बु स्याद् गुडवर्षं रसान्वितम्"।

**भूनीप** पु० भुवि जन्यो नीपः शाक०त०। भूमिकदम्बे राजनि०

**भूप** पु०भुवं पाति पा क। भूमिपाले अमरः भूमिपादयोऽप्यत्र।

**भूपति** पु० ६त०। नृपे भूमिपत्यादयोऽप्यत्र।

**भूपद** पु० भुवि पदं मूलं यस्य। १वृक्षमात्रे शब्दच०। २मल्लि-कायां स्त्री० ङीप् अमरः।

**भूपरिधि** पु० ६त०। भूमेः परिधौ तन्मानं सू०सि० उक्तं यथा "योजनानि शतान्यष्टौ भूकर्णो द्विगुणानि तु। तद्वर्गतो दशगुणात् पदं भूपरिधिर्भवेत्" "लम्बज्यान्नस्त्रिजीवाप्तः स्फुटो भूपरिधिः स्वकः"। सि०शि०स्तु प्रकारान्तरेणोक्तं यथा "प्रोक्तो योजनसंख्यया कुपरिधिः सप्ताङ्ग-नागाब्धय ४९६७ स्तद्व्यासः कुभुजङ्गसायकभुवः सिद्धां-शकेनाधिकः १५८१।१/२४। पृष्ठक्षेत्रफलं तथा युग-गुणं त्रिंशच्छरापाहृया ७८५१२•२४ भूमेः कन्दुकजालवत् कुपरिधिव्यासाहतेः प्रस्फुटम्"। [रत्नमा०

**भूपलाश** पु० भुवि पलाशं यस्य। विषघ्नकारके क्षुपभेदे

**भूपाटलि** भुवि ख्याता पाटलिः। भूतालोऽख्ये राजनि०।

**भूपाल** पु०भुवं पालयति पाल-अण् उप०स०। भूपतौ शब्दमा०

**भूपुत्र** पु० ६त०। १मङ्गले २नरकासुरे च। ३सीतायां स्त्री शब्दर० गौ० ङीष्।

**भूपुर** न०भूरिव पुरम्। यन्त्रबहिःस्थे रेखाविशेषविरचयुते भूम्याकारे स्थाने।

**भूपेष्ट** पु० भूपस्येष्टः। राजादनीवृक्षे (पियाशाल) राजनि० तद्वीजस्य चिरञ्जि इति ख्यातस्य राजप्रियत्वात्तथात्वम्।

**भूबदरी** स्त्री भुवि ख्याता बदरी। क्षुद्रकोल्यां राजनि०।

**भूबल** न० नरपतिजयचर्य्योक्ते जयसाधनोपाये बलभेदे "स्वरोदयैश्च चक्रैश्च यत्नुयत्न बलोऽधिकः। तत्र युद्धे बलं ज्ञेयं भूबलानां जयार्थिनाम्। तेषां नामानि वक्ष्ये-ऽहं ख्यातानि अष्टयामले। चतुरशीतिसंख्यानां चतु-र्बलेन जयी रणे। उड्डी कालञ्जरी पूर्णा काम्या कोट्टी कवीरिका। पिबोत्था च महाभारो क्षेत्रपालो च संयता। रुद्रकालानलं प्रोक्तं कालरेखा निरा-नया। जयन्त्योर्मेढ्राकर्ज्जोलया त्रिविधभैरवी। बाला योगेश्वरी चण्डी व्यामाव्यभूकरेश्वरी। चामुण्डी सिंहली लक्ष्मी महामाया महेश्वरी। देवकोटी शिवा प्रत्यक्षरा माला वराटिका। त्रिकूटा मतुबरी धर्मा ख्याता हृष्टाख्याऽप्यया। दुर्गती शबरा गौरी काली नरहरी ख्याता। खेचरी भूचरी गुह्या द्राद्वी त्रिटि-कोपला। त्रैलोक्यविजया काली कराला भद्रा परा। रौद्री च त्रिपुमातङ्गी अभेद्या हवनी शिवा। कङ्काला वर्गभूमिश्च कापाली स्पनिरवानना। चन्द्रार्कविम्बभूमी च पद्मभूराधिलग्नगा। राङ्कलावानली भूमिः स्मर-भूमिर्द्विधा मता। रुद्रलिकालिकाद्यैव राङ्कवाटविष-साधा। चन्द्रः सप्तविधः सूर्य्यश्चतुर्धा योगिनी त्रिधा। कालवेला त्रिभेदा च तिथिनक्षत्रवारगा। इमानि भूबलान्यत्र ज्ञात्वा यः प्रविशेत् रणे। शरयत्नक्ष नश्यन्ति मेघा वातहता यथा। समनाम्नाधिके नास्ति स्वरैश्चक्रैश्च भूबलैः। स्थानसैन्याधिके यत्नो बलविज्ञान-संयुते"। एतद्व्याख्यानि तत्र दृश्यानि।

**भूभर्त्तृ** पु० धारका०। ६त०। भूमिपतौ भूमिभर्त्त्रादयोऽप्यत्र।

**भूभुज्** पु० भुवं भुङ्क्ते भुनक्ति पालयति वा भुज-क्विप्। भूपाले जटा०। [१पर्वते, २भूपाले च मेदि०।

**भूभृत्** पु० भुवं बिभर्त्ति धारयति, पालयति वा भृ क्विप्।

**भूमण्डल** न० ६त०। मण्डलाकारे भूमिभागे।

**भूमन्** पु० बहोर्भावः बहु+इमनिच् "बहोर्लोपो भू च बहोः" इत्यादेशः। १बहुत्वे अतिशये स्वार्थे इमनिच् मात्वत् २अतिशयबहुत्वयुते च। "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासि-

तथ्यः । भूमानं भगवो विजिज्ञासे" छा॰ उ॰ । "यो वै भूमा महत् निरतिशयम् बहुरितिपर्य्यायास्तत् सुखं ततोऽर्वाक् सातिशयत्वादल्पम् । अतस्तस्मिन्नल्पे सुखं नास्ति अल्पानां तृष्णाहेतुत्वात् तृष्णा च दुःखबीजम् । न हि दुःखबीजं ज्वरादि सुखं दृष्टं लोके । तस्माद्युक्तं नाल्पे सुखमस्तीति । अतो भूमैव सुखम् तृष्णादिदुःखबीजत्वासम्भवाद्भूम्नः" भाष्यम् तस्मिन् प्रपाठके च यस्मात् यो भूमा तन्निरूपितं द्रष्टव्यम् ।

**भूमय** त्रि॰ भू+मयट् । १मृदात्मके २छायायां स्त्रिका॰ स्त्री ङीप् ।

**भूमि(मी)** स्त्री भवन्त्यस्मिन् भूतानि भू—मि किच्च वा ङीप् । १पृथिव्याम् २स्थानमात्रे मेदि॰ ३जिह्वायां शब्दच॰ उणा॰ योगशास्त्रोक्ते ४योगिनां चित्तस्यावस्थाभेदे, ५एकसंख्यायाञ्च । पाण्डुसंख्यादितोऽच् समा॰ बहु॰ । द्विभूमः प्रासादः पाण्डुभूमो देशः । योगोक्तभूमयश्च "तस्य भूमिषु विनियोगः" पा॰ सू॰ उक्ताः । "तस्य संयमस्य जितभूमेर्याऽनन्तरा भूमिस्तत्र विनियोगः । नह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते तदभावाच्च कुतः तस्य प्रज्ञालोकः, ईश्वरप्रसादाज्जितोत्तरभूमिकस्य च नाधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः कस्मात् तदर्थस्यान्यत एवावगतत्वात् भूमेरस्या इयमनन्तरा भूमिः" भा॰ । सा च भूमिः सप्तप्रकारा यथोक्तं तत्रैव "तस्य सप्तधा प्रान्तभूमिः प्रज्ञा" पात॰ सू॰ । "तस्येति प्रत्युदितख्यातेः प्रत्याम्नायः सप्तधेति अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति । तद्यथा परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति साक्षात्कृतं निरोधसमाधिना हानम् । भावितो विवेकख्यातिरूपो हानोपाय इत्येषा चतुष्टयी कार्य्या विमुक्तिः प्रज्ञायाः । चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिगुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति । न चैषां विप्रलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुष इत्येतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति सिद्धा भवति विवेकख्यातिर्हानोपायः इति" भा॰ । "प्रत्युदितख्यातेः वर्त्तमानख्यातेः योगिनः प्रत्याम्नायः परामर्शः अशुद्धिरेवावरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति विषयभेदात् प्रज्ञाभेदः प्रकृष्टोऽन्तो यासां भूमीनामवस्थानां तास्तथोक्ता यतः परं नास्ति संप्रकर्षः प्रान्ता भूमयः यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता ता एव सप्तप्रकाराः प्रज्ञाः भूमीः उदाहरति । तद्यथेति तत्र पुरुषप्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति परिज्ञातं हेयं यावत् किञ्च प्राधानिकं तत् सर्वं परिणामतापसंस्कारैर्गुणवृत्तिविरोधात् दुःखमेवेति हेयं तत् परिज्ञातम् । प्रान्ततां दर्शयति नास्य पुनः किञ्चित् परिज्ञातं परिज्ञेयमस्ति । द्वितीयामाह क्षीणा इति । प्रान्ततामाह न पुनरिति । तृतीयामाह साक्षात्कृतं प्रत्यक्षेण निश्चितं यथा संप्रज्ञातावस्थायामेव निरोधसमाधिसाध्यं हानं न पुनरस्मात् परं निश्चेतव्यमस्तीति शेषः । चतुर्थीमाह भावितो निष्पादितः विवेकख्यातिरूपो हानोपायो नास्याः परं भावनीयमस्ति इति शेषः । एषा चतुष्टयी कार्य्यविमुक्तिरिति कार्य्यान्तरेण विमुक्तिः प्रज्ञाया इत्यर्थः प्रयत्ननिष्पाद्याश्चतस्रोऽनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह चित्तविमुक्तिस्तु त्रयी । तत्र प्रथमामाह चरिताधिकारा बुद्धिकृतभोगापवर्गकार्य्येत्यर्थः । द्वितीयामाह गुणा इति प्रान्ततामाह न चैषामिति । तृतीयामाह एतस्यामवस्थायामिति तस्यामवस्थायां जीवन्नेव पुरुषः कुशलो मुक्त इत्युच्यते चरमदेहत्वादित्याह एतामिति । अनौपचारिकं मुक्तमाह प्रतिप्रसवे प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति" विवरणम् ।

पृथिवीरूपभूमिगुणाश्च भा॰ मो॰ उक्ता यथा "भूमेः स्थैर्य्यं गुरुत्वञ्च काठिन्यं प्रसवार्थता । गन्धो गुरुत्वं शक्तिश्च संघातः स्थापना धृतिः" । प्रथमगुरुत्वं पतनविरोधी गुणः द्वितीयगुरुत्वम् पिण्डपुष्टिरतो न पौनरुक्त्यम् । शक्तिः धारणादिसामर्थ्यम् संघातः संश्लिष्टावयवत्वम् । स्थापना मनुष्यादिधारणानुकूलव्यापारः । धृतिर्धारणा इत्यर्थः ।

**भूमिकदम्ब** पु॰ भूमिजातः कदम्बः शा॰ त॰ । कदम्बभेदे "भूमिकदम्बाः कटूष्णाश्च हृद्या दोषहरा हिमाः । कषाय

तिक्ताः पिच्छला वीर्यवृद्धिकरा पराः" राजनि० ।

**भूमिकन्दली** स्त्री भूजाता कन्दली शा०त० । कन्दली-भेदे माघः ६।२०। मल्लि० ।

**भूमिकम्प** पु० ६त० । क्षितिचलने तत्कारणादिकं च फलविशेषं वृ०स० ३२अ० उक्तं यथा

"क्षितिकम्पमाहुरेके वृहदन्तर्जलनिवासिसत्त्वकृतम् । भूभारखिन्नदिग्गजविश्रामसमुद्भवं चान्ये । अनिलोऽनिलेन निहतः क्षितौ पतन् सस्वनं करोत्यन्ये । केचित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्याः । गिरिभिः पुरा सपक्षैर्वसुधा प्रपतद्भिरुत्पतद्भिश्च । आकम्पिता पितामहमाहामरसदसि सव्रीडम् । भगवन्नाम ममैतत् त्वया कृतं यदचलेति तन्न तथा । क्रियतेऽचलैश्चलद्भिः शक्ताहं नास्य खेदस्य । तस्याः सगद्गदगिरं किञ्चित् स्फुरिताधरं विनतमीषत् । साश्रुविलोचनमवलोक्य पितामहः प्राह । मन्युं हरेन्द्र ! धात्र्याः क्षिप कुलिशं शैलपक्षभङ्गाय । शक्रः कृतमित्युक्त्वा मा भैरिति वसुमतीमाह । किन्त्वनिलदहनसुरपतिवरुणाः सदसत्फलावबोधार्थम् । प्रागर्द्धनिशाभागेषु दिननिशोः कम्पयिष्यन्ति । चत्वार्यार्यम्णाद्यान्यादित्यं मृगशिरोऽश्वयुक् चेति । मण्डलमेतद्वायव्यमस्य रूपाणि सप्ताहात् । धूमाकुलीकृताशे नभसि नभस्वान् रजः क्षिपन् भौमम् । विरुजन् द्रुमांश्च विचरति रविरपटुकरावभासी च । वायव्ये भूकम्पे सस्याम्बुवनौषधीक्षयोऽभिहितः । श्वयथुश्वासोन्मादज्वरकासभवा वणिक्पीडा । रूपायुधभृद्वैद्याः स्त्रीकविगान्धर्वपण्यशिल्पिजनाः । पीड्यन्ते सौराष्ट्रककुरुमगधदशार्णमत्स्याश्च । पुष्याग्नेयविशाखाभरणीपित्र्याजभाग्यसंज्ञानि । वर्गो हुतभुजोऽयं करोति रूपाण्यथैतानि । तारोल्कापाताहतमादीप्तमिवाम्बरं सदिग्दाहम् । विचरति मरुत्सहायः सप्तार्चिः सप्तदिवसान्तः । आग्नेयेऽम्बुदनाशः सलिलाशयसङ्क्षयो नृपतिवैरम् । दद्रूविचर्चिकाज्वरविसर्पिकाः पाण्डुरोगश्च । दीप्तौजसः प्रचण्डाः पीड्यन्ते चाश्मकाङ्गबाह्लीकाः । तङ्गणकलिङ्गवङ्गद्रविडाः शबराश्च नैकविधाः । अभिजिच्छ्रवणधनिष्ठाप्राजापत्यैन्द्रवैश्वमैत्राणि । सुरपतिमण्डलमेतद्भवन्ति चास्य स्वरूपाणि । चलिताचलवर्ष्माणो गम्भीरविराविणस्तडित्वन्तः । गवलालिकुलाहिनिभा विसृजन्ति पयः पयोवाहाः । ऐन्द्रं श्रुतिकुलजातिख्यातावनिपालगणपविध्वंसि । अतिसारगलग्रहवदनरोगकृच्छर्दिकोपाय । काशियुगन्धरपौरवकिरातकीराभिसारहलमद्राः । अर्बुदसुराष्ट्रमालवपीडाकरमिष्टवृष्टिकरम् । पौष्णाप्याद्रश्लेषामूलाहिर्बुध्न्यवरुणदेवानि । मण्डलमेतद्वारुणमस्यापि भवन्ति रूपाणि । नीलोत्पलालिभिन्नाञ्जनत्विषो मधुरराविणो बहुलाः । तडिदुद्भासितदेहा धाराङ्कुरवर्षिणो जलदाः । वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम् । गोनर्दचेदिकुकुरान् किरातवैदेहकान् हन्ति । षड्भिर्मासैः कम्पो द्वाभ्यां पाकश्च याति निर्घातः । अन्यानप्युत्पातान् जगुरन्ये मण्डलैरेतैः । उल्का हरिश्चन्द्रपुरं रजश्च निर्घातभूकम्पककुप्प्रदाहाः । वातोऽतिचण्डो ग्रहणं रवीन्द्वोर्नक्षत्रताराग्रहवैकृतानि । व्यभ्रे वृष्टिर्वैकृतं वातवृष्टिर्धूमोऽनग्नौ विस्फुलिङ्गार्चिषो वा । वन्यं सत्त्वं ग्राममध्ये विशेद्वा रात्रावैन्द्रं कार्मुकं दृश्यते वा । सन्ध्याविकाराः परिवेषखण्डा नद्यः प्रतीपा दिवि तूर्यनादाः । अन्यच्च यत् स्यात् प्रकृतेः प्रतीपं तन्मण्डलैरेव फलं निगाद्यम् । ऐन्द्रो वायव्यं वायुश्चाप्यैन्द्रमेवमन्योऽन्यम् । वारुणहौतभुजावपि वेलानक्षत्रजाः कम्पाः । प्रथितनरेश्वरमरणव्यसनान्याग्नेयवायुमण्डलयोः । क्षुद्भयमरकावृष्टिभिरुपताप्यन्ते जनाश्चापि । वारुणपौरन्दरयोः सुभिक्षशिववृष्टिहार्दयो लोके । गावोऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः । पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात् । सद्यः फलति च वरुणो येषु न कालोऽभिनिर्दिष्टः । चलयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् । सलिलपतिरशीतिसंयुतं कुलिशधरोऽभ्यधिकं च षष्टिकम् । त्रिचतुर्थसप्तमदिने मासे पक्षे तथा त्रिपक्षे च । यदि भवति भूमिकम्पः प्रधाननृपनाशनो भवति ।"

भूमिचलनादयोऽप्यत्र । "निर्घाते भूमिचलने" मनु० ।

**भूमिका** स्त्री भूमिरिव कायति कै—क । १रचनायां "वस्त्र-रूपैर्यदन्यस्य प्रवेशस्तत्र भूमिका" इत्युक्ते नाट्ये अभिनेयपात्रादिवेशान्तरस्वरूपे २ग्रन्थे ३वक्तव्यकथोद्घाते ४अवस्थायाञ्च "नैयायिकादिभिरात्मा प्रथमभूमिकायामवतारितः" इति सांख्यप्रवचनभाष्यम् ।

**भूमिकुष्माण्ड** पु० भूमिजातः कुष्माण्डः शा०त० (भुँइ-कुमड़ा) ख्याते लताभेदे रत्नमा० ।

**भूमिखर्जूरिका** स्त्री भूमिजाता खर्जूरिका शा०त० । खर्जूरिकाभेदे "भूमिखर्जूरिका स्वाद्वी दुरारोहा मृदु-

रुदा । अथ स्वल्पफला काककर्कटी स्वादुमस्तका । पिण्डखर्जूरिका त्वन्या सा देशे पश्चिमे भवेत् । खर्जूरी गोस्तनाकारा परद्वीपादिहागता । जायते पश्चिमे देशे सा छोहारेति कीर्त्तिता । खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः । स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु । तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम् । कोष्ठमारुतकृद्बल्यं वान्तिवातकफापहम् । ज्वराभिघातक्षुत्तृष्णाकासश्वासनिवारणम् । मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत् । महतीभ्यां गुणैरल्पा स्वल्पखर्जूरिका स्मृता । खर्जूरीतरुतोयन्तु मदपित्तकरं भवेत् । वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत्" भावप्र० ।

भूमिचम्पक पु० भूमिलग्नः चम्पकः शाक०त०(भूइँचांपा) वृक्षभेदे शब्दच० ।

भूमिज पु० भूमेर्जायते जन-ड । १मङ्गलग्रहे २नरकासुरे मेदि० ३भूमिकदम्बे ४मनुष्ये च राजनि० । ५भूमिजातमात्रे त्रि० । ६सीतायां स्त्री ।

भूमिजगुग्गुलु पु० कर्म० । आशापुरजाते गुग्गुलौ राजनि०

भूमिजम्बु स्त्री ७त० । क्षुद्रजम्ब्वां रत्नमा० वा कप् । तत्रार्थे राजनि० । स्वार्थे क । तत्रार्थे स्त्री अमरः ।

भूमिजीविन् पु० भूमिं तत्कर्षणं जीवति जीव-णिनि । वैश्ये शब्दरत्ना० ।

भूमिञ्जय पु० विराटनृपस्य पुत्रभेदे भा० वि० ३५ अ० ।

भूमिधर पु० भूमिं धरति धृ-अच् । १कुलपर्वते उपचारात् २पर्वतमात्रे । [दयोऽप्यत्र ।

भूमिप पु० भूमिं पाति पा-क । नृपे जटा० । भूमिपाला-

भूमिपक्ष पु० भूमिः पक्ष इवास्य । वाताश्वे हारा० ।

भूमिपति पु० ६त० । भूपतौ भूमिनाथादयोऽप्यत्र ।

भूमिपिशाच पु० भूमौ पिशाच इव । तालवृक्षे जटा० ।

भूमिपुत्र पु० ६त० । १मङ्गलग्रहे २नरकासुरे च भूमिपुत्रादयोऽप्यत्र । ३जानक्यां स्त्री गौरा० ङीष् ।

भूमिप्रविभाग पु० सुश्रुतोक्ते औषधार्थभूमिविभागे "अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः । श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूरोदकां स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्यौषधभूमिपरीक्षाविशेषः सामान्यः । विशेषतस्तु । तत्राश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया स्वगुणभूयिष्ठा । स्निग्धा शीतलाऽऽसन्नोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा । नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा । रूक्षा भस्मरासभवर्णा तनुवृक्षाल्पकोटरवृक्षप्रायाऽनिलगुणभूयिष्ठा । मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा । तत्र केचिदाहुराचार्य्याः प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति तत्तु न सम्यक् कस्मात् सौम्याग्नेयत्वाज्जगतः । सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीताग्नेयान्याग्नेयेष्वेवमव्यापन्नगुणानि भवन्ति । सौम्यान्यौषधानि सौम्येष्वृतुषु गृहीतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते । एतेन शेषं व्याख्यातम् । तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीताग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि । उभयगुणभूयिष्ठायामुभयतोभागानि । आकाशगुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति । सर्वाण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः । सर्वाण्येव सक्षीराणि वीर्य्यवन्ति तेषामसम्पत्तावनतिक्रान्तसंवत्सराण्याददीतेति । भवन्ति चात्र । गोपालास्तापसा व्याधा ये चान्ये वनचारिणः । मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते । सर्वावयवसाध्येषु पलाशलवणादिषु । व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते । गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते । तस्माद्भूमिस्वभावेन बीजिनः षड्रसैर्युताः । अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः । रसः स एव चाव्यक्तो भूमेरेव रसाद्भवेत् । सर्वलक्षणसम्पन्ना भूमिः साधारणी स्मृता । द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः । 'विगन्धेनापरामृष्टमविपन्नं रसादिभिः । नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत् । विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम् । शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम् । जङ्गमानां वयःस्थानां रक्तरोमनखादिकम् । क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत् । प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम् । प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते ।"

**भूमिमण्ड** पु० भूमिं मण्डयति मण्ड–अण् । (छापरमालि) लताभेदे रत्नमा० । [ल्यु । माधवीलतायाम् राजनि० ।

**भूमिमण्डपभूषणा** स्त्री भूमिमण्डप इव तं भूषयति भूषि–

**भूमि(मी)रुह** पु० भूम्यां भूमौ वा रोहति रुह–क । वृक्षे मही्रुहादयोऽप्यत्र । [त्रिका० ।

**भूमिलाभ** पु० भूमिर्लभ्यतेऽत्र लभ-आधारे घञ् । मृत्यौ

**भूमिलेपन** न० भूमिर्लिप्यतेऽनेन लिप–करणे ल्युट् । द्दत० । गोमये हेमच० ।

**भूमिवर्द्धन** पु० भूमिं वर्द्धयति स्वदेहस्य पार्थिवांशोपचयेन वृध-णिच्-ल्यु । शवे मृते हेमच० क्षितिवर्द्धनादयोऽप्यत्र

**भूमिशय** पु० भूमौ शेते शी–अच् । १बालके २भूमौ शयाने त्रि०

**भूमिष्ठ** पु० भूमौ तिष्ठति स्था–क अलु० षत्वम् । भूपृष्ठस्थे ।

**भूमिसत्त्र** न० भूमिदानरूपं सत्त्रं शा०त० । भूमिदानरूपे याग-भेदात्मके सत्त्रे "इक्षुभिः संहितां भूमिं यवगोधूमशालि-नीम् । गोऽश्ववाहनपूर्णां वा बाहुवीर्य्यादुपार्जिताम् । निधिगर्त्तां ददद्भूमिं सर्वरत्नपरिच्छदाम् । अक्षयान् लभते लोकान् भूमिसत्त्रं हि तस्य तत्" भा०अनु० ६२ अ० ।

**भूमिसम्भवा** स्त्री भूमिः सम्भवोऽस्याः । १सीतायां जटा० । २मङ्गलग्रहे ३नरकासुरे पु० । ४भूमिजातमात्रे त्रि० ।

**भूमिसेन** पु० दशममनोःपुत्रभेदे मार्क०पु० ९४अ० ।

**भूमिस्तोम** पु० एकाहसाध्ये यज्ञभेदे आश्व० ९.५.२ ।

**भूमिस्पृश्** पु० भूमिं स्पृशति स्पृश–क्विन् । १वैश्ये २मनुष्ये ३चौरभेदे मेदि० । ४खञ्जे ५अन्धे च शब्दरत्ना० ।

**भूमी** स्त्री भू-मि किच्च ङीप् । १कण्ठ्यस्पृष्टिकायां विषापहनन-हेतुतया सात्र सुश्रुते उक्ता "भूमी कुष्टवकस्यैव गण एकसरः स्मृतः । एकशो द्विस्त्रिशो वापि प्रयोक्तव्यो विषापहः" ।

**भूमीच्छा** स्त्री भूमौ तत्पतने इच्छा । भूमिपतनेच्छायाम् ।

**भूमीन्द्र** पु० भूमौ इन्द्र इव । नृपे शब्दर० ।

**भूमीसह** पु० भूमीं सहते सह–अच् । (भुरवर) वृक्षभेदे "भूमीसहस्तु शिशिरः रक्तपित्तप्रसादनः" भावप्र० ।

**भूम्यनन्तर** पु० भूमेरनन्तरः । स्वविषयसन्निष्टदेशस्थे नृपाणां शत्रौ कामन्द० ८५८ ।

**भूम्य** त्रि० भूमिमर्हति यत् । धराहें ऋ० ५।४।११० ।

**भूम्यामलकी** स्त्री भूमिलग्ना आमलकी शाक०त० । स्वनाम-ख्याते क्षुपे राजनि० । "स्यात् भूम्यामलकी तिक्ता कषाया मधुरा हिमा । पिपासाकासपित्तास्रकफकण्डूक्षतव्रण-प्रणुत्" भावप्र० ।

**भूम्यामली** स्त्री भूम्या सह आमलति सम्बध्नाति आ+मल अच् गौ० ङीष् । भूम्यामलक्याम् राजनि० ।

**भूम्याहुल्य** न० क्षुपभेदे (भूजातखड्) राजनि० । शब्दरत्ना०

**भूयस्** अव्य० भुवे भावाय यस्यति यस–भावे क्विप् । पुनरर्थे

**भूयस्** त्रि० अतिशयेन बहुः ईयसुन् । "बहोर्लोपो भू च बहोः" ईलोपः भूरादेशश्च । बहुतरे मेदि० स्त्रियां ङीप् ।

**भूयशस्** अव्य० भूयस्+वीप्सार्थे शस् सलोपः । बहुश इत्यर्थे

**भूयिष्ठ** त्रि० अतिशयेन बहुः इष्ठन् भ्वादेशो युक् च । १बहु-तरे २प्रचुरे च ।

**भूयुक्ता** स्त्री भुवा युक्ता संबद्धा । भूमिखर्जूर्य्याम् राजनि०

**भूर्** अव्य० भू–रुक् । अन्तरीक्षलोकादधःस्थे चरणसञ्चार-योग्यस्थाने लोके भूः स्वाहा इदं भूः व्याहृती देवतोद्देशः ।

**भूरि** त्रि० भू-क्रिन् । १विष्णौ २शिवे ३इन्द्रे च मेदि० । ४स्वर्णे न०शब्दरत्ना०बहु-रि आदेशः ५प्रचुरे त्रि०अमरः ६सोमदत्तपुत्रभेदे पु० भा० आ० १८६ अ० । शिवा० अत्यर्थे अण् । भौर भूरेरपत्ये पुंस्त्री० । [द्रव्ये राजनि० ।

**भूरिगन्धा** स्त्री भूरिः प्रचुरो गन्धो यस्याः । मुरानामगन्ध-

**भूरिगम** पु० भूरि भारयुक्तत्वेऽपि बहु गच्छति गम-अच् । गर्दभे राजनि० स्त्रियां जातित्वात् ङीष् ।

**भूरिज्** स्त्री भू-इजि किच्च रपरः । पृथिव्यां त्रिका० ।

**भूरिदक्षिण** त्रि० भूरिर्दक्षिणा यस्य । १बहुतरदक्षिणा-दानयुक्ते २विष्णौ पु० "कपीन्द्रो भूरिदक्षिणः" विष्णु स० ।

**भूरिदुग्धा** स्त्री भूरीणि दुग्धानि निर्यासा यस्याः । वृश्चि-काल्यां राजनि० ।

**भूरिद्युम्न** पु० भूरि द्युम्नं यस्य । नवममनोः पुत्रभेदे हरिवं० ७अ० । मार्क०पु० । भूर्युरिमूथ इति पाठः प्रथमादिकः तदेववाक्यतया भूरिद्युम्न इत्येव तत्र पाठस्यौचित्यात् ।

**भूरिधामन्** पु० नवममनोःपुत्रभेदे हरिवं० ७अ० ।

**भूरिपत्र** पु० भूरीणि पत्राण्यस्य । उमर्कखड्गाख्ये राजनि० ।

**भूरिपलितदा** स्त्री भूरि पलितमिव दापति दै–क । पाण्डुरकद्रवीवृक्षे राजनि० ।

**भूरिपुष्पा** स्त्री भूरीणि पुष्पाण्यस्याः । शतपुष्पायाम् राजनि०

**भूरिप्रेमन्** पु० भूरिः प्रचुरः प्रेमास्य । चक्रवाके राजनि० ।

**भूरिफेना** स्त्री भूरीणि फेनान्यस्याः । (चामकषा) सप्तला-ख्ये अमरः ।

**भूरिबला** स्त्री भूरीणि बलानि यस्याः १अति०२अतिबलायाम्

राजनि०।२प्रचुरबले त्रि०।३इन्द्रतराङ्गुलमेदे पु०भा०प्र०२७अ०

**भूरिमल्ली** स्त्री भूरि बहु यथा स्यात् तथा मलति मल-अच् गौरा० ङीष्। अम्बष्ठायाम राजनि०।

**भूरिमाय** पुंस्त्री० भूरयः माया यस्य। १शृगाले अमरः स्त्रियां योपधत्वात् टाप्। २प्रभूतमायायुते त्रि०

**भूरिमूलिका** स्त्री भूरीणि मूलानि यस्याः कप् टापि अत इत्त्वम्। अम्बष्ठायाम् नैघण्टुप्र०।

**भूरिशस्** अव्य० भूरि-शस्। बहुश इत्यर्थे।

**भूरिश्रवस्** पु० ६ब०। चन्द्रवंश्ये १सोमदत्तसुते नृपभेदे। भा० आ० १८७ अ०। २प्रचुरयशस्के त्रि०।

**भूरिश्रेष्ठिक** पु० भूरयः श्रेष्ठिनो यत्र। (भुरशुट्) गौड़देशस्थे पुरभेदे "गौड़े राष्ट्रमनुत्तमं निरुपमा तत्रापि राढ़ा पुरी भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमोनः पिता" प्रबोधच०।

**भूरिहन्** त्रि० भूरीन् हन्ति हन-क्विप्। १बहुतरनाशके २असुरभेदे पु० भा०आ० २२७ अ०।

**भूरुण्डी** स्त्री भुवं रुण्डति आच्छादयति रुडि-आच्छतौ (माधववृत्तौ पठितः) अच् उप०स०। (हातिशुँड़ा) वृक्षभेदे अमरः। [शब्दमा०

**भूरुह** पु० भुवि रोहति रुह-क ७त०। महीरुहे वृक्षे

**भूर्ज** पु० ऊर्ज-अच् ७त०। स्वनामख्याते वल्कप्रधाने वृक्षे। "भूर्जत्वचः स्पर्शवतीर्दधानाः" कुमा०। "भूर्जः कटुः कषायोष्णः भूतरक्षाकरः परः। त्रिदोषशमनः पथ्यः दुष्टकौटिल्यनाशनः" राजनि०। "कर्णरोगपित्तकफमेदोविषहरश्च सः" भावप्र०।

**भूर्जकण्टक** पुंस्त्री० "व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः" मनूक्ते जातिभेदे स्त्रियां ङीष्।

**भूर्जपत्र** पु० भुवि-ऊर्जं पत्रं यस्य। स्वनामख्याते वृक्षे। भूर्जत्वगादयोऽप्यत्र रत्नमा०।

**भूर्णि** स्त्री भृ-नि नि० अत उत्वं रपरः। पृथिव्यां त्रि० कौ०।

**भूर्लोक** पु० कर्म०। पादवन्नारयोर्मध्यस्थानरूपे लोके।

**भूलग्ना** स्त्री भुवि लग्ना ७त०। शङ्खपुष्प्याम् राजनि०।

**भूलता** स्त्री भुवि लतेव। महीलतायां (केँचो) सरीसृपभेदे हेम०।

**भूलिङ्गशकुनि** पु० भूलिङ्गः शकुनिः कर्म०। विश्वयाविनि पक्षिभेदे "प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा" भा० स० ४१अ०। तद्वृत्तिर्यथा "अत चैषा न ते बुद्धिः प्रकृतिं याति भारत!। यथैव कथितं पूर्वं भूलिङ्गशकुनिर्यथा। भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे। भीष्म! तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः। मा साहसमितीदं सा सततं वाशते किल। साहसं चात्मनातीव चरन्ती नावबुध्यते। सा हि मांसार्गलं भीष्म! मुखात् सिंहस्य खादतः। दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना। इच्छतः सा हि सिंहस्य भीष्म! जीवत्यसंशयम्। तद्वत्त्वमप्यधर्मिष्ठ! सदा वाचः प्रभाषसे भा०स०४४अ०। "भूलिङ्गशकुनिर्यथान्यद्वदत्यन्यत् करोति तद्वत्ते शुद्धं कामयन्ते शकलं वदन्तीत्यर्थः भुवं लिङ्गतीति भूलिङ्गो विलशायी पक्षिविशेषः एवेति पाठे यथा त्वदीया बुद्धिस्त्वदीया त्वद्वत्ते इति योज्यं तदा स्वस्यैव शकुन्युपमत्वम् अर्थविगर्हिताः उक्तिविपरीतक्रियया अर्थो विगर्हितो यासां ताः। वाशते शब्दं करोति। मांसार्गलं दंष्ट्रान्तरलग्नस्य मांसस्य बहिर्निर्गतभागमुल्लोलम् इच्छति इति। सा हि पक्षिणी मृत्युमुखे प्रविष्टापि तदुपेक्षया जीवन्ती यथा लोकानुपदिशति मा साहसमिति तथा त्वमुपदेशकारित्वात् मृत्युमुखे पतितोऽपि मृत्युना उपेक्षितो जीवन्नन्यांश्चोपदिशसि मृत्युमुखे न पतितव्यमिति" नील०।

**भूवलय** न० भुवो वलयमिव। भूमिपरिधौ। [निघण्टुः

**भूशमी** स्त्री भूलग्ना शमी शाक०त०। लघुशम्यां मदनपाल-

**भूशय** पु० भुवि शेते शी-अच् ७त०। १बिलशये नकुलादौ। २विष्णौ च "भूशयो भूषणो भूतिः" विष्णुस०। स हि रामावतारे समुद्रलङ्घनाय सागरोपान्तभूमौ शयित इति तस्य तथात्वम्। [नैघण्टुप्र०

**भूशर्करा** स्त्री भुवि ख्याता शर्करा शा०त०। कन्दभेदे

**भूशेलु** पु० भुवि ख्याता शेलुः शा० त०। भूकर्बुदारके राजनि०।

**भूष** मण्डने वा चु०उभ०पक्षे भ्वा० पर० सक० सेट्। भूषयति ते भूषति अबुभूषत्-त अभूषीत्।

**भूषण** न० भूष्यतेऽनेन भूष-करणे ल्युट्। १अलङ्कारे किरीटादौ। भावे ल्युट्। २भूषायाम्। अलङ्कारभेदाः तत्साधनद्रव्याणि च यथा "किरीटञ्च शिरोरत्नं कुण्डलञ्च ललाटिका। तालपत्रञ्च हारश्च ग्रैवेयकमथोर्मिका। प्रालम्बिका रत्नसूत्रमुत्तरीयं स्वर्णमालिका। पार्श्वद्योतो नखद्योतोऽङ्गुलीत्राणक तथा। कटिबन्धं शाखकश्च मूर्द्धतारा ललन्तिका। पत्रदी

१ब्रह्मणःपुत्रे ऋषिभेदे “भृगित्येव भृगुः पूर्वमङ्गारेभ्योऽङ्गिराऽभवत् । अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् । सह ज्वालाभिरुत्पन्नो भृगुस्तस्मात् भृगुः स्मृतः” भा० अनु० ८५ अ० । “भृगोः ख्यात्यां समुत्पन्ना श्रीः पूर्वमुदधेः पुनः । तथा धाता विधाता च तस्यां जातौ भृगोः सुतौ । आयतिर्नियतिश्चैव मेरुकन्ये महाप्रभो ! । धातुर्विधातुस्ते भार्य्ये तयोर्जातौ सुतावुभौ । प्राणश्चैव मृकण्डुश्च मार्कण्डेयो मृकण्डुतः । ततो वेदशिरा जज्ञे प्राणस्य द्युतिमान् सुतः । ततो वंशो मुनिश्रेष्ठ ! विस्तरं भार्गवो गतः” वह्निपु० । २महादेवे ३शुक्रग्रहे मेदि० । ४गिरिसानौ ५जमदग्नौ हेम० । ६निरवलम्बने पर्वताद्युच्चस्थाने यतः पातेऽवलम्बनं न भवति तस्मिन् अतटस्थाने अमरः । भृगोर्गोत्रापत्यानि अण् बहुषु तस्य लुक् । ७भृगोरपत्येषु ब०व० । ८वरुणापत्ये ऋषिभेदे “भृगुर्वै वारुणिर्वरुणं पितरमुपससार” तैत्ति०उ० ।

भृगुक पु० कूर्म्मचक्रस्य दक्षिणपार्श्वस्थे देशभेदे मार्कपु०५८अ० ।

भृगुकर्ण पु० तीर्थभेदे काशी० ६अ० । [३३अ० ।

भृगुकेशव पु० काशीस्थे भृगुस्थापितकेशवमूर्त्तिभेदे काशी०

भृगुज पु० भृगोर्जायते जन–ड । भार्गवे शुक्राचार्य्ये ।

भृगुतनय पु० ६त० शुक्राचार्य्ये भृगुनन्दनभृगुसुतादयोऽप्यत्र

भृगुतुङ्ग न० तीर्थभेदे भा० आ० २१५ अ० । भा०व० ८४अ० ।

भृगुपति पु० भृगूणां भार्गववंशस्य पतिः । परशुरामे शब्दमा० तेषां हैहयपातितो हि तेन रक्षा कृता इति तस्य तथात्वम्

भृगुभूमि पु० भार्गवपुत्रभेदे हरिवं० ३अ० ।

भृगुवल्ली स्त्री भृगुणाऽधीता वल्ली । “भृगुर्वै वारुणिर्वरुणं पितरमुपससार” इत्यादिकायां तैत्तिरीयोपनिषदः तृतीयवल्ल्याम् ।

भृगूणांपति पु० ६त० अलुक्स० । परशुरामे शब्दर० ।

भृङ्ग पु० भृ–गन् कित् नुट् च । १भ्रमरे २कलिङ्गविहगे (भिङ्गा) अमरः । ३भृङ्गराजे ४जारे मेदि० ५भृङ्गारे ६भृङ्गराजे च कीटभेदे (भीमरुल) शब्दरत्ना० ।

भृङ्गक पु० भृङ्ग इव कायति कै–क । राजखञ्जनखगे शब्दच०

भृङ्गजा स्त्री भृङ्ग इव जायते जन–ड । १भार्ग्याम् । २अगुरुचन्दने न० राजनि० ३अभ्रके ४गुडत्वचि न० रत्नमा० ।

भृङ्गपर्णी स्त्री भृङ्ग इव कृष्णत्वात् पर्णं यस्याः ङीप् । सूक्ष्मैलायाम् । स्वार्थे क । भृङ्गपर्णिका तत्रार्थे शब्दच०

भृङ्गप्रिया स्त्री ६त० । माधवीलतायां प्रचुरमधुमत्त्वात् तस्यास्तत्प्रियत्वम् राजनि० ।

भृङ्गमूलिका स्त्री भृङ्गस्य भृङ्गराजस्येव मूलमस्याः कप् कापि अत इत्वम् । भ्रमरच्छल्याम् राजनि० ।

भृङ्गरज पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज–अच् पृषो० नलोपः । भृङ्गराजे (केशुरिया) । भरतः ।

भृङ्गरजस् पु० भृङ्गान् रञ्जयति अन्तर्भूतण्यर्थे रन्ज–असुन् नलोपः । भृङ्गराजे अमरटीकायां भरतः ।

भृङ्गराज पु० भृङ्गान् रञ्जयति रन्ज–णिच्–अण् नि० ६त० । (केशुरिया) । १क्षुपभेदे । “भृङ्गराजः कटुस्तिक्तो रूक्षोष्णः कफवातनुत् । केश्यस्त्वच्यः कृमिश्वासकासशोथामयापहृत् । दन्त्यो रसायनो बल्यः कुष्ठनेत्रशिरोर्त्तिजित्” भावप्र० २पक्षिभेदे ६त० टच् । ३भ्रमरश्रेष्ठे मेदि० ४यन्त्रभेदे च धरणिः ।

भृङ्गराजाद्य न० ‘भृङ्गराजरसप्रस्थे यष्टीमधुपलेन च । तैलस्य कुडवं पक्वं सद्यो दृष्टिं प्रसादयेत् । तत् स्याद् वलीपलितघ्नं मासेनैतन्न संशयः” चक्रदत्तोक्ते तैलभेदे ।

भृङ्गरिट(टि) पु० भृङ्ग इव रटति अच् इन् वा पृषो० अत इत्वम् । शिवपार्श्वचरभेदे । [कीटभेदे त्रिका० ।

भृङ्गरोल पु० भृङ्ग इव रौति रु-लच् । (भीमरुल) ख्याते

भृङ्गवल्लभ पु० ६त० । १धाराकदम्बे २भूमिकदम्बे च । भृङ्गैः लभ्यते लभ-क । ३भूमिजम्ब्वाम् स्त्री राजनि० । [त्रिका०

भृङ्गसोदर पु० भृङ्गस्य सोदर इव । (केशुरिया) केशराजे

भृङ्गानन्दा स्त्री आनन्दयति आ+नन्द+णिच्-अच् ६त० । यूथिकायाम् (युइ) राजनि० ।

भृङ्गाभीष्ट पु० अभि+इष-क्त ६त० । आम्रवृक्षे राजनि० ।

भृङ्गार पु० बिभर्त्ति जलं भृ–आरक् नि० । १स्वर्णमयजलपात्रभेदे अमरः २जलपात्रभेदे च (झारी) । भृङ्ग इव ऋच्छति ऋ-अच् । ३भृङ्गराजे जटा० । ४लवङ्गे ५सुवर्णे च न० राजनि० । ६झिल्लीनामकीटे स्त्री अमरः गौरा० ङीष् । स्वार्थे क । भृङ्गारिका तत्रैव । तत्र भृङ्गारपात्ररचनादिकं युक्तिकल्पतरावुक्तं यथा

“राज्ञोऽभिषेकपात्रं यद्भृङ्गार इति तन्मतम् । तदष्टधा तस्य मानं प्रकारश्चापि चाष्टधा । सौवर्णं राजतं भौमं ताम्रं स्फाटिकमेव च । चान्दनं लौहजं शार्ङ्गमेतदष्टविधं मतम् । मानु १दिङ्२नवमप्राष्टदश११लोक१२रुद्रोन्मिताः१३ । अष्टावेते समाख्याता आयामपरिणाहयोः । द्विचतुःपञ्चवेदाक्षिषट्सप्ताष्टकल्पिता । यथाक्रमं समुद्दिष्टमादित्यादङ्गुलाम् । पद्मरागस्तथा वज्रं वैदूर्य्यं मौक्तिकं तथा । नीलं मारकतञ्चैव रत्ना

च सप्त कीर्त्तिताः। भृङ्गारसप्तके व्याख्या न भौमो मणिमर्हति। कानकं स्वर्णमयं वापि सर्वेषामुपयुज्यते।" "कानकन्तु क्षितीशानां स्वर्णमयं सार्वभौतिकम्। शङ्खपद्मेन्दुकह्लारं प्रत्यक्षं विन्यसेत् क्रमात्। चतुर्विधानां भृङ्गाणां चान्द्रः (रौप्यः) सर्वत्र शस्यते। श्वेतं रक्तं तथा पीतं कृष्णं चन्दनमुच्यते। एतेषां सलिलैः सेकश्चतुर्णां क्षाम्भयीभुजाम्। सक्ती पद्मश्च नीलश्च तथा कृष्णापराजिता। एषां पुष्पाणि वेशेषु चतुर्जातिमहीभुजाम्। हीरकं पद्मरागश्च वैदूर्यं नीलमेव च। चत्वारो मणयो धेयाश्चतुर्णां सेचनाम्बुषु। इत्थं निश्चित्य यः कुर्य्यान्नृपतिः सेकमात्मनः। स चिरायुर्भवेद्भोगी इतोऽन्यस्त्वन्यथाचरन्"।

**भृङ्गारि** स्त्री भृङ्गस्य वर्णमृच्छति ऋ-इन्। १केरिकापुष्पे २भ्रमरच्छल्यां राजनि०।

**भृङ्गाह्व** पु० भृङ्गमाह्वयते स्पर्द्धते आ+ह्वे-क। १जीरके २भृङ्गराजे च ३भ्रमरच्छल्यां स्त्री राजनि०।

**भृङ्गि** पु० भृ-गिक् नुट् च। शिवपार्श्वचरभेदे। "प्राप्य गणाधिपत्यं त्वं नाम्ना भृङ्गिरिति स्मृतः" वामनपु०।

**भृङ्गिन्** पु० भृङ्गस्येव कृष्णत्वादस्त्यस्य इनि। १वटवृक्षे राजनि० २शिवानुचरभेदे। तस्य शिवतेजो जातत्वेऽपि कृष्णत्वात् तन्नामता यथोक्तं कालिकापु० ४५ अ० यथा "अग्नावुत्सृज्यमानस्य तेजसः शम्भुना ततः। अणुद्वयमतिस्वल्पं शिरिप्रस्थे पपात ह। तयोः कारणयोः सद्यः सम्भूतौ शङ्करात्मजौ। एको भृङ्गसमः कृष्णो भिन्नाञ्जननिभोऽपरः। भृङ्गी तस्य तदा ब्रह्मा नाम भृङ्गीति चाकरोत्। महाकृष्णैकरूपस्य महाकालेति लोकतः"। वामनपु० तु अन्धकासुरस्यैव शिववरेण भृङ्गिरूपत्वं गणाधिपत्यञ्च जातमित्युक्तम्।

**भृङ्गी** स्त्री भृ-गन् किन् नुट् च गौरा० ङीष्। अतिविषायाम् राजनि०। [तके राजनि०।

**भृङ्गीफल** पु० भृङ्ग्या अतिविषाया इव फलमस्य। आम्रा-

**भृङ्गीश** पु० ६त०। महादेवे शब्दरत्ना०। [तिका०।

**भृङ्गिरिटि** पु० भृङ्गिरिटि+पृषो०। भृङ्गिणि शिवपार्श्वचरे

**भृङ्गेष्टा** स्त्री ६त०। १घृतकुमार्य्यां २भार्ग्यां ३तरुण्यां ४काकजङ्घायाम् राजनि०।

**भृज** भर्जने (भाजा) पाकभेदे भ्वा० आत्म० सक० सेट्। भर्जते अभर्जिष्ट। ईदित्त्वात् निष्ठायां नेट् भृक्तः। [(खोला) वाच०

**भृज्जन** पु० भ्रस्ज-करणे ल्युट् सम्प्र०। अम्बरीषे (भाजना-

**भृणीय** क्रोधे ना० धा० आत्म० सक० सेट् [illegible]। भृणीयते। अभृणीयिष्ट।

**भृरिटिका** स्त्री भिरिण्टिका पृषो०। श्वेतगुञ्जायाम् राजनि०।

**भृरिड** स्त्री वीणायां शब्दा०।

**भृत** त्रि० भृ-क्त। १पुष्टे वेतनादिना प्रतिपालिते २दासभेदे च। "उत्तमस्त्वायुधीयो यो मध्यमस्तु कृषीवलः। अधमो भारवाही स्यादित्येवं त्रिविधो भृतः" मित०। भावे-क्त। ४भरणे न०।

**भृतक** त्रि० भृतं भरणं वेतनमुपजीवति कन्। वेतनोपजीविनि अमरः "भृतकाध्यापको यस्तु भृतकाध्यापितस्तथा" मनुः। भृतकभेदाः शुक्रनीतिसारे ४अ० उक्ता यथा "दश प्रोक्ताः पुरोधाद्या ब्राह्मणाः सर्व एव ते। अभावे क्षत्रिया योज्यास्तदभावे तथोरुजाः। नैव शूद्रास्तु संयोज्या गुणवन्तोऽपि पार्थिवैः। भागग्राही क्षत्रियस्तु साहसाधिपतिश्च सः। ग्रामपो ब्राह्मणो योज्यः कायस्थो लेखकस्तथा। शुल्कग्राही तु वैश्यो हि प्रतिहारश्च पादजः। सेनाधिपः क्षत्रियस्तु ब्राह्मणस्तदभावतः। न वैश्यो न च वै शूद्रः कातरश्च कदाचन। सेनापतिः शूर एव योज्यः सर्वासु जातिषु। वर्णसङ्करचतुर्थधर्मोऽयं नैव पावनः। यस्य सर्वस्य सो राजा स सर्वः सुखमेधते। नोपकारं मन्यते च न तत्प्रति च सेवते। कर्म्मान्तरे न स्मरति प्रकृते मतयऽत्यपि। तुष्यतनोति समीक्ष्य तं भृत्यं भूतकस्त्यजेत्"

**भृति** स्त्री भृ-क्तिन्। १भरणे २पोषणे च करणे क्तिन्। ३वेतने अमरः ४मूल्ये च मेदि०। भृत्यभेदाय भृतिदानप्रकारादिकं शुक्रनीतिसारे उक्तं यथा "कालमानं त्रिधा ज्ञेयं चान्द्रं सौरं च सावनम्। भृतिदाने सदा सौरं चान्द्रं कौसीदवृद्धिषु। कल्पयेत् सावनं नित्यं दिनभृत्येऽवधौ सदा। कार्य्यमाना कालमाना कार्य्यकालमितिस्त्रिधा। भृतिरुक्ता तु तद्विज्ञैः सा देया भाषिता यथा। अयं भारस्त्वया तत्र स्थाप्यस्त्वेतावतीं भृतिम्। दास्यामि कार्य्यमाना सा कीर्त्तिता तद्विदेशकैः। वत्सरे वत्सरे वापि मासि मासि दिने दिने। एतावतीं भृतं तेऽहं दास्यामीति च कालिकी। एतावता कार्य्यमिदं कालेनापि त्वया कृतम्। भृतिमेतावतीं दास्ये कार्य्यकालमिता च सा। न कुर्य्याद् भृतिलोपं तु तथा भृतिविलम्बनम्। अवश्यपोषभरणा भृतिर्मध्या प्रकीर्त्तिता। परिपोष्या भृतिः श्रेष्ठा समा-

वास्त्राच्छादनार्थिका। भवेदेकस्य भरणं यया सा हीनसंज्ञिका। यथा यथा तु गुणवान् भृतकस्तद्भृतिस्तथा। संयोज्या तु प्रयत्नेन नृपेणात्महिताय वै। अवश्यपोष्यवर्गस्य भरणं भृतकाद्भवेत्। तथा भृतिस्तु संयोज्या तद्योग्या भृतकाय वै। ये भृत्या हीनभृतिकाः शत्रवस्ते स्वयं कृताः। परस्य साधकास्ते तु छिद्रे कोशप्रजाहराः। अन्नाच्छादनमात्रा हि भृतिः शूद्रादिषु स्मृता। तत्पापभागन्यथा स्यात् पोषको मांसभोजिषु। यद्ब्राह्मणेनापहृतं धनं तत् परलोकदम्। शूद्राय दत्तमपि यन्नरकायैव केवलम्। मन्दो मध्यस्तथा शीघ्रस्त्रिविधो भृत्य उच्यते। समा मध्या च श्रेष्ठा च भृतिस्तेषां क्रमात् स्मृता। भृत्यानां गृहकृत्यार्थं दिवायामं समुत्सृजेत्। निशि यामत्रयं नित्यं दिनभृत्येऽर्द्धयामकम्। तेभ्यः कार्य्यं कारयीत ह्युत्सवाद्यैर्विना नृपः। अत्यावश्यं तूत्सवेऽपि हित्वा श्राद्धदिनं सदा। पादहीनां भृतिं त्वार्त्ते दद्यात् त्रैमासिकीं ततः। पञ्चवत्सरभृत्ये तु न्यूनाधिक्यं यथा तथा। षाण्मासिकीं तु दीर्घार्त्ते तदूर्ध्वं न च कल्पयेत्। नैव पक्षार्द्धमार्त्तस्य हातव्याल्पापि वै भृतिः। संवत्सरोषितस्यापि ग्राह्यः प्रतिनिधिस्ततः। सुमहद्गुणिनं त्वार्त्तं भृत्यर्द्धं कल्पयेत् सदा। सेवां विना नृपः पक्षं दद्याद् भृत्याय वत्सरे। चत्वारिंशत् समा नीताः सेवया येन वै नृपे। ततः सेवां विना तस्मै भृत्यर्द्धं कल्पयेत् सदा। यावज्जीवं तु तत्पुत्रेऽक्षमे बाले तदर्द्धकम्। भार्य्यायां वा सुशीलायां कन्यायां वा स्वश्रेयसे। अष्टमांशं पारितोष्यं दद्याद् भृत्याय वत्सरे। कार्य्याष्टमांशं वा दद्यात् कार्य्यं द्रागधिकं कृतम्। स्वामिकार्य्ये विनष्टो यस्तत्पुत्रे तद्भृतिं वहेत्। यावद्बालोऽन्यथा पुत्रगुणान् दृष्ट्वा भृतिं वहेत्। षष्ठांशं वा चतुर्थांशं भृतेर्भृत्यस्य पालयेत्। दद्यात् तदर्द्धं भृत्याय द्वित्रिवर्षेऽखिलं तु वा। वाक्पारुष्यान्न्यूनभृत्या स्वामी प्रबलदण्डतः। भृत्यं प्रशिक्षयेन्नित्यं शत्रुत्वं त्वपमानतः। भृतिदानेन सन्तुष्टा मानेन परिवर्द्धिताः। सान्त्विता मृदुवाचा ये न त्यजन्त्यधिपं हि ते। अधमा धनमिच्छन्ति धनमानौ तु मध्यमाः। उत्तमा मानमिच्छन्ति मानो हि महतां धनम्। यथागुणान् स्वभृत्यांश्च प्रजाः संरञ्जयेन्नृपः। शाखाप्रदानतः कांश्चिदपरान् फलदानतः। अन्यान् सुचक्षुषा हास्यैस्तथा कोमलया गिरा। सुभोजनैः सुवसनैस्ताम्बूलैश्च धनैरपि। कांश्चित् कुशलप्रश्नैरधिकारप्रदानतः। वाहनानां प्रदानेन योग्याभरणदानतः। छत्रातपत्रचमरदीपिकानां प्रदानतः। क्षमया प्रणिपातेन मानेनाभिगमेन च। सत्कारेण च दानेन ह्यादरेण शमेन च। प्रेम्णा समीपवासेन स्वार्धासनप्रदानतः। सम्पूर्णासनदानेन स्तुत्योपकारकीर्त्तनात्। यत्कार्य्ये विनियुक्ता ये कार्य्याङ्कैरङ्कयेच्च तान्। लोहजैस्ताम्रजै रैतिभवैरजतसम्भवैः। सौवर्णै रत्नजैर्वापि यथायोग्यैः स्वलाञ्छनैः। प्रविज्ञानाय दूरात् तु वस्त्रैश्च मुकुटैरपि। वाद्यवाहनभेदैश्च भृत्यान् कुर्य्यात् पृथक् पृथक्। स्वविशिष्टं च यच्चिह्नं न दद्यात् कस्यचिन्नृपः"।

४अ० तत्र विशेष उक्तो यथा "कालं भृत्यवधिं देयं दत्तं भृत्यस्य लेखयेत्। कति दत्तं हि भृत्येभ्यो वेतनं पारितोषिकम्। तत्प्राप्तिपत्रं गृह्णीयाद्दद्याद्वेतनपत्रकम्। सैनिकाः शिक्षिता ये ये तेषु पूर्णा भृतिः स्मृता। व्यूहाभ्यासे नियुक्ता ये तेष्वर्द्धां भृतिमावहेत्" "स्वकार्य्यसाधका ये तु सुभृत्या पोषयेच्च तान्। लोभेनासेवनाच्छिन्नास्तेष्वर्द्धां भृतिमावहेत्। शत्रुत्यक्तान् सुगुणिनः सुभृत्या पालयेन्नृपः। परराष्ट्रे हृते दद्यात् भृतिं शिक्षावधिं तथा। दद्यादर्द्धं तस्य पुत्रे स्त्रियै पादमितां किल। हृतराज्यस्य पुत्रादौ सद्गुणे पादसम्मिताम्। दद्याद्वा तद्राज्यतस्तु द्वात्रिंशांशं प्रकल्पयेत्"

भृतिभुज् त्रि० भृतं वेतनं भुङ्क्ते भुज-क्विप्। वेतनोपजीविनि कर्मकरे अमरः।

भृत्य पुंस्त्री० भृ-क्यप् तुक् च। १दासे २भरणीये त्रि० अमरः। भावे क्यप् ३भरणे स्त्री टाप्। "कुमारभृत्याकुशलैः" रघुः। निन्द्यानिन्द्यभृत्यपरीक्षा शुक्रनीतिसारे २अ० उक्ता यथा "भृत्यं परीक्षयेन्नित्यं विश्वास्यं विश्वसेत् सदा। नैव जातिर्न च कुलं केवलं लक्षयेदपि। कर्मशीलगुणाः पूज्यास्तथा जातिकुले न हि। न जात्या न कुलेनैव श्रेष्ठत्वं प्रतिपद्यते। विवाहे भोजने नित्यं कुलजातिविवेचनम्। सत्यवाक् गुणसम्पन्नस्तथाभिजनवान् धनी। सुकुलश्च सुशीलश्च सुकर्मा च निरालसः। यथा करोत्यात्मकार्य्यं स्वामिकार्य्यं ततोऽधिकम्। चतुर्गुणेन यत्नेन कायवाङ्मानसेन च। भृत्यैव तुष्टो मृदुवाक् कार्य्यदक्षः शुचिर्दृढः। परोपकरणे दक्षो ह्यपकारपराङ्मुखः। स्वाम्यागस्कारिणं पुत्रं पितरं वापि दर्शकः।

स्येनं न शङ्कते । जायेत हृष्टवदनः श्रुत्वा तद्गिरमन्तरा । अप्रियाख्यपि चान्यानि तद्युक्तान्यभिमन्यते । उपायनं च गृह्णाति स्तोकं सम्पादयेत्तथा । कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा । इति रक्तस्य वै लक्ष्म कर्त्तव्यं तस्य सेवनम् । तद्दत्तवस्त्रभूषादि चिह्नं संधारयेत् सदा । न्यूनाधिके स्वाधिकारे नित्योद्युक्तो भवेत् सदा । तदर्थां तत्कृतां वार्त्तां शृणुयाच्चापि कीर्त्तयेत् । चारसूचकदोषेण हृन्यथा यदशे नृपः । शृणुयान्मौनमाश्रित्य तथ्यं यत्नेन बोदयेत् । आपद्गतं सुभर्त्तारं कदापि न परित्यजेत् । एकवारमथादिष्टं यत्स्थानं ह्यादरेण तत् । तदिष्टं चिन्तयेन्नित्यं पालकस्याज्ञया न किम् । अप्रधानः प्रधानः स्यात्, काले चात्यन्तसेवनात् । प्रधानोऽप्यप्रधानः स्यात् सेवालस्यादिना यतः । नित्यं संसेवनरतो भृत्यो राज्ञः प्रियो भवेत् । स्व स्वाधिकारकार्य्यं यत् द्राक् कुर्य्यात् सुमाना यतः । न कुर्य्यात् सहसा कार्य्यं नीचं राजापि नोदयेत् । तत् कार्य्यकारकाभावे राज्ञः कार्य्यं सदैव हि । काले यदुचितं कर्त्तुं नीचमप्युत्तमोऽर्हति । यस्मिन् प्रीतो भवेद्राजा तदनिष्टं न चिन्तयेत् । न दर्शयेत् स्वाधिकारगौरवं तु कदाचन । परस्परं नाभ्यसूयुर्न भेदं प्राप्नुयुस्तथा । राज्ञा चाधिकृताः सन्तः स्वस्वाधिकारगुप्तये । अधिकारिगणो राजा सदुक्तौ यत्र तिष्ठतः । उभौ, तत्र स्थिरा लक्ष्मीर्विपुला संमुखीभवेत् । अन्याधिकारवृत्तं तु न ब्रूयाच्छ्रुतमप्युत । राजा न शृणुयादन्यमुखतस्तु कदाचन । न बोधयन्ति च हितमहितं चाधिकारिणः । प्रच्छन्नवैरिणस्ते तु दासरूपमुपाश्रिताः । हिताहितं न शृणोति राजा मन्त्रिमुखाच्च यः । स दस्यू राजरूपेण प्रजानां धनहारकः । सुपुष्टव्यवहारा ये राजपुत्रैश्च मन्त्रिणः । विरुध्यन्ति च तैः सार्द्धं ते तु प्रच्छन्नतस्कराः । बाला अपि राजपुत्राः नावमान्यास्तु मन्त्रिभिः । सदा सुवल्गुवाक्यैस्तु संबोध्यास्ते प्रयत्नतः । असदाचरितं तेषां क्वचित् राज्ञे न दर्शयेत् । स्त्रीपुत्रमोहो बलवान् तयोर्निन्दा न श्रेयसे । राज्ञोऽवश्यन्तरं कार्य्यं प्राणसंशयितं च यत् । आज्ञापयाद्यतस्तावं करिष्ये तत्तु निश्चितम् । इति विज्ञाप्य तत् कर्त्तुं प्रयतेत स्वशक्तितः । प्राणानपि च संदद्यान्महाकार्य्ये नृपस्य च । भृत्यकुटुम्बपुष्ट्यर्थं नान्यथा तु कदाचन । भृत्या धनहराः सर्वे सुतरां प्राणहरो नृपः । युद्धादौ तु महाकार्य्ये भृत्यप्राणान् हरेन्नृपः । नान्यथा भृतिरूपेण भृत्यो राजधनं हरेत् । अन्यथा हरतस्तौ तु भवतश्च स्वनाशकौ । राजा च युवराजश्च मान्योऽमात्यादिकैः सदा । तन्न्यूनामात्येन च किं तन्न्यूनाधिकृतेन किम् । मन्त्रितुल्यश्च भृतको न्यूनः साहस्रिको मतः । न क्रीडयेद्राजसमं क्रीडिते तं विशेषयेत् । नावमान्या राजपत्नी कन्या ह्यपि च मन्त्रिभिः । राजसम्बन्धिनः पूज्याः सुहृदश्च यथार्हतः । नृपाङ्गतस्तुरं गच्छेत् त्यक्त्वा कार्य्यशतं महत् । मित्रायापि न वक्तव्यं राजकृत्यं सुमन्त्रितम् । भृतिं विना राजद्रव्यमदत्तं नाभिलाषयेत् । राजाज्ञया विना नेच्छेत् कार्य्ये माध्यस्थिकीं भृतिम् । न हि हन्यात् द्रव्यलोभात् न कार्य्यं यस्य कस्यचित् । स्वस्त्रीपुत्रधनप्राणैः काले संरक्षयेन्नृपम् । उत्कोचं नैव गृह्णीयात् नान्यथा बोधयेन्नृपम् । अन्यथादण्डकं भूपं नित्यं प्रबलदण्डकम् । निरुह्य बाधयेत् सम्यक् एकान्ते राज्यगुप्तये । हितं राज्ञश्चाहितं यल्लोकानां तन्न कारयेत् । नवीनकरशुल्काद्यैर्लोक उद्विजते ततः ।”

“भृत्यः कुर्य्यात् तु राजाज्ञां शिष्यवत् सच्छ्रियः पतेः । न क्षिपेत् वचनं राज्ञो ह्यनुकूलं प्रियं वदेत् । रहोगतस्य वक्तव्यमप्रियं यद्धितं भवेत् । न नियुक्तो हरेद् वित्तं नोपेक्षेत् तस्य मानकम् । राज्ञश्च न तथाकार्य्यं वेशभाषाविचेष्टितम् । अन्तःपुरचराध्यक्षो वैरभूतैर्निराकृतैः । संसर्गं न व्रजेद् भृत्यो राज्ञो गुह्यञ्च गोपयेत् । दर्शयेत् कौशलं किञ्चिद्राजानं च विशेषयेत् । राज्ञा यच्छ्रावितं गुह्यं न तल्लोके प्रकाशयेत् । आज्ञाप्यमाने वान्यस्मिन् किङ्करोमीति वा वदेत् । वस्त्रं रत्नमलङ्कारं राज्ञा दत्तं च धारयेत् । नानिर्दिष्टो द्वारि विशेन्नायोग्यभुवि राजदृक् । जृम्भां निष्ठीवनङ्कासं कोपं पर्य्यङ्किकाश्रयम् । भृकुटीं वातमुद्गारं तत्समीपे विवर्जयेत् । स्वगुणाख्यापने युक्त्या परात्मानं नियोजयेत् । शाठ्यं लौल्यं सपैशून्यं नास्तिक्यं क्षुद्रता तथा । चापल्यञ्च परित्याज्यं नित्यं राजानुजीविना । श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना । राजसेवां ततः कुर्य्याद् भूतये भूतिवर्द्धनः । नमस्कार्य्याः सदा चास्य पुत्रवल्लभमन्त्रिणः । सचिवैर्नास्य विश्वासो राजचित्तप्रियश्चरेत् । त्यजेद् विरक्तं रक्तात् तु वृत्तिमीहेत राजवित् । अपृष्टश्चास्य न ब्रूयात् कामं कुर्य्यात् तथा-

यदि । आसन्नो वाक्यसञ्चारी दृश्यो न च शङ्कते । कुशलादि परिप्रश्नं सम्प्रयच्छति चासनम् । तत्कथा-श्रवणाद्धृष्टो सुप्रियाण्यपि नन्दते । अल्पं दत्तं प्रभूतं स्यात् स्मरेत् तच्च कथान्तरे । रक्तस्य राज्ञः कर्त्तव्या सेवान्यस्य वर्जयेत्” कालिपु० २२१अ० ।

ते च दशधा तेषां प्राधान्याप्राधान्ये च तत्रैव उक्ते यथा “पुरोधाः प्रथमं श्रेष्ठः सर्वेभ्यो राजराड्भवेत् । तदनु स्यात् प्रतिनिधिः प्रधानस्तदनन्तरम् । सचिवस्तु ततः प्रोक्तो मन्त्री तदनु चोच्यते । प्राड्विवाकस्ततः प्रोक्तः पण्डितस्तदनन्तरम् । सुमन्त्रस्तु ततः ख्यातो ह्यमात्यस्तु ततःपरम् । दूतस्ततः क्रमादेते पूर्वश्रेष्ठा यथा गुणाः” ।

तत्करणमुहूर्त्तादि मु०चि० उक्तं यथा

“क्षिप्रे मैत्रे विदुषितार्केज्यवारे सौम्ये लग्नेऽर्के कुजे वा खलाभे । योनौ मैत्र्यां राशिपोश्चापि मैत्र्यां सेवा कार्य्या स्वामिनः सेवकेन” मु० चि० । “अथ सेवकस्य स्वामिसेवायां मुहूर्त्तं शालिन्याह । क्षिप्रे मैत्रे इति । क्षिप्रे मैत्रे अश्विनीपुष्यहस्तचित्रानुराधामृगरेवतीपुष्यनक्षत्रेषु, विदुषितार्केज्यवारे बुधशुक्रसूर्य्यगुरुवारे तथा सौम्यग्रहे लग्नसंस्थे सति अर्के वा अथ वा कुजे भौमे वा खलाभे दशमैकादशस्थे सति सेवकेन भृत्येन स्वामिनो राजादेः सेवा कार्य्या । राजादिदर्शनं प्रागुक्तं नैतत्प्रहणकार्य्योद्युक्तीकाद्रूपा सेवास्मिन् मुहूर्त्ते कार्य्या तत्रापि स्वामिसेवकयोर्योनिमैत्र्यां सत्यां पुनः राशिपोः स्वामिसेवकयोर्यौ जन्मराशी तयोर्यावधिपती तयोरपि मैत्र्यां प्रीतौ सत्यां कार्य्या उक्तञ्च श्रीपतिना“शुभे विलग्ने दशमायगे च रवौ कुजे वा स्ववशेन योनेः । विद्यायुधाभ्यासरतेन कार्य्यः समाश्रयः स्वामिनि सेवकेन” । कश्यपोऽपि “दशमैकादशे सूर्य्ये कुजे वा शुभलग्नके । विद्यायुधाभ्यासयुक्तसेवा, कर्मापि सिद्ध्यति” । राशिमैत्रीसाहित्यं तु “अश्व रग श्वेभाविमेन्द्रसिंहभौत्वाखुसंज्ञं प्लवगवानरञ्च गौव्याघ्रमन्योन्यरमाहिषञ्च वैरं द्वनार्योर्न प्रभवत्ययोश्चेति” वसिष्ठोक्तिमङ्गीकृत्य तत्सन्यायत्वादत्राप्युक्तं यत्तता योनिमैत्री राशिमैत्री च विवाहप्रकरणे अश्विन्यम्बुपयोरिति “मित्राणि द्युमणेरिति वक्ष्यते” पी० धा० । उपयमशब्दे १२५० पृ० दृश्यम् ।

भृतिम त्रि० भरणाज्जातः भृ-क्त्रि-मप् च । भरणाज्जाते ।
भृ(भ्र)मि पु० भ्रम-इन् पृषो० वा संप्रसारणम् । (घूर्णी) १वायुभेदे २भ्रमणे च । “किमु चक्रभ्रमिकारितागुणः” नैषधम् ।

भृम्यश्व पु० भृम्यः चलाश्वाः यस्य । ऋषिभेदे तस्य पुत्रः अण् । भार्म्यश्व तदपत्ये ऋषौ नि० ८।४ ।

भृश अधःपतने दि०पर०अक०सेट् । भृश्यति इरित् अभृशत् अभर्शीत् बभर्श । उदित्त्वात् क्त्वा वेट् ।

भृश न० भृश-क । १अतिशये २तद्वति त्रि० । ततो भृशादि० च्व्यर्थे भवतौ क्यङ् भृशायते । [ शब्दरत्ना० ।

भृशम् अव्य०मान्तमव्ययम् भृश-बा० कमु । १अत्यर्थे २शोभने

भृशादि पु० च्व्यर्थे भवतौ क्यङन्त्ययनिमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा

“भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् रोहत् रेहत् संश्चत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अन्तर वर्चस् ओजस् सुरजस् अरजस् इति भृशादयः । आकृतिगणोऽयं तेन श्यामायते इत्यादि सि० कौ० । एवं घूर्णायते “घूर्णायमानेक्षणम्” घूर्णायमानशब्दे दर्शितम्

भृषद् स्त्री दृषद्+पृषो० । पाषाणे शब्दरत्ना० । तत्र दृषद् इत्येव पाठः भृषदित्यपपाठः ।

भृष्ट त्रि० भ्रस्ज-क्त । जलोपसेकं विना वालुकाग्निसंयोगाभ्यां पक्वे हेम० । “सुगन्धिः कफहा रुच्यः पित्तलो भृष्टतण्डुलः”राजनि० ।

भृष्टयव पु० कर्म० । धानाशब्दार्थे अमरः ।

भृष्टान्न न० कर्म० । जलासेकेन भृष्टे तण्डुले (हडि)शब्दच०

भृष्टि स्त्री भ्रस्ज-भावे क्तिन् ।१भर्जने २शून्यवाटिकायां मेदि०

भृ भर्जने भर्त्सने भरणे च क्र्यादि०प्वा०पर०सक०सेट् । भृणाति अभारीत् बभार बभरतुः ।

भेक पुंस्त्री०भी-कन् कस्य नेत्त्वम् । (व्याङ) १जन्तुभेदे अमरः स्त्रियां जातित्वात् ङीष् । “तेजःसत्त्वोबलकरः श्लेष्मदाहनिकृन्तन । व्यापकुष्ठार्दिनाशी भेकस्तु परिकीर्त्तितः” राजनि० ।२मेघे मेदि०३मण्डूकपर्ण्यां स्त्री ङीप् अमरः

भेकट पु० भेक इव टलति टल-ड । मत्स्यभेदे त्रिकाण्डशेषः ।

भेकलि(लि) पु० (भाकुन) मत्स्यभेदे राजव० ।

भेकपर्णी स्त्री भेक इव पर्णमस्याः ङीप् । मण्डूकपर्ण्याम्

भेकभुज पु० भेकं भुङ्क्ते भुज-क्विप् । सर्पे त्रिका० ।

भेकासन न०रुद्रयामलोक्ते पूजाङ्गे आसनभेदे तल्लक्षणं यथा “भेकनामासनं योगं निजवक्षसि स्वं सुखम् । निधाय पादयुगलं स्थाने वाह्वी पदोपरि । ध्यायेदिष्टपदं श्रीमान्

श्चासनस्थः सुखाय तत्। यदि सर्वाङ्गस्तोत्थ गगने खेचरासनम्। महाभेकासनं प्रोक्तं सर्वसिद्धिप्रदायकम्। महाविद्यामहामन्त्रं प्राप्नोति जपतीह यः”।

**भेकुरि** स्त्री अप्सरोरूपे नक्षत्रे “सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम” यजु०।१८।४० “तस्य चन्द्रमसः नक्षत्राणि नाम अप्सरसः कीदृश्यः भेकुरयः भां कान्तिं कुर्वन्तीति भेकुरयः पृषोदरादित्वात्साधुः “चन्द्रमाह गन्धर्वो नक्षत्रैरप्सरोभिर्मिथुनेन सहोदक्राम भेकुरयो नामेति भेकुरयोह नामैते भां हि नक्षत्राणि कुर्वन्तीति” शत०ब्रा० ६।४।१।६। [स्त्रियां ङीष्।

**भेड** पुंस्त्री० भी-ड तस्य नेत्त्वम्। मेषे (भेड़ा) हेमच०

**भेड्र** पुंस्त्री० भेड+पृषो०। मेषे त्रिका०। स्त्रियां ङीष्।

**भेद** पु० भिद-घञ्। १पृथक्करणे २अन्यतो विशेषे ३साम्राह्पायभेदे विपक्षशासनार्थं ३तत्पक्षीयामात्यादिभेदने ४न्यायमतोक्ते अन्योऽन्याभावे च यथा घटात् पटस्य भेदः (तादात्म्येनाभावः) उपायभेदश्च भेदप्रकारो यथा “परस्परन्तु ये द्विष्टाः क्रुद्धभीतावमानिताः। तेषां भेदं प्रयुञ्जीत परमं दर्शयेद् भयम्। आत्मीयान् दर्शयेदाशां येन दोषेण बिभ्यति। पराश्चैव ते भेद्या रक्ष्यो वै ज्ञातिभेदकः। सामन्तकोपो बाह्यस्तु मन्त्र्यमात्यात्मजादिकः। अन्तःकोपञ्चोपशाम्य कुर्वन् शत्रोश्च तं जयेत्” अग्निपु०२२५ अ०। ५द्वैधे ६विदारणे मेदि०। ७विरेके वैद्यकम्।

**भेदक** त्रि० भिद-ण्वुल्। १रेचके २विदारके ३भेदकारके ४विशेषणे च। “क्षीरादादीर्घहिमेषत्र” याद्यैः प्रस्तुतं पदैः। गुणद्रव्यक्रियाशब्दास्तथा स्युस्तस्य भेदकाः” अमरः

**भेदन** त्रि०भेदयति भिद-णिच्-ल्यु। १विरेचने २विशेषणे च ३हिङ्गौ न०४शूकरे ५अम्लवेतसे च पु० राजनि०। भिद-भावे ल्युट्। ६विदारणे ७द्वैधीकरणे न०।

**भेदित** त्रि० भिद-णिच्-क्त। १विदारिते भिन्ने च “आद्यं हृदये, शीर्षे वषट् वौषट् च मध्यमे। स एव भेदितो मन्त्रः सर्वशास्त्रविवर्जितः” तन्त्रसारोक्ते २मन्त्रभेदे पु०।

**भेदिन्** त्रि० भिद-णिनि। १भेदकारके स्त्रियां ङीप्। २अम्लवेतसे पु० राजनि०।

**भेदुर** न० भिदुर+पृषो०। वज्रे त्रिकाण्डशेषः।

**भेद्य** त्रि० भिद-ण्यत्। १शस्त्रादिना विदार्ये २विशेष्ये च। “त्रिष्वेषां भेद्यगामि यत्” अमरः। भेद्यरोगप्रतिषेधश्च सुश्रुते उक्तो यथा

“अथातो भेद्यरोगप्रतिषेधं व्याख्यास्यामः। स्वेदयित्वा विसग्रन्थिं छित्त्वस्य निराश्रयम्। पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत्। काशीसमागधीपुष्पनेपाल्या आयुषेन तु। ततः क्षौद्रं घृतं दत्त्वा सम्यगेवहु प्रचारयेत्। रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रमेव च। प्रतिसारणमेकैकं भिन्ने च गण्ड इष्यते। महत्यपि च युञ्जीत क्षाराग्निविधिकोविदः। छिन्नां भिन्नां विनिष्पीड्य भिषगञ्जननामिकाम्। सिन्धैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत्। रसाञ्जनमधुभ्यां वा भिन्नां वा शस्त्रकर्मवित्। प्रतिसार्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः। सम्यक्छिन्ने क्रमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम्। त्रिफलातुत्थकासीससैन्धवैस्तु रसक्रियाम्। भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः। लेखयेन्मण्डलाग्रेण समन्तात् प्रोञ्छयेदपि। संश्लेष्म पक्ष्मभङ्गं च स्वेदयित्वा यथाक्रमम्। आपाकाद्विधिनोक्तेन पक्ष्म भेद्यानुपाचरेत्। सर्वेष्वेतेषु विहितं विधानं स्नेहपूर्वकम्। सम्यक् प्रयतो भूत्वा कुर्वीत व्रणरोपणम्”।

**भेर** पु० भी-रन्। पटहे संक्षिप्तसा०। उज्ज्वलदत्तेन गौरा० ङीष् भेरीत्येवसज्ञा भेरी दुन्दुभिरित्युक्तम्।

**भेरि(री)** स्त्री भी-क्रिन् वञ्जु्०। नि० वा ङीप्। १ढक्काढक्कायाम्। २पटहे “रवः प्रगल्भाहतभेरिसम्भवः” कुमारः उज्ज्वलदत्तः। “ततः शङ्खाश्च भेर्यश्च” गीता।

**भेरीस्वनमहास्वना** स्त्री कुमारानुचरमातृभेदे भा०श०४७अ०।

**भेरुण्ड** न० १गर्भधारणे शब्दर० २भयानके त्रि० ३देवताभेदे कालिपु० “महाविश्वेश्वरी श्वेता भेरुण्डा कुलसुन्दरी” तन्त्रकृन्नाम। ४पक्षिणीभेदे स्त्री मेदि०

**भेल** त्रि० भी-र रस्य लः। १प्लवे २भीरुके ३निर्बुद्धौ ४मुनिभेदे विश्वः। ५चञ्चले शब्दर०। स्वार्थे क। भेलक प्लवे उडुपे (भेला) शब्दर०।

**भेष** भये भ्वा०उभ०सक०सेट्। भेषति ते अभेषीत् अभेषिष्ट। ऋदित् चङि न ह्रस्वः। अबिभेषत् त।

**भेषज** न० भेष-घञ् भेषं रोगभयं जयति जि-ड। १औषधे। स्वार्थे ष्यञ्। भैषज्य तत्रार्थे भेषजसेवनकालादि भावप्र० उक्तं यथा

“अथ भेषजभक्षणसमयः “भैषज्यमभ्यवहरेत् प्रभाते प्रायशो बुधः। कषायांस्तु विशेषेण तत्र भेदस्तु दर्शितः। ज्ञेयः पञ्चविधः कालो भैषज्यग्रहणे नृणाम्। किञ्चित् सूर्योदये जाते तथा दिवसभोजने। सायन्तने

भोजने च मुहुश्चापि तथा निशि। तत्र प्रथमकालः "प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः। लेखनार्थे च भैषज्यं प्रभातेऽनन्नमाहरेत्"। अथ द्वितीयकालः "भैषज्यं विगुणे पाने भोजनाग्रे प्रशस्यते। अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत्। समानवाते विगुणे मन्देऽग्नावग्निदीपनम्। दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक्। व्यानकोपे तु भैषज्यं भोजनान्ते समाहरेत्। हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात्"। अथ तृतीयकालः "उदाने कुपिते वाते स्वरभङ्गादिकारिणि। ग्रासग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने। प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते प्रदीयते। औषधं प्रायशो धीरैः कालोऽयं स्यात् तृतीयकः"। अथ चतुर्थकालः "मुहुर्मुहुश्च तृट्छर्दिहिक्काश्वासगरेषु च। सान्नञ्च भेषजं दद्यादिति कालश्चतुर्थकः"। अथ पञ्चमकालः "ऊर्ध्वजत्रुविकारेषु लेखने बृंहणे तथा। पाचने शमने देयमनन्नं भेषजं निशि" इति पञ्चमकालः। निरन्नस्य भेषजस्य गुणमाह "वीर्य्याधिकं भवति भेषजमन्नहीनं हन्यात्तदामयमसंशयमाशु चैव। तद्बालवृद्धयुवतीमृदवश्च पीतम् ग्लानिं परां नयति चाशु बलक्षयञ्च"। सान्नस्य भेषजस्य गुणमाह "शीघ्रं विपाकमुपयाति बलेन हिंस्यादन्नावृतन्न च मुहुर्वदनान्निरेति। एतद्धितं स्थविरबालकशाङ्गनाभ्यः प्राग्भोजनाद्यदशितं किल तच्च तद्वत्" तद्वत् अन्नावृतवत् भेषजमिति शेषः। "औषधशेषे भुक्तं भोजनशेषे यदौषधं पीतम्। न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च"। पीतमित्युपलक्षणं लीढ़ादिकञ्च। "अनुलोमोऽनिलः स्वास्थ्यं क्षुत् तृष्णा सुमनस्कता। लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः। क्लमो दाहोऽङ्गसदनं भ्रममूर्च्छा शिरोरुजः। अरतिर्बलहानिश्च सावशेषौषधाकृतिः"। अथ भेषजभक्षणविधिमाह चरकः "देवान् गुरूंस्तथा विप्रान् पूजयित्वा प्रणम्य च। आशिषश्च समादाय श्रद्धया भेषजं भजेत्। रसायनमिवर्षीणां देवानाममृतं यथा। सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते। ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः। देवाश्च सौषधिग्रामा भूमिदेवाश्च पान्तु वः। औषधं हेमरजतमृद्भाजनपरिस्थितम्। पिबेदामजनस्याग्रे प्रसन्नवदनेक्षणः। विश्रान्तस्तूपविश्याथ पीत्वा पात्रमधोमुखम्। निःक्षिप्याचम्य चलितताम्बूलाद्युपयोजयेत्।"

२जले ३मुखे च निघण्टुः। ४विष्णौ पु० "निर्दोषं भेषजं भिषक्" विष्णुस०। तद्भक्षणविहितनक्षत्रादिकं ज्यो० त० उक्तं यथा

"विष्णुधर्मोत्तरे। हरिं गोविप्रचन्द्रार्कसुराग्नीन् प्रतिपूज्य च। पठन्निमं मन्त्रमिमं पुण्यं विद्वान् भेषजमारभेत्। ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः। ऋषयश्चौषधिग्रामा भूतसङ्घाश्च पान्तु ते। रसायनमिवर्षीणां देवानाममृतं यथा। सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते। स्वयंभक्षणे तु ते इत्यत्र मे इति वदेत्। अविशेषेण स्वयंभक्षणेऽपि पठेत्। "लग्नोदये गुरुबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे। भेषूग्रपन्नगविशाखशिवेतरेषु जन्मर्क्षविद्धरहितेष्वगदः शुभाय"। "औषधकरणं चित्रायुगे विधियुगे मित्रयुगे लघुषु वारुणविष्णौ। वस्तिविरेचनवेधाः शुभदिनतिथिचन्द्रलग्नेषु"। वस्तिरुत्पुटं विरेचनं विरेकः। वेधोऽव्रणादिवेधः। "पौष्णाश्विनीद्रविणशक्रमसेन्द्रपुष्याहस्तादितीन्दुहरिमूलतामिलैः चित्रान्वितैर्भृगुबुधेन्दुरवीज्यवारे भैषज्यमाशु विरादपहन्ति रोगान्। रत्नमालायाम् च्यूनगम्भिथनव्ययशुद्धौ सद्ग्रहेषु निरतां वक्ववृत्त। आयुषम् हितकारिणि योगे कीर्त्तिता नियतमौषधसेवा। च्यूनादिषु पापयोगेक्षणशून्येषु। आयुष्मानित्यादिशुभयोगे। भीमपराक्रमे "भैषज्यपाने गुरुसोमशुक्राः शुभं विलग्नं दिवसो रवेश्च। तिथावरिक्ते करणे च शस्ते योगे च लग्ने द्विशरीरसंज्ञे"। तत्रैव "रोहिणी चानुराधा च शस्तमौषधभक्षणे" इति वचनाद्रोहिण्यामपि। "भैषज्यं सल्लघुक्षिप्रचरे मूलभे द्व्यङ्गलग्ने शुक्रेन्द्वीज्ये विदि च दिवसे चापि तेषां रवेश्च। शुद्धे रिष्फद्युनमृतिगृहे सत्तिथौ नोजनेभे" मु० चि०। "लघुमृदुचरे अश्विनीपुष्यहस्तचित्रामृगानुराधारेवतीश्रवणधनिष्ठाशततारकस्वातीपुनर्वसुभेषु मूले च भैषज्यम् औषधं प्रारब्धं भक्षितं वा सत् शुभफलदं भवतीत्यर्थः तथाचाह श्रीपतिः "पौष्णद्वये चादितिभद्वये च हस्तत्रये च श्रवणत्रये च। मैत्रे च मूले च मृगे च शस्तं भैषज्यकर्म प्रवदन्ति सन्तः"। वसिष्ठोऽपि "हस्तत्रये चाश्विनपौष्णभेषु मित्रेन्द्रमूलेषु च सूर्यवारे। भैषज्यमुक्तं शुभवासरेऽपि"। अथ द्व्यङ्गलग्ने द्विस्वभावराशिषु मिथुनकन्याधनुर्मीनेषु सत्सु शुक्रेन्द्वीज्ये विदि च

शुक्रचन्द्रबृहस्पतिबुधेषु द्विस्वभावलग्नस्थेषु सत्सु च पुनस्तेषां शुक्रेन्दुजीवबुधानां रवेश्च दिवसे वारे सत्तिथौ रिक्तावाररहिते दिने भैषज्यं सत्। उक्तञ्च दीपिकायाम् "द्व्यङ्गोदये गुरुबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे"। अथ रिःफद्युनतिग्महे लग्नात् द्वादशसप्ताष्टमगृहेषु शुद्धेषु शुभपापरहितेषु सत्सु भैषज्यं सत् तत्र वर्षफलप्रश्नादिना सत्यायुर्द्दाययोगे औषधसेवनं हितमित्ययं विशेषो ध्येयः। तदुक्तं श्रीपतिना "द्यूनमृत्युनिधनव्ययशुद्धौ षड्गृहेषु नितरां बलवत्सु। आयुषश्च हितकारिणि योगे कीर्त्तिता नियतमौषधसेवा"। कश्यपोऽपि "षट्सप्ताष्टान्त्यशुद्धौ च बलिनः शुभखेचराः। आयुर्दायकरे योगे कर्त्तव्या ह्यौषधक्रियेति"। अथ जनेभं जन्मनक्षत्रे नो भैषज्यं सत् तदुक्तं दीपिकायां "जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु। क्षौरभैषज्यवादाध्वकर्त्तनेषु च वर्जयेत्।" पी॰ धा॰।

**भेषजाङ्ग** न॰ ६त॰। औषधस्य अनुपेये वस्तुनि शब्दच॰।

**भैक्ष** न॰ भिक्षैव तत्समूहो वा अण्। १भिक्षायां २भिक्षासमूहे च। भिक्षायां भवः तत्प्रतिपाद्यग्रन्थव्याख्या वा ऋगयना॰ अण्। ३भिक्षाभवे त्रि॰ स्त्रियां ङीप्। ४तत्प्रतिपादकग्रन्थव्याख्याने च। "भिक्षाशनमनुद्योगात् प्राक् केनाप्यनिमन्त्रितम्। अयाचितं तु तद्भैक्षं भोक्तव्यं मनुरब्रवीत्" उशनाः। [२।१०८

**भैक्षचर्य्या** स्त्री चर-भावे क्यप् ६त॰। भिक्षाचरणे मनुः

**भैक्षजीविका** स्त्री ३त॰। भिक्षया जीवने त्रि॰।

**भैक्षव** न॰ भिक्षूणां समूहः खण्डिका॰ अञ्। भिक्षुसमूहे। [चातुर्वर्ण्या॰ ष्यञ्। २भिक्षायाम्।

**भैक्ष्य** न॰ भिक्षाणां समूहः ष्यञ्। १भिक्षासमूहे। भिक्षैव

**भैदिक** त्रि॰ भेदं नित्यमर्हति छेदा॰ ठञ्। नित्यभेदनार्हे

**भैम** त्रि॰ भीमस्य नृपस्येदम् अण्। १भीमनृपसम्बन्धिनि स्त्रियां ङीप्। सा च २नलपत्न्यां दमयन्त्याम्। भीमेनोपासिता अण् ङीप्। ३माघशुक्लैकादश्याम्। एका॰ त॰ विष्णुधर्मोत्तरे "मृगशीर्षे शशधरे माघे मासि प्रजायते। एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः। द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते। तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी। तिलस्य दाता भोक्ता च षट्तिली नावसीदति"। मत्स्यपुराणे "यद्यष्टम्यां चतुर्दश्यां द्वादश्यामथ भारत!। अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम्। ततः पुण्यामिमां भीमतिथिं पापप्रणाशिनीम्। उपोष्य विधिनानेन गच्छेद्विष्णोः परं पदम्। भीमतिथिं भैमीत्वेन ख्यातामेकादशीम्" रघु॰

**भैमगव** पु॰ गोत्रभेदे "हरितकुत्सपिङ्गशङ्खदर्भभैमगवानामाङ्गिरसाम्बरीषयौवनाश्वेति" आश्व॰ श्रौ॰ १२।१२।२

**भैमरथ** पु॰ भीमरथमधिकृत्य कृतो ग्रन्थः। भीमरथाधिकारेण कृते ग्रन्थे

**भैमसेन्य** पु॰ भीमसेनस्यापत्यम् कुरुत्वात् अणि प्राप्ते वार्त्ति॰ ञ्य। भीमसेनापत्ये बा॰ इञ्। भैमसेनि तत्रार्थे

**भैमायन** पुंस्त्री॰ भीमस्यापत्यं युवा इञन्तात् फक्। भीमस्य यून्यपत्ये।

**भैरव** पु॰ भीरोरिदम् अण्। १भये २तद्वति त्रि॰ अमरः। नाट्यादिप्रसिद्धे ३भयानके रसे। ४भयसाधने त्रि॰ मेदि॰ स्त्रियां ङीप्। ५शङ्करे ६तदवतारतद्गणभेदे शब्दर॰ ७नदभेदे च पु॰ हेमच॰। ८शिवपत्न्यां स्त्री ङीप्। भैरवभेदानामुत्पत्तिर्वामनपु॰ २७ अ॰ यथा "दैत्याधिपः समुत्पत्य हरोरसि गदां क्षिपत्। संस्थितस्तु महायोगी सर्वाधारः प्रजापतिः। गदापातक्षताङ्गूरि चतुर्धाऽसृगथापतत्। पूर्वधारासमुद्भूतो भैरवोऽग्निसमप्रभः। विद्याराजेति विख्यातः पद्ममालाविभूषितः। तथा दक्षिणधारोत्थो भैरवः प्रेतमास्थितः। कामराजेति विख्यातः कृष्णाञ्जनसमप्रभः। नागराजेति विख्यातस्स्रक्मालाविभूषितः। क्षतजाद्रुधिराज्जातो भैरवः शूलभूषितः। स्वच्छन्दराजेति ख्यात इन्द्रायुधसमप्रभः। भूयिष्ठाद्रुधिराज्जातो भैरवः फलभूषितः। ख्यातो लम्बितराजेति शोभाञ्जनसमप्रभः। ततो भूद्वेवराजेति भैरवः क्षतजादय। उग्रराजो बभूवाथ क्षतजाद्भैरवोऽपरः। एवं हि सप्तरूपोऽसौ कथ्यते भैरवोत्तमे!। विघ्नराजोऽष्टमः प्रोक्तो भैरवाष्टकमुच्यते।" शारदीयदुर्गापूजायां तस्याष्टौ भैरवा यथोक्तं ब्रह्मवै॰ प्र॰ख॰ ६१अ॰। "आदौ महाभैरवञ्च संहारभैरवं तथा। असिताङ्गभैरवञ्च रुरुभैरवमेव च। ततः कालभैरवञ्च क्रोधभैरवमेव च। ताम्रचूडं चन्द्रचूडम् अन्ते च भैरवद्वयम्। एतान् संपूज्य मध्ये च नव शक्तीश्च पूजयेत्।" कालीपूजादौ पूजनीया भैरवाश्च तन्त्रसारोक्ता यथा "असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः। कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः"। ९शिवगणाधिपभेदे कालि॰पु॰ ४४ अ॰ यथा "नन्दी भृङ्गी

भोजने च मुहुश्चापि तथा निशि। तत्र प्रथमकालः "प्रायः पित्तकफोद्रेके विरेकवमनार्थयोः। लेखनार्थे च भैषज्यं प्रभातेऽनन्नमाहरेत्"। अथ द्वितीयकालः "भैषज्यं विगुणे पाने भोजनाग्रे प्रशस्यते। अरुचौ चित्रभोज्यैश्च मिश्रं रुचिरमाहरेत्। समानवाते विगुणे मन्देऽग्नावग्निदीपनम्। दद्याद्भोजनमध्ये च भैषज्यं कुशलो भिषक्। व्यानकोपे तु भैषज्यं भोजनान्ते समाहरेत्। हिक्काक्षेपककम्पेषु पूर्वमन्ते च भोजनात्"। अथ तृतीयकालः "उदाने कुपिते वाते स्वरभङ्गादिकारिणि। ग्रासग्रासान्तरे देयं भैषज्यं सान्ध्यभोजने। प्राणे प्रदुष्टे सान्ध्यस्य भुक्तस्यान्ते प्रदीयते। औषधं प्रायशो धीरैः कालोऽयं स्यात् तृतीयकः"। अथ चतुर्थकालः "मुहुर्मुहुश्च तृट्छर्दिहिक्काश्वासगरेषु च। सान्नञ्च भेषजं दद्यादिति कालश्चतुर्थकः"। अथ पञ्चमकालः "ऊर्ध्वजत्रुविकारेषु लेखने बृंहणे तथा। पाचने शमने देयमनन्नं भेषजं निशि" इति पञ्चमकालः। निरन्नस्य भेषजस्य गुणमाह "वीर्य्याधिकं भवति भेषजमन्नहीनं हन्यात्तदामयमसंशयमाशु चैव। तद्बालवृद्धयुवतीमृदवश्च पीतम् ग्लानिं परां नयति चाशु बलक्षयञ्च"। सान्नस्य भेषजस्य गुणमाह "शीघ्रं विपाकमुपयाति बलेन हिंस्यादन्नावृतञ्च न मुहुर्वदनान्निरेति। एतद्धितं स्थविरबालकयाङ्गनाभ्यः प्राग्भोजनाद्यदशितं किल तच्च तद्वत्" तद्वत् अन्नावृतवत् भेषजमिति शेषः। "औषधशेषे भुक्तं भोजनशेषे यदौषधं पीतम्। न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च"। पीतमित्युपलक्षणं लीढ़ादिकञ्च। "अनुलोमोऽनिलः स्वास्थ्यं क्षुत्तृष्णा सुमनस्कताः। लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः। क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजः। अरतिर्बलहानिश्च सावशेषौषधाकृतिः"। अथ भेषजभक्षणविधिमाह चरकः "देवान् गुरूंस्तथा विप्रान् पूजयित्वा प्रणम्य च। आशिषश्च समादाय श्रद्धया भेषजं भजेत्। रसायनमिवर्षीणां देवानाममृतं यथा। सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते। ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानलाः। देवाश्च सौषधिग्रामा भूमिदेवाश्च पान्तु वः। औषधं हेमरजतमृद्भाजनपरिस्थितम्। पिबेदाप्तजनस्याग्रे प्रसन्नवदनेक्षणः। विश्रान्तस्तूपविश्याथ पीत्वा पात्रमधोमुखम्। निःक्षिप्याचम्य सलिलताम्बूलाद्युपयोजयेत्।"

२जले ३सुखे च निघण्टुः। ४विष्णौ पु० "निर्वाणं भेषजं भिषक्" विष्णुस०। तद्भक्षणविहितनक्षत्रादिकं ज्यो० त० उक्तं यथा

"विष्णुधर्मोत्तरे। हरिं गोद्विजचन्द्रार्कसुराग्नीन् प्रतिपूज्य च। पठन् मन्त्रमिमं पुण्यं विद्वान् भेषजमारभेत्। ब्रह्मदक्षाश्विरुद्रेन्द्राभूचन्द्रार्कानिलानलाः। ऋषयश्चौषधिग्रामाभूतसङ्घाश्च पान्तु ते। रसायनमिवर्षीणां देवानाममृतं यथा। सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते। स्वयंभक्षणे तु ते इत्यत्र मे इति वदेत्। अविशेषेण स्वयंभक्षणेऽपि पठेत्। "द्व्यङ्गोदये गुरुबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे। भेषूग्रपन्नगविशाखशिवेतरेषु जन्मर्क्षविष्टिरहितेष्वगदः शुभाय"। "औषधकरणं चित्रायुगे विधियुगे मित्रयुगे लघुषु वारुणविष्णौ। वस्तिविरेचनवेधाः शुभदिनतिथिचन्द्रलग्नेषु"। वस्तिश्चर्मपुटं विरेचनं विरेकः। वेधोव्रणादिवेधः। "पौष्णाश्विनीद्रविणशक्रवसेन्द्रपुष्याहस्तादितीन्दुहरिमूलहुताशमित्रैः, चित्रान्वितैर्भे गुबुधेन्दुरवीज्यवारे भैषज्यपानमचिरादपहन्ति रोगान्। रत्नमालायाम् द्यूनगतनिधनव्ययशुद्धौ सद्गुरुहोषु निरतं बलवत्सु। आयुषश्च हितकारिणि योगे कीर्त्तिता नियतमौषधसेवा। द्यूनादिषु पापयोगेक्षणशून्येषु। आयुष्मानित्यादिशुभयोगे। भीमपराक्रमे "भैषज्यपाने गुरुसोमशुक्राः शुभं विलग्नं दिवसोरवेश्च। तिथावरिक्ते करणे च शस्ते योगे च लग्ने द्विशरीरसंज्ञे"। तत्रैव "रोहिणी चानुराधा च शस्तमौषधभक्षणे" इति वचनाद्रोहिण्यामपि। "भैषज्यं लघुषु मृदुचरे मूलभे द्व्यङ्गलग्ने शुक्रेन्द्वीज्ये विदि च दिवसे चापि तेषां रवेश्च। शुद्धे रिष्फद्युनस्तनिधने सत्तिथौ नोजनेभे" मु० चि०। "लघुमृदुचरे अश्विनीपुष्यहस्तचित्रामृगानुराधारेवतीश्रवणधनिष्ठाशततारकास्वातीपुनर्वसुभेषु मूले च भैषज्यम् औषधं प्रारब्धं भक्षितं वा सत् शुभफलदं भवतीत्यर्थः तथाचाह श्रीपतिः "पौष्णद्वये चादितिभद्वये च हस्तत्रये च श्रवणत्रये च। मैत्रे च मूले च मृगे च शस्तं भैषज्यकर्म प्रवदन्ति सन्तः"। वसिष्ठोऽपि "हस्तत्रये चाश्विनपौष्णभेषु मित्रेन्दुमूलेषु च सूर्य्यवारे। भैषज्यमुक्तं शुभवासरेऽपि"। अथ द्व्यङ्गलग्ने द्विस्वभावराशिषु मिथुनकन्याधनुर्मीनेषु सत्सु शुक्रेन्द्वीज्ये विदि च

शुक्रचन्द्रवृहस्पतिबुधेषु द्विस्वभावलग्नस्थेषु सत्सु च पुनस्तेषां शुक्रेन्दुजीव्यबुधानां रवेश्च दिवसे वारे सत्तिथौ रिक्तावाररहिते दिने भैषज्यं सत्। उक्तञ्च दीपिकायाम् "चराङ्गोदये शुक्रबुधेन्दुसितेषु तेषां वारे रवेश्च सुविधौ सुतिथौ सुयोगे"। अथ रिष्फव्युत-स्तितिवर्ज्जे लग्नात् द्वादशसप्ताष्टमव्टहेषु शुद्धेषु शुभपाप-रहितेषु सत्सु भैषज्यं सत् तत्र वर्षफलप्रश्नादिना सत्यायुर्हीययोगे औषधसेवनं हितमित्ययं विशेषो ध्येयः। तदुक्तं श्रीपतिना "द्यूनशत्रु निधनव्ययशुद्धौ षट्ग्रहेषु नितरां बलवत्सु। आयुषश्च हितकारिणि योगे कीर्त्तिता नियतमौषधसेवा"। कश्यपोऽपि "षट्सप्ताष्टान्त्यशुद्धौ च बलिनः शुभखेचराः। आयुर्दीय करे योगे कर्त्तव्या त्वौषधक्रियेति"। अथ जनेभं जन्म नक्षत्रं नो भैषज्यं सत् तदुक्तं दीपिकायां "जन्मनक्षत्र-गश्चन्द्रः प्रशस्तः सर्वकर्मसु। क्षौरभैषज्यपादाध्वकर्त्त-नेषु च वर्जयेत्।" पी० धा०।

**भेषजाङ्ग** न० ६त०। औषधस्य अनुपेये वस्तुनि शब्दच०।

**भैक्ष** न० भिक्षैव तत्समूहो वा अण्।१भिक्षायां २भिक्षासमूहे च। भिक्षायां भवः तत्प्रतिपाद्यग्रन्थव्याख्या वा ऋगयना० अण्। ३भिक्षाभवे त्रि० स्त्रियां ङीप्। ४तत्प्रतिपादक-ग्रन्थव्याख्याने च। "भिक्षाशनमनुद्योगात् प्राक् केनाप्य निमन्त्रितम्। अयाचितं तु तद्भैक्षं भोक्तव्यं मनुरब्र-वीत्" उशनाः। [ २।१०८

**भैक्षचर्य्या** स्त्री चर-भावे क्यप् ६त०। भिक्षाचरणे मनुः

**भैक्षजीविका** स्त्री ३त०। भिक्षया जीवने त्रि०।

**भैक्षव** न० भिक्षूणां समूहः खण्डिका० अञ्। भिक्षु-समूहे। [चातुर्वर्ण्या० ष्यञ्। २भिक्षायाम्।

**भैक्ष्य** न० भिक्षाणां समूहः ष्यञ्। १भिक्षासमूहे। भिक्षैव

**भैदिक** त्रि० भेदं नित्यमर्हति छेदा० ठञ्। नित्यभेदनार्हे

**भैम** त्रि०भीमस्य न्टपस्येदम् अण्।१भीमन्टपसम्बन्धिनि स्त्रियां ङीप्। सा च २नलपत्न्यां दमयन्त्याम्। भीमेनोपासिता अण् ङीप्।३माघशुक्लैकादश्याम्। एका०त०विष्णुधर्मोत्तरे "स्मगशीर्षे शशधरे माघे मासि प्रजायते। एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः। द्वादश्यां षट्तिला-चारं कृत्वा पापात् प्रमुच्यते। तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी। तिलस्य दाता भोक्ता च षट्-तिली नावसीदति"। मत्स्यपुराणे "यद्यष्टम्यां चतु-र्दश्यां द्वादशत्रामथ भारत!। अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम्। ततः पुण्यामिमां भीमतिथिं पापप्रणाशिनीम्। उपोष्य विधिनानेन गच्छेद्विष्णोः परं पदम्। भीमतिथिं भैमीत्वेन ख्यातामेकादशीम्"रघु०

**भैमगव** पु० गोत्रभेदे "हरितकुत्सपिङ्गलशकुन्दर्भमैत्रगवानामा-ङ्गिरसाम्बरीषयौवनाश्वेति" आश्व० श्रौ० १२।१२।२

**भैमरथ** पु० भीमरथमधिकृत्य कृतो ग्रन्थः। भीमरथाधि-कारेण कृते ग्रन्थे

**भैमसेन्य** पु० भीमसेनस्यापत्यम् कुरुत्वात् अपि प्राप्ते वार्त्ति० ञ्य। भीमसेनापत्ये बा० इञ्। भैमसेनि तत्रार्थे

**भैमायन** पुंस्त्री० भीमस्यापत्यं युवा इञन्तात् फक्। भीमस्य यून्यपत्ये।

**भैरव** पु० भीरोरिदम् अण्। १भये २तद्वति त्रि० अमरः। नाट्यादिप्रसिद्धे ३भयानके रसे। ४भयसाधने त्रि० मेदि० स्त्रियां ङीप्। ५शङ्करे ६तदवतारतद्गणभेदे शब्दर० ७नदभेदे च पु० हेमच०। ८शिवपत्न्यां स्त्री ङीप्। भैरवभेदानामुत्पत्तिर्वामनपु० २७ अ० यथा "दैत्याधिपः समुत्पत्य हरोरसि गदां क्षिपत्। संहि-तस्तु महायोगी सर्वाधारः प्रजापतिः। गदापातक्षता-द्भूरि चतुर्धाऽस्तगयापतत्। पूर्वधारासमद्भूतो भैरवो-ऽग्निसमप्रभः। विद्याराजेति विख्यातः पद्ममालावि-भूषितः। तथा दक्षिणधारोत्थो भैरवः प्रेतमाश्रितः। कामराजेति विख्यातः कृष्णाञ्जनसमप्रभः। नागराजेति विख्यातश्चक्रमालाविभूषितः। क्षतजाद्रुधिराज्जातो भैरवः शूलभूषितः। स्वच्छन्दराजेति ख्यात इन्द्रा-युधसमप्रभः। मूर्धजाद्रुधिराज्जातो भैरवः फलभूषितः। ख्यातो लम्बितराजेति शोभाञ्जनसमप्रभः। ततो भूद्वेवराजेति भैरवः क्षतजादय। उग्रराजो बभूवाथ क्षतजाद्भैरवोऽपरः। एवं हि सप्तरूपोऽसौ कथ्यते भैरवोत्तमे!। विघ्नराजोऽष्टमः प्रोक्तो भैरवाष्टकमुच्यते।" शारदीयदुर्गापूजायां तत्राष्टौ भैरवा यथोक्तं ब्रह्मवै० प्र०ख०६१अ०। "आदौ महाभैरवञ्च संहारभैरवन्तथा। असिताङ्गभैरवञ्च रुरुभैरवमेव च। ततः कालभैरवञ्च क्रोधभैरवमेव च। ताम्रचूडं चन्द्रचूडम् अन्ते च भैरवद्वयम्। एतान् संपूज्य मध्ये च नव शक्तीश्च पूज-येत्।" कालीपूजादौ पूजनीया भैरवाश्च तन्त्रसारोक्ता यथा "असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः। कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः"। ९शिवगणा-धिपभेदे कालि०पु० ४४ अ० यथा "नन्दी भृङ्गी

महाकालो वेतालो भैरवस्तथा। अङ्गं भूत्वा महेशस्य वीतभीतास्तपोधनाः। येनानुषशरीरेण प्रापिरे तपसो बलात्। गणानामाधिपत्यन्तु ते जानन्ति हरं परम्।" शिवांशकरवीरभूपचन्द्रशेखरस्य पार्वत्यंश तारावतीगर्भजाते १०वेतालसोदरे च यथोक्तं कालिपु०४५अ०। "प्रविवेश ततो देवी स्वयं तारावतीतनौ। महादेवोऽपि तस्यान्तु कामार्थं समुपस्थितः। कालावसाने तस्यान्तु सद्योजातं सुतद्वयम्। अभवन्नृपशार्दूल! तथा शाखामृगाननम्। ततस्तयोर्नाम चक्रे नारदवचनान्नृपः। ज्येष्ठो भैरवनामाभूत् भीरोः पुत्रो भयङ्करः। वेतालसदृशः कृष्णो वेतालोऽभूत्तथाऽपरः"। अपि च "योऽसौ भृङ्गी हरसुतो महाकालोऽपि भूगतः। तावेव गौरीशापेन सम्भूय नरयोनिजौ। वेतालभैरवौ जातौ पृथिव्यां रूपवेश्मनि। यथा भृङ्गिमहाकालावुत्पन्नौ प्राक् तथा शृणु। योऽसौ महाभैरवाख्यः सकायः सारभो हरः। भैरवः पृथगेवायं गणाध्यक्षो हरात्मजः।" देवीभेदेषु शिवरूपभैरवभेदाश्च तोडलतन्त्रे १पटले उक्ता यथा "शिव उवाच। शृणु चार्वङ्गि! शुभगे! कालिकायाश्च भैरवम्। महाकालं दक्षिणाया दक्षभागे प्रपूजयेत्। महाकालेन वै सार्द्धं दक्षिणा रमते सदा। ताराया दक्षिणे भागे अक्षोभ्यं परिपूजयेत्। समुद्रमथने देवि! कालकूटं समुत्थितम्। सर्वे देवाः सदाराश्च महाक्षोभमवाप्नुयुः। क्षोभादिरहितं यस्मात् पीतं हालाहलं विषम्। अतएव महेशानि! अक्षोभ्यः परिकीर्त्तितः। तेन सार्द्धं महामाया तारिणी रमते सदा। महात्रिपुरसुन्दर्य्यां दक्षिणे पूजयेत् शिवम्। पञ्चवक्त्रं त्रिनेत्रञ्च प्रतिवक्त्रं सुरेश्वरि!। तेन सार्द्धं महादेवी सदा कामकुतूहला। अतएव महेशानि! पञ्चमीति प्रकीर्त्तिता। श्रीमद्भुवनसुन्दर्य्यां दक्षिणे त्र्यम्बकं यजेत्। स्वर्गे मर्त्त्ये च पाताले या चाद्या भुवनेश्वरी। एतया रमते तेन त्र्यम्बकस्तेन कथ्यते। सशक्तिश्च समाख्यातः सर्वतन्त्रे प्रपूजितः। भैरव्या दक्षिणे भागे दक्षिणामूर्त्तिसंज्ञकम्। पूजयेत् परयत्नेन पञ्चवक्त्रं तमेव हि। छिन्नमस्तादक्षिणांशे कबन्धं पूजयेत् शिवम्। कबन्धपूजनाद्देवि! सर्वसिद्धीश्वरो भवेत्। धूमावती महाविद्या विधवारूपधारिणी। बगलाया दक्षभागे एकवक्त्रं प्रपूजयेत्। महारुद्रेति विख्यातं जगत्संहारकारकम्। मातङ्गीदक्षिणांशे च मतङ्गं पूजयेत् शिवम्। तमेव दक्षिणामूर्त्तिं जगदानन्दकारकम्। कमलाया दक्षिणांशे विष्णुरूपं सदाशिवम्। पूजयेत् परमेशानि! स सिद्धो नात्र संशयः। पूजयेदन्नपूर्णाया दक्षिणांशे च रूपकम्। महामोक्षप्रदं देवं दशवक्त्रं महेश्वरम्। दुर्गाया दक्षिणे देशे नारदं परिपूजयेत्। नकारः सृष्टिकर्त्ता च दकारः पालकः सदा। रेफसंहाररूपत्वान्नारदः परिकीर्त्तितः। अन्यासु सर्वविद्यासु ऋषिर्यः परिकीर्त्तितः। स एव तस्या भर्त्ता च दक्षभागे तु पूज्यते"। ११रागभेदे स च महादेवस्वरूपः। धैवतनिषादषड्जगान्धारमध्यमरूपपञ्चस्वरमिलितैर्गेयः। अस्य स्थानं धैवतस्वरः शरदृतौ प्रातर्गेयता। मतान्तरे अस्य रागिण्यः पञ्च। भैरवी वैराटी मधुमाधवी सिन्धवी बङ्गाली चेति" कल्लानाथमते भैरवी गुर्जरी भाषा विलावली कर्णाटी वतंसा वड्हंसी चेति षट्। भरतमते मधुमाधवी ललिता वरारी बहाकुली भैरवी चेति अन्यविधा पञ्च सङ्गी० दा० दशग्रा। १२महाविद्यामूर्त्तिभेदे स्त्री ङीप्। सा च पञ्चदशविधा तन्त्रसारे उक्ता यथा

१त्रिपुरभैरवी २सम्पत्प्रदा भैरवी ३कौलेशभैरवी ४भयविध्वंसिनी भैरवी ५सकलसिद्धिदा भैरवी ६चैतन्यभैरवी ७कामेश्वरी भैरवी ८षट्कूटा भैरवी ९नित्या भैरवी १०रुद्रभैरवी ११भुवनेश्वरी भैरवी १२सकलेश्वरी भैरवी १३त्रिपुरबालाभैरवी १४नवकूटा बालाभैरवी १५अन्नपूर्णेश्वरीभैरवी च एतासां मन्त्रध्यानादिकं क्रमेण तत्र दृश्यम्। १३तारिणीशक्तियोगिनीभेदे च "महाकाल्यथ रुद्राणी उग्रा भीमा तथैव च। घोराख्या भ्रामरी चैव महारात्रिश्च सप्तमी। अष्टमी भैरवी प्रोक्ता योगिनीस्ताः प्रपूजयेत्"तन्त्रसा०। तत्र शिवस्य पत्न्यां "कालीतन्त्रादौ "भैरव्युवाच "कालीपूजा श्रुता नाथ" कालीकवचम् १४भैरवरागस्य पत्नीरूपरागिणीभेदे स्त्री "भैरवी कौशिकी चैव भाषा वेलावली तथा। बङ्गाली चेति रागिण्यो भैरवस्यैव वल्लभाः"संगीतसा०। मतान्तरे १५मालवरागस्य पत्नीभेदे "धानसी मानसी चैव रामकीरी च विश्रुता। आशावरी भैरवी च मालवस्य प्रिया इमाः"। तस्या गानकालः पूर्वाह्नः। "विभाषा ललिता चैव कामोदा पटमञ्जरी। रामकीरी रामकेली वेला मारी च गुर्जरी। देशकारी च सुभगा पञ्चमी च गडागड़ी। भैरवी चाथ

कौमारी रागिण्यो दश पञ्च च। एताः पूर्वाह्णकाले तु गीयन्ते गायनोत्तमैः” सङ्गीतदा०। १५नागभेदे पु० भा० आ० ५७ अ०।

**भैरवीचक्र** न० भैरव्याः पूजनार्थं चक्रम्। देवीपूजार्थं कुलाचारवतां चक्राकारसमूहे तद्विधिर्यथा उत्पत्तितन्त्रे “नित्यं नैमित्तिकं काम्यं प्रकुर्य्याच्च दिने दिने। कुलवारे कुलर्क्षे च तिथौ चन्द्रनके तथा। भैरव्याः कल्पितं चक्रं संस्थाप्य पूर्ववत् प्रिये। सुरायां शोधनं कुर्य्याद् यथावत् परमेश्वरि!। प्रवृत्ते भैरवीचक्रे सर्वे वर्णा द्विजोत्तमाः। निवृत्ते भैरवीचक्रे सर्वे वर्णाः पृथक् पृथक्”।

**भैषज** न० भेषजमेव स्वार्थे अण्।१औषधे २लावकखगे जटा० भिषजो गोत्रापत्यं गर्गा० यञ्। भैषज्य तस्य छात्राः कण्वा०अण् यलोपः। ३भिषजो गोत्रापत्यच्छात्रेषु ब०व०

**भैषज्य** न०भिषजः कर्म भेषज-स्वार्थे वा ष्यञ्। १औषधे भिषजोऽपत्यं गर्गा० यञ्। २भिषजोऽपत्ये पुंस्त्री०।

**भैष्णज** पु० ब०व० भिष्णजो गोत्रापत्यं गर्गा०यञ् तस्य छात्राः कण्वा० अण् यलोपः। भिष्णगगोत्रापत्यच्छात्रेषु।

**भैष्णज्य** पुंस्त्री०भिष्णजो गोत्रापत्यं गर्गा०यञ्। तद्गोत्रापत्ये

**भैष्मकी** स्त्री भीष्मकस्य अपत्यम् इञ् ङीप्। भीष्मकनृपकन्यायां रुक्मिण्याम् हरिवं० १२० अ०।

**भोक्तृ** त्रि० भुज-भोजने अवने च तृच्। १भोजनकर्त्तरि २भोगकर्त्तरि च ३पालनकर्त्तरि हेमच०। स्त्रियां ङीप्। ४विष्णौ पु० “भ्राजिष्णुर्भोजनं भोक्ता” विष्णुस०।

**भोग** स्त्री भुज-भावकर्मादौ घञ्। १सुखे २दुःखे ३सुखदुःखाद्यनुभवे ४स्त्र्यादीनां भाटके ५भाटकमात्रे च ६सर्पदेहे ७तत्फणायाञ्च अमरः। ८धने ९पालने १०भोजने च मेदि० ११देहे १२सर्पे १३माने च शब्दरत्ना० १४रव्यादीनां राशिगतिकाले “अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः” तिथित०। १५भूम्यादीनां फलभुक्तौ भुक्तिशब्दे दृश्यम्। १६विभवभेदे “कर्त्ता च देही भोक्ता च आत्मा भोजयिता सदा। भोगो विभवभेदश्च निष्कृतिर्मुक्तिरेव च” ब्रह्मवै० प्र० ख० २३अ०।

**भोगक** त्रि० भोग+संज्ञायां कन्। भोगकाजीने ततः विदा० अपत्ये घञ्। भौगक तदपत्ये पुंस्त्री०।

**भोगगृह** न० भोगार्थं गृहम्। वासगृहे हेमच०।

**भोगदेह** पु० भुज्यते सुखदुःखादिकमत्र भुज-आधारे घञ् कर्म०। पुण्यपापफलभोगार्थे देहे “प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते” शु० त०। २भोगसाधने देहे स च लिङ्गशरीरात्मकः तस्यैव भोगसाधनत्वात् “पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्” वेदान्तिनः। सांख्यमते पञ्चप्राणस्थले पञ्चभूतमात्रा इति भेदः। स्थूलदेहस्य भोगावच्छेदकत्वात् उपचारात् तथात्वमिति बोध्यम्। तद्वृत्तिर्यथा “शृणु देहविवरणं कथयामि यथागमम्। पृथिवी वायुराकाशस्तेजस्तोयमिति स्फुटम्। देहिनां देहबीजञ्च स्रष्टुः सृष्टिविधौ परम्। पृथिव्यादिपञ्चभूतैर्यो देहो निर्म्मितो भवेत्। स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह। वृद्धाङ्गुष्ठप्रमाणञ्च यो जीवः पुरुषः कृतः। बिभर्त्ति सूक्ष्मदेहन्तं तद्रूपं भोगहेतवे। स देहो न भवेद्भस्म ज्वलदग्नौ यमालये। जले न नष्टो देहो वा प्रहारे सुचिरे कृते। न शस्त्रे च न चास्त्रे च न तीक्ष्णकण्टके तथा। तप्तद्रवे तप्तलोहे तप्तपाषाण एव च। प्रतप्तप्रतिमाश्लेषेऽप्यत्यूर्ध्वपतनेऽपि च। न च दग्धो न भग्नश्च भुङ्क्ते सन्तापमेव सः” ब्रह्मवै०प्र०२९अ०।

**भोगपाल** पु० भोगं भोगसाधनमश्वं पालयति पालि-अण् उप०स०। अश्वरक्षके शब्दमा०।

**भोगपिशाचिका** स्त्री भोगे पिशाचिकेव। क्षुधायाम् हारा०

**भोगप्रस्थ** पु० उत्तरस्थदेशभेदे वृ०सं० १४अ० दृश्यम्।

**भोगभूमि** स्त्री भोगार्थैव भूमिः न कर्मार्था। भारतवर्षातिरिक्ते वर्षे “तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने!। यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः” विष्णुपु० २अंशे ३अ०।

**भोगवती** स्त्री भोगः सर्पशरीरं भूम्नाऽस्त्यस्याम् मतुप् मस्य वः ङीप्।१पातालगङ्गायाम् “भोगवती च पाताले स्वर्गे मन्दाकिनी तथा” इति पुराणम्। २कुमारानुचरमातृभेदे भा० श० ४७ अ०। ३नदीभेदे भा० व० १२अ०। ४भोगयुक्ते त्रि० स्त्रियां ङीप्।

**भोगवर्द्धन** पु० देशभेदे मार्क०पु० ५७ अ० ४८ श्लो०।

**भोगसद्मन्** न० भोगार्थं सद्म। वासगृहे शब्दरत्ना०।

**भोगायतन** न० ६त०। स्थूलदेहे “भोक्तुरधिष्ठानात् भोगायतननिर्माणमन्यथा पूतिभावः” सा०सू०।

**भोगार्ह** न० भोगमर्हति अर्ह-अण् उप०स०। १धान्ये राजनि० भोग्ये २वस्तुमात्रे च त्रि०।

**भोगावली** स्त्री ६त०। १भोगश्रेणौ। २स्तुतौ उपचारात् ३स्तुतिपाठके जटा० ४नागपुर्य्यां हेमच०।

**भोगावास** पु० भोगार्थं आवासः। वासगृहे हारा०।

**भोगिक** पु० भोगः अश्वभोगः अस्त्यस्य कर्मत्वेन ठन्। अश्वरक्षके शब्दमा०।

**भोगिकान्त** पु० ६त०। वायौ त्रिका०। सर्पाणामनिलाहारत्वात् तस्य तत्कान्तत्वम्।

**भोगिगन्धिका** स्त्री भोगिनः सर्पस्येव गन्धो यस्याः कप् कापि अत इत्त्वम्। लघुनकुलाख्ये वृक्षे नैघण्टुप्र०।

**भोगिन्** पु० भोगः फणाऽस्त्यस्य इनि। १सर्पे अमरः तद्देवताके। २अश्लेषानक्षत्रे च ३ग्रामपाले ४नृपे मेदि०तस्य प्रशस्तभोगवत्त्वात्तथात्वम्। ५नापिते विश्वः। ६व्याहृत्तिकरे हेमच० ७भोगयुते त्रि० स्त्रियां ङीप् सा च दर्महिषीभिन्नराजभार्य्यायाम् अमरः भक्तिनीत्यत्र पाठान्तरम्।

**भोगिभुज्** पु० भोगिनं सर्पं भुङ्क्ते भुज–क्विप्। मयूरे नैघण्टुप्र०।

**भोगिवल्लभ** न० ६त०। चन्दने राजनि०।

**भोगीन्द्र(श)** पु० भोगी इन्द्र इव ६त० वा। १अनन्तदेवे शब्दरत्ना० २वासुकौ च।

**भोग्य** न०भुज–ण्यत् कुत्वम्। १धने २धान्ये च। भोगमर्हति यत्। ३भोगार्हे त्रि०। भोगार्हस्त्रियां ४वेश्यायाञ्च स्त्री राजनि०।५आधिभेदे पु०यथाह नारदः“विश्वासहेतु द्वावत्र प्रतिभूराधिरेव च। अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः। क्रतकालोपनेयश्च यावद्देयोद्यतस्तथा। स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च”।

**भोज** पु० भुज–अच्। १स्वनामख्याते देशभेदे स च देशः (भोजपुर) इति ख्यातः। २धारापुरस्य नृपभेदे भोजप्रबन्ध भोजचरितादौ तद्वृत्तान्तो दृश्यः। “धन्यः श्रीभोजराजस्त्रिभुवनविजयी”उद्भटः। वसुदेवस्य शान्तिदेवागर्भजाते ३पुत्रभेदे पु० हरिवं० ६६अ०। ४द्रुह्युनृपपुत्रभेदे भा० आ० ८२ अ०।

**भोजक** त्रि० भोजयति भुज–णिच्-ण्वुल्। १भोजनसम्पादके याज्ञ०२।२२५श्लो०भुज-ण्वुल्।२भोजनकर्त्तरि त्रि०

**भोजकट** पु०भोजः कट इव। भोजाख्ये देशे भा०स०३५अ०। भोजकटे भवः “एङ्प्राचां देशे” पा० वृद्धसंज्ञायाम् “वृद्धाच्छः” पा० छ। भोजकटीय तद्देशभवे त्रि०।

**भोजदेव** पु० भोजो देव इव। भोजराजे तेन च पातञ्जलवृत्तिप्रभृतिग्रन्थाः कृताः।

**भोजन** न० भुज–ल्युट्। १कठिनद्रव्यस्य गलबिलाधःसंयोजने। करणे ल्युट्। २धने निघण्टुः ३विष्णौ पु०।“भ्राजिष्णुर्भोजनं भोक्ता”विष्णुस०। “भोज्यरूपा च प्रकृतिर्यया भोजनमुच्यते”मायाया भोज्यरूपेण परिणामात् विष्णोस्तदधिष्ठानत्वात् तथात्वमिति भाष्यादौ दृश्यम्। भोजनगुणादि भावप्र० उक्तम् आहारशब्दे ८९७पृ० दृश्यम्। तत्र विशेष आह्निकतत्त्वोक्तोऽत्राभिधीयते “विष्णुपु० “मन्त्राभिमन्त्रितं शस्तं न च पर्युषितं नृप!। अन्यत्र फलमांसेभ्यः शुष्कशाकादिकात् तथा। तद्वदौदरिकेभ्यश्च गुडपक्वेभ्य एव च। भुञ्जीतोद्धृतसाराणि न कदाचिन्नरेश्वर!। नाशेषं पुरुषोऽश्नीयादन्यत्र जगतीपते!। मध्वम्बुदधिसर्पिर्भ्यः सक्तुभ्यश्च विवेकवान्। अश्नीयात्तन्मना भूत्वा पूर्वन्तु मधुरं रसम्। लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्तथा। प्राग्द्रवं पुरुषोऽश्नन् वै मध्ये च कठिनाशनः। पुनरन्ते द्रवाशी तु बलारोग्ये न मुञ्चति। अनिन्द्यं भक्षयेदित्थं वाग्यतोऽन्नमकुत्सयन्। पञ्च ग्रासान् महामौनं प्राणाद्याप्यायनाय तत्”। मन्त्राभिमन्त्रितमिति मन्त्रानादेशे गायत्रीति वचनात् गायत्र्याभिमन्त्रितम्। गारुडे “शाकं मूलञ्च भूयिष्ठम् अत्यम्लञ्च निवर्जयेत्। न चैकरससेवायां प्रसज्येत कदाचन।” “मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः” छन्दोगप०।विष्णुः “न तृतीयमथाश्नीयाद्रात्रावपि कदाचन”। भगवद्गीतासु “आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः। रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः। कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः। आहारा राजसस्येष्टा दुःखशोकामयप्रदाः। यातयामं गतरसं पूति पर्युषितञ्च यत्। उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम्”। महाभारते “इन्दुव्रतसहस्रन्तु यश्चरेत् कायशोधनम्। पिबेद् यश्चापि गङ्गाम्भस्तस्य साम्यं न यात्यसौ”। गङ्गामधिकृत्य मत्स्यपुराणम् “अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम्”। देवीपुराणम् “ये चैव नृत्तिका स्वकात्तीर्थादाहृत्य भुञ्जते। ते सर्वपापनिर्मुक्ताः प्रभवन्ति गतामयाः”। मनुः “आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः। श्रियः प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते ह्युदङ्मुखः”। नियमे त्वेवम्। अनियमे तु नोदङ्मुखः। हारीतः “नोदङ्मुखोऽश्नीयात्”इति “निष्कामस्य तु प्राङ्मुखेनैव भोजनम्। यथाह देवलः“प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठमधि-

ष्ठितः। विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः” जीवन्मातृकस्य दक्षिणामुखत्वनिषेधमाह आपस्तम्बः “दक्षिणामुखो न भुञ्जीत एवंविधभोजनमनायुष्यं मातुरुपदिशति” केचित्तु “क्षुरकर्म्म गयाश्राद्धं तिलैस्तर्पणमेव च। न जीवत्पितृकः कुर्य्याद्दक्षिणामुखभोजनम्” इत्याचारेन्दुधृतवाक्याज्जीवत्पितृकस्यापि निषेध इत्याहुः। व्यासः “पञ्चार्द्रो भोजनं कुर्य्यात् प्राङ्मुखो मौनमास्थितः। हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता।” गोभिलः “भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत्। भोजने विघ्नकर्त्तासौ ब्रह्महापि तथोच्यते”। आपस्तम्बः “दिवा पुनर्न भुञ्जीतान्यत्र फलमूलेभ्यः”। मनुः “नातिप्रगे नातिसायं न सायं प्रातराशितः”। अतिप्रगेऽचिरोदितसूर्य्ये अतिसायं सूर्य्यास्तमितिसमय एवं प्रातराशितः दिनभोजनेनातितृप्तः न सायं न रात्रौ भुञ्जीतेत्यर्थः। आपस्तम्बः “यस्तु भोजनशालायां भोक्तुकाम उपस्पृशेत्। आसनस्थो न चान्यत्र स विप्रः पङ्क्तिदूषकः” भोजनशालायां भोक्तुकामः सन् आसनस्थो वान्यत्र स्थितो वा न चोपस्पृशेत्। बौधायनः “उपलिप्ते समे स्थाने शुचौ श्लक्ष्णासनान्विते। चतुरस्रं त्रिकोणञ्च वर्त्तुलञ्चार्द्धचन्द्रकम्। कर्त्तव्यमानुपूर्व्वेण ब्राह्मणादिषु मण्डलम्। अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः। तेषान्तु यक्षरक्षांसि हरन्त्यन्नानि तद्बलात्”। आपस्तम्बः “भिन्नकांस्ये तु यो विप्रो यदि भुङ्क्ते तु कामतः। उपवासेन चैकेन पञ्चगव्येन शुद्ध्यति”। तथा शूद्रादिभोजनेनापरिष्कृतपात्रेऽपि। वृद्धमनुः “ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले। पलाशपद्मपत्रे वा गृही भुक्त्वैन्दवं चरेत्”। नव्यवर्द्धमानधृताग्निपुराणम् “अर्कपत्रे तथा पृष्ठे आयसे ताम्रभाजने। करे कर्पटके चैव भुक्त्वा चान्द्रायणं चरेत्” पृष्ठे कदलीपत्रादिपृष्ठे। पैठीनसिः “ताम्ररजतसुवर्णाश्मशङ्खशुक्तिस्फटिकानां भिन्नमभिन्नम् इति न दोषः”। अत्र पाषाणपात्रं भाजने विहितम् “तैजसानां मणीनाञ्च सर्व्वस्याश्ममयस्य च। भस्मनाद्भिर्मृदा चैव शुद्धिरुक्ता मनीषिभिः” इति मनुना पाषाणपात्रस्य शुद्धिविधानाच्च। प्रचेताः “ताम्बूलाभ्यञ्जने चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्”। अत्रिः “आसने पादमारोप्य यो भुङ्क्ते ब्राह्मणः क्वचित्। मुखेन चान्नमश्नाति तुल्यं गोमांसभक्षणैः”। मुखेन हस्तोत्तोलनं विना शवादिवदित्यर्थः। आश्वमेधिके “आर्द्रपादस्तु भुञ्जीत प्राङ्मुखश्चासने शुचौ। पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः”। बौधायनः “भोजनं हवनं दानमुपहारः परिग्रहः। बहिर्जानु न कार्य्याणि तद्वदाचमनं स्मृतम्”। हारीतः “मार्ज्जनाञ्च बलिकर्म भोजनानि दैवतीर्थेन कुर्य्यात्”। पराशरभाष्ये वृद्धमनुः “न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना। नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत्”। मार्कण्डेयपुराणम् “पादप्रसारणं कृत्वा न च वेष्टितमस्तकः”। मनुः “पूजयेदशनं नित्यं चाद्याच्चैव मकुत्सयन्। दृष्ट्वा हृष्येत् प्रसीदेच्च प्रणमेच्चैव सर्व्वदा। अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः प्रार्थयेत्ततः। अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत्”। विष्णुपु० “नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः। बहिःस्था वायवः पञ्च तेषां भूमौ प्रदीयते। अदत्त्वा बाह्यवायुभ्यः प्राणादिभ्यो न होमयेत्”। इति शिष्टपठितवचनान्नागादिभ्यो बलिदानमिति प्राचीनाचारः। तस्मात् देवेभ्योदत्त्वा भोक्तव्यं तथा च भगवद्गीतायाम् “इष्टान् भोगान् हि वो देवादास्यन्ति यज्ञभाविताः। तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः”। यज्ञैः संवर्द्धिता देवा वो युष्मभ्यं भोगानन्नादीनि वृष्ट्यादिद्वारा दास्यन्ति। अतो देवैर्दत्तान् अन्नादीन् तेभ्योऽदत्त्वा यो भुङ्क्ते स चौर एव। स्मृतिः “निवेद्य प्राशनात् पूर्व्वं देवपादोदकाहुतिः। होतव्या जठरे वह्नौ स्वेन पाणितलेन तु”। तेन पादोदकेनापोशानं कृत्वा प्राणाहुतिर्नैवेद्येन कार्य्या” आ० त० रघु०।

**भोजनगर** न० भोजदेशस्थे नगरे धारापुरे भा० उ० ११७ अ० भोजपुरादयोऽप्यत्र। [१०।४७ अ० भोजनाथादयोऽप्यत्र

**भोजपति** पु० ६त०। १भोजदेशाधिपे २कंसराजे च भाग०

**भोजिन्** त्रि० भुज-णिनि। भोजनकर्त्तरि स्त्रियां ङीप्।

**भोज्य** त्रि० भोज-ण्यत् भक्षणार्थत्वान्न कुत्वम्। १भक्षणीयद्रव्यमात्रे २भक्ष्यभेदे आहारशब्दे दृश्यम्। श्राद्धकल्पे पितॄणां तृप्त्यर्थं देये ३अन्नादौ च।

**भोज्यसम्भव** पु० सम्भवत्यस्मात् सम्+भू-अपादाने अप् ६त०। भोज्यजाते देहस्थे रसधातौ शब्दच०।

**भोट** पु० (भोटान) देशभेदे शब्दरत्ना०।

**भोटाङ्ग** पु० (भोटान) देशभेदे शब्दर०।

**भोलि** पु० भा-उलि। उष्ट्रे त्रिका०।

**भोस्** अव्य०भा-डोसि । १सम्बोधने अमरः २प्रश्नविधाने शब्दर०

**भौजीय** त्रि० भोजे देशभेदे भवः गहा०छ । भोजदेशभवे ।

**भौत** पु०भूतानि प्राणिनोऽधिकृत्य प्रवृत्तः तानि देवता वा अस्य अण् । १देवले ब्राह्मणे शब्दमा०। बलिकर्मरूपे गृहस्थ-कर्त्तव्ये पञ्चयज्ञान्तर्गते २महायज्ञभेदे । "होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" मनुः । २रात्रौ स्त्री ङीप् हेमच० । भूतप्रियत्वात्तस्यास्तथात्वम् ।

**भौतिक** त्रि० भूतानि पृथिव्यादीनि पिशाचान् वा अधिकृत्य जातानि ठक् । १भूताधिकारेण जाते "आहङ्कारिकत्व-श्रुतेर्न भौतिकानि" सा० सू० । २उपद्रवे व्याध्यादौ । ३मुक्तायां राजनि० । ४महादेवे पु० त्रिका० ।

**भौत्य** पु० भूतेरपत्यं वा० यक् । चतुर्दशमनौ हरिवं ७अ०। "बभूवाङ्गिरसःपुत्रो भूतिर्नामातिकोपनः" इत्युपक्रमे मार्कपु० १०० तदुत्पत्त्यादिकमुक्तम् ।

**भौम** पु० भूमेरपत्यं तस्या इदं वा अण् । १नरकासुरे "त्वयि भौमं गते जेतुम्" माघः । २मङ्गलग्रहे च । ३भूमिभवे त्रि० मेदि०। भौमजलगुणादिकम् अम्बुशब्दे ३३०पृ० दृश्यम् । ४भूमिव्यापके अम्बरे धरणिः। ५रक्तपुनर्नवायां राजनि०

**भौमन** पु० भूम्नोऽपत्यम् अण् अन्नन्तत्वात् न टिलोपः । विश्वकर्मणि भा० आ० ३२अ० ।

**भौमिक** त्रि० भूमौ तिष्ठति अधिकरोति वा ठक् । भूम्यधि-कारिणि २भूमिस्थिते च मनुः ५।१४२ । [अमरः ।

**भौरिक** त्रि० भूरि स्वर्णमधिकरोति ठक् । कनकाध्यक्षे

**भौरिकि** पुंस्त्री० भूरिकस्यर्षेरपत्यमिञ् । भूरिकर्षेरपत्ये स्त्रियां क्रौड्या० ष्यङ् । भौरिक्या तदपत्ये स्त्रियां चित्त्वात् ङीष् च भौरिकीत्यपि तत्रार्थे । ततः अपत्ये तिका० फिञ् । भौरिक्यायणि भौरिकेरपत्ये पुंस्त्री० । भौरिक्या० विषये द्यें विधल् । भौरिकिविध तद्विषये देशे

**भौरिक्यादि** पु० देशे विषये विधल्प्रत्ययनिमित्ते शब्दगणे स च गणः पा०ग० उक्तो यथा "भौरिकि भौलिकि चौपयत चैटयत काणेय वाणिजक वालिकाज्य सैकयत वैकयत" । [भौरिकिशब्दवत् सर्वम् ।

**भौलिकि** पुंस्त्री० भौरिकि+वा रस्य लः । भौरिकिशब्दार्थे

**भौलिङ्गि** पुंस्त्री०भूलिङ्गस्य खगभेदस्यापत्यम् अण् । भूलिङ्ग-खगापत्ये स्त्रियां गौरा०ङीष् । ततः युवप्रत्ययस्य लुक्

**भौवादिक** पु० भ्वादौ गणे पठितः ठक् वात्पूर्वम् ऐच् । भ्वादिगणपठिते धातौ । एवम् आदादिकजौहोत्यादि-कदैवादिकादयोऽपि अदाद्यादिगणपठिते धातौ ।

**भ्यस** भये भ्वा० आ० अक० सेट् । भ्यसते अभ्यसिष्ट ।

**भ्यसते** अव्य०। उत्तरार्दिश निघण्टुः ।

**भ्रंश** पु० भ्रन्श-भावे घञ् । व्यंसने अमरः । अधःपाते च

**भ्रंशकला** अव्य०ज्यो०। हिंसायाम् गणरत्न० टी० । भ्रंश-कलाकृत्य हिंसित्वे त्यर्थः ।

**भ्र(भ्रु)(भ्रू)कुंश** पु० भ्रुवा कुंशा इङ्गितज्ञापनं यस्य । "रुभ्रूकुंशादीनाम्" वार्त्ति० अ पक्षे वा ह्रस्वः इति रूपत्रयम् स्त्रीवेशधारिणि नटे अमरः ।

**भ्र(भ्रु)(भ्रू)कुटि** पुंस्त्री० भ्रुवः कुटिः कौटिल्यम् । भ्रुकुं-शवत् रूपत्रयम् । भ्रुवः कौटिल्ये अमरः ।

**भ्र(भ्रु)क्ष** अदने भ्वा० उ०सक० सेट् वा रस्य लः धातुपाठः । भ्र(भ्रु)क्षति ते अभ्र(भ्रु)क्षीत् । बभ्र(भ्रु)क्ष ।

**भ्रजस्** पु० भ्राजते भ्राज-असुन् पृषो० ह्रस्वः । १अग्नौ छन्दसि यजु०१५।५। "अग्निर्वै भ्रजश्छन्दः" शत० ब्रा० ८।५।२।५ । २आदित्यरूपे क्षुरे च "क्षुरो भ्रजश्छन्द इत्यसौ वा आदित्यः क्षुरो भ्रजश्छन्दः" तत्रैव ।

**भ्रण** शब्दे भ्वा०पर०सक०सेट् । भ्रणति अभ्राणीत् अभ्रणीत् बभ्राण । [अभ्रंशीत् भ्रश्यते ।

**भ्रन्श** अधःपतने दिवा०अक०सेट् । भ्रश्यति इरित् अभ्रशत्

**भ्रन्श** अधःपाते अक० सेट् । भ्रंशति इरित् अभ्रशत् । ऋदित् । भ्रंशित्वा भ्रष्ट्वा । भ्रष्टः । [भ्रुवो भङ्गे ।

**भ्र(भ्रु)(भ्रू)भङ्ग** पु० ६त० । भ्रुकुंशवत् वा अकारह्रस्वौ

**भ्रम** चलने भ्वा०पर०अक०सेट् । भ्रमति कौटिल्ये इरित् । अभ्रमत् अभ्रमीत् । बभ्राम फणा० भ्रेमतुः बभ्रमतुः ।

**भ्रम** चलने दिवा०पर०सक०सेट् शमा०। भ्राम्यति अभ्रमीत् ।

**भ्रम** भ्वा०पर०अक०सेट् । भ्रमति अभ्रमीत् फणा० भ्रेमतुः बभ्रमतुः चङि न ह्रस्वः । ज्वला० अण भ्रमः भ्रामः ।

**भ्रम** पु० भ्रम-घञ् । १मिथ्याज्ञाने ( अन्यथाभूतस्य वस्तुनो-ऽन्यथारूपेण ज्ञाने ) २जलनिर्गमस्थाने ३कुन्दे (कुंद) ४भ्रमणे च मेदि० । भ्रमश्च तद्वति तत्प्रकारकज्ञानम् । व्यधिकरणप्रकारावच्छिन्नविषयताशालिज्ञानम् । यत्प्रका-रिका या विषयता तत्प्रकारव्यधिकरणविषयताकज्ञानम् । स्वप्रकारव्यधिकरणविषयताकज्ञानम् । स्वव्यधिकरणप्र-कारावच्छिन्नविषयताप्रतियोगिज्ञानम्" (चि०) तदभाव-वन्निरूपिततन्निष्ठविषयताप्रतियोगिताकतदभाववति तत्-सम्बन्धेन तद्धर्मविशिष्टनिरूपितवैशिष्ट्यविषयताशालि ज्ञानम् । विशेष्यतासम्बन्धेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियो-गिताकतदभाववदवच्छिन्ना या तद्व्यक्तिप्रकारिता त-

ख्यातिज्ञानम् ।( मु॰मा॰ ) "मिथ्याज्ञानापरपर्य्यायोऽयं निश्चयः" (गौ॰सू॰) अतस्मिंस्तद्ग्रहः (भा॰प॰)। तद्‌भाववति तत्प्रकारकं ज्ञानम् यथा शुक्तौ इदं रजतम् इति ज्ञानम्। (त॰प्र॰) भ्रमो द्विविधः। विपर्य्यासः संशयश्च। तद्धेतवश्च दोषा दोषशब्दे ३७६२ पृ॰ दृश्याः

**भ्रमण** न॰ भ्रम–ल्युट्। गतिभेदे पर्य्यटने कर्म्मन्शब्दे दृश्यम्

**भ्रमणी** स्त्री भ्रम–करणे ल्युट् ङीप्। १क्रीडार्थपर्य्यटने तत्साधने २क्रीडिकायाञ्च मेदि॰। [त्रिका॰

**भ्रमत्कुटी** स्त्री भ्रमन्ती कुटीव। तृणादिनिर्म्मिते छत्रे

**भ्रमर** पुंस्त्री॰ भ्रम-करन्। १मधुकरे अमरः स्त्रियां जातित्वात् ङीष्। २कामुके मेदि॰।३भ्रमरच्छल्लीलताभेदे स्त्री राजनि॰ टाप्।

**भ्रमरक** पु॰ भ्रमर इव कायति कै-क। ललाटलम्बिते भ्रमरतुल्ये चूर्णकुन्तले अमरः। स्वार्थे क। भ्रमरक भ्रमरे बालमूषिकायाञ्च मेदि॰। (लरमीन) वेधनयन्त्रभेदे दशकुमा॰। जलभ्रमणे विश्वः।

**भ्रमरकीट** पु॰ भ्रमर इव कीटः। (कुमेरपोका) कीटभेदे

**भ्रमरच्छल्ली** स्त्री लताभेदे राजनि॰। भृङ्गच्छल्ल्यादयोऽप्यत्र "भृङ्गच्छल्ली च कटुका तिक्ता दीपनरोचनी" राजनि॰।

**भ्रमरपदक** न॰ "भ्रमरपदकमिदमभिहितम्" द्वादशाक्षरपादके वृ॰ र॰ टी॰ उक्ते छन्दोभेदे।

**भ्रमरप्रिय** पु॰ ६त॰। धाराकदम्बे रत्नमा॰।

**भ्रमरमारी** स्त्री भ्रमरं मारयति मारि अण् उप॰स॰गौरा॰ ङीष्। भृङ्गारिलतायाम् राजनि॰। भृङ्गार्य्यादयोऽप्यत्र "भ्रमरारिश्च तिक्ता स्यात् पित्तश्लेष्मकफापहा। त्रिदोषकुष्ठकण्डूतिशोफव्रणविनाशिनी" राजनि॰।

**भ्रमरविलसिता** स्त्री "मोगौ नौगौ भ्रमरविलसिता" छन्दोम॰ उक्ते एकादशाक्षरपादके छन्दोभेदे अस्य क्लीवत्वमेके वदन्ति।

**भ्रमरातिथि** पु॰ भ्रमरः अतिथिर्यस्य। चम्पके राजनि॰।

**भ्रमरानन्द** पु॰ भ्रमरान् आनन्दयति आ+नन्द–णिच्–अण् उप॰स॰।१बकुले २अतिमुक्तके रक्ताम्लाने च राजनि॰

**भ्रमरालक** पु॰ भ्रमर इव अलति पर्य्याप्नोति अल–ण्वुल्। ललाटस्थे चूर्णकुन्तले हेमच॰।

**भ्रमरी** स्त्री भ्रमर+ङीष्। १षट्पद्यां अस्त्यर्थे अच् गौरा॰ ङीष्। तदाकारवत्यां २जतुकायां ३पुत्रदात्र्याञ्च राजनि॰

**भ्रमरेष्ट** पु॰ ६त॰। १श्योनाकवृक्षे २भार्ग्यां ३भूमिजम्ब्वाञ्च स्त्री राजनि॰।

**भ्रमरोत्सवा** स्त्री भ्रमराणामुत्सवो मोदो यत्र। माधवीलतायाम् राजनि॰। [निशानावक्ते शब्दमार्जके हेमच॰।

**भ्रमासक्त** त्रि॰ भ्रमे निशानार्थचक्रभ्रमणे आसक्तः। शस्त्र-

**भ्रंश** अधःपतने दि॰पर॰सक॰सेट्। भ्रश्यति अभ्रंशीत् अभ्रशीत्। उदित् क्त्वा वेट्। भ्रंशित्वा भ्रष्ट्वा। भ्रष्टः।

**भ्रशिमन्** पु॰भृशस्य भावः अतिशये वा इमनिच् ऋतोरः। १भृशत्वे २अतिशयभृशे च। अतिशये इष्ठन् भ्रशिष्ठ ईयसुन् भ्रशीयस् अतिशयभृशे त्रि॰ईयसुनि स्त्रियां ङीप्।

**भ्रष्ट** त्रि॰ भ्रंश–क्त। च्युते गलिते स्वार्थे क। तत्रार्थे स च उपका॰।

**भ्रस्ज** पाके तु॰ उ॰सक॰ अनिट्। भृज्जति आर्द्धधातुके वा भर्जादेशः स च सेट् अभ्राक्षीत् अभर्जीत्। अभ्रष्ट अभर्जिष्ट। बभर्ज बभ्रज्ज।

**भ्राज** दीप्तौ भ्वा॰आत्म॰अक॰सेट्। भ्राजते अभ्राजिष्ट फणा॰ भ्रेजे बभ्राजे। चङि वा ह्रस्वः। क्विप् अथ भ्राजथुः।

**भ्राज** न॰ वर्षसाध्ये गवामयनसत्त्रे विषुवन्नामके प्रधानदिने गेये दिवाकीर्त्त्ये सामभेदे "दिवाकीर्त्त्यं साम भवति" इत्युपक्रमे तस्य दिवाकीर्त्त्यत्वं समर्थ्य "भ्राजाभ्राजे पवमानमुखे भवतो मुखत एवाभ्यां ताभ्यां तमोऽपघ्नन्ति" ता॰ब्रा॰४।६।१४। "यद्यप्यत्र पवमानमुख इति सामान्यसम्बन्ध एव दृश्यते ये गायत्रे ते गायत्रीपूत्तरयोः पवमानयोरिति विशेषावगतेरेवं व्याख्यातं सम्प्रदायात्। अनेन भ्राजाभ्राजयोः साम्नोः स्थाननियमोऽर्थादुक्तो भवति" भा॰ तच्च साम "परिस्वानो गिरिष्ठ" इत्यस्मिन् गेयम् तच्च ऊहगाने ३प्र॰१२।

**भ्राजक** त्रि॰ भ्राज–ण्वुल्। १दीप्तिशीले २पित्तभेदे न॰ शब्दरत्ना॰ पित्तशब्दे ४२२५ पृ॰ भावप्र॰ वाक्यं दृश्यम्।

**भ्राजिर** पु॰ भौत्यमन्वन्तरे देवभेदे मार्कपु॰ १००अ॰।

**भ्राजिष्णु** त्रि॰ भ्राज–इष्णुच्। १दीप्तिशीले २विष्णौ पु॰। "भ्राजिष्णुर्भोजनं भोक्ता" विष्णुस॰।

**भ्रातुष्पुत्र** पु॰ ६त॰ अलुक्स॰ कस्का॰। भ्रातुः पुत्रे।

**भ्रातृ** पु॰ भ्राज–तृच् पृषो॰। एकपितृजाते (भाइ) इति ख्याते पदार्थे तस्य स्वसा सहोक्तौ एक॰। २भ्रातृभगिन्योः द्वि॰व॰।

**भ्रातृक** त्रि॰ भ्रातुरिदम् ठञ्। भ्रातृसम्बन्धिनि।

**भ्रातृज** पुंस्त्री॰ भ्रातुर्जायते जन–ड ५त॰। १भ्रातुःपुत्रे २तत्कन्यायां स्त्री।

**भ्रातृजाया** स्त्री ६त॰। भ्रातृपत्न्यां सवौ नियोगेनापि तद्‌-

गमननिषेधो यथा "भ्रातृजायां कमण्डलुम्" कलिशब्दे १८७२पृ० दृश्यम् । अनियोगेन तद्गमने दोषो यथा "भ्रातृजायापहारी च मातृगामी भवेन्नरः" ब्रह्मवै०प्र० ५६ अ० । भ्रातृपत्न्य.दयोऽप्यत्र ।

**भ्रातृद्वितीया** स्त्री भ्रातृभोजनार्थां द्वितीया । कार्त्तिकशुक्लपक्षस्य द्वितीयायाम् यमद्वितीयायां तद्विधिः निर्णयसि० भविष्ये "कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ! । यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्च्चितः। अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता । अस्यां निजगृहे विद्वन् ! न भोक्तव्यं ततो नरैः । स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् । दानानि च प्रदेयानि भगिनीभ्योऽपि विधानतः। स्वर्णालङ्कारवस्त्रान्नपूजासत्कारभोजनैः । सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः" प्रतिपन्नाः मातृभगिन्य इति हेमाद्रिः ।"पितृव्यभगिनीहस्तात् प्रथमायां युधिष्ठिर ! । मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप ! । पितुर्मातुः स्वसुः कन्ये तृतीयायां तयोः करात् । भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् । सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्द्धनम् । यस्यां तिथौ यमुनया यमराजदेवः सम्भोजितः प्रतिजगत् स्वसृसौहृदेन । तस्यां स्वसुः करतलादिह यो भुनक्ति प्राप्नोति रत्नधनधान्यमनुत्तमं सः। गौडास्तु "यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत् । अर्घ्यश्चात्र प्रदातव्यं यमाय सहजद्वयैः मन्त्रः "एह्येहि मार्त्तण्डज ! पाशहस्त ! यमान्तकालोकधरामरेश !। भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते ! भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् । प्रीतये यमराजस्य यमुनाया विशेषतः" ज्येष्ठाऽग्रजातेति वदेदिति आर्त्ताः । इत्यन्नदानमित्यप्याहुः । ब्रह्माण्डपुराणेऽपि "या तु भोजयते नारी भ्रातरं युग्मके तिथौ । अर्च्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् । भ्रातुरायुःक्षयो राजन् न भवेत् तत्र कर्हिचित्" ।

**भ्रातृवधू** स्त्री ६त०। (भाद्दरबौ) कनिष्ठभ्रातृजायायां हला०

**भ्रातृभगिनी** स्त्री द्वि०व०। वा एकशेषः । भ्रात्रासहित भगिन्याम् ।

**भ्रातृवत्** त्रि० भ्राताऽस्त्यस्य मतुप् मस्य वः । भ्रातृयुक्ते ।

**भ्रातृव्य** पु० भ्रातुः पुत्रः भ्रातृ+व्यत् ।१भ्रातृपुत्रे २शत्रौ च हेमच० "अतिपाप्मानं भ्रातृव्यं नयति य एतया स्तुते"ता०ब्रा०२.७।२। [ज्येष्ठभ्रातरि (भासुर) शब्दरत्ना०।

**भ्रातृश्वशुर** पु० भ्राता पतिभ्राता श्वशुर इव पूज्यत्वात् । पति-

**भ्रात्र** न० भ्रातुरिदम् शिवा० अण् । भ्रातृसम्बन्धिनि ।

**भ्रात्रीय** पुंस्त्री० भ्रातुरपत्यम् छ । भ्रातृपुत्रे अमरः ।

**भ्रान्त** न० भ्रम-भावे क्त ।१भ्रमणे "जनस्थाने भ्रान्तम्" नाट० कर्त्तरि क्त । २मिथ्याज्ञानयुक्ते ३भ्रमणयुक्ते च त्रि०। ४धुस्तूरे ५मत्तगजे च पु० राजनि० ।

**भ्रान्ति** स्त्री भ्रम–क्तिन् । १भ्रमणे २अयथार्थज्ञाने च । "षाण्मासिके तु संप्राप्ते भ्रान्तिः संजायते नृणाम् । धात्वाक्षराणि दृष्टानि पत्राद्गृह्णान्यतः पुरा" ज्यो० त० । भ्रान्तिज्ञानञ्च चित्तविक्षेपः योगान्तरायः पात०सू० उक्तः चित्तविक्षेपशब्दे २९४१ पृ० दृश्यम् ।

**भ्रान्तिमत्** त्रि० भ्रान्तिरस्त्यस्य मतुप् मस्य वः । १भ्रमज्ञानयुते स्त्रियां ङीप् । २अर्थालङ्कारभेदे पु० अलङ्कारशब्दे दृश्यम् । [२भ्रमनाशके त्रि० स्त्रियां ङीप् ।

**भ्रान्तिहर** पु० भ्रान्तिं हरति हृ-ट । १मन्त्रिणि शब्दरत्ना०

**भ्राम** त्रि० भ्रम-ज्वला० कर्त्तरि ण । भ्रमयुक्ते ।

**भ्रामक** त्रि० भ्रामयति भ्रम–णिच्-ण्वुल् ।१भ्रमजनके २शृगाले पुंस्त्री० स्त्रियां ङीप् । ३धूर्त्ते त्रि० । ४सूर्य्यावर्त्ते मणौ ५अयस्कान्ते (चुम्बकपातर) मेदि० तस्य लौहचालकत्वात् तथात्वम् ।

**भ्रामर** न० भ्रमरेण संभृतं सम्पादितम् अस्येदं वा अण् । १मधुनि ।२भ्रमरसम्बन्धिनि त्रि० ३अयस्कान्ते पु०मेदि० । "तदाहं भ्रामरं रूपं कृत्वाऽसंख्येयषट्पदम्" इत्युपक्रम्य "भ्रामरीति च मां लोकाः" इति देवीमा० उक्ते ४चण्डीमूर्त्तिभेदे स्त्री। भ्रामरमधुगुणादि "किञ्चित् सूक्ष्मैः प्रसिद्धेभ्यः पुष्पेभ्योऽभिभिचितम् । निर्मलं स्फटिकाभं यत्तन्मधु भ्रामरं स्मृतम् । भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु । स्वादुपाकमभिष्यन्दि विशेषात् पिच्छिलं हिमम्" भावप्र० उक्तम् । ५अपस्माररोगे शब्दमाला ।

**भ्रामरिन्** त्रि० भ्रामरं भ्रमरस्येव घूर्णनमस्त्यस्य इनि । अपस्माररोगयुते "भ्रामरी गण्डमाली च" मनुः ३।१६१। टीकायां कुल्लू० ।

**भ्राश** भासे भ्वा०आ०अक०सेट् । भ्राशते भ्राश्यते अभ्राशिष्ट । फणा० भ्रेशे बभ्राशे । ऌदित् चङि न ह्रस्वः । द्विद् भ्राट् भ्राशौ ।

**भ्राष्ट्र** पु० भ्रस्ज-करणे ष्ट्रन् । १अम्बरीषे (भाजनाखोला) अमरः । भ्राष्ट्रे संस्कृतः अण् । २अम्बरीषसंस्कृते भृष्टतण्डुलादौ त्रि० स्त्रियां ङीप् ।

**भ्राष्ट्रकि** पु० गोत्रर्षिप्रवरभेदे प्रवरा० ।

भ्राष्ट्रवतिन् पु० गोत्रप्रवरर्षिभेदे हेमा० व्र० प्रवराध्यायः ।

भ्रास दीप्तौ दिवा०आ०अक०सेट् । भ्रास्यते अभ्रासिष्ट ।

भ्रास दीप्तौ भ्वा०आ०अक०सेट् । भ्रासते अभ्रासिष्ट फणा० भ्रेसे बभ्रासे द्वित् । भ्रासथुः ऋदित् चङि न ह्रस्वः ।

भ्री भये अक० भरणे सक० क्र्या० वा प्वा० पर० अनिट् । भ्रीणाति भ्रिणाति अभ्रैषीत् ।

भ्रुड संवरणे सक० संघाते अक० तु० कु० पर० सेट् । भ्रुडति अभ्रुडीत् बुभ्रोड ।

भ्रू स्त्री भ्रम–डू । नेत्रयोरूर्ध्वस्थायां रोमराजौ अमरः । तच्छुभाशुभलक्षणं गरु०६६अ० उक्तं यथा "विशालोन्नता सुखिनो दरिद्रा विषमभ्रुवः । धनी दीर्घासंसक्तभ्रूर्बाले-न्दूत्रतसुभ्रुवः । आढ्यो निस्वश्च खण्डभ्रूर्मध्यास्त्र वि-नतभ्रुवः" । भ्रुवो मूलम् जाहच् । भ्रूजाह भ्रूमूले न० ।

भ्रूक्षेप पु० ६त० । १भ्रूभङ्गे २सङ्केतज्ञापनाय भ्रुवोस्तिर्य्यक्-चालने "भ्रूक्षेपमात्रानुमितप्रवेशाम्" कुमारः ।

भ्रूण आशायां विशङ्कायाञ्च चु०आत्म०सक०सेट् । भ्रूणयते अबुभ्रुणत ।

भ्रूण पु० भ्रूण–घञ् । स्त्रीणां १गर्भे २बालके च अमरः ।

भ्रूणघ्न त्रि० भ्रूणं गर्भं हन्ति हन-क । भ्रूणहत्याकारके क्विप् भ्रूणहाप्यत्र । "अपि भ्रूणहनं मासात्" मनुः । तत्प्रायश्चित्तं प्रा० वि० उक्तं यथा "तत्र पुंस्त्वेन ज्ञाते पुरुषवधप्रायश्चित्तं स्त्रीत्वेन ज्ञाते स्त्री-वधप्रायश्चित्तम् । अविज्ञाते तु पुंवधप्रायश्चित्तमाह मनुः "हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत् । राजन्यवैश्यौ चेज्यानावात्रेयी(रजस्वलां)मेव च स्त्रियम्" एतदेवेति । ब्रह्मवधप्रायश्चित्तमित्यर्थः । ब्राह्मणीगर्भवधविषयमिदं तस्यैव प्रकृतत्वात् । क्षत्रियादिगर्भवधे तु यद्वर्णो गर्भस्त-द्वर्णवधप्रायश्चित्तं कार्य्यं यथा याज्ञवल्क्यः "यागस्थ-क्षत्रविड्घाते चरेद्ब्रह्महणो व्रतम् । गर्भहा च यथा-वर्णं तथात्रेयीनिषूदनः" व्रतपदोपादानात् ज्ञानत इदम् अज्ञानतस्तदर्द्धं तेन ज्ञानकृते ब्राह्मणगर्भवधे द्वा-दशवार्षिकम् । क्षत्रियगर्भवधे षड्वार्षिकं वैश्यगर्भवधे सार्द्धवार्षिकं शूद्रगर्भवधे नवमासिकं, धेनुसङ्कलनमप्यूह-नीयम्" ।

भ्रूभङ्ग पु० ६त० । क्रोधादिज्ञापनार्थं भ्रुवस्तिर्य्यक्चालने "भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य" इति कुमारः ।

भ्रेज भासे भ्वा०आत्म०अक०सेट् । भ्रेजते अभ्रेजिष्ट । ऋदित् चङि न ह्रस्वः । अबिभ्रेजत् त ।

भ्रे(भ्ल)ष पतने चलने च अक०भ्वा०उभ० सेट् । भ्रे(भ्ले)षति ते अभ्रे(भ्ले)षीत् अभ्र(भ्ले)षिष्ट । ऋदित् चङि न ह्रस्वः । अबिभ्रे(भ्ले)षत् त । तत्र पतने आ० भये चलने उभ० अक० इति भेदः ।

भ्रेष पु० भ्रेष–घञ् । उचितस्थानात् पतने अमरः । "कारणभ्रेषे कार्य्यभ्रेषो मा भूदिति" वृ०उ० भा० ।

भ्रौवेय त्रि० भ्रुव इदम् "भ्रुवो वुक् च" पा० ढक् वुक् च । भ्रूसम्बन्धिनि च ।

भ्लक्ष भक्षणे भ्वा०उभ०सक०सेट् । भ्लक्षति ते अभ्लक्षीत् अभ्लक्षिष्ट । दुर्गमते भ्लक्षधातुरयम् ।

भ्लाश दीप्तौ वा दिवा० पक्षे भ्वा० आ० अक० सेट् । भ्लाश्यते भ्लाशते अभ्लाशिष्ट फणा० भ्लेशे बभ्लाशे । द्वित् (अथु) भ्लाशथुः । वोपदेवमते भ्राशधातुरयम् ।

## इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते वाचस्पत्ये भकारादिशब्दार्थसङ्कलनम् ।

---

# म

मकारः पवर्गस्य पञ्चमवर्णः । अस्योच्चारणस्थानमोष्ठौ नासिका च जिह्वाग्रेण ओष्ठयोः स्पर्शेनोच्चारणम् आभ्यन्तरः प्रयत्नः अतएवास्य स्पर्शवर्णता अनुनासिकता च । बाह्य-प्रयत्नाश्च संवारनादघोषाः अल्पप्राणश्च । अस्य ध्येय-स्वरूपमुक्तं कामधेनुत० "मकारं शृणु चार्वङ्गि ! स्वयं परमकुण्डली । तरुणादित्यसङ्काशं चतुर्वर्गप्रदायकम् । पञ्चदेवमयं वर्णं पञ्चप्राणमयं सदा" ।

वर्णाभिधानेऽस्य पर्य्याया उक्ता यथा "मः कालो कीलितः कालो महाकालो महान्तकः । वैकुण्ठो वसुधा चन्द्री रविः पुरुषराजकः । कालभद्रो जया मेधा विश्वदा दीप्तसंज्ञकः । जठरश्च श्रमो मानं लक्ष्मीर्मातोग्रबन्धनी । विषं शिवो महावीरः शशिप्रभा जनेश्वरः । प्रमत्तः प्रियस्य रुद्रः सर्वाङ्गो वह्निमण्डलम् । मातङ्गमालिनी विन्दुः श्रवणा भरणो वियत्" । तदधिष्ठातृदेवताध्यानं यथा "कृष्णां दशभुजां भीमां पीतलोहितलोचनाम् ।

कृपाम्बरधरां नित्यां धर्मकामार्थमोक्षदाम्। एवं ध्यात्वा मकारन्तु तन्मन्त्रं दशधा जपेत्”। मातृकान्यासेऽस्य जठरे न्यास्यता। काव्यादौ प्रथमं प्रयोगे दुःखं फलं “सुखमवमरणं क्लेशदुःखं पवर्गः” वृ॰र॰टी॰उक्तेः।

**म** पु॰ मा—क। १शिवे २चन्द्रे ३चतुर्मुखे ब्रह्मणि एकाक्ष॰। ४यमे ५समये ६विषे ७विष्णौ च मेदि॰। छन्दःशास्त्रोक्ते ८त्रिगुरुके गणे “मो भूमिस्त्रिगुरुः श्रियं दिशति यः” वृ॰र॰टी॰। तस्य देवता भूमिः काव्यादौ प्रथमप्रयोगे श्रीलाभः फलम्। [क्लिष्ट ममङ्क।

**मक** भूषणे गतौ च भ्वा॰आ॰सक॰सेट् इदित्। मङ्कते अम-

**मक** पुंन॰ म इव कायति कै—क अर्द्धर्चादि। शिवादितुल्ये।

**मकर** पुंस्त्री॰ मं विषं किरति कॄ—अच्। १जलजन्तुभेदे अमरः स्त्रियां जातित्वात् ङीष्। स च गङ्गावाहनं कामस्य ध्वजश्च। मकराकारत्वात् २मेषादितो दशमे राशौ। तद्राशिश्च उत्तराषाढाशेषपादत्रयश्रवणधनिष्ठार्द्धमिति नवपादात्मकः। तद्राशिस्वरूपादिकं नी॰ता॰ उक्तं यथा “मृगचरः क्ष्माऽङ्गरवो यमाशास्त्री पिङ्गरूपः शुभभूमिशीतः। स्वल्पप्रजाबल्कनीरदालिरादौ चतुष्पात् विषमोदयो विट्”। मकि—अच् पृषो॰ मकं भूषणं राति ददाति रा—क। ३निधिभेदे निधिशब्दे ४६८ पृ॰ दृश्यम्। [कारे कर्णभूषणे।

**मकरकुण्डल** पु॰मकराकृति कुण्डलं कर्णभूषणम्। मकरा॰

**मकरकेतन** पु॰ मकरः मकरचिह्नितं केतनं ध्वजो यस्य। कन्दर्पे हेमच॰ मकरकेत्वादयोऽप्यत्र।

**मकरध्वज** पु॰ मकरो ध्वजोऽस्य। कामदेवे अमरः।

**मकरन्द** पु॰ मकरमपि द्यति कामजनकत्वात् दो-अवखण्डने क पृषो॰सुम्। १पुष्परसे अमरः। २कुन्दवृक्षे च ३किञ्जल्के न॰ राजनि॰।

**मकरन्दवती** स्त्री मकरन्द+बाहुल्ये मतुप् मस्य वः ङीप्। १पाटलायाम् शब्दच॰ २मधुविशिष्टे त्रि॰।

**मकरन्दिका** स्त्री “रसैः षड्भिर्लोकैर्मनसजजा गुरुर्मकरन्दिका” वृ॰ र॰ टीकोक्ते ऊनविंशत्यक्षरपादके छन्दोभेदे। [भेदे मा॰ भी॰ ६८ अ॰।

**मकरव्यूह** पु॰ मकर इव व्यूहः। मकराकारे सैन्यनिवेशन-

**मकरसंक्रान्ति** स्त्री ७त॰। मकरे राशौ रवेः १संक्रमणे २तदुपलक्षितपुण्यकालोपलक्षिते च दिने।

**मकराकर** पु॰ ६त॰। समुद्रे हेमच॰। [करञ्जभेदे शब्दच॰।

**मकराकार** पु॰ मकरस्येवाकारः फले यस्य। (काँटाकरमचा)

**मकराक्ष** पु॰ रावणपक्षस्थे राक्षसभेदे रामा॰ लङ्का॰१७अ॰।

**मकराङ्क** पु॰मकरोऽङ्को यस्य। १कामदेवे २मनुभेदे अजयपालः

**मकरालय** पु॰ ६त॰। समुद्रे मकरावासादयोऽप्यत्र।

**मकरासन** न॰ रुद्रयामलोक्ते पूजाङ्गे आसनभेदे “मकरासनमावक्ष्ये वायूनां स्तम्भकारणात् पृष्ठे पादद्वयं बद्ध्वा हस्ताभ्यां पृष्ठबन्धनम्”।

**मकरीप्रस्थ** पु॰ मकर्य्या उपलक्षितः प्रस्थः। यदा कदाचित् मकरीसम्बद्धे प्रस्थे सानौ काश्यां॰ अस्य नाद्युदात्तता।

**मकष्टु** पु॰ऋषिभेदे तस्यापत्यं शुभ्रा॰ ढक्। माकष्टवेय तदपत्ये पुंस्त्री॰।

**मकार** पु॰ म+स्वरूपे कार। मस्वरूपे वर्णे। मकारादिर्वर्ण आद्यक्षरेऽस्त्यस्य अच्। मद्यमत्स्यमांसमैथुनमुद्रारूपे मकारादिवर्णयुक्ते तन्त्रोक्ते पदार्थपञ्चके। [रूपको॰।

**मकुट** न॰ मकि—भूषणे उट पृषो॰। शिरोभूषणे मुकुटे त्रि-

**मकुति** स्त्री मकि—उति पृषो॰। शूद्रशासने त्रिका॰।

**मकुर** पु॰ मकि-उरच् पृषो॰। १दर्पणे २बकुलवृक्षे ३कुलालदण्डे ४कलिकायाञ्च हेमच॰।

**मकुल** पु॰ मकि-उलच् पृषो॰। १मुकुले २बकुलवृक्षे शब्दरत्ना॰।

**मकुष्टक** पु॰मकि-भूषायां उ-पृषो॰मकुं भूषां स्तकति प्रतिहन्ति स्तक-अच् सुषामा॰षत्वम्। वनमुद्गे (मुगानि)राजनि॰।

**मकुष्ठ** पु॰ मीयते मा—उ कुत्सितं तिष्ठति स्था—क अम्बष्ठा॰ षत्वम् कर्म॰।१व्रीहिभेदे “मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः। वान्तिकृन्मधुरः पाके क्रिमिकृज्ज्वरनाशनः” भावप्र॰। २मन्दगामिनि त्रि॰। स्वार्थे क। ३वनमुद्गे

**मकूलक** पु॰ मकि—ऊलच् पृषो॰ संज्ञायां कन्। १दन्तीवृक्षे अमरः। २मुकुले रमानाथः।

**मक्क** गतौ भ्वा॰आ॰सक॰सेट्। मक्कते अमक्किष्ट ममक्के।

**मक्कल्ल** पु॰ शूलरोगभेदे “प्रजातायाश्च नार्य्या रूक्षशरीराया-स्तीक्ष्णैरविशोधितं रक्तं वायुना तद्देशगेनातिसंरुद्धं नाभेरधःपार्श्वयोर्वस्तौ वस्तिशिरसि वा ग्रन्थिं करोति। ततश्च नाभिवस्त्युदरशूलानि भवन्ति सूचीभिरिव निस्तुद्यते भिद्यते दीर्य्यत इव च पक्वाशयः। समन्तादाध्मानमुदरे मूत्रसङ्गश्च भवतीति मक्कल्ललक्षणम्” सुश्रुतः।

**मक्कूल** न॰ मकक—ऊलच्। शिलाजतुनि शब्दर॰।

**मक्कोल** पु॰ मकक्—बा॰ ओल। खटिकायां त्रिका॰।

**मक्ष** रोषे संघाते च भ्वा॰पर॰अक॰सेट्। मक्षति अमक्षीत्।

**मक्षवीर्य्य** पु॰मक्षं संहतं वीर्य्यं यस्मात्। ५ब॰ पियालवृक्षे राजनि॰।

**मक्षिका** स्त्री मश-सिकन् । कीटभेदे वंभराजीकीटे (मौ-माछि) उज्ज्वल० । पृषो० दीर्घः तत्रार्थे राजनि० ।

**मक्षिकामल** न० ६त० । सिक्थके (मोम) राजनि० ।

**मक्षिकासन** न० ६त० । (मौचाक) सिक्थकाधारे राजनि० पाठान्तरम् । [ऋ०८।२६।६

**मक्षु** न० मश—उन् । १शीघ्रे निघण्टुः २शीघ्रगतियुते त्रि०

**मख** सर्पणे भ्वा०पर०सक०सेट् । मखति अमाखीत् अमखीत् ममाख मेखतुः । [मङ्ख्यते ।

**मख** सर्पणे भ्वा०पर०सक०सेट् इदित् । मङ्खति अमङ्खीत्

**मख** पु० मख—संज्ञायां घ । यज्ञे अमरः ।

**मखत्रातृ** पु०मखं विश्वामित्रर्षिमखं त्रायते त्रै–तृच् । श्रीरामे शब्दर० । [त्रि० ।

**मखद्विष्** पु०मखाय द्वेष्टि द्विष-क्विप् । १राक्षसे २यज्ञद्वेषिणि

**मखाग्नि** पु० ६त० । यज्ञे संस्कृताग्नौ जटा० । मखानलादयोऽप्यत्र ।

**मखान्न** न० मखे तत्काले भोज्यमन्नं सुन्यन्नत्वात् शा०त० । (माखना) १जलजाते सूक्ष्मे फलभेदे "मखान्नं पद्मबीजस्य गुणैस्तुल्यं विनिर्दिशेत्" भावप्र० । ६त० । २यज्ञान्ने च ।

**मखासुहृत्** पु० ६त० । दक्षयज्ञस्य नाशके महादेवे हेमच०

**मग** सर्पणे भ्वा०पर०सक०सेट् इदित् । मङ्गति अमङ्गीत् ।

**मगध** पु० मङ्ग्यते अधोगम्यतेऽनेन मगि-क पृषो० मगं दोषं पापं वा दधाति धा-क । १देशभेदे २तद्देशस्थे जने ब०व० । स च कीकटेतिसंज्ञः अङ्गदेशस्यास्य । कीकटेषु गया पुण्या नदी पुण्या पुनःपुना" इत्युक्तेः गयादीनामेव पुण्यत्वम् । अन्येषामपुण्यत्वं प्रत्युत पापजनकत्वम् "अङ्गवङ्गकलिङ्गान्ध्रान् गत्वा संस्कारमर्हति" मिता० देवलोक्तेः । "तीर्थयात्रां व्यतिरेकेणैतान् गत्वा तत्रैव चिरमुषित्वा गङ्गागमनं प्रायश्चित्तम् । तदशक्तौ पुनरुपनयनं अतिचिरवासे तु पुनरुपनयनं कृत्वा चान्द्रायणं कर्त्तव्यम्" प्रा० वि० । अतस्तस्य पापजनकत्वात् तथात्वम् । ततः भवार्थे गहा० छ । मगधीय तत्र भवे त्रि०

**मगधा** स्त्री मगध उत्पत्तिस्थानत्वेनास्त्यस्या अच् । पिप्पल्यां रत्नमा० । [याते च ।

**मगधेश्वर** पु० ६त० । १जरासन्धनृपे हेम० । २तद्देशपति-

**मगधोद्भवा** स्त्री मगधदेशे बाहुल्येनोद्भवति अच् । पिप्पल्याम् राजनि० । तद्देशे तस्याः प्रचुरभवत्वात्तथात्वम् ।

**मगध्य** परिवेष्टने कण्ड्वा० प० सक०सेट् । मगध्यति अमगध्यो(धी)त् ।

**मगन्द** पु०मगं पापं ददाति दा ड पृषो०मुम् च । कुसीदिनि निरु० ६।२२ ।

**मगण** पु० छन्दःशास्त्रोक्ते सर्वगुरुके वर्णत्रये ।

**मगल** पु० गोत्रप्रवरर्षिभेदे प्रवरा० ।

**मग्न** त्रि० मस्ज—क्त । (डोबा) जलादौ कृतमज्जने ।

**मघ** कैतवे द्यूतक्रीडादौ अक० गतौ निन्दायां आरम्भे च सक०भ्वा०आ०सेट् इदित् । मङ्घते अमङ्घिष्ट । [मङ्घ्यते

**मघ** भूषणे भ्वा०पर०सक०सेट् इदित् । मङ्घति अमङ्घीत् ।

**मघ** पु० मघि-अच् पृषो० । १द्वीपभेदे मेदि० । (मग)नामके २म्लेच्छदेशभेदे । ३पुष्पभेदे न० शब्दरत्ना० ।

**मघवन्(त्)** पु० मह-कनिन् नि०हस्य घः "मघवा बहुलम्" पा०वा तृ च । १इन्द्रे अमरः २तन्नामनामके पेचके च । तृचि मघवान् अतृचि मघवा । एवं मघवानौ मघवन्तावित्यादिरूपद्वयम् । भत्वे अतन्तस्य सम्प्र० । मघोनः तृजन्तस्य न मघवतः इत्यादि ङीपि मघोनी मघवतीत्यादि तद्धिते न सम्प्र० । माघवनम् इत्यादि भाष्ये तु मघशब्दात् मतुपिरूपं साधयित्वा शब्दान्तरमित्युक्ता न तृजित्युक्तम् ।

**मघा** स्त्री मह-घ हस्य घत्वम् । अश्विन्यवधिके दशमे नक्षत्रे तस्याश्च पञ्चताराकत्वात् बहुत्वमपि "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च" स्मृतिः । "मघां मूलञ्च वर्जयेदिति "मघायां पिण्डदानञ्चेति" स्मृतिस्तु समुदायस्यैकत्वाभिप्रायेण । अस्या योगतारादिकमस्त्रं शब्दे ४६७ पृ० उक्तम् । २औषधभेदे धरणिः ।

**मघात्रयोदशी** स्त्री मघानक्षत्रेण युक्ता त्रयोदशी शा०त० । भाद्रकृष्णत्रयोदश्यां तत्रैव मघानक्षत्रसंयोगसम्भवात् । तत्र श्राद्धमावश्यकं यथोक्तं ति० त०

"प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदश्यां मघायुक्तायामनियम्य यत्किञ्चिद्द्रव्येण श्राद्धमावश्यकं शङ्खादिविधिवाक्ये नक्षत्रविशिष्टतिथेः श्रुतेः । ततश्च केवलत्रयोदशीकेवलमघाश्राद्धार्थवादा अपि कृष्णविशिष्टविधिप्रापककर्मणो नित्यत्वबोधकाः न तु केवलविध्यन्तरकल्पना गौरवात् । तथाच शङ्खः "प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् । प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च" मनुः "यत्किञ्चित् मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । तदप्यक्षयमेव स्यात् वर्षासु च मघासु च" । विष्णुधर्मोत्तरम् "प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी । एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः" । शाता०

तपः "पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च । तस्मात् दद्यात् सदोद्युक्तो विद्वत्सु ब्राह्मणेषु च" । अत्राष्टकात्वश्रुतेः मनुवचने यत्किञ्चिदिति श्रुतेश्च मध्वोत्तपायसः फलातिशयार्थः । "गुणविशेषे फलविशेषः स्यात्" इति न्यायात् । व्यक्तं विष्णुधर्मोत्तरे "मघायुक्ता च तत्रापि शस्ता राजंस्त्रयोदशी । तत्राक्षयं भवेच्छ्राद्धं मधुना पायसेन च" । तत्राप्ययुक्तकृष्णपक्षे । अत्र यत् श्राद्धं तन्मधुयोगेन पायसयोगेन वाऽक्षयं भवेत् । एवं मनुवचने यत्किञ्चिन्मधुना मिश्रम् इत्यनेन मधुमात्रयुक्तत्वमुक्तम् । अतोऽत्र सुतरां शूद्रस्याप्यधिकारः । अत्र गजच्छायायोगे फलातिशयः । तथाच तत्त्वचिन्तामणौ स्मृतिः "कृष्णपक्षे त्रयोदश्यां मघास्विन्दुः करे रविः । यदा तदा गजच्छाया श्राद्धे पुण्यैरवाप्यते । करे हस्तानक्षत्रे कन्यादशमांशोपरि सपादत्रयोविंशांश यावत् । अविभक्तानामप्यत्र पृथक् श्राद्धमावश्यकम्" । यथा श्राद्धचिन्तामणौ स्मृतिः "विभक्ता अविभक्ता वा कुर्युः श्राद्धमदैविकम् । मघासु च तथान्यत्र नाधिकारः पृथग्विना" । अदैविकं मत्स्याह्निकैकोद्दिष्टम् अन्यत्र कृष्णपक्षादौ नाधिकारः न नित्याधिकारः । "सपिण्डीकरणान्तानि यानि श्राद्धानि षोडश । पृथक् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्" इत्यत्रापि नासपिण्डीनामपृथग्द्रव्याणां पुंसां सपिण्डीकरणान्तानीति विशेषणात् तदुत्तरं श्राद्धानां पृथक्करणमपि प्रतीयते । मघात्रयोदशीनिमित्तकश्राद्धे पुत्रवता पिण्डा न देयाः । "भौजङ्गीं तिथिमासाद्य यावच्चन्द्रार्कसङ्गमम् । तत्रापि महती पूजा कर्त्तव्या पितृदैवते । कृष्णे पिण्डप्रदानन्तु ज्येष्ठपुत्री विवर्जयेत्" इति देवीपुराणात् भौजङ्गीं पञ्चमीं चन्द्रार्कसङ्गमम् अमावास्यां पितृदैवते कृष्णे मघायाम । शातातपः "पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते । स्वधावाचनलोपोऽत्र विकिरस्तु न लुप्यते । अक्षय्यदक्षिणा स्वस्ति सौमनस्यं तथास्त्विति" रघु० ।

**मघाभू** पु० मघाश्चित्तिकष्टे नक्षत्रे भवति भू–क्विप् । पूर्वफल्गुनी जाते शुक्रग्रहे त्रिका० । भगदैवतशब्दे ४६२१पृ० दृश्यम्

**मघी** पु० मघानक्षत्रस्तृपत्तिकालत्वेनास्त्यस्य अच् गौरा० ङीष् । मघानक्षत्रस्थरविभुज्यमानयुक्ते काले पौरमाद्मासे जायमाने (आउस) धान्यभेदे मेदि० ।

**मङ्कलक** पु० १ऋषिभेदे मा० व० ८३अ० । २यक्षभेदे तत्रैव ।

**मङ्खि** पु० मकि–इन् । धनेच्छुवणग्भेदे भा०शा० १७७अ० ।

**मङ्कु** पु० मकि–उन् । सञ्चलद्गतिके शत०ब्रा० ५।५।४।११ ।

**मङ्कुर** पु० मकि–उरच् । दर्पणे भरतः ।

**मङ्क्षण** मक्ष–ल्युट् । जङ्घात्राणे हारा० ।

**मङ्क्षु(क्षू)** अव्य० मखि–उन् । १शैघ्र्ये २स्वार्थे च । पृषो० खस्य क्षत्वमपि ।

**मङ्ग** पु० मगि–घञ् । नौकाशिरसि हेम० ।

**मङ्गल** पु० मगि–अलच् । १भूमिसुते ग्रहभेदे २प्रशस्ते ३अभीष्टार्थसिद्धौ च । ४तद्वति त्रि० अमरः । स्त्रियां ङीप् "सुमङ्गलीरियं वधूः" सि०कौ० । ५दुर्गायां ६हरिद्रायां ७दूर्वायां ८पतिव्रतायाञ्च स्त्री शब्दरत्ना० ९करञ्जभेदे स्त्री शब्दच० । १०इक्ष्वाकुन्माल्मभेदे स्त्री हेम० ११योगिनीदशाभेदे "मङ्गला पिङ्गलेति" दशाशब्दे दृश्यम् । अभिप्रेतसिद्धिर्मङ्गलं तद्धेतुत्वात् गोरोचनादेरपि तथात्वम् । मङ्गलद्रव्याणि च मत्स्यसूक्ते ४२प०उक्तानि यथा "लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः । एतानि सततं पश्येन्नमस्येदर्चयेत्ततः । प्रदक्षिणन्तु कुर्वीत तथा चायुर्न हीयते । दूर्वां दधि सर्पिरथोदकुम्भं धेनुं सवत्सां वृषभं सुवर्णम् । मृद्गोमयं स्वस्तिकमक्षतानि लाजा मधु ब्राह्मणकन्यकाश्च । श्वेतानि पुष्पाणि तथा शमीञ्च हुताशनं चन्दनमर्कबिम्बम् । अश्वत्थवृक्षञ्च समालभेत ततश्च कुर्यान्निजजातिधर्मम्" इत्यधिमित्यार्षम् । १२विष्णौ न० "पवित्रं मङ्गलं परम्" विष्णुस० । कुजशब्दे २०६६पृ० मङ्गलग्रहकथादि दृश्यम् । "प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् । एतद्धि मङ्गलं प्रोक्तमृषिभिर्मन्त्रदर्शिभिः" अत्रि० उक्ते १३प्रशस्ताचरणे निन्द्यवर्जने ।

**मङ्गलचण्डी** स्त्री मङ्गले चण्डी दक्षा । १देवीभेदे स्वार्थे क । मङ्गलचण्डिकाप्यत्र तन्नामनिरुक्तिः ब्रह्मवै० प्र० ४१ अ० उक्ता यथा "दक्षायां वर्त्तते चण्डी कल्याणेषु च मङ्गलम् । मङ्गलेषु च या दक्षा सा च मङ्गलचण्डिका । पूज्यायां वर्त्तते चण्डी मङ्गलेऽपि महीसुतः । मङ्गलाभीष्टदेवी या सा वा मङ्गलचण्डिका । मङ्गलो मनुवंशश्च सप्तद्वीपधरापतिः । तस्य पूज्याभीष्टदेवी तेन मङ्गलचण्डिका" । [राजनि० ।

**मङ्गलच्छाय** पु० मङ्गला प्रशस्ता छाया यस्य । वटवृक्षे

**मङ्गलपाठक** पु० मङ्गलार्थं स्तुतीः पठति पठ–ण्वुल् । स्तुतिपाठके हेमच० । "का वृथामङ्गलपाठक !" वेणी० ।

**मङ्गलागुरु** न० नित्यक० । अगुरुभेदे राजनि० ।

**मङ्गल्य** न॰ मङ्गलाय हितं यत्। १चन्दने २मङ्गल्यागुरुणि ३स्वर्णे ४सिन्दूरे राजनि॰५दध्नि च। ६रुचिरे त्रि॰हेम॰ ७मङ्गलकारे त्रि॰ मेदि॰। "सर्वमङ्गलमङ्गल्ये" इति देवीमा॰। ८अश्वत्थे ९बिल्वे १०जीरके ११मसूरके च पु॰ मेदि॰ १२नारिकेले १३कपित्थे १४रीठाकरञ्जे च पु॰ राजनि॰। १५त्रायमाणौषधौ पु॰ शब्दच॰।

**मङ्गल्यक** पु॰ मङ्गलमष्टस्य प्रियः तद्दोषनिवारणार्थं दीयमानत्वेन शास्त्रविधानात्। मसूरे अमरः। [भावप्र॰।

**मङ्गलकुसुमा** स्त्री मङ्गल्यं कुसुमं यस्याः। शतपुष्प्याम्

**मङ्गल्यनामधेया** स्त्री ६ब॰। जीवन्त्यामोषधौ जटा॰।

**मङ्गल्या** स्त्री मङ्गलाय हिता यत्। १मल्लिकागन्धयुक्तागुरुणि अमरः २रोचनायाम् ३अधःपुष्प्याम् ४शम्यां ५शुक्लवचायां मेदि॰ ६प्रियङ्गौ ७माषपर्ण्यां हेमच॰ ८शतपुष्प्याम् ९जीवन्त्याम् १०ऋद्धिनामौषधौ ११हरिद्रायां १२दूर्वायां राजनि॰ १३दुर्गायाञ्च स्त्री रत्नमा॰। "मङ्गल्याऽगुरुशिशिरा गन्धाढ्या दोषनाशिका" राजनि॰

**मङ्गिनी** स्त्री मङ्गो नौकाशिरः अस्त्यस्या इनि ङीप्। नौकायां हेमच॰। [पत्ये पुंस्त्री

**मङ्गुष** पु॰ ऋषिभेदे तस्यापत्यं कुर्वा॰ ण्य। माङ्गुष्य तद-

**मच** दम्भे शाठ्ये च अक॰भ्वा॰आ॰सेट्। मचते अमचिष्ट मेचे।

**मच** उन्नताकरणे धारणे पूजायां च सक॰ दीप्तौ अक॰ भ्वा॰ आत्म॰ सेट् इदित्। मञ्चते अमञ्चिष्ट। मञ्चयते।

**मचक्रुक** न॰ कुरुक्षेत्रान्तर्गते तीर्थभेदे। कुरुक्षेत्रशब्दे दृश्यम्

**मचर्चिका** स्त्री चर्च-धात्वर्थनिर्देशे ण्वुल् मस्य शस्तोरिव चर्चिका ध्यानम्। प्रशस्ते अमरः अव्युत्पन्नोऽयमित्येके "मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः" सि॰ कौ॰"प्रशंसावचनैश्च"पा॰अस्य विशेषणत्वेऽपि परनिपातः गोमचर्चिका गोतल्लिका इत्यादि।

**मच्छ** पुंस्त्री॰ माद्यति मद-क्विप् तथा सन् शेते शी-ड। मत्स्ये शब्दर॰। स्त्रियां जातित्वात् ङीष्।

**मजिर** पु॰ ऋषिभेदे तस्यापत्यं शिवा॰ अण्। माजिर तदपत्ये पुंस्त्री॰।

**मज्जकृत्** न॰ मज्जानं करोति कृ-क्विप्। १देहस्थे अस्थिरूपे पदार्थे हेमच॰ अन्नादिषु भुक्तेषु रसादिपरिपाकेन क्रमेणशोणितमांसत्वगस्थिमज्जाणामुत्पत्तेः अस्थ्नः मज्जाकृत्त्वम्।

**मज्जन्** पु॰ मस्ज-कनिन्।१अस्थिजाते अस्थिमध्यस्थे स्नेहाकारे पदार्थे २वृक्षादेः सारांशे च अमरः। फलमज्जगुणाः "यस्य यस्य फलस्येह वीर्य्यं भवति यादृशम्। तस्य तस्यैव वीर्य्येण मज्जानमपि निर्दिशेत्" राजवल्लभः "अस्थि यत्स्वाग्निना पक्वं तस्य सारो द्रवो घनः। यः स्वेदवत् पृथग्भूतः स मज्जेत्यभिधीयते"। मज्जस्थानमाह "स्थूलादिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः" भावप्र॰।

**मज्जन** न॰ मस्ज-भावे ल्युट्। १स्नाने (डोवा) जटाध॰। कर्त्तरि ल्यु। २मज्जायां शब्दर॰। अस्थिमध्यमज्जनात्तस्यास्तथात्वम्। ३कुमारानुचरगणभेदे भा॰श॰४६अ॰।

**मज्जसमुद्भव** न॰ मज्ज्ञः समुद्भवति सम्+उद्+भू-अच् ५त॰। शुक्रे तस्य मज्जजातत्वम् मज्जकृच्छब्दे द्रष्टव्यम्।

**मज्जा** स्त्री मस्ज-अच् टाप्। १अस्थिसारे २वृक्षादेः सारांशे च हेम॰। "भल्लातकी मूलकशिग्रुसिक्थैः प्रियालमज्जासहितैः"सुश्रुतः। [राजनि॰ २शुक्रधातौ न॰

**मज्जाज** न॰ मज्जातो जायते जन-ड। १भूमिजे गुग्गुलौ

**मज्जारस** मज्जायाः रसः परिपाकः। शुक्रे राजनि॰। तस्य मज्जासम्भवत्वं मज्जकृच्छब्दे उक्तम्।

**मज्जासार** न॰ मज्जायां सारोऽस्य। जातीफले राजनि॰।

**मज्जूषा** स्त्री मस्ज-ऊषन्। मञ्जूषायां रायमुकुटः।

**मज्मन्** न॰ मस्ज-मनिन् पृषो॰। बले निघण्टुः।

**मञ्च** पु॰ मचि-उच्छ्राये घञ्। १खट्वायाम् अमरः (माँचा) वंशनिर्मिते २उच्चासने ३उच्चमण्डपभेदे हारा॰ "मञ्चस्थं रघुनन्दनम्"पुराणम्। स्वार्थे क। तत्रैव "इक्षोऽन्यः पतिरेष मञ्चकगतः" इति सा॰ द॰।

**मञ्चकाश्रय** पु॰ ६त॰। मत्कुणे (छारपोका) राजनि॰।

**मञ्चमण्डप** पु॰ मञ्च इव मण्डपः। शस्यरक्षार्थे उच्चे पर्णादिकुटीरे (टङ्) हारा॰। [शब्दरत्ना॰।

**मञ्जर** न॰मञ्ज-अरच्। १तिलकवृक्षे २मुक्तायाञ्च ३वल्लर्याञ्च

**मञ्जरि(री)** स्त्री मञ्जु ऋच्छति ऋ-इन् शक॰ पररूपं वा ङीप्। अभिनवोद्गतायां सुकुमारायां पल्लवाङ्कुररूपायां १वल्लर्याम् अमरः ङीबन्तस्तु तत्र २मुक्तायां ३तिलकलतायां शब्दरत्ना॰। ४तुलस्याम् राजनि॰ ततः तारका॰ इतच्। मञ्जरित जातमञ्जरीके त्रि॰। ङीबन्तः "सजसा यलौगिति शरयुरैर्मञ्जरी" इ॰ र॰ टी॰ उक्ते चतुर्दशाक्षरपादके छन्दोभेदे। [राज न॰।

**मञ्जरीनम्र** पु॰ मञ्जर्यां तदवस्थायामपि नम्रः। वेतसे।

**मञ्जा** स्त्री मजि-अच्। १छाग्यां त्रिका॰।२मञ्जर्यां हेमच॰।

**मञ्जि(ञ्जी)** स्त्री मञ्ज-इन् वा ङीप्। मञ्जर्याम् त्रिका॰।

**मञ्जिका** स्त्री मजि–ण्वुल् टाप् अत इत्त्वम्। वेश्यायां हारा०।

**मञ्जिफला** स्त्री मञ्जिः मञ्जरी फले यस्याः। कदल्याम् त्रिका०

**मञ्जिष्ठा** स्त्री अतिशयेन मञ्जीमती इष्ठन् मतुपो लोपः। स्वनामख्यातायां लतायाम् अमरः। “मञ्जिष्ठा मधुरा तिक्ता कषाया स्वर्यवर्णकृत्। गुरूष्णा विषश्लेष्मघ्नी शोथयोन्यक्षिकर्णरुक्। रक्तातीसारकुष्ठास्रविसर्पव्रण-मेहनुत्” भावप्र०। मञ्जिष्ठया रक्तम् अण्। माञ्जिष्ठ तत्क्वाथेन रक्ते त्रि०।

**मञ्जिष्ठामेह** पु० सुश्रुतोक्ते मेहभेदे तल्लक्षणं तत्रोक्तं यथा मेहतीत्यनुषङ्गे “मञ्जिष्ठोदकप्रकाशं मञ्जिष्ठामेही”।

**मञ्जिष्ठाराग** पु० मञ्जिष्ठेव रागः। “मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते” सा०द० उक्ते पूर्वानुरागभेदे।

**मञ्जीर** न० मनुज–ध्वनौ ईरन्। १नुपूरे अमरः। “मञ्जुमणिमञ्जीरे कलगम्भीरे” इति सा०१०प०। २दधिमन्थन-दण्डबन्धस्तम्भे पु० हेमच०।

**मञ्जीरक** पु० मञ्जीर इव कायति शब्दायते कै–क। नुपूर-ध्वनितुल्यध्वनियुते ततः शिवा० अपत्ये अण्। माञ्जीर तदपत्ये पुंस्त्री०। [मञ्जुल तद्वति त्रि०।

**मञ्जु** त्रि० मनुज–उन्। मनोहरे अमरः। सिध्मा०लच्।

**मञ्जुकेशिन्** पु० कर्म० प्राशस्त्ये इनि। १श्रीकृष्णे हला० २सुन्दरकेशयुते त्रि० स्त्रियां ङीप्। [त्रि०।

**मञ्जुगमना** स्त्री इव०। १हंस्यां राजनि० २सुन्दरगतियुते

**मञ्जुघोष** पु०। तन्त्रोक्ते १उपास्यदेवभेदे तन्त्रसारे दृश्यम्। २पूर्वजिनभेदे त्रिका०। कर्म०। ३मनोहरशब्दे पु०।

**मञ्जुपाठक** पुंस्त्री० मञ्जु पठति पठ–ण्वुल्। १शुकखगे राजनि० स्त्रियां जातित्वात् ङीष्। २मनोहरपाठके त्रि०

**मञ्जुप्राण** पु० इव०। चतुर्मुखे ब्रह्मणि जटा० सर्वव्यापित्वेन विधात्प्राणस्य महाप्राणत्वात् तस्य तथात्वम्।

**मञ्जुभद्र** पु० जिनभेदे त्रिका०।

**मञ्जुभाषिन्** त्रि० मञ्जु भाषते भाष–णिनि। १सुन्दरभाषके स्त्रियां ङीप् सा च “सजसाजगौ भवति मञ्जुभाषिणी” इ०र० उक्ते २त्रयोदशाक्षरपादके छन्दोभेदे।

**मञ्जुल** त्रि० मनुज–सिध्मा० लच् मजि–उलच् वा। १मनोहरे २निकुञ्जे मेदि० ३जले न० विश्वः। ४जलरङ्कुखगे पुंस्त्री० मेदि० स्त्रियां ङीष्। [२सुन्दरश्रीके त्रि०।

**मञ्जुश्री** पु० इव०। १मञ्जुघोषे २पूर्वजिनभेदे त्रिका०।

**मञ्जुहासिनी** स्त्री “ननौ सजौ गो भवति मञ्जुहासिनी” इ०र०टी०उक्ते १त्रयोदशाक्षरपादके २छन्दोभेदे। २सुन्दरहासयुते त्रि०।

**मञ्जूषा** स्त्री मनुज ऊषन् (पेटरा) १पेटिकायाम् अमरः। २मञ्जिष्ठायाञ्च राजनि० ३पाषाणे उणा० को०।

**मट** वारे भ्वा०प०सक०सेट्। मटति अमटीत् अमाटीत् मेटतुः

**मटची** स्त्री मट–बा० अचि ङीप्। १पाषाणवृष्टौ “मटचीहतेषु कुरुषु” छन्दोग्यश्रुतिः। २रक्तवर्णक्षुद्रखगभेदे गोविन्दः।

**मटस्फटि** पु० दर्पारम्भे जटा०। [अमाठीत् मेठतुः।

**मठ** वासे अक०मर्दने सक० भ्वा० पर० सेट्। मठति अमठीत्-

**मठ** आध्याने भ्वा०सक०सेट् इदित्। मण्ठते अमण्ठिष्ट।

**मठ** पुंन० अर्द्धर्चा० मठत्यत्र मठ–घञर्थे क। १छात्राद्याश्रमे २देवागारे अमरः। मठप्रतिष्ठातत्त्वे तत्प्रतिष्ठाविधिर्दृश्यः। देवलदृशब्दे चास्य दृश्यम्। ३गन्त्रीरथे हारा०।

**मठर** पु० मठ–अरन्। १मुनिभेदे २शौण्डे त्रि० उज्ज्वल०। राजद०परनिपातः राजमठरः। गर्गा० यञ्। माठर्य्य तन्मुनेरपत्ये पुंस्त्री० स्त्रियां ङीप् यलोपः। शौण्डार्थकस्यापत्ये विदा० अञ्। माठर तदपत्ये पुंस्त्री०।

**मड** मोदे चु०उभ०अक०सेट् इदित्। मण्डयति–ते अमम-ण्डत् त। विभागे भ्वा० आत्म०। मण्डते।

**मड** भूषणे चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् इदित्। मण्डयति ते मण्डति अममण्डत्-त अमण्डीत्। [जटा०।

**मडक** पु० मडि–क्वुन् पृषो० नलोपः। धान्यभेदे (मेडुया)

**मडर** पु० मडि–बा० अरन् पृषो० नलोपः। पिप्पिभेदे कन्याशब्दे परे अस्याद्युदात्तता।

**मडार** पु० मडि–बा० आरन् पृषो०। भूकके ततः चतुरर्थ्यां प्रगद्या०ञ्य। माडार्य्य तेन निर्वृत्तादौ त्रि०।

**मड्डु** पु० मज्जन्ति अन्ये शब्दा अत्र मस्ज्+उन् पृषो०। वाद्यभेदे अमरः स्वार्थे क मड्डुक तत्रार्थे। मड्डुकवादनं शिल्पमस्य वा ठक् पक्षे अण्। माड्डुकिक माड्डुक तद्वादनशिल्पयुते त्रि०। [मणीत् मेणतुः।

**मण** अव्यक्तशब्दे भ्वा०प०अक०सेट्। मणति अमाणीत् अ-

**मणि(णी)** पुंस्त्री० मण–इन् स्त्रीत्वपक्षे वा ङीप्। १मुक्तादौ रत्ने “मणिरत्नं सरं शीतं कषायं स्वादु लेखनम्। चक्षुष्यं धारणात्तच्च पापालक्ष्मीविनाशनम्” राजवल्लभः। “मणिहारावलिरामणीयकमिति” “स्नपनीकमणीमटइत्विनेति च” नैषधम्। २स्नपयपात्रभेदे अलिञ्जरे (जाला) ३लिङ्गाग्रे ४नागभेदे जटा० ५मणिबन्धे हेमच० स्वार्थे क संज्ञायां कन् वा। मणिक अलिञ्जरे न० अमरः।

अज्ञागलस्तने मेदि० योन्यर्थे शब्दरत्ना० [दृश्यम् ।

**मणिकर्ण** पु० १कामरूपस्थे २शिवलिङ्गभेदे मणिकूटशब्दे

**मणिकर्णिका** स्त्री मणिकर्णः मणिमयकर्णभूषणमस्त्यस्यां ठन् । विष्णुतपस्यादर्शनात् विस्मयेन शिवस्य मणिमयकुण्डलपतनस्थाने काशीस्थे १तीर्थभेदे ।

तन्नामनिरुक्तिः काशी० २६अ० यथा

विष्णुं प्रति शिववाक्यम् "त्वदीयस्यास्य तपसो महोग्रस्य च दर्शनात् । यन्मयान्दोलितो मौलिरहिन्द्रवणभूषणः । तदान्दोलनतः कर्णात् पपात मणिकर्णिका । मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका । चक्रपुष्करिणीतीर्थं पुराख्यातमिदं शुभम् । त्वया चक्रेण खननाच्छङ्खचक्रगदाधर ! । मम कर्णात् पपातेयं यदा च मणिकर्णिका । तदा प्रभृति लोकेऽत्र ख्यातास्तु मणिकर्णिका" मणिकर्णीत्यप्यत्र । २मणिमयकर्णभूषणे च ।

**मणिकर्णीश्वर** न० काशीस्थे शिवलिङ्गभेदे काशीख०१००अ०

**मणिकर्णेश्वर** न०कामरूपस्थे शिवलिङ्गभेदे कालिपु०८१अ०।

**मणिकानन** न० मणिकमिवाननं यत्र । कण्ठे शब्दर० ।

**मणिकार** पु० मणिमयं भूषणं करोति कृ-अण् । (जहरि) १मणिमयभूषणकारके २प्रत्यक्षादिचतुःखण्डात्मकतत्त्वचिन्तामणिनामकग्रन्थकारे गङ्गेशोपाध्याये च । कृ-क्विप् हृत० । मणिकृदादयोऽप्यत्र ।

**मणिकुट्टिका** स्त्री कुमारानुचरमातृभेदे भा०श०४७अ० ।

**मणिकूट** पु०मणिमयः कूटोऽस्य। कामरूपस्थे पर्वतभेदे यथोक्तम् "भस्मकूटस्य चैशान्यां मणिकूटो महागिरिः । मणिकर्णो नाम हरस्तत्र तिष्ठति लिङ्गकः" कालिकापु०८१अ०।

**मणिकेतु** पु० केतुभेदे बृ०स० ११अ० केतुशब्दे दृश्यम् ।

**मणिगणनिकर** पु० "वसुहयर्यातरिह मणिगणनिकरः" वृ०र० उक्ते पञ्चदशाक्षरपादके छन्दोभेदे द्विगुणहय लघुरित्यस्यात्रानुवृत्तिः ।

**मणिग्रीव** पु० कुवेरपुत्रभेदे शब्दर० ।

**मणिच्छिद्रा** स्त्री मणिरिव छिद्रमस्याम् । १मेदानामौषधौ २ऋषभानामौषधौ च मेदि० । [११अ० ।

**मणिजला** स्त्री मणिप्रचुरं जलमस्याम् । नदीभेदे भा० व०

**मणित** न० मण-क्त । रतिकाले स्त्रीणामव्यक्तशब्दभेदे हेम०

**मणितारक** पुंस्त्री० मणिरिव तारकास्य । सारसखगे राजनि० स्त्रियां जातित्वात् ङीष् ।

**मणिद्वीप** पु० मणिमयः मणिप्रचुरो वा द्वीपः । क्षीरसमुद्रमध्यस्थे श्रीविद्यापीठरूपे द्वीपभेदे "सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीलोपवनवति चिन्तामणिगृहे" आनन्दल० ।

**मणिनाग** पु० नागभेदे भा० आ० ३५ अ० । [१५८अ०।

**मणिपर्वत** पु० मणिप्रचुरः पर्वतः शा०त०। पर्वतभेदे हरिवं०

**मणिपालि** त्रि० मणिं पालयति पालि-इनि । मणिपालके तस्य धर्म्यं महिष्या०अण् । मणिपाल तस्य धर्म्ये त्रि० । तस्यापत्यम् रेवत्या०ठक् । माणिपालिक तदपत्ये पुंस्त्री०

**मणिपुच्छी** स्त्री मणिरिव पुच्छं यस्याः नित्यं ङीष् । मणितुल्यपुच्छयुतायां स्त्रियाम् ।

**मणिपुष्पक** पु० सहदेवस्य शङ्खे गीता १।१६ ।

**मणिपुर** न० पौरस्त्ये देशभेदे ।

**मणिपूर** न० सुषुम्णान्तर्गते षट्चक्रमध्ये नाभिस्थे पद्मभेदे "तदूर्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम् । मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः । मणिवद्भिन्नं तत्पद्मं मणिपूरं तथोच्यते । दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम् । शिवेनाधिष्ठितं पद्मं विश्वालोकनकारणम्"

**मणिबन्ध** पु० मणिर्बध्यतेऽत्र बन्ध-आधारे घञ् । प्रकोष्ठपाण्योर्मध्यस्थे १करग्रन्थौ तस्य शुभाशुभलक्षणं गरु०पु० ६६अ० उक्तं यथा "मणिबन्धैर्निगूढैश्च सुश्लिष्टैः शुभसन्धिभिः । नृपा हीनैः करच्छेदस्सबद्धैर्धनवर्जिताः" २सैन्धवलवणाकारे पर्वतभेदे च । [राजनि० ।

**मणिबी(वी)ज** पु० मणिरिव बी(वी)जमस्य । दाडिमवृक्षे

**मणिभद्र** पु० यक्षभेदे भा० स० १०अ० ।

**मणिभूमि** स्त्री ६त० । मणीनामाकरे ।

**मणिमञ्जरी** स्त्री "द्विनाश्वैः स्यात् यभनयजजगाः कीर्त्तिता मणिमञ्जरी" वृ० र० टीकोक्ते ऊनविंशत्यक्षरपादके छन्दोभेदे ।

**मणिमण्डप** पु० मणिमयः मणिप्रचुरो वा मण्डपः । १मणिखचिते मण्डपे २देवतापीठस्थानभेदे तन्त्रसारः ।

**मणिमत्** त्रि० मणिरस्त्यस्य मतुप् । १मणियुते त्रि० स्त्रियां ङीप् । २यक्षभेदे पु० भा० व० १अ० । ३जलासुरांशजाते द्वापरयुगीये नृपभेदे पु० भा० आ० ६७अ० । ४नागभेदे भा० स० ९अ० । ५राक्षसभेदे भा०व०१६०अ० । ६दैत्यभेदे हरिवं०३अ०। ७पश्चिमस्थे देशभेदे बृ०स०११अ० ।

**मणिमध्य** न० "स्यान्मणिमध्यं चेद्भमसाः" छन्दोम० उक्ते नवाक्षरपादके छन्दोभेदे । [लवणे अमरः ।

**मणिमन्थ** न०मणिरिव मथ्यते मन्थ-कर्मणि घञ् । सैन्धव-

**मणिमाला** स्त्री ६त० । "त्यौ त्यौ मणिमाला छिन्ना गुह-

वृत्तैः" छन्दो०उक्ते द्वादशाक्षरपादके १छन्दोभेदे । २हारे ३दन्तक्षतभेदे मेदि०। ४लक्ष्म्यां शब्दर०।५दीप्तौ शब्दमा०

**मणिराग** न० मणेरिव रागो वर्णोऽस्य । १हिङ्गुले राजनि० ६त०। २मणिवर्णे पु० ।

**मणिल** त्रि० मणि+सिध्मा० अस्त्यर्थे लच् । मणियुते ।

**मणिव** पु० मणि—अस्त्यर्थे व । नागभेदे सि०कौ० ।

**मणिवाल** पु० मणिरिव शुक्लत्वात् वालः लोमोऽस्य । अश्वि-दैवत्ये पशुभेदे यजु० २२४।२ ।

**मणिवाहन** पु० नृपभेदे भा० आ० ६३अ० ।

**मणिशैल** पु० मन्दराचलस्य पूर्वस्थे पर्वतभेदे मार्कपु० ५५ ।

**मणिसर** पु० मणीन् सरति कारणत्वेन गच्छति सृ—अच् ६त०। मणिखचिते हारभेदे ।

**मणिस्कन्ध** पु० नागभेदे भा० आ० ५७अ० ।

**मणीचक** न० मणेः ईं शोभां चकते प्रतिहन्ति चक—अच् ६त०। १चन्द्रकान्तमणौ त्रिका०। २मत्स्यरङ्कखगे पुंस्त्री० हारा० स्त्रियां ङीष् ।

**मणीवक** न० मणीव कायति कै—क । पुष्पे हारा० ।

**मणीवती** स्त्री मणि+अस्त्यर्थे मतुप् नि० मस्य वः शरा० दीर्घः । मणियुक्तनदीभेदे । [क्याम् राजनि० ।

**मण्टपी** स्त्री मण्टं पाति पा-क गौरा० ङीष् । क्षुद्रोपद-

**मण्टि** पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः ।

**मण्ड(ठ)** पु०मठ-अच् पृषो०वा । (माठ) कृतान्नभेदे राजनि०। "समितां मर्द्दयेदाज्यैर्जलेनापि च सञ्चयेत् । अस्यास्तु वटकं कृत्वा पचेत् सर्पिषि नीरसम् । एलालवङ्गकर्पूर-मरिचाद्यैरलङ्कृते । मज्जयित्वा सितापाके ततस्तञ्च समुद्धरेत् । अयं प्रकारः संसिद्धो मण्ड इत्यभिधीयते" । अस्य गुणाः "मण्ठस्तु बृंहणो वृष्यो बल्यः सुमधुरो गुरुः । पित्तानिलहरो रुच्यो दीप्ताग्नीनां सुपूजितः" भावप्र०मठ इति पठितम् कृतान्नशब्दे २१८२ पृ० दृश्यम्

**मण्ड** पुंन० मन—ड तस्य नेत्त्वम् ।१सर्वान्नानामग्ररसे (माड) २सारे ३पिच्छे च । ४आमलक्यां ५सुरायाञ्च स्त्री । ६दधिमण्डे (मात्) न० मेदि० । ७एरण्डवृक्षे ८शाकभेदे भूषायां च पुंन० हेमच० अर्द्धर्चादि

भावप्र० तद्विधानं यथा

"तण्डुलानां सुसिद्धानां चतुर्द्दशगुणे जले । रसः सिक्थैर्विरहितो मण्ड इत्यभिधीयते । शुण्ठीसैन्धव-संयुक्तो दीपनः पाचनश्च सः । भक्तस्य सम्यक्सिद्धस्य प्रेया मण्डस्य विज्ञता । पेया यूषयवागूनां विलेपी भक्तयोरपि" । तस्य गुणाः "मण्डो ग्राही लघुः शीतो दीपनो धातुसाम्यकृत् । जरन्नस्तर्पणो बल्यः पित्त-श्लेष्मश्रमापहः"। "क्षुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च । ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः । लाजमण्डोऽग्निजननो दाह-तृष्णानिवारणः । ज्वरातीसारशमनोऽशेषदोषामपाचनः । वाट्यमण्डोऽग्निजननः मूत्रानाहविनाशनः । पाचनो दीपनो हृद्यः पित्तश्लेष्मानिलापहः" राजवल्लभः । वाट्यमण्डो भृष्टयवमण्डः ।

**मण्डक** पु० भाव० उक्ते पिष्टकभेदे कृतान्नशब्दे २१८१ पृ० दृश्यम् सङ्गीतदामो० उक्ते गीताङ्गभेदे यथा

"जयप्रियः कलापश्च कमलः सुन्दरस्तथा । मङ्गलो वल्लभ-श्चेति मण्डकाः षट् प्रकीर्त्तिताः । जयप्रियो हंसताले लघुमध्ये यदा गुरुः । ऊनविंशाक्षरैर्युक्तो रसे वीरे स वर्त्तते । लघुर्गुरुर्लघुर्यत्र हंसतालः स उच्यते १। कलापो रङ्गतालेन युक्तो रौद्ररसे हि सः । द्वाविंशत्यक्षरैर्युक्तो लघुरादौ गुरुद्वयम् । लघुरादौ गुरुद्वन्द्वं रङ्गताल इतीरितः २। लघुद्वन्द्वं गुरुश्चैकोऽनिलोऽत्र सगणा-त्मकः । पञ्चविंशत्यक्षरैः स्यात् कमलः शान्तहास्ययोः ३। गुरुरेको लघुद्वन्द्वं त्रिपुटे भगणात्मके । अष्टाविंशत्यक्ष-रैस्तु शृङ्गारे सुन्दरे मतः ४। आदौ गुरुर्लघुर्मध्ये प्लुतोऽन्ते झम्पतालके । एकत्रिंशत्यक्षरैस्तु वीरे मङ्गल-मण्डकः ५। षट्पितापुत्रके ताले गलसागलगात्मके । चतुस्त्रिंशदक्षरोऽयं वल्लभो रौद्रके रसे ६।"

**मण्डन** पु० मण्डयति मडि-ल्यु ।१अलङ्कारके २प्रसिद्धमीमां-सकभेदे पु० "शिष्यप्रशिष्यैरुपगीयमानमवेहि तत् मण्डन-मिश्रधाम" । शङ्करदिग्विजयः तेन सह शङ्कराचार्य्यस्य विचारकथा तत्र दृश्या । भावे ल्युट् । ३भूषायाम् न०

**मण्डप** पुंन० मडि—घञ् मण्डं भूषां पाति रक्षति पा—क मडि—कपन् वा । १जनविश्रामस्थाने २देवादिगृहे च अमरः । यथा चण्डीमण्डप विष्णुमण्डप इत्यादि । ३मण्डपानकर्त्तरि त्रि० शब्दरत्ना० । ४निष्पाव्यां (शूक-शिम्बीभेदे) स्त्री राजनि०। [षिति स्त्री त्रिका०ङीप् ।

**मण्डयन्त** त्रि० मडि—झच् । १अलङ्कारके सि०कौ०। २यो-

**मण्डर** त्रि० मडि—अरन् । १भूषणे ततः कुर्व्वा० स्वार्थे ठक् । माण्डरिक तत्रार्थे ।२घुघुंर्यां स्त्री हारा०ङीप् ।

**मण्डल** न० मडि-कलच् । १चक्राकारेण वेष्टने अमरः यथा सूर्यमण्डलं भूमण्डलम् । उभयतोविंशतियोजनमिते

२देशभेदे ३सूर्यचन्द्रयोः परिवेशे ४द्वादशराजचक्रे ५कोठरोगे च मेदि० ६जाले अनेकतीर्थको० ७समूहे हेम० “अर्थमण्डलमण्डलम्” इति वोपदेवः। ८चक्रे त्रिका०। “मण्डलाकारपादाख्यं मण्डलं स्थानमीरितम्” इत्युक्ते ९धन्विनां स्थानभेदे शब्दर०। “मण्डलं सर्वतो वृत्तिः” इत्युक्ते १०सैन्यव्यूहभेदे कामन्द०। चित्ररेखासन्निवेशेन रचिते ११पदार्थे च यथा ग्रहमण्डलं सर्वतोभद्रमण्डलमित्यादि। १२बिम्बे त्रि० अमरः स्त्रियां गौरा० ङीष्। सा च १३दूर्वायाम् हारा० १४कुक्कुरे पुं० मेदि० १५सर्पभेदे पु० विश्वः १६व्याघ्रनखाख्यगन्धद्रव्ये शब्दच०। ततः स्वार्थे क। बिम्बे कुष्ठभेदे आदर्शे च।

चित्रमण्डलविधानमुक्तं देवीपु० यथा

“षड्हस्तं समारभ्य यावद्धस्तशतं भवेत्। मण्डलं तत्र कर्त्तव्यमत ऊर्ध्वं न कारयेत्। विमलं१ विजयं२ भद्रं३ विमानं४ शुभदं५ शिवम्६। वर्द्धमानञ्च७ दैवञ्च८ स्वताख्यं१० कामदायकम्। रुचकं११ स्वस्तिकाख्यञ्च१२ द्विदशमिति मण्डलम्। सितादिहरितान्ताश्च रागाः कार्य्याः सुशोभनाः। शालिपिष्टककौसुम्भरजनीहरिपत्रजाः। मणिविद्रुमरागाश्च भस्मना अभिमन्त्रिताः। सितसर्षपधूपाढ्यं रजः कृत्वा तु पातयेत्। अस्त्रबीजं न्यसेन्मन्त्री सम्भवेति पदं च वा। समोत्थानं शुभं कृत्वा गोमयेनोपलेपितम्। चन्दनागुरुकर्पूरचोदधूपाधिवासितम्। भूभागं सुमितं स्निग्धं पूर्वपश्चिमकोत्तरम्। याम्यं स्वस्तिकमत्स्याद्यैः स्वर्णैर्वीणाख्यपत्रजैः। पद्मपत्राष्टकं मध्ये द्विगुणं त्रिगुणञ्च वा। द्वाराणि समस्तानि कर्णिकाकेसरोज्ज्वलम्। पद्मं तथावशेषाणि स्वस्तिकान्युत्पलानि च। सव्यावलम्बहस्तस्तु रजःपातं समाचरेत्। मध्यमानामिकाङ्गुष्ठैरुपरिष्टाद्यथेप्सया। अधोमुखाङ्गुलिं कृत्वा पातयेत्तु विचक्षणः। समा रेखा तु कर्त्तव्याऽविच्छिन्ना पुष्टिवर्जिता। अङ्गुष्ठपर्ववैपुल्या समा कार्य्या विजानता। संसक्तं विषमं स्थूलं विच्छिन्नं कृशरावृतम्। पर्य्यन्तमपितं सुखमालिखेन्न कदाचन। संसक्ते कलहं विद्याद्वज्ररेखे तु विग्रहम्। अतिस्थाने भवेद्व्याधिर्नित्यं पीड़ा विमिश्रिते। दुन्दुभेर्भयमाप्नोति शत्रुपक्षान्न संशयः। कृशायाञ्चार्थहानिः स्यात् विच्छिन्ने मरणं ध्रुवम्। वियोगात्तु भवेत्तस्य इष्टद्रव्यसुतस्य वा। अविदित्वा लिखेद्यस्तु मण्डलन्तु यथेप्सया। सर्वदोषानवाप्नोति ये दोषाः पूर्वभाषितः”। भोजनमण्डलं यथा “यातुधानाः पिशाचाश्च असुरा राक्षसास्तथा। घ्नन्ति केवलमन्नस्य मण्डलस्य विवर्जनात्। आदित्यावसवो रुद्रा ब्रह्मा चैव पितामहः। मण्डलान्युपजीवन्ति तस्मात् कुर्वन्ति मण्डलम्। चतुःकोणं द्विजाग्र्यस्य त्रिकोणं क्षत्रियस्य तु। त्रिकोणाकृति वैश्यस्य शूद्रस्य वर्त्तुलं सदा” वह्नि पु०। भोजनशब्दे आह्निकत० वाक्यं दृश्यम्।

व्यूहभेदलक्षणं कामन्दकीये उक्तं यथा “मण्डलोऽसंहतो भोगो दण्डश्चेति मनीषिभिः। कथिताः प्रकृतिव्यूहा भेदास्तेषां प्रकीर्त्तिताः। सततं व्यूह्य मतिमान् काले स्थाने प्रकल्पयेत्। तिर्य्यग्वृत्तिश्च दण्डः स्याद्भोगः स्याद्वृत्तिरेव च। प्रदरो दृढकोऽसह्यश्चापो वै तद्विपर्य्ययः। प्रतिष्ठः सुप्रतिष्ठश्च श्येनौ विजयसञ्जयौ। विशालविजयः सूची स्थूणाकर्णश्च भूमुखः। सुखाख्यो वलयश्चैव दण्डभेदाः सुदुर्जयाः। अतिक्रान्तः प्रतिक्रान्तः कक्षाभ्याञ्चैकपक्षतः। अतिक्रान्तश्च पक्षाभ्यां ततोऽन्यस्तु विपर्य्ययः। स्थूणापक्षो धनुःपक्षो द्विस्थूणो दण्ड ऊर्ध्वगः। द्विगुणान्तस्त्वतिक्रान्तपक्षोऽन्योऽस्य विपर्य्ययः। द्विचतुर्दण्ड इत्येवं ज्ञेयो लक्षणतः क्रमात्। गोमूत्रिकाऽहिसञ्चारी शकटो मकरस्तथा। भोगभेदाः समाख्यातास्तथा परिपतन्तकः। दण्डपक्षो युगोरस्यः शकटस्तद्विपर्य्ययः। मकरो व्यत्कीर्णश्च शेषः कुञ्जरराजिभिः। मण्डलव्यूहभेदौ च सर्वतो भद्रदुर्जयौ। गजानीको द्वितीयस्तु प्रथमः सर्वतोमुखः। अर्द्धचन्द्रक उद्धारो वज्रभेदास्त्वसंहताः। तथा कुक्कुटशृङ्गी च काकपादी च गोधिका। त्रिचतुःपञ्चसैन्यानां ज्ञेया आकारभेदतः। इति व्यूहाः समाख्याता व्यूहभेदप्रयोक्तृभिः। एते सप्तदश प्रोक्ता दण्डव्यूहाश्च पञ्चधा। तथा व्यूहद्वयञ्चैव मण्डलस्य प्रयोक्तृभिः। असंहतास्तु षड्व्यूहा भोगव्यूहाश्च पञ्चधा। व्यूहा एते प्रयोज्याः स्युर्युद्धकाल उपस्थिते।” [भ्रमणरूपे नृत्ये शब्दमाला।

**मण्डलनृत्य** न० मण्डलाकारेण नृत्यम्। चक्राकारेण परि-

**मण्डलपत्रिका** स्त्री मण्डलाकारं पत्त्रमस्याः। रक्तपुनर्णवायाम् राजनि०।

**मण्डलपुच्छक** पु० कीटभेदे सुश्रुतः कीटशब्दे दृश्यम्।

**मण्डलब्राह्मण** न० शत०ब्रा०१०अध्याये पठिते “यदेतन्मण्डलं तपतीत्यादिके” ब्राह्मणे मण्डलाध्यायोऽप्यत्र।

**मण्डलाग्र** पु० मण्डल इवाग्रमस्य । खड्गभेदे अमरः ।

**मण्डलाधिप** पु० ६त० । मण्डलेश्वरे नृपभेदे चतुर्योजनपर्य्यन्तो यस्याधिकारो नृपस्य च । यो राजा तच्छतगुणः स एव मण्डलेश्वरः” ब्रह्मवै०ज०ख०८६ अ० । मण्डलाधीशमण्डलेश्वरादयोऽप्यत्र । [शब्दर० ।

**मण्डलाकृत** त्रि० मण्डल+अण्ड् कर्त्तरि-क्त । वर्त्तुलाकारे

**मण्डलिन्** पु० मण्डलं कुण्डलनमस्त्यस्य इनि । १सर्पे २विडाले शब्दमाला । ३जाहके (खट्टाश) हेमच० । ४वटवृक्षे त्रिका० ५गोनससर्पे च राजनि० ।

**मण्डहारक** पु०मण्डं हरति हृ-ण्वुल् । शौण्डिके अमरः

**मण्डा** स्त्री मण्डःकारणत्वेनास्त्यस्या अच् । सुरायां हारा० मडि-अच् टाप् । २आमलक्यां मेदि० ।

**मण्डित** त्रि० मडि-क्त । १भूषिते २बौद्धभेदे पु० हेमच० ।

**मण्डु** पु० ऋषिभेदे तस्यापत्यं गर्गा० यञ् । माण्डव्य तदपत्ये ऋषिभेदे ।

**मण्डूक** पुंस्त्री० मण्डयति वर्षासमयम् मडि-ऊक । १भेके अमरः स्त्रियां जातित्वात् ङीष् । २शोणके ३मुनिभेदे च पु०मेदि० ४बन्धभेदे विश्वः । ५गाढ़तेजस्के त्रि०शब्दर० ।

**मण्डूकपर्णी** पु० मण्डूक इव पर्णमस्य । १श्योनाके अमरः २शोणके मेदि० । ३मञ्जिष्ठायां स्त्री टाप् ङीप् वा । ४ब्राह्म्यां (वामनहाटि)५ओषधिभेदे(थुलकुड़ी) रत्नमा० स्त्री ङीप् मेदि०।६आदित्यभक्तायां स्त्री ङीप् राजनि०। स्वार्थे क । मण्डूकपर्णिका तत्रार्थे “मण्डूकपर्णिका लघ्वी स्वादुपाका सरा हिमा” । “मण्डूकपर्णिका लघ्वी कृत्या वातविबन्धनुत्” राजवल्लभः ।

**मण्डूकमातृ** स्त्री मण्डूकस्य मातेव पोषकत्वात् । ब्राह्म्यां (वामनहाटी) राजनि० । [सरोवरभेदे अमरः ।

**मण्डूकसरस** न० मण्डूकप्रचुरं सरः जातौ अच्समा० ।

**मण्डूर** न० मडि-ऊरच् । लौहमले अमरः ।

**मण्डूरवज्र** पु० चक्रदत्तोक्ते वज्रकभेदे

“पञ्चकोलं समरिचं देवदारु फलत्रिकम् । विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः । यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः । पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् । ततोऽक्षमात्रान् गुड़कान् पिबेत् तक्रेण तक्रभुक् । पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम् । अर्शांसि ग्रहणीदोषमुरुस्तम्भमथापि वा । क्रिमिं प्लीहानमुदरं गररोगञ्च नाशयेत् । मण्डूरवज्रनामायं रोगानीकविनाशनः ।”

**मण्डूरवटक** पु० चक्रदत्तोक्ते मण्डूरादिघटिते वटकभेदे

“त्र्यूषणं त्रिफलामुस्तं विडङ्गचव्यचित्रकौ । दार्वी त्वगमाक्षिको धातुर्ग्रन्थिकं देवदारु च । एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक् । मण्डूरं द्विगुणं चूर्णं शुद्धमञ्जनसन्निभम् । मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः । उडुम्बरसमान् कुर्य्याद्वटकांस्तान् यथाग्नितः । उपयुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम् । मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् । कुष्ठान्यजरकं शोथमुरुस्तम्भकफामयान् । अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति ते । शाहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णतः ।”

**मण्डोदक** न० मण्ड इवोदकं यत्र । १आतर्पणे (आलिपोना) २चित्तरागे ३चित्रवर्णे मेदि० । सुश्रुतोक्ते सुराकल्पान्तर्गतकाथभेदे “वैरेचनिकमूलानां क्वाथे माषान् सुभावितान् । सुधौतांस्तत्कषायेण शालीनाञ्चापि तण्डुलान् । अवक्षुद्यैकतः पिण्डान् कृत्वा शुष्कान् सुचूर्णितान् । शालितण्डुलचूर्णञ्च तत्कषायोष्णसाधितम् । तस्य पिष्टस्य भागांस्त्रीन् किण्वभागविमिश्रितान् । मण्डोदकार्थं क्वाथञ्च दद्यात्तत् सर्वमेकतः । निदध्यात् कलसे तान्तु सुरां जातरसां पिबेत् । एष एव सुराकल्पो वमनेष्वपि कीर्त्तितः ।”

**मत** त्रि० मन-क्त । १सम्मते २अभिप्रेते ३ज्ञाते ४अर्च्चिते च । भावे क्त । ५सम्मतौ ६अभिप्राये ७ज्ञाने ८अर्चायाञ्च न० । ९समीकृते त्रि० मत्यशब्दे दृश्यम् । ततः अस्त्या० चतुरर्थ्यां क । मतक तत्समीपादौ त्रि० । स्वार्थे क । मतशब्दार्थे ।

**मतङ्ग** पु० माद्यति अनेन मद-अङ्गच् दस्य तः । १मेघे उणादिकोषः । २मुनिभेदे भा० व० ८अ० । ३दानवभेदे हरिवं० २४२ अ० । ४राजर्षिभेदे भा० ७१ अ० । ब्राह्मण्यां नापितेन जाते ५चण्डालभेदे च तत्कथा भा० आनु० २८ अ० ।

**मतङ्गज** पुंस्त्री० मतङ्गः मेघ इव जायते जन-ड । १गजे अमरः तस्य मेघाकृतित्वात् तथात्वम् । स्त्रियां ङीष् । ग्रीष्मे गजानामूष्मणा कुष्ठादिरोगो भवति यथोक्तं कामन्द० “ऋते त्वम्भो ग्रीष्मकृतात् प्रतापाद्भवन्ति कुष्ठानि मतङ्गजानाम् । स्वस्थक्रियायामपि कुञ्जराणामूष्मा शरीरेष्वभिजायतेऽस्ति । व्यायामयोगेन हि सम्प्रवृद्धः प्रसह्य हन्ति द्विरदान् प्रतापः । सर्वाणि सत्त्वानि

स्वकूप्रकाले विनाम्बुना यान्ति परामवस्थाम्। अन्वत्व-सुप्तप्रवितप्तकायाः प्रयान्ति सद्यः करिणोऽपिवन्तः।"

**मतङ्गवापी** स्त्री तीर्थभेदे भा० अनु० २० अ०।

**मतङ्ग** पु० पार्श्वस्थे आम्रफलाकृतिवृक्षे ऋ०१०।१६३।३भा०

**मतल्लिका** स्त्री मतं मतिमल्लति भूषयति ण्वुल् पृषो०। प्रशस्ते अमरः। अव्युत्पन्नोऽयमित्येके नियतलिङ्गोऽयम् सि०कौ०।

**मतानुज्ञा** स्त्री निग्रहस्थानभेदे गौ०सू० तल्लक्षणमुक्तं यथा "स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा" "यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदति भवत्पक्षे समानो दोष इति स स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषं प्रसञ्जयन् परमतमनुजानातीति मतानुज्ञां नाम निग्रहस्थानमापद्यते" भा०।

**मति** स्त्री मन-भावे क्तिन्। १ज्ञाने अमरः। २इच्छायां ३स्मृतौ च। कर्त्तरि क्तिच्। ४आर्य्ये मेदि० ५शाकभेदे अजयपालः। ६मेधाविनि निघण्टुः। ७मतिकरौषधे गरु० १९८अ० उक्तं यथा "पाठा द्वे जीरके कुष्ठमश्वगन्धाजमोदकम्। वचात्रि-कटुकञ्चैव लवणं चूर्णमुत्तमम्। ब्राह्मीरसे भावितञ्च सर्पिर्मधुसमन्वितम्। सप्ताहभक्षितं कुर्य्यान्मदैश्वर्य्यं मतिं पराम्।"

**मतिदा** स्त्री मतिं द्यति दो-क। १ज्योतिष्मतीलतायाम् (शिमड़ी) राजनि०। दा-क। २बुद्धिदातरि त्रि०।

**मतिनार** पु० नृपभेदे भा० आ० ९४अ०।

**मतिभ्रम** पु०मतेर्भ्रमः अयथार्थविषयत्वेन भ्रमणम्। १बुद्धि-भ्रंशे भ्रान्तौ अमरः। भ्रम-भावे क्तिन्। मतिभ्रान्ति-रप्यत्र स्त्री। [मतिभ्रंशादयोऽप्यत्र।

**मतिविभ्रम** पु० मतेर्विभ्रमोऽत्र। उन्मादरोगे राजनि०।

**मतुथ** त्रि० १मतगायके ऋ०८।७१।५। २मेधाविनि निघ०।

**मत्क** पु० मद-क्विप् स्वार्थे क। १मत्कुणे (छारपोका) ममेदम् कन् मदादेशः। २मत्सम्बन्धिनि "नैतन्मतं मत्कमिति ब्रुवाणः" भट्टिः।

**मत्कुण** पु० मद-क्विप् कुणति कुण-अच् कर्म०। १कीटभेदे (छारपोका) राजनि०। २निर्दन्तगजे ३श्मश्रुशून्यपुरुषे ४नारिकेले मेदि० ५जङ्घात्राणे हेम०। ६अजातलोम-भगायां स्त्रियां स्त्री शब्दर०।

**मत्कुणारि** पु० ६त०। (सिद्धि) भङ्गायां शब्दमाला। तत्-सम्पर्केण हि तस्य नाशः।

**मत्कुणिका** स्त्री कुमारानुचरमातृभेदे भा० श० १७अ०।

**मत्त** पु० मद-क्त। १दुर्मदे गजे अमरः। २क्षीबे ३मदयुक्ते ४हृष्टे च त्रि०। ५धुस्तूरे ६कोकिले ७महिषे पु० राजनि० मत्तं मदोऽस्त्यस्याम् अच्। ८मदिरायां स्त्री राजनि०। "ज्ञेया मत्ता मभनगयुता" छ० र० उक्ते ९दशाक्षरपादके छन्दोभेदे स्त्री।

**मत्तकाशि(सि)नी** स्त्री मत्तेव क्षीवेव काशते कसति गच्छति वा णिनि पृषो० ह्रस्वः। उत्तमयोषिति अमरः।

**मत्तकीश** पु० मत्तः कीश इव। गजे शब्दमा० स्त्रियां जातित्वात् ङीष्।

**मत्तमयूर** पु० मत्तो मयूरो यस्मात्। १मेघे "वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरम्" छ० र० उक्ते त्रयोदशाक्षरपादके २छन्दोभेदे च।

**मत्तवारण** पु०कर्म०। १मत्तहस्तिनि। मत्तं वारयति वृ-णिच् ल्यु। २प्रासादवरण्डे न० (वारेण्डा) हेमच०। ३पूगचूर्णे शब्दमा०।

**मत्ताक्रीड़ा** स्त्री "मत्ताक्रीड़ा मौ त्नौ नौ नलुगिति भवति वसुशरदशयतियुता" छ० र० उक्ते त्रयोविंशत्यक्षरपादके छन्दोभेदे। |(वारेण्डा) प्रासादवरण्डे हेमच०।

**मत्तालम्ब** पु० मत्तैरालम्ब्यते आ+लवि-कर्मणि घञ्।

**मत्तेभविक्रीडित** न०"समरा न्मौ यलगास्त्रयोदशयतिर्मत्तेभ-विक्रीडितम्" छ० र० टी० उक्ते एकविंशत्यक्षरपादके १छन्दोभेदे। ६त०। २मत्तगजक्रीड़ायाञ्च।

**मत्य** न० मते समीकरणे साधु यत्। कृष्टक्षेत्रस्य समीकरण-साधने १फलकभेदे (मइ) "सप्ताश्वितेन मत्येन मतीकरोति" ताण्ड्य०ब्रा०२।९।२। "यथा लोके सप्ता-श्वितेन सप्तभिरनडुद्भिः सप्तभिस्तीक्ष्णभागैः शङ्कुभिर्वा अधिष्ठितेन मत्येन मत्यनाम कण्टकं क्षेत्रस्य समीकरणा-दिसाधनं फलकम्। तेन मतीकरोति समीकरणार्थं कर्षकः प्रव्रजति क्षेत्रम्" भा० २तालादिमुष्टौ हेम० [मन्त्रत।

**मत्र** गुप्तभाषणे चु० आ० सक० सेट् इदित्। मन्त्रयते अम-

**मत्स** पुंस्त्री० मद-स। मत्स्ये उणा०।

**मत्सगण्ड** पु० मत्सेन गण्डो लेपोऽत्र (माछेरघण्ट) व्य-ञ्जनभेदे शब्दच०।

**मत्सर** पु० मद-सरन्। १अन्यशुभद्वेषे परसम्पत्त्यसहने २क्रोधे च ३तद्वति ४कृपणे च त्रि० अमरः। ५कीटभेदे मक्षिकायां स्त्री विश्वः। मत्सरश्च "निन्दन्ति मां सदा लोका धिगस्तु मम जीवनम्। इत्यात्मनि भवेद्यस्तु धिक्कारः स च मत्सरः" क्रिया-

योगसारोक्तः ।"स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा ।" गौ० सू० उक्तश्च बोध्यः ।

मत्स्य पु० मद–स्यन् । (माछ) १मीने २जलचरभेदे स्त्रियां ङीष् यलोपः मत्सी । तद्भेदगुणादि भावप्र० उक्तं यथा तत्र मत्स्येषु रोहितस्य "रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः । क्षणपुच्छो भवश्रेष्ठो रोहितः कथितो बुधैः । रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्त्तिजित् । कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत् । ऊर्ध्वजत्रुगतान् रोगान् हन्याद्रोहितमुण्डकम् ।" (सिलन्धा) "सिलन्धः श्लेष्मलो बल्यो विपाके मधुरो गुरुः । वातपित्तहरो हृद्य आमवातकरश्च सः ।" (अथ भांगन) "भङ्गुरो मधुरः शीतो वृष्यः श्लेष्मकरो गुरुः । विष्टम्भजनकश्चापि रक्तपित्तहरः स्मृतः ।" (मोसाचिका) "मोचिका वातहृद्बल्या बृंहणी मधुरा गुरुः । पित्तहृत् कफकृद्रुच्या वृष्या दीप्ताग्नये हिता ।" (वोदाल) "पाठीनः श्लेष्मलो बल्यो निद्रालुः पिशिताशनः । दूषयेद्रुधिरं पित्तकुष्ठरोगं करोति च ।" (अथ सोङ्गी) "शृङ्गी तु वातशमनी स्निग्धा श्लेष्मप्रकोपनी । रसे तिक्ता कषाया च लघ्वी रुच्या स्मृता बुधैः ।" (अथ हीलसा) "इल्लिसो मधुरः स्निग्धो रोचनो वह्निवर्द्धनः । पित्तहृत्कफकृत्किञ्चिल्लघुर्बल्योऽनिलापहः ।" (अथ सौल) "शल्कुली ग्राहिणी हृद्या मधुरा तु वरा स्मृता ।" अथ (गर्गरा) "गर्गरः पित्तलः किञ्चिद्वातजित् कफकोपनः ।" अथ (कवइ) "कविका मधुरा स्निग्धा कफघ्नी रुचिकारिणी । किञ्चित्पित्तकरी वातनाशिनी वह्निवर्द्धिनी ।" अथ-(वर्मी) "वर्मिमत्स्यो हरेद्वातं पित्तं रुचिकरो लघुः ।" अथ (दण्डारी) "दण्डमत्स्यो रसे तिक्तः पित्तरक्तं कफं हरेत् । वातसाधारणः प्रोक्तः शुक्रलो बलवर्द्धनः ।" (अथ साङि) "शरङ्गो मधुरः स्निग्धो विष्टम्भी शीतलो लघुः ।" (अथ पावता) "महाशफरसंज्ञस्तु तिक्तः पित्तकफापहः । शिशिरो मधुरो रुच्यो वातसाधारणः स्मृतः ।" अथ (गड्ड) "गरघ्नी मधुरा तिक्ता तुवरा वातपित्तहृत् । कफघ्नी रुचिकृल्लघ्वी दीपनी बलवीर्य्यकृत् ।" अथ (मागुर) "मद्गुरो वातहृद्बल्यो वृष्यः कफकरो लघुः ।" अथ टेङ्करा "सपादमत्स्यो मेधाकृत् श्लेष्मचयकरश्च सः । वातपित्तकरश्चापि रुचिकृत् परमो मतः ।" अथ शफरी (पोठी) "प्रोष्ठी तिक्ता कटुः स्वादुः शुक्रघ्नी कफवातजित् । स्निग्धास्य कण्ठरोगघ्नी रोचनी च लघुः स्मृतः ।" अथ क्षुद्रमत्स्याः "क्षुद्रा मत्स्याः स्वादुरसाः दोषत्रयविनाशनाः । लघुपाका रुचिकरा बलदास्ते हिता मताः ।" अथातिक्षुद्रमत्स्याः "अतिसूक्ष्माः पुंस्त्वहरा रुच्याः कासानिलापहाः ।" अथ मत्स्याण्डः "मत्स्यगर्भो भृशं वृष्यः स्निग्धः पुष्टिकरो लघुः । कफमेहप्रदो बल्यो ग्लानिकृन्मेहनाशनः ।" अथ (शुकटी) "शुष्कमत्स्याः नवा बल्याः दुर्जराः विड्विबन्धिनः ।" अथ दग्धमत्स्याः "दग्धमत्स्यो गुणैः श्रेष्ठः पुष्टिकृद्बलवर्द्धनः ।" अथ कूपजादिमत्स्यगुणाः "कौपमत्स्याः शूक्रमूत्रकृच्छ्रश्लेष्मविवर्द्धनाः । सरोजा मधुराः स्निग्धा बल्या वातविनाशनाः । नादेया बृंहणा मत्स्या गुरवोऽनिलनाशनाः । रक्तपित्तकरा वृष्याः स्निग्धोष्णाः स्वल्पवर्चसः । चौण्ड्याः पित्तकराः स्निग्धा मधुरा लघवो हिमाः । ताडागा गुरवो वृष्याः शीतलाः बलमूत्रदाः । ताडागावच्छिन्नजाताः बलायुर्मतिदक्कराः ।" अथर्त्तुविशेषे मत्स्यविशेषगुणाः "हेमन्ते कूपजा मत्स्याः शिशिरे सारसा हिताः । वसन्ते ते तु नादेया ग्रीष्मे चौण्ड्यसमुद्भवाः । तडागजाता वर्षासु ताम्रपथ्या नदीभवाः । नैर्झराः शरदि श्रेष्ठा विशेषोऽयमुदाहृतः ।"

तद्भक्षणनिषेधादिकम्

"यो यस्य मांसमश्नाति स तन्मांसाद उच्यते । मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत्" मनुः ।

"जलस्थलचरा ये च प्राणिनस्तान् हतानपि । न भक्षेत् मानवो ज्ञानी हत्वा तेषां भवेन्नहि । हत्वा हत्वा तु मत्स्याशी सर्वेषां यो विशेषतः । मांसादः प्राणिनां सोऽपि तस्मात् मत्स्यं परित्यजेत्" । पाद्मोत्तरखण्डे १०५ अ० । वर्जनीया मत्स्या यथा । "शृणु देवि ! प्रवक्ष्यामि मांसभेदान् निबोध मे । नादेयं तिक्तकमठं पद्मं शृङ्गिणमेव च । गोमीनं चक्रशकुलं वड़ालं रायवं तथा । वामीनं चलकर्णञ्च सचक्रं चेङ्गमेव च । भूविलञ्चानिलञ्चैव गाङ्गेयानि विवर्जयेत्" मत्स्यसूक्तमहातन्त्रम् । रविवारे मत्स्यभक्षणे निषेधो यथा "आमिषं रक्तशाकञ्च यो भुङ्क्ते च रवेर्दिने । सप्तजन्म भवेत् कुष्ठी दरिद्रश्चोपजायते" भविष्यपु० । "माषमामिषमांसञ्च मसूरं निम्बपत्रकम् । भक्षयेद् यो रवेर्वारे सप्तजन्मान्यपुत्रकः" ति०त० । "कार्त्तिके मत्स्यभक्षणनिषेधो यथा "न मत्स्यं भक्षयेन्मांसं न कौर्म्यं

"आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः । श्रीरागश्च ततः पश्चात् वसन्तस्तदनन्तरम् । हिन्दोलश्चाथ कर्णाट एते रागाः षडेव तु" सङ्गीतदा० । भरतमते तु "भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा । श्रीरागो मेघरागश्च रागाः षडिति कीर्त्तिताः" ।

**रागचूर्ण** पु० रागस्य रतेश्चूर्ण इव । १कामे । रागाय चूर्ण्यतेऽसौ चूर्ण–घञ् । २खदिरे च मेदि० । ३लाक्षायां राजनि० ४रागयुक्तचूर्णे पु० (फाग) शब्दच० ।

**रागदालि** पु० दल्यतेऽसौ दल–णिच्–इन् पृषो० ह्रस्वः रागेण रक्ततया युक्तो दालिः । मसूरे राजनि० ।

**रागपुष्प** पु० रागयुक्तं रक्तवर्णं पुष्पमस्य । १बन्धूके २रक्ताम्लाने च ३जवायां स्त्री राजनि० ङीप् ।

**रागप्रसव** पु० रागयुक्तो रक्तवर्णः प्रसवोऽस्य । १बन्धूके २रक्ताम्लाने च राजनि० ।

**रागयुज्** पु० रागेण रक्तवर्णेन युज्यते युज–कर्मणि क्विप् । १माणिक्ये राजनि० २रक्तवर्णयुक्ते त्रि० ।

**रागसूत्र** न० रागयुक्तं सूत्रम् । पट्टसूत्रे २तुलासूत्रे च मेदि० ।
[राजनि० ३त० । रागाद्याप्यल स्त्री ।

**रागाङ्गी** स्त्री रागयुक्तमङ्गं यस्याः ङीप् । मञ्जिष्ठायाम्

**रागिणी** स्त्री रागोऽस्त्यस्या इनि । १गीताङ्गे स्वरभेदे रागपत्न्यां सङ्गीतदा० । २विदग्धनार्य्यां जटा० । ३मेनकाकन्यायां रागवति ४अनुरक्ते ५कामुके त्रि० विश्वः रन्ज–घिनुन् । ६रतियुक्ते च त्रि० । ७स्वर्णधान्यभेदे मेदि० । एकैकरागे षट् रागिण्य इति षट्सु रागेषु रागिणीभेदाश्च षट्त्रिंशत् यथा

"षट्त्रिंशद्रागिणीभेदाः क्रमशः कथिता मया । धानषी१ मालसी२ चैव रामकीरी३ च सिन्धुड़ा४ । आशावरी५ भैरवी६ च मालवस्य (१) प्रिया इमाः । वेलावली१ पुरवी२ च कानडा३ माधवी४ तथा । कोडा५ केदारिका६ चापि मल्लार(२)दयिता इमाः । गान्धारी१ सुभगा२ चैव गौरी३ कौमारिका४ तथा । वेलोयारी५ च वैरागी६ श्रीरागस्य (३) प्रिया इमाः । तुडी१ च पञ्चमी२ चैव ललिता३ पठमञ्जरी४ । गुर्जरी५ च विभाषा६ च वसन्तस्य (४) प्रिया इमाः । मायूरी१ दीपिका२ चैव देशकारी३ च पाहिडी४ । वराडी५ मोरहाटी६ च हिन्दोलस्य(५) प्रिया इमाः । नाटिका चाथ भूपाली२ रामकेली३ गडा४ तथा । कामोदा५ चाथ कल्याणी६ कर्णाटस्य (६) प्रिया इमाः" ।

सङ्गीतदा० । तद्रागिणीनाञ्चभेदाः तत्पुत्रादयश्च तत्रैव दृष्टाः ।

**राघ** शक्तौ भ्वा० आ० अक० सेट् । राघते अराघिष्ट । ऋदित् चङि न ह्रस्वः ।

**राघव** पु० रघोर्गोत्रापत्यम् अण् । १रघोर्वंश्ये २तत्प्रधाने श्रीरामे च ३महामत्स्यभेदे ४समुद्रे च मेदि० ।

**राङ्कव** न० रङ्कोरयं विकारो वा तल्लोमजातत्वात् अण् । मृगविशेषलोमजाते वस्त्रभेदे अमरः ।

**राज** दीप्तौ भ्वा० उभ० अक० सेट् । राजति ते-अराजीत् अराजिष्ट कर्णादि० रेजतुः रराजतुः । ऋदित् चङि न ह्रस्वः ।

**राजक** न० राज्ञां समूहः कन् । १नृपसमुदाये अमरः । राजैव क । २नृपे पु० । राज–ण्वुल् । ३दीप्तिमति त्रि० ।
[भेदे जटा० ।

**राजकदम्ब** पु० कदम्बानां राजा राजद० परनि० । कदम्ब-

**राजकल्प** पु० ईषदसमाप्तो राजा राजन्+कल्पप् । राज-तुल्ये ।
[ख्याम् राजनि० ।

**राजकर्कटी** स्त्री राजते राज–अच् कर्म० । चीनाकर्क-

**राजकशेरु** पु० कशेरूणाम् राजा राजद० । भद्रमुस्तायाम् राजनि० ।
[र्य्यादौ ।

**राजकीय** त्रि० राज्ञ इदम् छ कुक् च । राजसम्बन्धिका-

**राजकुमार** पु० राज्ञः कुमारः । अप्राप्तवयस्के युवराजकार्य्यानारूढे राजपुत्रे ।
[क्याम् जटा० ।

**राजकुष्माण्ड** पु० राज्ञः कुष्माण्ड इव प्रियत्वात् । वार्त्ता-

**राजकोषातकी** स्त्री राजप्रिया कोषातकी । (घियाभिङ्गर) लताभेदे मदनविनोदः ।

**राजक्षवक** पु० क्षवत्यनेन क्षु-अप् राजते राज–अच् कर्म० स्वार्थे क । राजसर्षपे (राइसर्षी) राजनि० ।

**राजखर्जूरी** स्त्री राजप्रिया खर्जूरी । खर्जूरीभेदे (पिण्डखेजुर) राजनि० ।
[२शाकभेदे राजनि० ।

**राजगिरि** पु० राजाश्रयो गिरिः । १मगधस्थे पर्वतभेदे

**राजघ** त्रि० राजानं हन्ति हन–क नि० । १राजहन्तरि, २तीक्ष्णे च जटा० "रराज नीरजनया स राजघः" नैष०

**राजजम्बू** स्त्री राज्ञः जम्बूरिव । १पिण्डखर्जूरे मेदि० राजते अच् कर्म० । २महाजम्बाम् राजनि० ।

**राजज(य)क्ष्मन्** पु० राज्ञः चन्द्रस्य क्षयकारको ज(य)क्ष्मा । रोगभेदे यक्ष्मन्शब्दे दृश्यम् "राज(य)क्ष्मेव रोगाणाम्" माघः ।
[हृत्वे २आरग्वधे च राजनि० ।

**राजतरु** पु० तरूणां राजा राजद० परनि० । १कर्णिकार-

**राजताल** पु॰ राजप्रियः ताल इव प्रियः । १गुवाकवृक्षे शब्दर० । स्त्रीत्वमपि तत्र ङीप् । "राजतालीवनध्वनिः" रघुः ।

**राजदन्त** पु॰ दन्तानां राजा परनि० । ऊर्द्ध्वपङ्क्तिस्थे मध्यवर्त्तिदन्तद्वये हेमच० । [तुल्ये राजकल्पे ।

**राजदेशीय** पु॰ ईषदूनो राजा राजन्+देशीयर् । राज-

**राजधुस्तूरक** पु॰ धुस्तूराणां राजा राज० पर० स्वार्थे क । बृहद्धुस्तूरे राजधूस्तूरकोऽप्यत्र पु॰ राजनि० ।

**राजधर्म्म** पु॰ राज्ञो धर्म्मः । राज्ञामवश्यकर्त्तव्ये प्रजापालनादौ कर्म्मणि । तमधिकृत्य कृतो ग्रन्थः अण् । भारतशान्तिपर्वान्तर्गते व्यासप्रणीते ग्रन्थभेदे । राजधर्माश्च तत्र मानवे ७ अ० च उक्ता दृश्याः ।

**राजधानी** स्त्री राजा धीयतेऽस्यां धा—आधारे ल्युट् ङीप् । राजावासे महानगर्य्याम् शब्दर० । [धान्ये राजनि० ।

**राजधान्य** न०धान्येषु राजा राज०पर० । (श्यामा) श्यामाक-

**राजन्** पु॰ राज-कनिन् रञ्जयति रञ्ज—कनिन् नि० वा । १नृपे, "राजा प्रकृतिरञ्जनात्" रघुः । २चन्द्रे, ३प्रभौ, ४क्षत्रिये, ५यक्षे ६इन्द्रे, च मेदि० । उत्तरपदस्थः पूर्वपदस्य समभिव्याहृतपदार्थश्रेष्ठवाचकः । यथा राजमाषः मुनिराज इत्यादि । ७पृथुनृपे च । "पित्रा न रञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः । अनुरागात्ततस्तस्य नाम राजेत्यभाषत" विष्णुपु० ।

**राजनीति** स्त्री राज्ञां नीतिः । १राजकर्त्तव्ये सामाद्युपाये, २उपचारात् तत्प्रतिपादके शास्त्रे च । सा च कामन्दकीयनीतिशास्त्रादौ दृश्या ।

**राजन्य** पु॰ राज्ञोऽयम् यत्, जातौ नलोपः । राज—अन्य वा । १क्षत्रिये अमरः । २राजपुत्रे ३अग्नौ, उणादिको० ४क्षीरिकावृक्षे चजटा० । [समूहे अमरः ।

**राजन्यक** न०राजन्यानां क्षत्रियाणां समूहः कन् । क्षत्रिय-

**राजन्वत्** त्रि॰ प्रशस्तो राजाऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः न नलोपः । सुन्दरराजयुते देशे अमरः अन्यत्र राजवदू इत्येव । [२मधुरपटोल्यां राजनि० ।

**राजपटोल** पु॰ राजप्रियः पटोलः । १पटोले रत्नमा० ।

**राजपट्ट** पु॰ राज्ञः पट्ट इव । मणिभेदे त्रिका० ।

**राजपथ** पु॰ पथां राजा राजगमनयोग्यो वा पन्थाः अच् समा० । "धनूंषि दश विस्तारे श्रीमान् राजपथः स्मृतः । नृवाजिरथनागानामसंबाधः सुसञ्चरः" इत्युक्ते राजमार्गे देवीपु० । [वर्णपलाण्डौ राजनि० ।

**राजपलाण्डु** पु॰ पलाण्डूनां राजा श्रेष्ठत्वात् राजद० रक्त-

**राजपीलु** पु॰ राजप्रियः पीलुः । महापीलुवृक्षे राजनि० ।

**राजपुत्र** पु॰राज्ञश्चन्द्रस्य, नृपस्य वा पुत्रः । १बुधग्रहे शब्दर० २नृपकुमारे ३वर्णसङ्करभेदे (रजपुत) "वैश्याद्म्बष्ठकन्यायां राजपुत्रस्य सम्भवः" इति पराशरः । ४महाराजचूतवृक्षे राजनि० ।

**राजपुत्री** स्त्री राज्ञश्चन्द्रस्य पुत्रीव । १कटुतुम्ब्याम् २रेणुकायां ३नृपरीतौ, ४जातौ ५कुछुन्दर्य्यां च । ५मालत्याञ्च राजनि० । ६त० । ६नृपकन्यायाम् । संज्ञायां कन् । ७वराटिकायां जटा० ।

**राजपुष्प** पु॰ राजा चन्द्र इव शुभ्रत्वात् पुष्पमस्य । नागकेसरवृक्षे शब्दच० । २करुणीवृक्षे स्त्री राजनि० ङीप् ।

**राजफणिज्झक** पु॰राज-अच् कर्म० । नागरङ्गवृक्षे शब्दमा०

**राजफल** न॰ राजप्रियं फलमस्य । १पटोले त्रिका० । २राजप्रियं फलमस्याः । २जम्ब्वाम् स्त्री राजनि० टाप् ।

**राजबदर** न॰ राज्ञो बदरमिव प्रियत्वात् । १रक्तामलके २लवणे च मेदि० बदराणां राजा राजद० प० । ३उत्तमकोल्यां पु॰ राजनि० । [भादाल] लताभेदे अमरः ।

**राजबला** स्त्री राज—अच् राजं बलं यस्याः ५ब० । (गन्ध-

**राजभद्रक** पु॰ राज्ञो भद्रं यस्मात् कप् । १कुष्ठे (कुड़) २निम्बे च राजनि० ३पारिभद्रवृक्षे धातुपा० ।

**राजभूय** न॰ राज्ञो भावः राजन्+भू—क्यप् । राज्ञोऽसाधारणधर्मे राजत्वे ।

**राजभोग्य** न॰ राज्ञा भोक्तुं योग्यम् भुज—ण्यत् कुत्वम् । १जातीकोषे २पियालवृक्षे पु॰ शब्दच० । ३नृपतेर्भोग्यवस्तुमात्रे त्रि० ।

**राजमार्ग** पु॰ राजयोग्यः मार्गः । १राजपथे राजनि० ।

**राजमाष** पु॰ माषेषु कलायेषु राजा श्रेष्ठत्वात् राजद०पर० । १माषभेदे हेमच० । (बरबटी) २व्रीहिभेदे राजनि० ।

**राजमुद्ग** पु॰मुद्गेषु राजा राज०प०नि० । (हुगानि) मुद्गभेदे ।

**राजरङ्ग** न॰ राजयोग्यं रङ्गम् । रजते शब्दर० ।

**राजराज** पु॰ राज्ञामपि राजा प्रभूतधनत्वात् टच् समा० । १कुबेरे, अमरः । २सार्वभौमनृपे, ३चन्द्रे च मेदि० ।

**राजर्षि** पु॰ राजा ऋषिरिव श्रेष्ठत्वात् संयतत्वाच्च । १राजश्रेष्ठे, २यतात्मनि नृपे च । [भेदे पुंस्त्री० ।

**राजवंश्य** त्रि॰ राजवंशे भवः यत् । १राजवंशोद्भवे ।२जाति-

**राजवर्त्मन्** न॰ राजयोग्यं वर्त्म । १राजशब्दोक्तलक्षणे राजपथे हेमच० । ६त० । राज्ञः २कर्त्तव्यकर्म्मणि च ।

**राजवल्लभ** पु॰ ६त० । १प्रियाले २राजबदरे ३राजाम्रे

राजनि० द्रव्यगुणप्रतिपादके ग्रन्थे निघण्टुविशेषे ४पन्थभेदे च। ५राज्ञः पिवे त्रि०। [(उच्चा) ज्वराभेदे रत्नमा०।
**राजवल्ली** स्त्री राजते राज—अच् राजा वल्ली कर्म०।
**राजवत्** त्रि० राजा राजमात्रं विद्यतेऽस्य मतुप् मस्य वः। राजमात्रवति देशे अमरः।
**राजबीजिन्** त्रि० राजा बीजी कारणं यस्य। राजवंश्ये।
**राजवृक्ष** पु० वृक्षाणां राजा राजद० परनि०। १आरग्वधे (सोन्दाल) अमरः। राजप्रियो वृक्षस्तत्फलबीजजातलड्डुकस्य राजप्रियत्वात्। २प्रियाले मेदि०।३लङ्कास्थितवृक्षे (लङ्काशिज) शब्दच०। [शब्दमा०।
**राजशण** पु० राज—अच् राजः शणः कर्म०। पट्टे (पाट)
**राजशाक** पु० शाकानां राजा राज० परनि०। वास्तुकशाके राजनि०। [स्वार्थे त्रिका०।
**राजशृङ्ग** न० राज्ञां शृङ्गमिव ऊर्ध्वस्थितत्वात्। राजचिह्न-
**राजस** त्रि० रजसा निर्मितः अण्। रजोगुणात् जाते १कर्मेन्द्रियादौ "येनाक्रिम् कर्मणा लोके ख्यातिमाप्नोति पुष्कलाम्। न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम्" इत्युक्ते ख्यात्यै क्रियमाणे २कर्मणि च। रजःप्रधानतयास्त्यस्य अण्। ३रजःप्रधाने। सर्वेषां वस्तूनां त्रिगुणात्मकत्वेऽपि "भूयस्त्वात्तद्व्यपदेशः" इत्युक्तेः क्वचित् तत्प्रधानत्वेन व्यपदेशः। ४दुर्गायां स्त्री ङीप् शब्दमा०।
**राजसभ** न० राज्ञां नृपाणां सभा। नृपसमाजे अमरः।
**राजसर्षप** पु० सर्षपाणां राजा श्रेष्ठत्वात् राजद०। (राइसर्षा) १सर्षपभेदे हेमच०। "तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते" उक्ते २परिमाणभेदे च विश्वः।
**राजसारस** पुंस्त्री० राज्ञः सारस इव। मयूरे शब्दमा० स्त्रियां ङीष्।
**राजसूय** पु० राज्ञा सूयते सू—कर्मणि क्यप्। राजमात्रकर्त्तव्ये यज्ञभेदे शब्दच०। "राजा राजसूयेन यजेत" श्रुतिः।
**राजस्व** न० राज्ञे देयं स्वं करद्रव्यम् धनम्। १राजदेये करे हेम०। २राजधने च। [डिड्डुकस्तूरे राजनि०।
**राजस्वर्ण** पु० स्वर्णानां धुस्तूराणां राजा०राजद० परनि०।
**राजहंस** पुंस्त्री० हंसानां राजा श्रेष्ठत्वात्राजद०परनि० रक्तवर्णचञ्चुचरणयुक्ते श्वेतपक्षके हंसभेदे अमरः।२कलहंसे च मेदि०। उभयार्थे स्त्रियां ङीष्। राजा हंस इव सारपक्षपातात्। ३नृपश्रेष्ठे। [तगरपुष्पे राजनि०।
**राजहर्षण** न० राज्ञः नृपान् हर्षयति हृष—णिच्—ल्यु।
**राजातन** पु० राजार्थमातनोति फलबीजम् आ+तन—अच्। (चीरञ्जीति) ख्यातबीजहेतुफलके पियाले शब्दमा०।
**राजादन** पु० राज्ञा अद्यते तत्फलबीजजातलड्डुकः अद—कर्मणि ल्युट्।१पियालवृक्षे अमरः। यस्य फलबीजं (चिरञ्जि) तेन हि लड्डुकं कृत्वा राज्ञा भुज्यते। २क्षीरिकायां (क्षीरइ) ३किंशुके च मेदि०। ४क्षीरिण्यां स्त्री ङीप् भरतः। [राजनि०।३त०। ५नृपखादनिकात्रे च
**राजान्न** न० अन्नानां राजा राजद०। १अन्नदेशजधान्यभेदे
**राजाम्र** पु० आम्राणां राजा श्रेष्ठत्वात् राजद०। १आम्रभेदे "राजाम्रं तरुणं स्वादु विशदं शीतलं गुरु। पाकि हृद्यं विबन्धाध्मानवातघ्नं कफपित्तहृत्" भावप्र०। [राजनि०।
**राजाम्ल** पु० अम्लानां राजा श्रेष्ठत्वात् राजद०। अम्लवेतसे
**राजार्क** पु० अर्काणां राजा श्रेष्ठत्वात् राजद०। श्वेतार्कवृक्षे (सादा आकन्द) राजनि०।
**राजार्ह** न० राजानमर्हति अर्ह—अण्।१अगुरुचन्दने २राजयोग्ये त्रि० राजनि० ३जम्ब्वां स्त्री मेदि०। [मदनवि०।
**राजालावु** स्त्री राजते राजा अलावुः कर्म०। मिष्टालाबुवाम्
**राजावर्त्त** पु० राजानमावर्त्तयति अनुकूलयति आ—वृत—णिच्—अण्। १उपरत्नभेदे राजनि०। २विराटदेशीयहीरके हेमच०।
**राजाहि** पु० तिलक०। दिव्यसर्पे शब्दर०।
**राजि(जी)** स्त्री राज—इन् वा ङीप्। १श्रेण्याम् पङ्क्तौ २रेखायां च मेदि०। स्वार्थे क। रेखायाम्। राजते राज—ण्वुल्। राजिका राजसर्षपे स्त्री मेदि०।
**राजिकाफल** पु० राजिकाया इव फलमस्य। श्वेतसर्षपे राजनि०।
**राजि(जी)फला** स्त्री राजिभूतानि श्रेणिभूतानि फलानि यस्याः। १चीनाककर्कट्याम् राजनि० २पटोले पु०राजनि०
**राजिल** पुंस्त्री० राज—इलच्। डुण्डुभसर्पे (ढोंड़ासाप) अमरः स्त्रियां ङीष्।
**राजीव** न० राजी दलराजी अस्त्यस्य व। १पद्मे अमरः। "राजीवराजीवशलोलेति" माघः। २हरिणभेदे ३मत्स्यभेदे च पुंस्त्री० मेदि० "राजीवक्षिंहशल्यकांश्च" मनुः। ४गजे त्रिका० ५सारसपक्षिणि च पुंस्त्री० अमरः सर्वत्र जातौ स्त्रियां ङीष्।
**राजेन्द्र** पु० राजा इन्द्र इव श्रेष्ठत्वात्। "चतुर्योजनपर्यन्तमधिकारी नृपो भवेत्। यो राजा तच्छतगुणः स मण्डलेश्वरः। तस्माद्दशगुणो राजा राजेन्द्रः" इत्युक्ताधिकारवति भूपतिभेदे ब्रह्मवै० ज०ख० ८५अ०।

**राज्ञी** स्त्री राज्ञः पत्नी ङीप् स्वयं वा राजते राज–कनिन् ङीप् वा। (राणी) १राजपत्न्याम् २स्वयं राजकर्मकर्त्र्याञ्च ३सूर्य्यपत्न्यां मेदि० ४कांस्ये हेमच०।

**राज्य** न० राज्ञो भावः कर्म्म वा राजन्+यत् नलोपः। १राजकर्म्मणि २राजभावे च ३जनपदे शब्दर०। "लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशलक्षके। शतलक्षे महेशानि! महासाम्राज्यमुच्यते" वरदातन्त्रोक्ते ४लक्षप्रजाधिपत्ये च। [प्रजापालनादौ।

**राज्यधुरा** स्त्री ६त० अच्समा०। राज्यभारे राजकर्त्तव्य

**राज्याङ्ग** न० ६त०। स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलप्रकृतिरूपेषु सप्तसु राज्यस्योपायेषु। "परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते। अमात्यराष्ट्रे दुर्गाणि कोषो दण्डश्च पञ्चमः। एताः प्रकृतयस्तद्वत् विजिगीषोरुदाहृताः। एताः पञ्च तथा मित्रं सप्तमं पृथिवीपतिः। सप्तप्रकृतिकं राज्यमित्युवाच बृहस्पतिः। पौरश्रेणी तदङ्गं च ब्रुवते शब्दवेदिनः" शब्दर०।

**राटि** पु०रट–इण्। (शराल) १विहगे अमरः। २युद्धे स्त्री हेमच० वा ङीप्। पृषो० टस्य डत्वम्। राडिरप्युक्तार्थे

**राढ़** पु० रह–घञ् पृषो० ढत्वम्। देशभेदे (राढ़) स्वार्थे क तत्रैव।

**राढ़ा** स्त्री रह–घञ् पृषो०ढत्वम्। पुरीभेदे "गौडं राष्ट्रमनुत्तमं निरुपमा तत्रापि राढा पुरीति" प्रबोधचन्द्रोदयः।

**राढ़ीय** त्रि० राढो निवासोऽस्य "वृद्धाच्छः" पा०छ। राढदेशोद्भवे।

**रात्रि(त्री)** स्त्री रा–त्रिप् वा ङीप्। १रजन्यां स्वस्वदेशापेक्षया सूर्य्यमण्डलस्य अदर्शनयोग्ये काले २हरिद्रायाञ्च अमरः। "मासेन च मनुष्याणां पितॄणां तदहर्निशम्। कृष्णपक्षे दिनं प्रोक्तं शुक्ले रात्रिः प्रकीर्त्तिताः" उक्ते पितॄणां ३शुक्लपक्षरूपे काले "उत्तरायणे दिनं प्रोक्तं रात्रिः स्यात् दक्षिणायने" इत्युक्ते देवानां दक्षिणायनरूपे ४काले च।

**रात्रिकर** पु० रात्रिं करोति कृ–अच् रात्रौ करः किरणोऽस्य वा। १चन्द्रे हेमच० २कर्पूरे च।

**रात्रि(त्रं)चर** पुंस्त्री० रात्रौ चरति चर–ट अच् टम् वा। राक्षसे अमरः। १तज्जातिस्त्रियां स्त्री ङीप्। २निशाचारिणि त्रि० टान्तस्य स्त्रियां ङीप्।

**रात्रिजागर** पुंस्त्री० रात्रौ जागर्त्ति अच्। १कुक्कुरे हेमच० स्त्रियां ङीप् २निशाजागरणकर्त्तरि त्रि०। ७त०। ३रात्रौ जागरणे पु०। [कीटभेदे राजनि०।

**रात्रिजागरद** पु० रात्रौ जागरं ददाति दा–क। मशके

**रात्रिपुष्प** न० रात्रौ पुष्प्यति पुष्प–अच् ७त०। उत्पले राजनि०। [हारा०। २कर्पूरे च।

**रात्रिमणि** पु० रात्रौ मणिरिव दीप्तिमत्त्वात्। १चन्द्रे

**रात्रिवासस्** न०रात्रेर्वास इवाच्छादकम्। १अन्धकारे शब्दमा० रात्रौ परिधेयं वासः शाक०। २रात्रौ परिधेये वस्त्रे च।

**रात्रिविगम** पु० ६त०। १रजन्यवसाने तदुपलक्षिते २प्रभातकाले च शब्दमाला।

**रात्रिविश्लेषगामिन्** पु० रात्रौ विश्लेषं विच्छेदं गच्छति गम–णिनि। चक्रवाके राजनि० तत्र स्त्रियां स्त्री ङीप्। [ऋष्य। कुक्कुटे शब्दच०स्त्रियां ङीष्।

**रात्रिवेद** पुंस्त्री०रात्रिं रात्रिशेषं वेदयति रवेण विद–णिच्

**रात्रिसत्त्र** न० रात्रिषु त्रयोदशादिदिनेषु विहितं सत्त्रम्। त्रयोदशाहादिषु विहिते यागभेदे तत्र चार्थवादिकं फलं प्रतिष्ठादिकम् न विश्वजिन्न्यायात् स्वर्गफलमिति जै० ४।३। १७।१८ सूत्रे समर्थितम्। "यद्यपि रात्रिशब्देन अथैष ज्योतिरथैष गौरित्यादिवाक्येन विहितानि सौत्राणि कर्माण्युच्यन्ते द्वादशाहादूर्ध्वं भाविनस्त्रयोदशरात्रचतुर्दशरात्रादयस्सत्त्रविशेषाः रात्रिसत्त्रपदवाच्यास्त्रयोदशसंख्यका रात्रयो यस्मिन् सत्त्रविशेषे स त्रयोदशरात्र इति व्युत्पत्तेः तथापि बहुवचनात्तरात्रिशब्देन रात्रिसत्त्रमुच्यते "एता विंशतिं रात्रीः इति श्रवणात्" त० बो०। "फलमात्रेयो निर्द्देशादश्रुतौ ह्यनुमानं स्यात्" जै० सू०। निर्द्देशादर्थवादेन फलस्य निर्द्देशात् फलमर्थवादोक्तम् आत्रेय आह अश्रुतौ सत्रार्थवादादिषु फलाश्रुतित्वानुमानं स्वर्गफलकल्पनम्" इ० "निर्द्देशात्तु प्रतिष्ठैव फलत्वेन विलप्यते" तथा च प्रतिष्ठाकाम आयुषा यजेत प्रतिष्ठाकामो ज्योतिषा यजेत" इत्यादिश्रुतिपदघटिता एव विधयः कल्प्यन्ते लाघवात् न तु स्वर्गकामादिपदघटिताः" तत्त्वबो०। रात्रिसत्त्रन्यायोऽपि आर्थवादिकफलान्वयार्थः।

**रात्रिहास** पु०रात्रेर्हास इव शुभ्रत्वात्। श्वेतोत्पले शब्दच०

**रात्र्यन्ध** त्रि० रात्रावन्धः दृष्टिक्षययुक्तः। १निशादृष्टिशून्ये काकादौ। २रात्रौ रोगकृतदृष्टिशून्ये (रातकाणा) च।

**राद्ध** त्रि०राध–कर्त्तरि कर्म्मणि वा क्त। १सिद्धे २पक्वे च हेम०

**राद्धान्त** पु० राद्धः सिद्धः अन्तो निर्णयो यस्मात् ५ब०। संशयविषये वादिदर्शितपक्षनिराकरणपूर्वकयथार्थपक्षप्रतिपादके २वाक्ये अमरः।

**राध** सिद्धौ अक० निष्पादने पाके च सक० स्वादि० दिवा० च पर० अनिट् । राध्नोति राध्यति अरात्सीत् अराद्ध रेधतुः रराधतुः । शुभाशुभालोचने च । तद्योगे शुभाशुभस्वामिनः सम्प्रदानता । "गर्गो राध्यति रामाय" वोपदेवः । अप+दोषकरणे "यन्महाममपराध्यति" स० घः ।

**राध** पु० राधा विशाखा तत्समीपस्था अनुराधा च तद्युक्ता पौर्णमासी अण् ङीप् राधी सा यत्र मासे पुनरण् । १चान्द्रे वैशाखे मासि । तादृशे २पक्षे ३शुक्लवर्णे च कार्त्तिकशब्दे दृश्यम् । ४तत्पूर्णिमायां स्त्री ङीप् ।

**राधन** न० राध-ल्युट् । १साधने २प्राप्तौ मेदि० । ३तोषे च हेम० । राध-णिच्-युच् । पूजने स्त्री टाप् ।

**राधस्** न० राध-असुन् । अन्ने निघण्टुः ।

**राधा** स्त्री राध-अच् । १विशाखानक्षत्रे रिरंसया रमणीदेहत्वेनाविर्भूते गोलोकस्थे परमेश्वराद्धाङ्गस्वरूपे २शक्तिभेदे तत्रैव श्रीदामशापात् वृन्दावने जातायां वृषभानुसुतायां ३प्रधानगोपिकायाम् ४कर्णस्य पालयितृमातरि च । ५वैशाखपौर्णमास्यां स्त्री ङीप् । [दयोऽप्यत्र

**राधाकान्त** पु० राधायाः कान्तः । श्रीकृष्णे राधावल्लभा-

**राधातनय** पु० राधायास्तनयः । कर्णे स हि कन्यावस्थायां कुन्त्यां कुन्तीगर्भजातस्तया च त्यक्तः राधया सूतपत्न्या पालित इति भारतप्रसिद्धम् । [पालितत्वात् ढक् । कर्णे

**राधेय** पु० राधाया अपत्यम् पुत्त्रत्वेन परिग्रहणेन तत्-

**राम** पु० रम-कर्त्तरि घञ् ण वा । १परशुरामे २दशरथज्येष्ठपुत्रे श्रीरामे ३बलरामे च "भार्गवो राघवो गोपस्त्रयो रामाः प्रकीर्त्तिताः" वह्निपु० । रामशब्दनिरुक्तिः "राशब्दो विश्ववचनो मश्चापीश्वरवाचकः । "विश्वानामीश्वरो यो हि तेन रामः प्रकीर्त्तितः" ब्रह्मवै० ज०ख० ११०अ० । ४मनोहरे ५सिते ६असिते च त्रि० मेदि० । ७वास्तूकशाके ८कुष्ठे (कुड़) न० मेदि० ९तमालपत्रे न० राजनि० ।

**रामकर्पूरक** पु० रामं मनोहरं कर्पूरमिव कन् । सौगन्धिके स्वनामख्याते तृणभेदे शब्दर० ।

**रामगिरि** पु० रामाश्रितः गिरिः । चित्रकूटपर्वते स हि रामेण वनवासगमनकाले प्रथममाश्रितः ।

**रामचन्द्र** पु० रामश्चन्द्र इवाह्लादकत्वात् । दशरथज्येष्ठपुत्रे श्रीरामे शब्दर० । [मदनवृक्षे (मयनागाछ) भावप्र० ।

**रामच्छर्दनक** पु० राममभिरामं छर्दयति छृद-णिच्-ण्वुल् ।

**रामजननी** स्त्री ६त० । १वसुदेवपत्न्यां रोहिण्यां २जमदग्निपत्न्यां रेणुकायां ३दशरथपत्न्यां कौशल्यायाञ्च ।

**रामठ** न० रमठ+स्वार्थे अण् । १हिङ्गुनि अमरः । तत्तुल्यगन्धके २अङ्कोटकवृक्षे रत्नमा० । नाडीहिङ्गुनि स्त्री राजनि० ङीप् ।

**रामण** न० रमयति रम-णिच् ल्यु पृषो० वृद्धिः । १गिरिनिम्बे २तिन्दुके च (तँद) राजनि० ।

**रामणीयक** न० रमणीयस्य भावः रमणीयमेव वा योपधत्वात् वुञ् । १रमणीयत्वे "नखिहारावलिरामणीयकम्" नैष० २रमणीये च ।

**रामतरुणी** स्त्री रामा अभिरामा तरुणीव । (सेओती) १पुष्पवृक्षे राजनि० ६त० । २सीतायां ३रेवत्याञ्च ।

**रामदूत** पु० रामस्य दूतः वार्त्ताहरः । हनूमति स हि रामवार्त्तां लङ्कातः सीताया आजहार ।

**रामदूती** स्त्री रामा अभिरामा दूतीव गन्धद्वारा प्रचारात् । तुलसीभेदे (रामतुलसी) शब्दच० ।

**रामनवमी** स्त्री रामस्य जन्माधारो नवमी । चैत्रशुक्लनवम्याम् । "चैत्रे मासि नवम्यान्तु जातो रामः स्वयं हरिः" अगस्त्यसंहिता । "प्राप्ते श्रीरामनवमीदिने मर्त्यो विमूढधीः । उपोषणं न कुरुते कुम्भीपाकेषु पच्यते" ति० त० ।

**रामपूग** पु० रामः अभिरामः पूगः । गुवाकभेदे त्रिका० ।

**रामबाण** पु० रसभेदे भावप्र० ।

"पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितम् । तत्र जातिफलमर्द्धभागिकं तिन्तिडीफलरसेन मर्द्दितम् । वह्निमान्द्यदशवक्त्रनाशनो रामबाण इति विश्रुतो रसः । संग्रहग्रहणिकुम्भकर्णकामवातखरदूषणं जयेत् । दीयते तु स्वबलानुमानतः सद्य एव जठराग्निदीपनः । रोचकः कफकुलान्तकारकः श्वासकासवमिजन्तुनाशनः" भावप्र० ।

**रामभद्र** पु० राम एव भद्रः मङ्गलदायकत्वात् । श्रीरामे "रामेति रामचन्द्रेति रामभद्रेति वा स्मरन्निति" पद्मपु० ।

**रामलवण** न० कर्म० । शाम्भरिलवणे रत्नमा० ।

**रामवल्लभ** न० रामस्य वल्लभं प्रियम् । १भूर्जपत्रे राजनि० तद्धि रामेण वनवासाश्रमे प्रियतया धृतम् । २तत्प्रिये त्रि० । [लाभहेतुत्वात् मनोहरः ।

**रामशर** पु० कर्म० । शरवृक्षभेदे राजनि० स हि काण्डद्वारा

**रामसख** पु० ६त० टच् । सुग्रीवे वानरराजे शब्दच० ।

**रामा** स्त्री रमतेऽनया रम-करणे घञ् । १गीतादिकलाभिज्ञायां नार्य्यां २नारीमात्रे भावप्र० ३नद्याम् ४हिङ्गुनि मेदि० ५हिङ्गुले पु० ६श्वेतकण्टकार्य्यां ७म्लेच्छकन्यायां ८अशोके

९गौरीचनायां १०लाक्षायां ११गैरिके च स्त्री शब्दच०।

**रामायण** न०। रामस्यायनं चरितमधिकृत्य कृतो ग्रन्थोऽण्। रामचरितप्रतिपादके वाल्मीकिकृते महाकाव्यभेदे तच्च सप्तकाण्डात्मकम् ब्रह्मलोके कोटिश्लोकात्मकं मनुष्यलोके च चतुर्विंशतिसाहस्रं पञ्चशतसर्गयुतम्।

तत्प्रतिपाद्यविषयाश्च गरु०पु० १४८ अ० उक्ता यथा "मनोरिक्ष्वाकुवंश्योऽभूत् वंशे राजा रघुः स्मृतः। रघोरजस्ततो जातो राजा दशरथो बली। तस्य पुत्रास्तु चत्वारो महाबलपराक्रमाः। कौशल्यायामभूद्रामो भरतः कैकयीसुतः। सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायां बभूवतुः। रामो भक्तः पितृमातृविश्वामित्रादवाप्तवान्। अस्त्रग्रामं यतो यक्षीं ताडकां प्रजघान ह। विश्वामित्रस्य यज्ञे तु सुबाहुं न्यवधीद्बली। जनकस्य क्रतुं गत्वा उपयेमेऽथ जानकीम्। ऊर्म्मिलां लक्ष्मणो वीरो भरतो माण्डवीं सुताम्। शत्रुघ्नो वै कीर्त्तिमतीं कुशध्वजसुते च ते। पित्रादिभिरयोध्यायां गत्वा रामादयः स्थिताः। युधाजितं मातुलञ्च शत्रुघ्नभरतौ गतौ। गतयोर्न्नृपवर्य्यश्च राज्यं दातुं समुद्यतम्। रामाय ज्येष्ठपुत्राय कैकेय्या प्रार्थितं तदा। चतुर्दश समावासो वने रामस्य वाञ्छितः। रामः पितृहितार्थन्तु लक्ष्मणेन च सीतया। राज्यं च तृणवत् त्यक्त्वा शृङ्गवेरपुरं गतः। रथं त्यक्त्वा प्रयागञ्च चित्रकूटं गिरिं गतः। रामस्य तु वियोगेन राजा स्वर्गं समाश्रितः। संस्कृत्य भरतश्चागात् रामं मातृगणान्वितः। अयोध्यान्तु समागत्य राज्यं कुरु महामते!। स नैच्छत् पादुके दत्त्वा राज्याय भरताय तु। विसर्ज्जितोऽथ भरतो रामराज्यमपालयत्। नन्दिग्रामे स्थितो भक्तो अयोध्यां नाविशद्व्रती। रामोऽपि चित्रकूटाच्च अत्रेराश्रममाययौ। नत्वा सुतीक्ष्णं चागस्त्यं दण्डकारण्यमागतः। तत्र शूर्पणखा नाम राक्षसी सहसागता। निकृत्य कर्णौ नासे च रामेणाथ पराहिता। तत्प्रेरितः खरश्चागाद्दूषणस्त्रिशिरास्तथा। चतुर्द्दशसहस्रेण रक्षसान्तु बलेन च। रामोऽपि प्रेषयामास बाणैर्यमपुरञ्च तान्। राक्षस्या प्रेरितोऽभ्यागात् रावणो हरणाय हि। मृगरूपं स मारीचं कृत्वाग्रेऽथ त्रिदण्डधृक्। सीतया प्रेरितो रामो मारीचं प्रजघान ह। म्रियमाणः स च प्राह हा सीते! लक्ष्मणेति च। सीतोक्तो लक्ष्मणोऽधावाद्रामपार्श्वं ददर्श तम्। [उवाच राक्षसी माया नूनं सीता हृतेति सा। रावणोऽन्तरमासाद्य लङ्के- नाहाय जानकीम्। जटायुषं विनिर्जित्य ययौ लङ्कां ततो बली। अशोकवृक्षच्छायायां रक्षितां तामधारयत्। आगत्य रामः शून्याञ्च पर्णशालां ददर्श ह। शोकं कृत्वाथ जानक्या मार्गणं कृतवान् प्रभुः। जटायुषञ्च संस्कृत्य तदुक्तो दक्षिणां दिशम्। गत्वा सख्यं ततश्चक्रे सुग्रीवेण च राघवः। सप्ततालान् विनिर्भिद्य किष्किन्ध्यायां हरीश्वरम्। सुग्रीवं कृतवान् राम ऋष्यमूके स्वयं स्थितः। सुग्रीवः प्रेषयामास वानरान् पर्वतोपमान्। सीताया मार्गणं कर्त्तुं पूर्वादौ सुमहाबलान्। प्रतीचीमुत्तरां प्राचीं दिशं गत्वा समागताः। दक्षिणान्तु दिशं ये च मार्गयन्तोऽथ जानकीम्। वनानि पर्वतान् द्वीपान् नदीनां पुलिनानि च। जानकीं ते ह्यपश्यन्तो मरणे कृतनिश्चयाः। सम्पातिवचनात् ज्ञात्वा हनूमान् कपिकुञ्जरः। शतयोजनविस्तीर्णं पुप्लुवे मकरालयम्। अपश्यज्जानकीं तत्र अशोकवनिकास्थिताम्। भर्त्सितां राक्षसीभिश्च रावणेन च रक्षसा। भव भार्य्येति वदता चिन्तयन्तीञ्च राघवम्। अङ्गुलीयं कपिर्दत्त्वा सीतां कौशल्यमब्रवीत्। रामस्य तस्य दूतोऽहं शोकं मा कुरु मैथिलि!। अभिज्ञानञ्च मे देहि येन रामः स्मरिष्यति। तत् श्रुत्वा प्रददौ सीता वेणीरत्नं हनूमते। यथा रामो नयेत् शीघ्रं तथा वाच्यं त्वया गते। तथेत्युक्त्वा तु हनुमान् वनं दिव्यं बभञ्ज तत्। हत्वाक्षं राक्षसांश्चान्यान् बन्धनं स्वयमागतः। बद्धैरिन्द्रजितो बाणैर्दृष्ट्वा रावणमब्रवीत्। रामदूतोऽस्मि हनुमान् देहि रामाय मैथिलीम्। एतत् श्रुत्वा प्रकुपितो दीपयामास पुच्छकम्। कपिर्ज्वलितलाङ्गूलो लङ्कां देहे महाबलः। दग्ध्वा लङ्कां समायातो रामपार्श्वं स वानरः। जग्ध्वा फलं मधुवने दृष्टा सीतेत्यवेदयत्। मणिरत्नञ्च रामाय रामो लङ्कां ययौ पुरीम्। ससुग्रीवः सहनुमानङ्गदाद्यैः सलक्ष्मणः। विभीषणोऽपि संप्राप्तः शरणं राघवं प्रति। लङ्कैश्वर्य्येऽभ्यषिञ्चद्रामस्तं रावणानुजम्। रामो नलेन सेतुञ्च कृत्वाब्धौ चोच्छ्रितायतम्। सुवेलावस्थितस्तत्र पुरीं लङ्कां ददर्श ह। अथ ते वानरा वीरा नीलाङ्गदनलादयः। धूम्रधूम्राक्षधूमेन्द्राजाम्बवत्प्रमुखास्तदा। मैन्दद्विविदमुख्यास्ते पुरीं लङ्कां बभञ्जिरे। राक्षसांश्च महाकायान् कालाञ्जनचयोपमान्। रामः सलक्ष्मणो हत्वा सकपिः सर्वराक्षसान्। विद्युज्जिह्वञ्च धूम्राक्षं देवा-

न्तकनरान्तकौ । महोदरमहापार्श्वौ अतिकायं महाबलम् । कुम्भं निकुम्भं मत्तञ्च मकराक्षं ह्यकम्पनम् । प्रहस्तं वीरमुन्मत्तं कुम्भकर्णं महाबलम् । रावणं ब्रह्मणश्छित्त्वा हस्त्वा दौ राघवो बली । निकृत्य बाहुपक्षाणि रावणन्तु व्यपातयत् । सीतां शुद्धां गृहीत्वाथ विमाने पुष्पके स्थितः । सवानरः समायातो ह्ययोध्यां प्रवरां पुरीम् । तत्र राज्यं चकाराथ पुत्रवत् पालयन् प्रजाः । दशाश्वमेधानाहृत्य गयाशिरसि पावनम् । पिण्डानां विधिवत् कृत्वा दत्त्वा दानानि राघवः । पुत्रौ कुशलवौ दृष्ट्वा तौ च राज्येऽभ्यषेचयत् । एकादशसहस्राणि रामो राज्यमकारयत् । शत्रुघ्नो लवणं हत्वा शैलूषं भरतः स्थितः । अगस्त्यादिमुनीनाञ्च सत्कृत्य श्रुत्वा रक्षसाम् । स्वर्गं गतो जनैः सार्द्धमयोध्यस्थैः कृतान्तकः" । अन्यदपि व्यासप्रणीते पद्मपु॰ अध्यात्मरामायणं वाल्मीकिकृतमद्भुतरामायणं चास्ति ।

**रामालिङ्गनकाम** पु॰ रामायाम् स्त्रीणामालिङ्गनस्य कामोऽत्र । रक्ताम्लाने राजनि॰ ।

**रामोपाख्यान** न॰ ६त॰ । १रामस्योपाख्याने । तदधिकृत्य कृतो ग्रन्थः अण् ।२भारतवनपर्वान्तर्गते तदुपाख्यानप्रतिपादकेऽवान्तरपर्वणि च । [वंशभवे दण्डभेदे ।

**राम्भ** पु॰ रम्भो वेणुस्तस्य विकारोऽण् । व्रतभेदे धार्य्ये

**राल** पु॰ रा-कलच् । शालवृक्षनिर्य्यासे (धुना) भावप्र॰ । "रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत् । दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः । ग्रहभग्नाग्निदग्धांश्च शूलातीसारनाशनः" भावप्र॰ ।

**रालकार्य्य** पु॰ रालः कार्य्यो यस्य । शालवृक्षे राजनि॰ ।

**राव** पु॰ रु-घञ् । शब्दे हारा॰ ।

**रावण** पु॰ रवणस्यापत्यम् शिवा॰ अण् रावयति शत्रून् णिच्-ल्यु वा । लङ्काधिपतौ विश्रवसः पुत्रे राक्षसे ।

**रावणगङ्गा** स्त्री रावणनिर्म्मिता गङ्गा नदी । सिंहलदेशस्थे नदीभेदे गरुड़पु॰ ७ अ॰ ।

**रावणारि** पु॰६त॰ । श्रीरामे जटा॰ रावणान्तकादयोऽप्यत्र ।

**रावणि** पु॰ रावणस्यापत्यम् इञ् । मेघनादाख्ये रावणज्येष्ठपुत्रे हेमच॰ । [चण्डि न ह्रस्वः ।

**राश** शब्दे भ्वा॰ आ॰ अक॰ सेट् । राशते अराशिष्ट ऋदित्

**राशि** पु॰ अश्नुते व्याप्नोति अश्-इन् धातोरुडागमश्च । धान्यादीनां १पुञ्जे अमरः । ज्योतिश्चक्रस्य द्वादशांशे २मेषादौ, "इष्टत्रे राशिप्रसिद्धये" इति लीलावतीप्रसिद्धे ३व्यक्ताव्यक्तगणभेदे यथा त्रैराशिकपञ्चराशिकादिशब्दे ।

**राशिचक्र** न॰ राशिघटितं चक्रं वृत्तम् । मेषादिद्वादशराशियुक्ते गोलाकारे वायुवशेन पूर्वतः पश्चात् अनिशं संभ्रम्यमाणे ज्योतिर्मये "सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुगम्" इत्युक्ते ज्योतिश्चक्रे खगोलशब्दे दृश्यम् मन्त्रशुद्ध्यङ्गराशिचक्रं तत्र चक्रशब्दे २८०पृष्ठे दृश्यम् ।

**राशिभोग** पु॰ राशीनां स्वस्वगत्या ग्रहैर्भोगः भुज-घञ् कुत्वम् । रव्यादीनां स्वस्वगत्यनुसारेण राशिषु गतिभेदे । खगोलशब्दे दृश्यम् ।

**राशी(शि)कृत** पु॰ अराशिः राशिः कृतः राशि+अभूततद्भावे च्वि तदर्थे समासो वा । (ढेरी) पुञ्जीकृते एकत्रस्थीकृते ।

**राष्ट्र** न॰ राज-ष्ट्रन् । जनपदे 'गौड़ं राष्ट्रमनुत्तमम्' इति प्रबोधचन्द्रोदयः । २उपद्रवे अमरः ।

**राष्ट्रिका** स्त्री राज-ष्ट्रन् षित्त्वात् ङीष् स्वार्थे क । कण्टकारिकायाम् अमरः ।

**राष्ट्रिय** पु॰ राष्ट्रे भवः घ । नाट्योक्तौ १राजश्याले । छ राष्ट्रीय तत्रार्थे । उभावपि २राष्ट्रभवे त्रि॰ ।

**रास** शब्दे भ्वा॰आ॰अक॰ सेट् । रासते अरासिष्ट ऋदित् चङि न ह्रस्वः । ररासे । अयं तालव्यान्त इत्यन्ये ।

**रास** पु॰ रस-घञ् रास-घञ् वा । १शब्दे, २ध्वनौ हल्लीशबन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या ३क्रीड़ाभेदे, ४कोलाहले च मेदि॰ ।

**रासक** न॰दृश्यकाव्यभेदे "नाट्यं रासकमेकाङ्कं बहुताललयस्थिति । उदात्तनायकं तद्वत् पीठमर्द्दोपनायकम् । हास्योऽङ्गयत्र सशृङ्गारो नारी वासकसज्जिका । मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च । केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम्" सा॰द॰ ।

**रासभ** पुंस्त्री॰ रास-अभच् । गर्द्दभे अमरः स्त्रियां ङीष् ।

**रासभवन्दिनी** स्त्री रासभस्य वन्दिनीव । मल्लिकायाम् शब्दच॰ ।

**रासमण्डल** न॰ रासार्थं हल्लीशबन्धवत् द्वयोर्द्वयोर्मध्यस्थित्या क्रीड़ाभेदार्थं मण्डलं मण्डलाकारेण भ्रमणं यत्र । १गोलोकस्थे रासक्रीड़ाधारस्थाने । तत्रत्य मण्डलप्रमाणञ्च ब्रह्मवै॰ जन्मख॰ ८४ अ॰ । श्रीकृष्णस्य तदुत्सवाङ्गे २मण्डपभेदे च ।

**रासयात्रा** स्त्री ६त॰ । कार्त्तिकपौर्णमास्यां भगवदुत्सवभेदे ब्रह्मवै॰ प्र॰ २५ अ॰ । भगवद्रासश्च भा॰ १०स्क॰ २८अ॰ आदौ दृश्यः ।

**रासेवास** पु० ६त० अलुक् स० । १गोष्ठ्यां, २राधे, ३शृङ्गारे ४रसविद्धौ, ५रसावासे, ६षष्ठीजागरे च मेदि० । ७उत्सवे शब्दच० दपरिहासे जटा० ।

**रासेश्वरी** स्त्री ६त० । राधिकायाम् ।

**रास्ना** स्त्री रस-ण्नु । १स्वनामख्यातायां लतायाम् (काँटा आमरूल) । तत्पर्य्यायगुणा भावप्र० उक्ता यथा "रास्ना युक्तरसा रस्या सुवहा रसना रसा । एलापर्णी च सुरसा सुस्निग्धा श्रेयसी तथा । रास्नाऽऽमपाचनी तिक्ता गुरूष्णा कफवातजित् । शोथश्वाससमीरास्रवातशूलोदरापहा । कासज्वरविषाशीतिवातिकामयसिध्महृत्" भावप्र० । २नाकुल्यां भावप्र० तत्पर्य्यायगुणा उक्ता यथा "नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली । नकुलेष्टा भुजङ्गाक्षी सर्पाक्षी विषनाशिनी । नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् । भोगिलूताहवृश्चिकाखुविषज्वरकृमिव्रणान्" ।

**राहु** पु० रह-उण् । १त्यागे, २त्यक्तरि, ज्योतिश्चक्रस्थे सूर्य्यकिरणसम्पर्काभावेन जायमानपृथिवीच्छायारूपे ३तमसि तदधिष्ठातरि ४ग्रहभेदे, ५सिंहिकासुते दानवे च । तमःशब्दे दृश्यम् ।

**राहुच्छत्त्र** न० राहोर्ग्रहस्य छत्त्रमिव । आर्द्रके राजनि० ।

**राहुदर्शन** न० राहोर्दर्शनं यत्र । चन्द्रसूर्य्ययोरुपरागरूपे १ग्रहणे "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने" इति ति०त० । तेन उपरोक्ते एव चन्द्रे सूर्य्ये च तस्य दृश्यता नान्यदा तस्य छायारूपत्वात् ।

**राहुमूर्द्धभिद्** पु० राहोः सिंहिकासुतस्य मूर्द्धानं भिनत्ति भिद-क्विप् । विष्णौ । अमृतपानकाले देवपङ्क्तौ देवरूपेण स्थित्वाऽमृतं पिबन्तं दृष्ट्वा विष्णुस्तस्य शिरश्चिच्छेदेति भाग० ८।९ अ० ।

**राहुरत्न** न० राहोः प्रियं रत्नम् । गोमेदमणौ राजनि० ।

**राहुस्पर्श** पु० राहोः स्पर्शः स्वाधिष्ठितभूच्छायाद्वारा यत्र । चन्द्रसूर्य्ययोः उपरागरूपे ग्रहणे हलायुधः ।

**राहूच्छिष्ट** पु० ६त० । लशुने त्रिका० ।

**राहूत्सृष्ट** पु० ६त० । लशुने हारा० ।

**रि** गतौ तु० पर० सक० अनिट् । रियति अरैषीत् रिराय ।

**रिक्त** न० रिच-क्त । १शून्ये २वने मेदि० । ३निरर्थके च त्रि० शब्दर० । स्वार्थे क । तत्रैव त्रि० ।

**रिक्तभाण्ड** न० रिक्तं भाण्डम् । तैलातिशून्ये भाण्डे ।

**रिक्तहस्त** त्रि० रिक्तो धनादिशून्यो हस्तो यस्य । १निर्धने, भूरिदानादिना २व्ययितधने च । [तिथिषु ज्यो०त० ।

**रिक्ता** स्त्री रिच-क्त । उभयपक्षयोश्चतुर्थीनवमीचतुर्दशी-

**रिक्थ** न० रिच-थक् । १धने अमरः । २पिताद्युक्ताप्रतिबन्धे दाये च "स्वामी रिक्थक्रयसंविभागेत्यादि" गौतमस्मृतिः ।

**रिक्थग्राहिन्** त्रि० रिक्थं दायं गृह्णाति । ग्रह-णिनि । दायहारिणि पुत्रादौ । अण् । रिक्थग्राहोऽप्यत्र ।

**रिक्थिन्** त्रि० रिक्थं ग्राह्यत्वेनास्त्यस्य इनि । दायहारिणि दायादे "उभयोरप्यसौ रिक्थी" इति मनुः ।

**रिख** सर्पणे भ्वा० पर० सक० सेट् इदित् । रिङ्खति अरिङ्खीत् । अनिदित्पर्य्यायमित्येके रेखति अरेखीत् ।

**रिग** गतौ भ्वा०पर०सक०सेट् इदित् । रिङ्गति अरिङ्गीत् ।

**रिङ्गण** न०रिगि-ल्युट् । स्खलने । रिखि ल्युट् । रिङ्खणमप्यत्र

**रिच** सम्पर्के वियोगे च वा चु०उभ० पक्षे भ्वा०पर०सक०सेट् । रेचयति ते रेचति । अरीरिचत् त अरेचीत् ।

**रिच** विरेके (अतिशय पुरीषोत्सर्गे) रुधा०उभ०सक०अनिट् । रिणक्ति रिङ्क्ते इरित् अरिचत् अरैक्षीत् अरिक्त । अति+अतिक्रम्य स्थिते आधिक्येन स्थितौ अक० । अतिरेकः वि+अति भेदे तदसत्त्वे तदसत्त्वरूपे पदार्थे च व्यतिरेकः ।

**रिज** भर्जने भ्वा० आ०सक० सेट् । रेजते अरेजिष्ट ।

**रिपु** पु० रप-उन् पृषो० । १शत्रौ अमरः । २चोरनामगन्धद्रव्ये राजनि० । ज्योतिषोक्ते लग्नापेक्षया ३षष्ठस्थाने च । देहिस्थेषु षट्सु ४कामक्रोधादिषु । "कामः क्रोधश्च मोहश्च मात्सर्य्यं मदलोभकौ । देहिस्था रिपवश्चेति" पुरा० ।

**रिपुघातिनी** स्त्री रिपुं हन्ति हन-णिनि । (कुँचुइ) लताभेदे शब्दच० । २शत्रुघातके त्रि० । [२नृपभेदे पु० ।

**रिपुञ्जय** त्रि० रिपुञ्जयति जि-खच् मुम् । १शत्रुजयिनि,

**रिनृफ** वधे तु० प० सक० सेट् । रिम्फति अरिम्फीत् रिम्फते

**रिप्फ** पु० रिनृफ-अच् पृषो० । लग्नापेक्षया द्वादशे स्थाने ज्यो०

**रिफ** कुत्सने चौ० पर० सक० सेट् । रेफति अरेफीत् ।

**रिफ** हिंसायां निन्दायां बोधने च सक० श्लाघायाम् अक० तु० पर० सेट् । रिफति अरेफीत् ।

**रिव** गत्यां भ्वा०पर०सक०सेट् इदित् । रिम्वति अरिम्वीत् ।

**रिभ** रवे भ्वा० पर० सक० सेट् । रेभति अरेभीत् ।

**रिव** गतौ भ्वा०पर०सक०सेट् इदित् । रिण्वति अरिण्वीत ।

**रिश** हिंसायां तु०पर०सक०अनिट् । रिशति अरिक्षत् ।

**रिश्य(ष्य)** स्त्री रिश्य(ष्य)ते रिश(ष)-क्यप् । मृगभेदे त्रिका० स्त्रियां योपधत्वात् टाप् । ऋष्यस्त्वत्रार्थे शब्दर० ।

रिष वधे भ्वा०पर०सक०सेट्। रेषति अरेषीत्। रिरेष।

**रिष्ट** न० रिश-क्त। १मङ्गले २अशुभे ३पापे च अमरः। भावे क्त। ४नाशे, ५अशुभादिमति त्रि०। उपचारात्। ६खड्गे, ७रक्तामिष्यौ च पु० मेदि०। स्वार्थे क। तेषु।

**रिष्टि** स्त्री० रिष-रिश-वा क्तिन्। १अशुभे, २शस्त्रभेदे खड्गे पु०मेदि०। क्तिच्। ३रन्ध्रे पु०। सा च ह०जा०दस्याः

**रिह** वधे भ्वा० पर० सक० सेट्। रेहति अरेहीत्।

**री** क्षरणे दि० आ० अक० अनिट्। रीयते अरेष्ट ओदित् निष्ठातस्य नः। रीणः। [याति अरैषीत्।

**री** गतौ वधे च सक० रवे अक० क्र्या० प० अनिट्। रि-

**रीठा** स्त्री री-ठक् ठस्य नेत्वम्। रीठाकरञ्जे "रीठाकरञ्जस्तिक्तोष्णः कटुगन्धश्च वातहृत्। कण्डूतिकुष्ठविषहृत् कफविस्फोटनाशनः" राजनि०।

**रीठाकरञ्ज** पु० कर्म०। स्वनामख्याते वृक्षे राजनि०।

**रीढा** स्त्री रिह-क्त नि० इडभावः। अवज्ञायाम् अमरः।

**रीण** त्रि० री-क्त। क्षरिते स्रुते अमरः।

**रीति** स्त्री री क्तिच्।१पित्तले। क्तिन्।२प्रस्रावे,३क्षरणे अमरः ४लोहकिट्टे, मेदि०।५दग्धस्वर्णादिमले रमा०।६सीमायां, ७गतौ, ८स्वभावे, हेमच०। अलङ्कारोक्ते ९गौड्यादिरचनाभेदे च "गौडीपाञ्चालवैदर्भ्यो रीतयः परिकीर्त्तिताः" सा० द०। [तत्रार्थे स्त्री शब्दर०

**रीतिक** न०रीत्या पित्तलेन कायति कै-क। पुष्पाञ्जने राजनि०

**रीतिपुष्प** न० रीतेः पुष्पमिव। कुसुमाञ्जने अमरः।

**रीव** ग्रहणे, संवरणे च भ्वा०उभ० सक० सेट्। रीवति ते अरीवीत् अरीविष्ट। ऋदित् चङि न ह्रस्वः।

**रु** ध्वनौ अदा०पर०अक०सेट्। रौति-रवीति अरावीत्-अरौषीत्। लिटि नित्येट् रुरविथ। [रुरुविव।

**रु** वधे गतौ च भ्वा० आ० सक० अनिट्। रवते अरोष्ट।

**रुक्प्रतिक्रिया** स्त्री रुजः प्रतिक्रिया प्रतिकारः प्रति+कृ-भावे श ६त०। चिकित्सायाम् अमरः।

**रुक्म** न० रुच-मन् नि० कुत्वम्। १काञ्चने, २धत्तूरे, अमरः ३लोहे, मेदि० ४नागकेसरे च राजनि०।

**रुक्मकारक** पु० रुक्मं तन्निमित्तभूषणं करोति कृ० ण्वुल्। स्वर्णकारे अमरः।

**रुक्मिन्** त्रि० रुक्मं विद्यतेऽस्य इनि। १स्वर्णयुक्ते २भीष्मकराजज्येष्ठपुत्रे पु०राजभेदे भाग०१०।५२। ३रुक्मिराजकन्यायां श्रीकृष्णपत्न्यां स्त्री ङीप्।

**रुक्ष** त्रि०रुह-क्स।१अचिक्कणे २निःस्नेहे ३कठोरे च अमरः

**रुग्ण** त्रि०रुज-क्त। १रोगान्विते राजनि० २भुग्ने च अमरः

**रुच** प्रीतौ प्रकाशे च भ्वा० आ० अक० सेट्। रोचते लुङि उ० अरुचत् अरोचिष्ट। एतद्योगे प्रीयमाणस्य सम्प्रदानता "नारदाय रोचते कलहः" सि०कौ०।

**रुचक** न० रुच-क्वुन्। १सर्जिकाक्षारे, माङ्गल्ये २द्रव्ये, ३अश्वभूषणे, ४माल्ये ५सौवर्चले, ६उत्कटे त्रि० मेदि० ७आस्वाद्यरसे, शब्दच० ८रोचनायाम्, ९विडङ्गे न० हेमच० १०लवणे न० हारा०। ११बीजपूरे, १२दन्ते, १३निष्के पु० १४कपोते च पुंस्त्री०मेदि० स्त्रियां ङीष्। १५स्वर्णपात्रभेदे च।

**रुच्(चा)** स्त्री रुच सम्प० क्विप् वा टाप्। १दीप्तौ, २शोभायां, ३प्रकाशे, ४शारिकाखगवाचि च शब्दर०।

**रुचि(ची)** स्त्री रुच-कि वा ङीप्। १अनुरागे २आसक्तौ ३स्पृहायाम् ४अभिलाषे ५किरणे अमर०। ६शोभायां मेदि० ७बुभुक्षायां हेमच०। ८गोरोचनायां च राजनि०। ९प्रजापतिभेदे पुं०मार्क०पु०।१०आलिङ्गनभेदे कामशास्त्रम्।

**रुचिर** त्रि० रुचिं राति ददाति रा-क। १मनोहरे सुन्दरे १मधुरे च अमरः। २मूलके ३कुङ्कुमे ४लवङ्गे च न० ५गोरोचनायां स्त्री राजनि०।

**रुचिराञ्जन** पु० अज्यतेऽनेन अन्ज-करणे ल्युट् रुचिरः शोभायुक्तोऽञ्जनः। शोभाञ्जने (सजिना) राजनि०।

**रुच्य** त्रि०रुचये हितः यत्।१सुन्दरे २रुचिकारे च अमरः। २सौवर्चले न० राजनि०। ३पत्यौ पुं०हेमच०। ४कतकवृक्षे ५शालिधान्ये च पु० राजनि०।

**रुच्यकन्द** पु० रुच्यः रुचिकरः कन्दो मूलमस्य। सूरणे (ओल) राजनि०। [निष्ठातस्य नः। रुग्णः।

**रुज** भञ्जने तु०प०सक०अनिट्। रुजति अरौक्षीत् ओदित्

**रुज** हिंसायां चु० उभ०सक०सेट्। रोजयति ते अरूरुजत् त रोगकर्तृकस्यास्य योगे कर्मणि षष्ठी। रुजयति चौरस्य रोगः

**रुज्(जा)** स्त्री रुज-सम्प० क्विप् वा टाप् रुज-अङ् वा। १रोगे २भङ्गे मेदि० रुज-क। ३मेष्यां हेमच०। ४कुष्ठे च (कुड़) राजनि०। एतद्योगे कर्मषष्ठ्या न समासः।

**रुजाकर** न० रुजां रोगं करोति कृ-अच्। १कर्मरङ्गफले (कामराङ्गा) शब्दच० २रोगकारके त्रि०। ३व्याधौ पु० हेमच०।

**रुट** चौर्य्ये भ्वा० पर०सक०सेट् इदित्। रुण्टति अरुण्टीत्।

**रुट** रोधे सक० दीप्तौ अक० चु० उभ० सेट्। रोटयति ते अरूरुटत् त।

**रुट** दीप्तौ अक॰ प्रतिघाते सक॰ च भ्वा॰ आ॰ सेट् । रोटते ऌदित् लुङि उभ॰ अरुटत् अरोटिष्ट रुरुटे ।

**रुठ** उपघाते भ्वा॰पर॰सक॰सेट् । रोठति अरोठीत् ।

**रुठ** प्रतीघाते भ्वा॰ आ॰ सक॰ सेट् । रोठते ऌदित् लुङि उभ॰ अरुठत् अरोठिष्ट रुरुठे ।

**रुठ** गतौ चौर्य्ये सक॰ मन्दीभावे खञ्जीभावे च अक॰ भ्वा॰ पर॰सेट् इदित् । रुण्ठति अरुण्ठीत् । [कबन्धे जटा॰ ।

**रुण्ड** पु॰ रुटि–अच् पृषो॰ टस्य डः । १मूर्द्धशून्यदेहे

**रुत** न॰ रु–क्त । रवे पशुपक्षिप्रभृतीनां शब्दे अमरः ।

**रुद** रोदने अश्रुविमोचने अदा॰ पर॰ अक॰ सेट् रुदा॰सार्वधातुके हलादौ इट् रोदिति इरित् अरुदत् अरोदीत् ।

**रुदादि** पु॰ सार्वधातुके हलादौ इड्निमित्ते शब्दगणे स च गणः "रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा । जक्षितिश्चैव विज्ञेयो रुदादिः पञ्चको गणः" ।

**रुदन्ति(न्ती)का** स्त्री रुद–शतृ गौरा॰ङीष् । संज्ञायां कन् वा । क्षुद्रक्षुपभेदे राजनि॰ "चणपत्रसमं पत्रं क्षुपश्चैव तथाकृतिः । शिशिरे जलबिन्दूनां स्रवन्तीति रुदन्तिका । रुदन्ती वह्निकटुष्णा पित्तघ्नी च रसायनी" राजव॰ ।

**रुदित** न॰ रुद–भावे क्त । १क्रन्दने अमरः । कर्त्तरि क्त । २कृतरोदने त्रि॰ । [रोधे च ।

**रुद्ध** त्रि॰ रुध–क्त । आवरणादिना वेष्टिते अमरः २कृतगति-

**रुद्र** पु॰ रोदिति रुद–रक् । १शिवमूर्त्तिभेदे "सोऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वम्" श्रुत्युक्ते २वह्नौ च । "अजैकपादहिर्बुध्नो विरूपाक्षः सुरेश्वरः । जयन्तो बहुरूपश्च त्र्यम्बकोऽप्यपराजितः । वैवस्वतश्च सावित्रो हरो रुद्रा इति स्मृताः" इत्युक्तेषु एकादशसु शिवमूर्त्तिभेदेषु व॰व॰ ३यजु॰१६अ॰उक्तेषु "नमस्ते! रुद्र मन्यवे" इत्यादिषु ४रुद्रगणेषु च । ५एकादशसंख्यायाम् ६आर्द्रानक्षत्रे च ।

**रुद्रचण्डी** स्त्री रुद्रयामलोक्ते देवीमाहात्म्यप्रतिपादकग्रन्थे

**रुद्रज** पु॰ रुद्रात् जायते जन–ड । १शिववीर्य्यजाते पारदे राजनि॰ २कार्त्तिकादौ च ।

**रुद्रजटा** स्त्री रुद्रस्य जटेव पिङ्गत्वात् जटिलत्वाच्च । १स्वनामख्याते लताभेदे राजनि॰ "कटू रुद्रजटा श्वासकासहृद्रोगनाशिनी । भूतरक्षोनाशिनी च" रुद्रलताप्यत्र ।

**रुद्रपत्नी** स्त्री ६त॰ । १दुर्गायाम् २अतस्याञ्च (मसिना) रत्नमा॰ ।

**रुद्रप्रिया** स्त्री ६त॰ १हरीतक्याम् २दुर्गायाञ्च शब्दर॰ ।

**रुद्रविंशति** स्त्री रुद्रस्वामिका विंशतिः । प्रभवादिषु षष्टिवत्सरेषु अन्तिमेषु विंशतिवर्षेषु । प्रभवादिशब्दे ४४७२ पृ॰ दृश्यम् ।

**रुद्रसावर्णि** पु॰ चतुर्दशसु मनुषु द्वादशे मनौ मार्क॰ पु॰ ।

**रुद्राक्रीड** न॰ रुद्रस्याक्रीडा यत्र । श्मशाने त्रिका॰ ।

**रुद्राक्ष** पु॰ रुद्रस्याक्षि कारणत्वेनास्त्यस्य अच् । स्वनामख्याते वृक्षे तन्माहात्म्यादि नि॰सि॰ उक्तं यथा

लैङ्गे "विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजितोऽपि महादेवो न स्यात्तस्य फलप्रदः । तस्मान्मृदापि कर्त्तव्यं ललाटे वै त्रिपुण्ड्रकम्" रुद्राक्षविशेषाः शिवरहस्ये "एकवक्त्रः, शिवः साक्षात् ब्रह्महत्यां व्यपोहति । अवध्यत्वं प्रतिस्रोतो वह्निस्तम्भं करोति च । द्विवक्त्रो२ हरगौरी स्यात् गोवधाद्यघनाशकृत् । त्रिवक्त्रो३ ह्यग्निजन्माथ पापराशिं प्रणाशयेत् । चतुर्वक्त्रः४ स्वयं ब्रह्मा नरहत्यां व्यपोहति । पञ्चवक्त्र५स्तु कालाग्निरगम्याभक्ष्यपापनुत् । षड्वक्त्र६स्तु गुहो ज्ञेयो भ्रूणहत्यादि नाशयेत् । सप्तवक्त्र७स्त्वनन्तः स्यात् स्वर्णस्तेयादिपापहृत् । विनायकोऽष्टवक्त्रः८ स्यात् सर्वानृतविनाशकृत् । भैरवो नववक्त्र९स्तु शिवसायुज्यकारकः । दशवक्त्रः१० स्मृतो विष्णुर्भूतप्रेतभयापहः । एकादशमुखो ११रुद्रो नानायज्ञफलप्रदः । द्वादशास्य१२स्तथादित्यः सर्वरोगनिबर्हणः । त्रयोदशमुखः१३ कामः सर्वकामफलप्रदः । चतुर्दशास्यः१४ श्रीकण्ठो वंशोद्धारकरः परः" इति । तथा "विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः । स याति नरकान् घोरान् यावदिन्द्राश्चतुर्दश । पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत् । रुद्राक्षस्य प्रतिष्ठायां मन्त्रं पञ्चाक्षरं तथा । त्र्यम्बकादिमन्त्रं च तथा तत्र प्रयोजयेत्" तथा "अष्टोत्तरशतं धार्य्यं चतुःपञ्चाशदेव वा । सप्तविंशतिमाला या ततो हीनाधमा स्मृता" । प्रजापतिः "मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत् । पुष्ट्यर्थी पञ्चत्रिंशत्या पञ्चदशाभिचारके । सप्तविंशतिरुद्राक्षमालया देहसंस्थया । यत् करोति नरः पुण्यं सर्वं कोटिगुणं भवेत् । यो ददाति द्विजेभ्यश्च रुद्राक्षं भुवि सन्दुलम् । तस्य प्रीतो भवेद्रुद्रः स्वपदं च प्रयच्छति" । पदार्थादर्शे वोपदेवः "रुद्राक्षान् कण्ठदेशे दशन३२परिमितान् मस्तके विंशती द्वे ४० षट् षट् कर्णप्रदेशे करयुगुलकृते द्वादश द्वादशैव । बाह्वोरिन्दोः१६ कलाभिर्नयनयुगकृते एकमेकं शिखायां वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः" ।

रुद्राणी स्त्री रुद्रस्य पत्नी रुद्र+ङीष् आनुक् च । शिवपत्न्याम् दुर्गायाम् अमरः ।

रुद्रारि पु० रुद्रः अरिर्यस्य । कामदेवे । [च ।

रुद्रावास पु० ६त० । १कैलासे २काशयाम् काशीख०३श्मशाने

रुध कामे दि०आ०सक०अनिट् प्रायेणानुपूर्वः । अनुरुध्यते अन्वरुद्ध । [अरुधत् अरौत्सीत्

रुध आवरणे रु० उभ०द्वि० अनिट् । रुणद्धि रुन्धे इरित्

रुधिर न० रुध–किरच् । शरीरस्थे रसपाकजन्ये १धातुभेदे २कुङ्कुमे अमरः । ३मङ्गलग्रहे ४रक्तवर्णे च पु० मेदि० ५तद्वर्णवति त्रि० । ६मणिभेदे न० । तदुत्पत्त्यादि यथा "हुतभुग्रूपमादाय दानवस्य यथेप्सितम् । नर्मदायां निचिक्षेप किञ्चिद्दीनादि भूतले । तत्रेन्द्रगोपकलितं शुकरक्तवर्णं संस्थानतः प्रकटपीलुसमानमात्रम् । नानाप्रकारविहितं रुधिराख्यरत्नमुद्भूय तस्य खलु सर्वसमानमेव । मध्येन्दुपाण्डरमतीव विशुद्धवर्णं तच्चेन्द्रनीलसदृशं पटलं तले स्यात् । सैश्वर्यभृत्यजननं कथितं तदेव पक्वञ्च तत् किल भवेत् सुरवज्रवर्णम्" गरु०पु०७८अ० ।

रुप आकुलीकरणे दि०पर सक० सेट् । रुप्यति इरित् अरुपत् अरोपीत् ।

रुमण्वत् पु० लवण+अस्त्यर्थे मतुप् मस्य वः आसन्दीवानित्यादिना नि० । लवणाकरे पर्वतभेदे सि०कौ० ।

रुमा स्त्री रु–मक् । १सुग्रीववानरभार्यायाम् २लवणस्थाने देशभेदे च मेदि० ।

रुरु पु० रु–क्रु । मृगभेदे अमरः ।

रुवु पु० रु–कु । १०रण्डवृक्षे रत्नमा० स्वार्थे क । रक्तैरण्डे पु० राजनि० रु–उकञ् । रुवुकोऽप्यत्र ।

रुश हिंसायां तु०पर०सक०अनिट् । रुशति अरुक्षत् ।

रुष वधे भ्वा०पर०सक०सेट् । रोषति अरोषीत् ।

रुष क्रोधे दि०पर०अक०सेट् । रुष्यति इरित् अरुषत् अरोषीत्

रुष क्रोधे चु०उभ०अक०सेट् । रोषयति ते अरूरुषत् त ।

रुष्(षा) स्त्री रुष–सम्प० क्विप् वा टाप् । क्रोधे हेमच० ।

रुषित त्रि० रुष–क्त वा इट् । क्रोधयुक्ते इडभावपक्षे रुष्टोऽप्यत्र । [रोहः रुहः ।

रुह उद्भवे भ्वा०पर०अक०अनिट् । रोहति अरुक्षत् । ज्वला०

रुह त्रि० रुह–क । १जाते २दूर्वायां स्त्री अमरः उत्तरपदस्थः तत्प्रादुर्भूते त्रि० यथा भूरुहः वारिरुहम् ।

रूक्ष पारुष्ये कठोरतायाम् निःस्नेहे च अद० चु०उभ०अक० सेट् । रूक्षयति ते अरुरूक्षत् त ।

रूक्ष त्रि० रूक्ष–अच् । १अचिक्कणे २स्नेहशून्ये च ३वृक्ष पु० हेमच० ४दन्तीवृक्षे स्त्री राजनि० ।

रूक्षगन्ध पु० रूक्षो गन्धो यस्य । गुग्गुलौ राजनि० ।

रूक्षदर्भ पु० नित्यकर्म० । हरिद्दर्भे कुशभेदे राजनि० ।

रूक्षपत्र पु० रूक्षं पत्रमस्य । शाखोटवृक्षे राजनि० ।

रूक्षप्रिय पु० रूक्षं प्रीणाति प्री–क । ऋषभौषधे राजनि० ।

रूढ त्रि० रुह–क्त । १जाते, २प्रसिद्धे च मेदि० । रूढिरस्त्यस्य अच् । प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थबोधके ३शब्दे । यथा घटः गौरित्यादि । शब्दश० प्र०

रूढि स्त्री रुह–क्तिन् । १जन्मनि, २प्रसिद्धौ, प्रकृतिप्रत्ययार्थमनपेक्ष्य शब्देन समुदायशक्त्यार्थस्य ३बोधने ४शब्दशक्तिभेदे च "शब्दात्मिका सती रूढिर्भवेद्योगापहारिणी । कल्पनीया तु लभते नात्मानं योगबाधतः" कुमारभट्टः । लब्धात्मिका क्लृप्ता शक्तिर्योगबाधिका, कल्पनीया तु योगबाध्या" इत्यर्थः ।

रूप रूपान्वितकरणे चुरा० उभ० सक० सेट् । रूपयति ते अरुरूपत् त । नि+प्रमाणोपन्यासेन स्वरूपादिकथने ।

रूप न० रूप–क भावे अच् वा । १स्वभावे, २सौन्दर्ये, ३पशौ, ४नाम्नि, ५शब्दे, ६ग्रन्थावृत्तौ, ७दृश्यकाव्ये नाटकादौ ८श्लोके ९आकारे च मेदि० । शब्दधातूनां विभक्तियोगेन १०निष्पन्नशब्दे, ११शुक्लादिवर्णे च १२तद्वति त्रि० । उत्तरपदस्थः सदृशार्थे त्रि० यथा पितृरूपस्तनयः मातृरूपा कन्या । १३एकसंख्यान्विते न० "रूपं भजेत् स्यात् परिपूर्त्तिकालः" लीलावती । "एकाव्यक्तं शोधयेदन्यपक्षात् रूपाण्यन्यस्येतरस्माच्च पक्षादिति" वीजगणितोक्ते १४अव्यक्तराशिसहचरितव्यक्तसंख्यान्विते च । आकारवर्णरूपरूपस्य षोडश भेदाः तत्र परिमाणकृता रूपाकारस्य ह्रस्वदीर्घचतुरस्रवृत्तेति पञ्च भेदाः । वर्णस्य शुक्लकृष्णनीलारुणरक्तपीतेति पञ्च भेदाः स्पर्शकृता आकारभेदाः कठिनचिक्कणश्लक्ष्णपिच्छिलमृदुदारुणेति पञ्च भेदाः इति षोडशविधा भा० शा० उक्ताः । वैशेषिकनये "चक्षुर्ग्राह्यं तवेद्रूपं द्रव्यादेरुपलम्भकम् । चक्षुषः सहकारि स्यात् शुक्लादिकमनेकधा" भाषा० । तच्च उद्भूतानुद्भूतभेदेन द्विविधम् "उद्भूतरूपं नयनस्य गोचरः" भाषोक्तेः उद्भूतरूपस्यैव प्रत्यक्षविषयता न परमाणुगतानुद्भूतस्य । तच्च पृथिव्यप्तेजसां गुणः "रूपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमं त्रिकम्" भाषा०उक्तेः । सौन्दर्यं रूपलक्षणमुज्ज्वलमणिनोक्तं यथा "अङ्गान्यभूषितान्येव केनचिद् भूषणा-

दिना। येन भूषितवङ्गान्ति तद्रूपमिति कथ्यते"।

**रूपक** न० रूपयत्यत रूप-ण्वुल्। १अभिनयप्रदर्शके दृश्यकाव्यभेदे, "रूपारोपात्तु रूपकम्" तदृश्यं काव्यं नटैरामादिस्वरूपारोपात् रूपकमित्युच्यते" सा०द०। तच्च दशविधम् "ना[illegible]प्रकरणं भाणव्यायोगसमव-कारडिमाः। ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश" सा०द०। दशरूपकग्रन्थेऽस्य विवृतिः। रूपमस्त्यस्य कन्। २मूर्त्ते त्रि० मेदि० रूप+स्वार्थे क। ३शुक्लादि वर्णे, ४आकारे च ५अर्थालङ्कारभेदे, सा०द० अलङ्कार-शब्दे ४०२पृ० दृश्यम्। ६गुञ्जात्रयपरिमाणे "सगुञ्जो प्रोच्यते गुञ्जा तास्तिस्रो रूपकं भवेत्" युक्तिक०।

**रूपतन्मात्र** न० सांख्यमतादिप्रसिद्धे तेजःपदार्थारम्भके सूक्ष्मभूतभेदे तन्मात्रशब्दे ३२२८ पृ० दृश्यः।

**रूपधारिन्** त्रि० रूपं धारयति धारि णिनि। १रूपवति, २सौन्दर्यान्विते, ३वेशान्तरग्राहिणि नटे च।

**रूपवत्** त्रि० रूप+मतुप् मस्य वः। १शुभ्रादिरूपविशिष्टे, २सौन्दर्ययुक्ते ३आकारविशिष्टे च।

**रूपाजीवा** स्त्री रूपं सौन्दर्यमाजीवो जीविका यस्याः। वेश्यायाम् अमरः।

**रूपिका** स्त्री रूपमस्त्यस्य ठन्। श्वेतार्कवृक्षे रत्नमा०।

**रूप्य** न० रूपाय आहन्यते स्वर्णादि यत्। अलङ्कारादिनि-र्माणाय आहन्यमाने १स्वर्णे २रजते च अमरः। स्वार्थे यत्। ३रजतमात्रे रजतशब्दे ४७८९ पृ० दृश्यम्। ४सुन्दरे त्रि० मेदि०।

**रूप्याध्यक्ष** पु० रूप्येषु अध्यक्षः। कोषाध्यक्षे अमरः।

**रूष** धूल्यादिना मिश्रीकरणे अद०चु०उभ०सक० सेट्। रूष-यति ते अरुरूषत् त। [कारके त्रि०।

**रूषक** पु० रूष-ण्वुल्। १वासके वृक्षे जटा०। २मिश्री-

**रूषित** त्रि० रूष-क्त। १धूल्यादिभिर्मिश्रिते, २अविकृणी-कृते च अमरः।

**रे** अव्य० रा-के। नीचादेः सम्बोधने हेमच०।

**रेक** शङ्कायां भ्वा० आ० स० सेट्। रेकते अरेकिष्ट। ऋ-दित् चङि न ह्रस्वः।

**रेक** पु० रिच-घञ्। १विरेचने। रेक-अच्। २शङ्कायां, ३नीचे मेदि० ४भेके पुंस्त्री० जटा०। स्त्रियां ङीष्। रेक-भावे अ। ५सन्देहे स्त्री हेमच० टाप्।

**रेक्णस्** न० रिच-असुन् णिच्च तेन कुत्वं नुट्। स्वर्णे सि०कौ०

**रेखा** स्त्री लिख-अच् लस्य रः। १अल्पे, २छले, ३आभोगे, बिन्दुपुञ्जकृते दण्डाकारे ४चिह्नभेदे (दाड़ि) (कसा) विश्वः। ५सुमेरुलङ्कयोर्मध्यस्थस्थलगस्थलभेदे च।

**रेखागणित** न० रेखायाः गणितं प्रमाणस्वरूपादि यत्र। जगन्नाथपण्डितकृते गणितग्रन्थभेदे क्षेत्रशब्दे तत्परि-भाषादिकं २३८९ पृ० उक्तम्।

**रेखापुर** न० भुवो मध्यस्थलस्थः पुरम्। "राक्षसालयदेवौकः शैलयोर्मध्यसूत्रगाः। रोहितकमवन्ती च तथा सन्निहितं सरः" सू०सि० उक्ते पुरे। "राक्षसालयं लङ्का देवानां स्वरूपः पर्वतो मेरुस्तयोर्मध्ये ऋजुसूत्रं तत्र स्थिता देशा रैखाख्याः लङ्कादर्शनस्थलस्यानुपयुक्तास्तत्र मनुष्यागोचरत्वादिति नोक्ताः। ज्ञानार्थमुदाहरति। रोहीतकमिति। यथा रोहीतकं नगरमवन्त्युज्जयिनी-सन्निहितं सरः कुरुक्षेत्रम्। चकारस्तथेत्यव्ययपरः। तथान्यानि परस्परं सन्निहिततया ज्ञेयानि" रङ्ग०।

**रेचक** न० रेचयति रिच-णिच्-ण्वुल्। १कङ्कुष्ठे राजनि० २यवक्षारे, पु० त्रिका०। ३जयपाले, ४तिलकवृक्षे पु० राजनि०। ५पुरीषनिःसारके त्रि०। क्रीडार्थजलनिः-सारयन्त्रे न०(पिचकिरी) राजनि०। ६कोष्ठस्थ वायो-र्निःसारके व्यापारभेदे कुम्भकशब्दे २११४ पृ०दृश्यम्।

**रेचन** न० रिच्-ल्युट्। १मलभेदनेन तन्निःसारणे। २को-ष्ठात् वायोर्नासिकया निःसारणे च।

**रेचनक** पु० रिच्यतेऽनेन ल्युट् संज्ञायां कन्। १काम्पिल्ल-वृक्षे। कनभावे वा ङीप्। रेचनी तत्रार्थे शब्दर०। २दन्तीवृक्षे ३कालाञ्जन्यां राजनि०। ४श्वेतत्रिवृतायाम् स्त्री मेदि० टाप्। ५काम्पिल्लवृक्षे स्त्री शब्दर०।

**रेची** स्त्री रेचयति अच् गौ० ङीष्। १काम्पिल्लवृक्षे २अङ्कोठे च राजनि०। [दित् चङि न ह्रस्वः।

**रेज** दीप्तौ भ्वा० आत्म० अक० सेट्। रेजते अरेजिष्ट। ऋ-

**रेजति** स्त्री रज+अति। उत्तरस्यां दिशि निघण्टुः।

**रेट** याचने वाचि च द्वि० भ्वा० उभ० सेट्। रेटति ते अ-रेटीत् अरेटिष्ट। ऋदित् चङि न ह्रस्वः।

**रेणु** पुंस्त्री० री-णु। १परागे २धूलौ च अमरः। ३रेणुकायां स्त्री ४पर्पटे पु०। ५पांशौ च राजनि०।

**रेणुका** स्त्री रेणुना कायति कै-क। मरिचाकृतौ १सुगन्धि-द्रव्ये अमरः "रेणुका कटुका पाके तिक्तानुष्णा लघुः कटुः। पित्तला दीपनी मेध्या पाचनी गर्भपातिनी। बलासवातश्लेष्मघ्न तृट्कण्डू विषदाहनुत्" भावप्र०। २जमदग्निपत्न्यां ३परशुराममातरि च।

**रेणुकासुत** पु० ६त० । परशुरामे रेणुकात्मजादयोऽप्यत्र ।

**रेणुरूषित** स्त्री रेणुभिः रूषितः । १गर्द्दभे त्रिका० स्त्रियां ङीष् । २धूलिधूसरे त्रि० ।

**रेणुसार** पु० रेणुरिव सारोऽस्य । १कर्पूरे त्रिका० । कप् । तत्रैवार्थे । [भावप्र० ।

**रेतजा** स्त्री रेत इव जायते जन–ड पृषो० । वालुकायां

**रेतस्** न० री–असुन् तुट् च । पुंसो रक्तादिपरिपाकजन्ये देहस्थे मज्जहेतुके चरमधातौ १शुक्रे शिववीर्य्ये २पारदे च मेदि० । [मेदि० ।

**रेत्र** न० री–त्र । १रेतसि २पीयूषे ३पटवासे ४सूतके च

**रेप** शब्दे अक० गतौ सक० भ्वा० आत्म० सेट् । रेपते अरेपिष्ट ऋदित् चङि न ह्रस्वः ।

**रेप** त्रि० रेप–अच । १निन्दिते २क्रूरे ३कृपणे च मेदि० ।

**रेफ** पु० र+इफ । १रकारात्मके वर्णे । रिफ–अच् । २कुत्सिते त्रि० अमरः । [४कृपणे च शब्दर० ।

**रेफस्** त्रि० रेप–असुन् पस्य फः । १क्रूरे २अधमे, ३दुष्टे

**रेब(व)** गतौ सक० प्लुतौ अक० भ्वा० आ० सेट् । रेब(व)ते अरेबि(वि)ष्ट । ऋदित् चङि न ह्रस्वः ।

**रेभ** शब्दे भ्वा०आत्म०अक०सेट् । रेभते अरेभिष्ट । ऋदित् चङि न ह्रस्वः । [२बलरामश्वशुरे राजभेदे हरिवं० ।

**रेवत** पु० रेव–अतच् । १जम्बीरे जटा० २आरग्वधे शब्दचि०

**रेवती** स्त्री रेवतस्यापत्यमण् रेवत्यादीति निर्द्देशात् न वृद्धिः । १रेवतराजकन्यायां बलदेवपत्न्याम् । रेव–अतच् गौ० ङीष् । अश्विन्यवधितः सप्तविंशतिसंख्याते २नक्षत्रे, ३तत्संख्यायां, ४मातृकाभेदे मेदि० । ५स्त्रीगव्याम् अजयपा० ६नदीभेदे, ७दुर्गायाञ्च देवीपु० । ८रेवतीपदघटितायां ऋचि च “एतस्यैव रेवतीषु वारवन्तीयम्” श्रुतिः । ९पञ्चममनुपत्न्याम् । [४६२१पृ० दृश्यम् ।

**रेवतीभव** पु० ७त० । शनैश्चरे हेमच० । भगदैवतशब्दे

**रेवतीरमण** पु० रेवतीं रमयति रम–णिच्–ल्यु । बलरामे । ६त० । रेवतीशादयोऽप्यत्र । [स्तत्र दृश्यम् ।

**रेवत्यादि** पु० अपत्यार्थे ठक्प्रत्ययनिमित्ते शब्दगणे । पा०ग०

**रेवन्त** पु०रेव–झच् ।१गुह्यकाधिपतौ २सूर्य्यपुत्रभेदे च वह्निपु० ।

**रेवा** स्त्री रेव–अच् ।१नर्मदाख्यनद्याम् अमरः । २कामपत्न्यां ३नीलीवृक्षे च मेदि० ४दुर्गायां देवीपु० ।

**रेष** हेषायां (घोटकशब्दे) भ्वा० आत्म० अक० सेट् । रेषते अरेषिष्ट । ऋदित् चङि न ह्रस्वः ।

**रै** शब्दे भ्वा० पर० अक० अनिट् । रायति अरासीत् ।

**रै** पु० रा–डै । १धने २स्वर्णे अमरः । ३शब्दे शब्दर० अस्य हलादौ सुपि आत्त्वम् राभ्यामित्यादि । [शालादौ ।

**रैत्य** त्रि० रीतेः पित्तलस्य विकारः रीति+ष्यञ् । पित्तलमये

**रैवत** पु० रेवत्या नद्या अदूरो देशः अण् । द्वारिकासमीपस्थे १पर्वतभेदे २स्वर्णालुवृक्षे, ३शिवे मेदि० । ४दैत्यभेदे धरणिः । रेवत्यां भवः अण् । ५चतुर्दशसु मनुषु पञ्चमे मनुभेदे । ६शनैश्चरे च । [रैवतवृक्षे न० राजनि० ।

**रैवतक** पु० रैवतएव स्वार्थे क । १रैवतपर्वते हेमच० २पा-

**रोक** न० रुच–कन् तस्य नेत्त्वम् । १छिद्रे अमरः “तन्मे रोकं च शोकश्चेति” ति०त० । २नौकायाम् ३चले त्रि० मेदि० रुच–घञ् नि० कुत्वम् । क्रयकाले मूल्यदानेन क्रयात्मके ४क्रयभेदे ५दीप्तौ च पु० मेदि० ।

**रोग** पु० रुज–घञ् । १धातुवैषम्यजाते व्याधौ राजनि० २कुष्ठौषधे च (कुड़) मेदि० । [च ३रोगनाशके त्रि० ।

**रोगघ्न** न० रोगं हन्ति हन–टक् । १औषधे, २वैद्यकशास्त्रे

**रोगराज** पु० ६त० टच् समा० । राजयक्ष्मव्याधौ राजनि० ।

**रोगलक्षण** न०रोगो लक्ष्यते ज्ञायतेऽनेन लक्ष–करणे ल्युट् । रोगानुमापके धातुवैषम्यहेतुके चिह्नभेदे निदाने राजनि० “रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता । रोगा दुःखस्य दातारो ज्वरप्रभृतयो हि ते । ते च स्वाभाविकाः केचित् केचिदागन्तवः स्मृताः । मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः” । तत्र स्वाभाविकाः शरीरस्वभावादेव जाताः क्षुत्पिपासास्वप्नजरादिजरामृत्युप्रभृतयः अथ वा स्वस्वभावादुत्पत्तेर्जाता स्वाभाविकाः सहजा इति यावत् । ते च जन्मान्धत्वादयः । आगन्तवोऽभिघातादिजनिताः । अथ वा जन्मोत्तरभाविनः कामक्रोधलोभमोहभयाभिमानदैन्यपैशुन्यशोकविषादेर्ष्यासूयामात्सर्य्यप्रभृतयः । अथ वा उन्मादापस्मारमूर्च्छाभ्रममोहतमःसंन्यासप्रभृतयः । कायिकाः पाण्डुरोगप्रभृतयः “कर्म्मजाः कथिताः केचिद्दोषजाः सन्ति चापरे । कर्म्मदोषोद्भवास्त्वन्ये व्याधयस्त्रिविधाः स्मृताः” । तत्र कर्म्मजा व्याधयः यत्प्राक्तनदुष्कर्म्म प्रबलं केवलं भोगनाश्यम् प्रायश्चित्तनाश्यं वा ततो जाताः नतु दुष्टवातादिदोषेण जनितास्तथा । “यथाशास्त्रन्तु निर्णीतो यथाव्याधि चिकित्सितः । न शमं याति यो व्याधिः स ज्ञेयः कर्म्मजो बुधैः” । दोषजाः । मिथ्याहारविहारप्रकुपितवातपित्तकफजाः । नतु मिथ्याहारविहारिणामपि प्राक्तनसुकृतेन नैरुज्यं दृश्यत

स्थानवः स्मृताः” इति सिद्धान्तकौमुदीतत्त्वबोधिन्याख्याः। स्वर्यां स्थाने जाता ये यमाः पूर्वोक्ताः प्रातिशाख्ये प्रसिद्धाः। खयः, शरः यमयञ्चाः। एते श्वासानुप्रदाना अघोषाः कण्ठं विवृण्वते च। अन्ये एतद्भिन्नाः सर्वे वर्णा घोषसंवारनादवाह्यप्रयत्नवन्तः। वर्गीयप्रथमतृतीय-पञ्चमवर्णाः प्रथमतृतीयवर्गजातयमाश्च पूर्वोक्ताः यणश्च एते अल्पप्राणास्तद्भिन्नाः सर्वे महाप्राणा इति विवेकः।” “तथा उदात्तानुदात्तस्वरितरूपास्त्रिविधाः स्वरा ह्रस्वदीर्घप्लुतकालभेदाश्च स्वराणां विशेषाधाने हेतवो वेदितव्याः। तथा हि “विभागः पञ्चधा मतः” इत्युपक्रम्य “स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानतः” इति स्वरकालस्थानप्रयत्नानुप्रदानाभिधेयवाह्यप्रयत्नान् वर्णविभाजकान् पञ्च सामान्यतो निर्दिश्य शिक्षाकृता उदात्तश्चानुदात्तश्चेत्यादिना अच्येव स्वरकालयोर्विभा-जकताऽभिहिता। तत्र ताल्वादिषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तः नीचैरुच्चार्यमाणोऽनुदात्तः प्रथमतर्ध-मुदात्तमयोच्चार्य उत्तरार्द्धमनुदात्ततयोच्चार्यमाणः स्व-रितः इति “उच्चैरुदात्तः नीचैरनुदात्तः समाहारः स्वरितः तस्य आदित उदात्तमर्द्धह्रस्वमिति” पाणिनि-सूत्रजातेभ्यः। तदेवं परस्परविभाजकस्थानवाह्या-भ्यन्तरप्रयत्नस्वरकालकृतविशेषात् वर्णानां परस्परविशेष-रूपता। सर्वे हि वर्णाः पुरस्कृत्यैव किञ्चिद्विशेषं विशेषताभाजो भवन्तीति।”

विवाहोपयोगिनि नक्षत्रविशेषकृते १६वर्णकूटे उपयम-शब्दे वर्णकूटोक्तौ १२४९ पृ० दृश्यम्।

**वर्णक** न०वर्णयति वर्ण–ण्वुल्। १हरिताले रत्नमा०।२अनु-लेपनयोग्ये अमरः ३पिष्टे ४इष्टे वा चन्दनादौ द्रव्ये च। ५हिङ्गुलादौ पुंस्त्री० भरतः ६मण्डने शब्दर०। एकस्यैव सूत्रादेः पचान्तरव्याख्यानरूपे ५ग्रन्थभेदे न० “लिपन्यासत्वे तृतीयवर्णके”मिता०। ८चारणे पु०मेदि०।

**वर्णकूपिका** स्त्री वर्णानामक्षराणां लेखनाय क्षुद्रः कूपः कूपी सेव कन्। मस्याधारे त्रिका०।

**वर्णचारक** पु० वर्णं शुक्लादिरूपं चारयति चर-णिच्-ण्वुल्। चित्रकरे शब्दमा०।

**वर्णज्येष्ठ** पु० वर्णेषु ज्येष्ठः प्रथमसुत्पन्नत्वात्। १अग्रजे विप्रे। स्वस्वापेक्षया २श्रेष्ठवर्णकूटयुते त्रि०। “वर्ण-ज्येष्ठा च या नारी” स्मृतिः।

**वर्णतूलि(ली)** स्त्री वर्णानां लेखनसाधनं तूलिः। लेख-न्याम् शब्दर०स्वार्थे क। अत्रैव [जटा०।२वर्णप्रदे त्रि०

**वर्णद** न० वर्णं ददाति दा–क। १कालीयके गन्धद्रव्ये।

**वर्णदात्री** स्त्री वर्णं रूपं ददाति दा–तृच् ङीप्। १हरि-द्रायाम् राजनि० २वर्णदातरि त्रि०।

**वर्णदूत** पु० वर्णा एव दूतो यत्र। लिपौ त्रिका०।

**वर्णधर्म** पुंन० ६त०। विप्रादीनामसाधारणे धर्मे यथा विप्रस्य याजनाध्यापनप्रतिग्रहादिः। क्षत्रियस्य प्रजा-पालनादिः पु० जातिधर्मशब्दे दृश्यम्।

**वर्णमातृ** स्त्री ६त०। वर्णानां मातेव। लेखन्यां हारा०।

**वर्णमातृका** स्त्री सरस्वत्यां शब्दच०।

**वर्णमाला** स्त्री ६त० १जातिमालायां २अक्षरश्रेण्यौ ३अन्तर्यागकर्मणि पञ्चाशद्वर्णात्मकमाल्यभेदे। अक्षमाला शब्दे ४२पृ० दृश्यम्।

**वर्णरेखा** स्त्री वर्णान् लिखत्यनया लिख-करणे घञ् रस्य लः। कठिन्यां (खड़ि) त्रिका०।

**वर्णवती** स्त्री वर्ण+मतुप् मस्य वः। १हरिद्रायां जटा०। २वर्णविशिष्टे त्रि०स्त्रियां ङीप्।

**वर्णविलोडक** पु० १श्लोकचौरे २सन्धिचौरे मेदि०

**वर्णसङ्कर** पु० सम्+कृ–अप् वर्णतः सङ्करः। विप्रादिभ्यो वर्णेभ्योऽनुलोमजाते प्रतिलोमजाते मूर्द्धावसिक्तादौ मागधादौ च जातिभेदे “जायते वर्णसङ्करः” गीता। जातिशब्दे ३०८२ सङ्करादिकं दृश्यम्।

**वर्णसि** पु० वर्ण–असिच्। जले उणादि०।

**वर्णा** स्त्री प्रशस्तवर्णोऽस्त्यस्याः फलपुष्पादौ अच्। आढ-क्याम् शब्दच०। [लेखन्याम् शब्दच०।

**वर्णाङ्का** स्त्री वर्णा अक्षराणि अङ्क्यन्तेऽनया अङ्कि–अच्।

**वर्णात्मन्** पु० वर्ण आत्मा स्वरूपं यस्य। ध्वन्यात्मकादि-लक्षणे अकाराद्यक्षरे शब्दभेदे जटा०।

**वर्णार्ह** पु० वर्णं स्तुतिमर्हति अर्ह–अण्। मुद्गे राजनि०।

**वर्णिका** स्त्री वर्णा अक्षराणि लेख्यत्वेन सन्त्यस्याः ठन्। १लेखन्याम् २कठिन्यां हारा० ३मस्यां त्रिका०।

**वर्णित** त्रि० वर्ण–क्त। १स्तुते अमरः २कृतवर्णने ३रूपा-न्तरमापादिते च।

**वर्णिन्** पु० वर्णोऽस्त्यस्य इनि। १चित्रकरे २लेखके ३ब्रह्म-चारिणि मेदि०। “अथाह वर्णी विदितो महेश्वरः” कुमारः। ४विप्रादिजातौ च “वर्णिनां हि वधो यत्र” स्मृतिः। [हरिद्रायाम् अमरः।

**वर्णिनी** स्त्री वर्णः अस्त्यस्याः प्राशस्त्ये इनि ङीप्।

**वर्णु** पु० वर्ण-उन् । १नदभेदे उणादि० २आदित्ये संक्षिप्त० ।

**वर्त्तक** पु० वृत-ण्वुल् । (भारुइ) १पक्षिभेदे वर्त्तकाप्यत्र । २अश्वस्य खुरे च अमरः । ३वर्त्तलोहे न० हेमच० ।

**वर्त्तन** न० वृत-ल्युट् । १वृत्तौ २स्थितौ अमरः । णिच्-भावे ल्युट् । २स्थापने णिच् करणे ल्युट् । ३जीवनोपाये स्त्री ङीप् । ४तक्रुपीठे न०मेदि० । ल्यु । ६वर्त्तिमति वर्त्तिष्णौ च त्रि० अमरः । ७वामने त्रि० मेदि० । ८आधारवर्त्तुले न० शब्दर० ।

**वर्त्तनी** स्त्री वर्त्त्यते पादाभ्याम् वृत-णिच् आधारे ल्युट् । १पथि २पेषणे शब्दर० । पृषो० ह्रस्वः पूर्वदेशे त्रिका० ।

**वर्त्तमान** पु० वृत-शानच् । कालभेदे शब्दप्रयोगाधारे आरब्धापरिसमाप्ते १काले २तत्कालवृत्तौ त्रि० ।

वर्त्तमानकालश्च चतुर्विधः । यथा "प्रवृत्तोपरत१श्चैव वृत्ताविरत२ एव च । नित्यः प्रवृत्तः३ सामीप्यो४ वर्त्तमानश्चतुर्विधः । क्रमेणोदाहरणानि । मांसं न खादति आदौ प्रवृत्तं मांसभोजनं निवर्त्तयतीत्यर्थः । इह कुमाराः क्रीडन्ति २तदानीन्तनक्रीडनाभावेऽपि पूर्वक्रीडानां बह्वीं वर्त्तमानत्वात् । पर्वतास्तिष्ठन्ति ३नित्यप्रवृत्तत्वात् । किन्तु पर्वतानां स्थितत्वेन वर्त्तमानत्वेऽपि भूतभविष्यत्कालाभ्यां सम्बन्धविवक्षया पर्वतास्तस्थुः स्थास्यन्ति इत्यपि स्यात् । सामीप्यो४ द्विविधः । भूतसामीप्यो भविष्यत्सामीप्यश्च यथा कदा आगतोऽसि इतिप्रश्ने अध्वखेदादेर्वर्त्तमानत्वात् एषोऽहमागच्छामि इति आगतोऽपि वदति । भविष्यत्सामीप्यो यथा । कदा गमिष्यसि इति प्रश्ने एषोऽहं गच्छामि इति गमने क्रियमाणोद्यमोऽपि वदति" दुर्गादासः ।

**वर्त्तरूक** पु० १नदीभेदे २काकखोभेदे ३जलावर्त्ते मेदि० । ४द्वारपाले त्रिका० । [आवर्त्तनयोग्ये लौहभेदे ।

**वर्त्तलोह** न० वर्त्त्यते वृत-णिच्-कर्मणि अच् कर्म० ।

**वर्त्ति(र्त्ती)** स्त्री वृत-इन् वा ङीप् । १लेखे २नयनाञ्जने ३गात्रानुलेपने ४दीपदशायां ५भिषजां निर्मितौषधभेदे (बाति) "कतकस्य फलं शङ्खः सैन्धवं त्र्यूषणं वचा । फेणो रसाञ्जनं क्षौद्रं विडङ्गानि मनःशिला । एषां वर्त्तिर्हन्ति काचं तिमिरं पटलं तथा" गरुड़पु०१८८अ० । ६दीपे च मेदि० ।

**वर्त्तिक** पुंस्त्री वृत-तिकन् । (वटेर) १विहगभेदे राजनि० स्त्रियां ङीप् । वर्त्मनि वर्त्तते वृत-अच् वर्त्तः वर्त्मसाधुः हितो वा ठन् । (भारुइ) २खगे अमरः । ३अजशृङ्ग्यां स्त्री० राजनि० ४दीपदशायां स्त्री सा च पञ्चविधा यथा "पद्मसूत्रभवा दर्भगर्भसूत्रभवाऽथ वा । शाणजा बादरी वापि फलकोषोद्भवाथ वा । वर्त्तिकादीपकार्येषु सदा पञ्चविधा स्मृता" कालिकापु०६८अ० ।

**वर्त्तिन्** त्रि० वृत-णिनि । वर्त्तनशीले ।

**वर्त्तिष्णु** त्रि० वृत-इष्णुच् । वर्त्तनशीले ।

**वर्त्तिष्यमाण** पु० वृत-शानच् लृटः सद्वेति लृट् । भविष्यत्काले । २तद्वृत्तौ त्रि० ।

**वर्त्तुल** त्रि० वृत-उलच् । १गोलाकारे पदार्थे अमरः । २गृञ्जने न० राजनि० । ३कलायभेदे पु० शब्दमा० । ४तर्कुपीठ्याम् स्त्री हारा०५गजपिप्पल्याम् स्त्री राजनि० ङीप् ।

**वर्त्मन्** न० वृत-मनिन् । १पथि अमरः २आचारे "आ मनोर्वर्त्मनः" रघुः३नेत्रच्छदे च मेदि० । अग्निपु० ४५ष्ठ० दृश्यम् । वर्त्मलक्षणं तद्गतरोगभेदाश्च सुश्रुते उक्ता यथा

"द्व्यङ्गुलं सर्वतः सार्द्धं भिषङ्नयनबुद्बुदम् । सुवृत्तं गोस्तनाकारं सर्वभूतगुणोद्भवम् । पलं भुवोऽग्नितो रक्तं वातात् कृष्णं सितं जलात् । आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे । दृष्टिञ्चात्र तथा वक्ष्ये यथा ब्रूयाद्विशारदः । नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते । कृष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः । मण्डलानि च सन्धींश्च पटलानि च लोचने । यथाक्रमं विजानीयात् पञ्च षट् च षडेव च । पक्ष्मवर्त्मश्वेतकृष्णदृष्टीनां मण्डलानि तु । अनुपूर्वन्तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम् । पक्ष्मवर्त्मगतः सन्धिर्वर्त्मशुक्लगतोऽपरः । शुक्लकृष्णगतस्त्वन्यः कृष्णदृष्टिगतोऽपरः । ततः कनीनकगतः षष्ठश्चापाङ्गगः स्मृतः । द्वे वर्त्मपटले विद्याच्चत्वार्य्यन्यानि चाक्षिणि । जायन्ते तिमिरं येषु व्याधिः परमदारुणः ॥"

"पृथग्दोषाः समस्ताश्च यदा वर्त्मव्यपाश्रयाः । सिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिताः । विवर्ध्य मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान् । विकाराञ्जनयन्त्याशु नामतस्तान्निबोधत । उत्सङ्गिन्यथ कुम्भीका पोथक्यो वर्त्मशर्करा । तथार्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका । बहलं वर्त्म यच्चापि व्याधिर्वर्त्मावबन्धकः । क्लिष्टकर्दमवर्त्माख्यौ श्याववर्त्म तथैव च ॥ प्रक्लिन्नमपरिक्लिन्नं वर्त्म वातहतन्तु यत् । अर्बुदं निमिषञ्चापि शोणितार्शश्च यत् स्मृतम् । लगणो विसनामा च

पक्ष्मकोपस्तथैव च । एकविंशतिरित्येते विकारा वर्त्म-संश्रयाः । नामभिस्ते समुद्दिष्टा लक्षणैस्तान् प्रचक्ष्महे । पिडकाभ्यन्तरमुखी बाह्याधोवर्त्मसंश्रया । विज्ञेयोत्सङ्गिनी१ नाम तद्रूपपिडकान्विता । कुम्भीकवीजप्रतिमाः पिडकाः पक्ष्मवर्त्मनोः । आध्मायन्ते तु भिद्यन्ते कुम्भीकपिडकास्तु ताः । कण्डूस्रावान्विता गुर्व्यो रक्तसर्षपसन्निभाः । पिडकाश्च रुजावत्यः पोथक्य२ इति संज्ञिताः । पिडकाभिः सुसूक्ष्माभिर्घनाभिरभिसंवृता । पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा४ । सूक्ष्माः खराश्च वर्त्मस्थास्तदर्शोवर्त्म५ कीर्त्त्यते । दीर्घोऽङ्कुरः खरः स्तब्धो दारुणो वर्त्मसम्भवः । व्याधिरेष समाख्यातः शुष्कार्श६ इति संज्ञितः । दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा । मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साऽञ्जननामिका७ । वर्त्मोपचीयते यस्य पिडकाभिः समन्ततः । सवर्णाभिः समाभिश्च विद्याद्बहलवर्त्म८ तत् । कण्डूमताल्पतोदेन वर्त्मशोफेन यो नरः । न समं छादयेदक्षि भवेदुद्वन्धः९ स वर्त्मनः । मृद्वल्पवेदनं ताम्रं यद्वर्त्म सममेव च । अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्म१० तदादिशेत् । क्लिष्टं पुनः पित्तयुक्तं विदहेच्छोणितं यदा । तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमम्११ । यद्वर्त्म बाह्यतोऽन्तश्च श्यावं शूनं सवेदनम् । दाहकण्डूपरिक्लेदि श्याववर्त्मेति१२ तन्मतम् । अरुजं बाह्यतः शूनमन्तःक्लिन्नं स्रवत्यपि । कण्डूनिस्तोदभूयिष्ठं क्लिन्नवर्त्म१३ तदुच्यते । यस्य धौतानि धौतानि सम्बध्यन्ते पुनः पुनः । वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म१४ तत् । विमुक्तसन्धि निश्चेष्टं वर्त्म यस्य निमील्यते । एतद्वातहतं१५ विद्यात् सरुजं यदि वाऽरुजम् । वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् । विज्ञेयमर्बुदं१६ पुंसां सरक्तमवलम्बितम् । निमेषणीः सिरा वायुः प्रविष्टो वर्त्मसंश्रयाः । चालयेदतिवर्त्मानि निमेषः१७ स गदो मतः । छिन्नाश्छिन्ना विवर्द्धन्ते वर्त्मस्था मृदवोऽङ्कुराः । दाहकण्डूरुजोपेतास्तेऽर्शःशोणितसम्भवाः१८ । अपाकः कठिनः स्थूलो ग्रन्थिर्वर्त्मभवोऽरुजः । सकण्डूः पिच्छिलः कोलप्रमाणो लगण१९स्तु सः । शूनं यद्वर्त्म बहुभिः सूक्ष्मैश्छिद्रैः समन्वितम् । विसमन्तर्जलमिव विसवर्त्मेति२०तन्मतम् । पक्ष्माशयगता दोषास्तीक्ष्णाग्राणि खराणि च । निर्वर्त्तयन्ति पक्ष्माणि तैर्घृष्टञ्चाक्षि दूयते । उत्पाटितैः पुनः शान्तिः पक्ष्मभिश्चोपजायते । वातातपानलद्वेषी पक्ष्मकोपः२१ स उच्यते ।” तच्चिकित्सा तत्र दृश्या ।

**वर्त्मनि** स्त्री वृत-मनि सुट् च । पथि उणा० ।

**वर्द्ध** छेदने पूरणे च चु० उभ० सक० सेट् । वर्द्धयति ते अववर्द्धत् त । [भावे अच् । २पूरणे १छेदे च ।

**वर्द्ध** पु० वृध-अच् । १आम्राग्राम (वासनछादि) जटा० वर्द्ध-

**वर्द्धक** पु० वृध-ण्वुल् । १आम्रपयष्टौ (वासनछाटी) अमरः वृध-णि वर्द्ध-ण्वुल् । २पूरके ३छेदके ४वृद्धिकारके च त्रि० ।

**वर्द्धकि** पु० वर्द्ध-छेदने अच् कम-ड्वि कर्म० । त्वष्टरि (छुतार) अमरः । [जातिभेदे शब्दर० ।

**वर्द्धकिन्** पु० वर्द्धकः वर्द्धोऽस्त्यस्य इनि । त्वष्टरि (छुतार)

**वर्द्धन** न० वृध-वर्द्ध-भावे ल्युट् । १छेदने २पूरणे च मेदि० । वृध णिच्-ल्यु । ३वृद्धिकारके त्रि० । “करोमि ख्यातिवर्द्धनम्” भट्टिः । वृध-ल्यु । ४वृद्धियुक्ते त्रि० ।

**वर्द्धनी** स्त्री वर्द्ध्यतेऽनया वृध–णिच्–ल्युट् ङीप् । १संमार्जन्याम् २खर्य्यां मेदि० ३सनालपात्रभेदे च (वदना) जटा० ।

**वर्द्धमान** पु० वृध–शानच् । १एरण्डवृक्षे अमरः । २वृद्धिशीले त्रि० । ३शरावे स्तूपपात्रभेदे ४विष्णौ ५पशुभेदे च मेदि० । ६जिनभेदे हेमच० । ७धानिनां स्तवभेदे हला० । ८देशभेदे वृ० सं० १४अ० कूर्मविभागशब्दे दृश्यम् । ९नगरभेदे च । १०वृद्धियुक्ते त्रि० ।

**वर्द्धापन** न० वर्द्धं छेदं करोति वर्द्ध+णिच्–आप् च ततो भावे ल्युट् । नाडीच्छेदककर्माङ्गे संस्कारभेदे त्रि०का० रघु० ।

**वर्द्धित** न० वर्द्ध-क्त । १छेदिते २पूरिते ३प्रस्तुते च ।

**वर्द्धिष्णु** त्रि० वृध-इष्णुच् । वृद्धिशीले । [भरतः ङीष् ।

**वर्ध्र** न० वृध-ष्ट्रन् । १चर्म्मणि उणादिको० । २चर्मरज्जौ स्त्री

**वर्पस्** न० वृ-असुन् पुक् । रूपे निघण्टुः ।

**वर्फ** गतौ वधे च भ्वा० पर० सक० सेट् । वर्फति अवर्फीत् ।

**वर्मकण्टक** पु० वर्म इव कण्टकोऽस्य । पर्पटे राजनि० ।

**वर्मकषा** स्त्री वर्म-कषति अच् । (चामकषा) सप्तलायाम् शब्दर० ।

**वर्मन्** न० वृ-मनिन् । १कवचे सन्नाहे अमरः । २क्षत्रियोपाधौ पु० । “वर्म्मान्तं क्षत्रियस्य तु” शातातपः ।

**वर्महर** पु० वर्म हरति हृ-अच् । सन्नाहधारणयोग्यवयोभेदे तरुणे । “वर्म्महरः कुमारः” रघुः ।

**वर्मि** पु० वृ-बा० मिन् । (वानि) मत्स्यभेदे राजनि० ।

**वर्मित** त्रि० वर्म करोति णिच्-क्त । १कृतसन्नाहे २वर्मयुक्ते च

**वर्य्य** त्रि० वृ–यत् । १प्रधाने श्रेष्ठे च अमरः । [illegible]

३पतिम्बरायां कन्यायां अमरः । ४कन्यामात्रे च स्त्री ।

**वर्वणा** स्त्री वरिति वणति शब्दायते वण–अच । (भणभणे) मक्षिकाभेदे अमरः । अयमोष्ठ्यादिरित्यन्ये ।

**वर्वर** न॰ वृ–अरच् वुट् च । १हिङ्गुले २पीतचन्दने ३गन्धरसे च राजनि॰ । ४पामरे ५मूर्खे च त्रि॰ । "पात्रमिच्छन्ति वर्वरा" इत्युद्भटः । ६केशभेदे (वावरी) ७देशभेदे कृष्णार्जके (कालवावुइ) वृक्षे च पु॰राजनि॰ । ८मक्षिकाभेदे पुंस्त्री॰शब्दर॰(वावुइ) १०वृक्षे स्त्री टाप् ङीप् वा "वर्वरी कवरी तुङ्गी खरपुष्पाजगन्धिका । पर्णासस्तत्र कृष्णे तु कठिञ्जरकुठेरकौ । कालमारः करालश्च कालकः कृष्णमल्लिका । तत्र शुक्लोऽर्ज्जकः प्रोक्तो वटीपत्रस्ततोऽपरः । वर्वरीत्रितयं रूक्षं शीतं कटु विदाहि च । तीक्ष्णं रुचिकरं हृद्यं दीपनं लघुपाकि च । पित्तलं कफवातास्रदद्रुकृमिविषापहम्" भावप्र॰ । संज्ञायां कन् । वर्वरिका चन्दनभेदे पुष्पभेदे स्त्री मेदि॰ ।

**वर्वरीक** पु॰ वृ–ईकन् फर्फरीका॰ नि॰ । १आम्नायवृक्षे २कुटिलकेशे उणा॰ । ३अजगन्धिकायां (वावुइतुलसी) शब्दच॰ ४महाकाले हेमच॰ ।

**वर्वा** स्त्री वृ-व तस्य नेत्त्वम् । (वावुइ) वृक्षभेदे शब्दच॰ ।

**वर्वुर** पु॰ वृ-उरच् वुट् च । (वावला) वृक्षभेदे राजनि॰ । ओष्ठ्यादिरित्यन्ये ।

**वर्ष** पु॰ वृष–भावे घञ् कर्त्तरि अच् वा । १वृष्टौ २जम्बुद्वीपांशभेदे पुंन॰ अमरः ।
"लङ्कादेशाद्धिमगिरिरुदग्धेमकूटोऽथ तस्मात् तस्माच्चान्यो निषध इति ते सिन्धुपर्यन्तदैर्घ्याः । एवं सिद्धादुदगपि पुराच्छृङ्गवच्छुक्लनीला वर्षाण्येषां जगुरिह बुधा अन्तरे द्वीपदेशान् । भारतवर्षमिदं हि दृगस्मात् किन्नरवर्षमतो हरिवर्षम् । सिद्धपुराच्च तथा कुरु तस्माद्धुविदि हिरण्मयरम्यकवर्षे । माल्यवांश्च यमकोटिपत्तनाद्रोमकाच्च किल गन्धमादनः । नीलशैलनिषधावधी च तावन्तरालमनयोरिलावृतम् । माल्यवज्जलधिमध्यवर्ति यत् तत् तु भद्रतुरगं जगुर्बुधाः । गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः । निषधनीलसुगन्धसुमाल्यकैरलमिलावृतमावृतमावभौ । अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्रमहीतलम्" सि॰शि॰ । "अत्र भूगोलस्यार्धमुत्तरं जम्बूद्वीपम् । तस्य क्षाराब्धेश्च सन्धिर्निरक्षदेशः । तत्र लङ्का रोमकं सिद्धपुरं यमकोटिरिति पुरचतुष्टयं भूपरिधिचतुर्थांशान्तरे किल कथितम् । तेभ्यः पुरेभ्यो यस्यां दिशि मेरुः सोत्तरा । अतो लङ्काया उत्तरतो हिमवान् नाम गिरिः पूर्वापरसिन्धुपर्यन्तदैर्घ्योऽस्ति । तस्योत्तरे हेमकूटः । सोऽपि समुद्रपर्यन्तदैर्घ्यः । तथा तदुत्तरे निषधः । तेषामन्तरे द्वौपदेशा वर्षसंज्ञाः । तत्रादौ भारतवर्षम् । तदुत्तरं किन्नरवर्षम् । ततो हरिवर्षमिति । एवं सिद्धपुरादुत्तरतः शृङ्गवान् नाम गिरिः । ततः श्वेतगिरिः । ततो नीलगिरिरिति । तेऽपि सिन्धुपर्यन्तदैर्घ्याः । तेषामन्तरे च वर्षाणि । तत्रादौ कुरुवर्षम् । तदुत्तरे हिरण्मयम् । ततो रम्यकमिति । अथ यमकोटेरुत्तरतो माल्यवान् नाम गिरिः । स तु निषधनीलपर्यन्तदैर्घ्यः । तस्य जलधेश्च मध्ये भद्राश्वं वर्षम् । एवं रोमकादुत्तरतो गन्धमादनः । तस्य जलधेश्च मध्ये केतुमालवर्षम् । एवं निषधनीलमाल्यवद्गन्धमादनैरावृतमिलावृतं नाम नवमं वर्षम् । सा स्वर्गभूमिः । अतस्तत्र देवक्रीडास्थानानि" । ३द्वादशमासात्मके काले ४जम्बुद्वीपे च पु॰मेदि॰ । कर्त्तरि अच् । ५मेघे पु॰ हेमच॰ ६मम्वादिषु पञ्चिवत्सरेषु पु॰ ।

**वर्षकरी** स्त्री वर्षं तदुत्पत्तिं करोति रवेण कृ-ट । झिल्लिकायां हेमच॰ । [१वर्षाचक्रे ।

**वर्षकेतु** पु॰वर्षस्य वृष्टेः केतुरिव । १रक्तपुनर्नवायाम् राजनि॰

**वर्षकोष** पु॰ वर्षस्य कोष इव । १दैवज्ञे शब्दर॰ । २मासे हेमच॰ । [४वर्षणे संक्षिप्तसा॰ ।

**वर्षणि** स्त्री वृष–अनि । १कृतौ २वर्त्तने उणा॰ । ३कर्तरि

**वर्षपर्वत** पु॰ वर्षाणां चिह्नभूतः सीमाभूतो वा पर्वतः । "हिमवान् हेमकूटश्च निषधो मेरुरेव च । चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्वताः" इत्युक्तेषु पर्वतेषु हारा॰ । द्वीपभेदेऽन्येऽपि वर्षपर्वता कुलपर्वतशब्दे २११२ पृ॰ दर्शिताः । सि॰शि॰ उक्ता जम्बूद्वीपपर्वता वर्षशब्दे दर्शिताः । तत्र नामसात्रे भेदः कल्पभेदात् ।

**वर्षपाकिन्** पु॰ वर्षेण पाकोऽस्त्यस्य इनि । आम्रातकवृक्षे हेमच॰ तस्य हि मुकुलोद्गमात् प्रायेण वत्सरानन्तरफलपाकः । [राजनि॰

**वर्षपुष्पा** स्त्री वर्षकाले पुष्पमस्याः । सहदेवीलतायाम्

**वर्षप्रिय** पुंस्त्री॰ वर्षः प्रियोऽस्य । चातकपक्षिणि त्रिका॰ स्त्रियां योपधत्वात् टाप् ।

**वर्षवर** पु॰ वर्षं रेतोवर्षणं वृणोति आवृणोति वृ–अच् । "ये त्वल्पसत्त्वाः प्रथममात्मीयाः स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्येषु ते वै वर्षवराः स्मृताः" इत्युक्तलक्षणे

राज्ञामन्तःपुररक्षके षण्डे (खोजा) अमरः। "नष्टं वर्षवरैरिति" रत्नावली।

वर्षवृद्धि पु० वर्षस्य वृद्धिरधिकता यस्मिन्। १जन्मतिथौ २तद्दिनकर्त्तव्ये पूजादौ च। "युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया। रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता" ति०त०। "तत्कृत्यं च मलमासे न कर्त्तव्यं चान्द्रमासीयत्वेन आवश्यकत्वात् न च सौरमासीयं तथात्वे तत्तिथेः कदाचिदप्राप्तौ तद्वर्षे तत्कृत्यलोपापत्तेः न चेष्टापत्तिः "प्रतिसंवत्सरं चैव कर्त्तव्यश्च महोत्सवः" ब्रह्मपु० प्रतिसंवत्सरं तद्विधानात् ति० त० रघु०। अधिकं जन्मतिथिशब्दे दृश्यम्।

वर्षा स्त्री ब०व०। वर्षन्ति मेघा अत्र। श्रावणभाद्रात्मके मासद्वये ऋतौ "नभश्च नभस्यश्च वार्षिकावृतू" यजुःश्रुतिः "वर्षासु च मघासु च" मनुः।

वर्षाङ्गी स्त्री वर्षासु अङ्गमस्याः। पुनर्नवायाम् शब्दर०।

वर्षापगम पु० वर्षाणामपगमो यत्र। १शरत्काले हेम०। २वर्षासमाप्तौ।

वर्षाभव पु० वर्षासु भवति भू-अच्। रक्तपुनर्नवायाम् राजनि०।

वर्षाभू पु० वर्षासु भवति भू-क्विप्। १भेके अमरः २इन्द्रगोपे राजनि० ३मच्छीलतायाम् मेदि० ४पुनर्नवायां ५भेक्याञ्च स्त्री मेदि० अमरे भेक्याम् गौरा० ङीष् वर्षाभ्वीत्येव ६वर्षाभवमात्रे त्रि०। [ङीष्।

वर्षामद पुंस्त्री० वर्षासु माद्यति मद-अच्। मयूरे स्त्रियां

वर्षिष्ठ त्रि० अतिशयेन वृद्धः इष्ठन् वर्षादेशः। अतिशयवृद्धे

वर्षीयस् त्रि० अतिशयेन वृद्धः वृद्ध+ईयसुन् वर्षादेशः। अतिवृद्धे अमरः स्त्रियां ङीप्।

वर्षुक त्रि० वृष-उकञ्। वर्षणशीले। [अमरः।

वर्षोपल पु० वर्षस्य वृष्टेरुपलः प्रस्तर इव। करकासु (शिल)

वर्ष्मन् न० वृष-मनिन्। १देहे २प्रमाणे च अमरः। ३अतिसुन्दरे त्रि०। [अववर्हत् त।

वर्ह बधे सक० दीप्तौ अक० चु० उभ० सेट्। वर्हयति-ते

वर्ह उत्कर्षे भ्वा० आ० सक० सेट्। वर्हते अववर्हिष्ट।

वर्ह न० वर्ह-अच्। मयूरपिच्छे अमरः अस्य पुंस्त्वमपि "कं हरदेव वर्हः" विक्रमो०प्रयोगात्। २ग्रन्थिपर्णे वृक्षे भरतः। ३पत्रे शब्दर०।

वर्हि(र्हिः)कुसुम न० वर्हिःवह्निरिव कुसुममस्य पृषो० वा सलोपः। ग्रन्थिपर्णे शब्दमा०।

वर्हिःपुष्प न० वर्हिः वह्निरिव पुष्पमस्य। ग्रन्थिपर्णे भरतः

वर्हिःशुष्मन् पु० वर्हिः कुशः शुष्म बलमस्य। १वह्नौ अमरः कुशेन हि वह्निरुद्दीप्यते।

वर्हि(र्हिः)ष्ठ न० वर्हिरिव तिष्ठति स्था-क वा विसर्गलोपः षत्वम्। ह्रीवेरे अमरः। [हूनि। वर्हीण्यस्य।

वर्हिण पुंस्त्री० वर्हमस्त्यस्य इन। १मयूरे अमरः स्त्रियां ङीष्

वर्हिर्ज्योतिस् पु० वर्हिषा कुशेन ज्योतिरस्य। वह्नौ हेम०

वर्हिर्मुख पु० वर्हिर्वह्निर्मुखं यस्य। देवे अमरः। तद्द्वारैव हि देवा हविरश्नन्ति।

वर्हिषद् पु० ब०व० वर्हिषि विप्रपाणिस्थेऽग्नौ सीदन्ति वर्हिस् सद-क्विप् पृषो०। पितृगणभेदे "अग्निष्वात्ता वर्हिषद उष्मपा आज्यपास्तथा" मनुः। [वह्नौ।

वर्हिष्केश पु० वर्ह-दीप्तौ इसुन् वर्हिः दीप्तिमान् केशो यस्य

वर्हिस् स्त्री वृहि-इसुन् नि० नलोपश्च। १वह्नौ मेदि० "वर्हिषि रजतं न देयम्" श्रुतिः। २ग्रन्थिपर्णे ३चित्रके च (चिते) अमरः। ३कुशे पु०न० "वर्हिर्देवसदनम्" श्रुतिः वर्ह-दीप्तौ इसुन्। ४दीप्तियुक्ते त्रि०। [वा वटा०।

वल संवरणे भ्वा०आत्म०सक०सेट्। वलते अवलिष्ट। ववलतुः

वल न०वल्यतेऽनेन वल-क। सैन्ये रायमु० बलशब्दार्थे च।

वलक्ष पु० वल-क्विप् अक्ष-अच् कर्म०। १धवले वर्णे २तद्वति त्रि० अमरः।

वलन न० वल-भावे ल्युट्। १सम्वरणे त्रि०सि० उक्ते दृक्कर्मादिसंस्काराङ्गे २कदम्बयाम्योत्तरयोरन्तरे तत्स्वरूपादिकं तत्रोक्तं प्रदर्श्यते

"तुलाजाद्योर्हि संपाते विषुवत्क्रान्तिवृत्तयोः। आशां याम्योत्तरे भिन्ने परक्रान्त्यन्तरे च ते। आयनं वलनं तत्र जिनांशज्यात्मकं ततः। एकैवायनसंधौ तु तयोः स्याद्दक्षिणोत्तरा। एकैव तद्वशात् प्राची तत्र नो वलनं ततः। तदन्तरेऽनुपातेन खेटकोटिक्रमज्यका। जिनज्याघ्नी द्युजीवाप्तायनदिग्वलनं भवेत्। एवमेव हि संपाते विषुवद्भ्रमवृत्तयोः। उन्मण्डलं भवेत् तत्र विषुवद्दक्षिणोत्तरा। क्षितिजं समवृत्तस्य पलज्या च तदन्तरम्। क्षितिजेऽक्षज्यया तुल्यमक्षजं वलनं ततः। तयोरेकैव याम्योदङ्न मध्ये वलनं ततः। नतक्रमज्यया साध्यमन्तरे त्वनुपाततः। नतं खाङ्काहतं भक्तं द्युदलेनाप्तभागकैः। क्रमज्याक्षज्यया क्षुण्णा द्युज्याभक्ताक्षजं भवेत्। प्राक् सौम्यं पश्चिमे याम्यं तज्ज्यापैक्यान्तरात् स्फुटम्। एवमेव च संपातो यः क्रान्तिसमवृत्तयोः। पदं तत्र तत्कालवलनैक्यान्तरं स्फुटम्।

अन्यतः पृष्ठतस्तस्मात् क्रान्तिवृत्ते त्रिभेऽन्तरे । तयोर्याम्योत्तरैकत्वात् तत्र नो वलनं स्फुटम् । न स्पष्टवलनाभावस्तत्र स्यादुत्क्रमज्यया । क्रमज्यया ततः कार्यं दार्ढ्यार्थं कथ्यते पुनः । सर्वतः क्रान्तिसूत्राणां ध्रुवे योगो भवेद्यतः । विषुवन्मण्डलप्राच्या ध्रुवे याम्या तथोत्तरा । सर्वतः क्षेपसूत्राणां ध्रुवाज्जिनलवान्तरे । योगः कदम्बसंज्ञोऽयं ज्ञेयो वलनबोधकृत् । तत्रापमण्डलप्राच्या याम्या सौम्या च दिक् सदा । कदम्बभ्रमवृत्तं च बध्नीयात् परितो ध्रुवात् । गोले तु जिनतुल्यांशैस्तत्र ज्या क्रान्तिशिञ्जिनी । सर्वतः समवृत्ताच्च याम्योदक्कुजसंगमे । तत्तिर्यग्गतसूत्राणां योगः स समसंज्ञकः । समध्रुवकदम्बानामुपरि द्युचराश्रयेत् । सूत्राणि वृत्तरूपाणि वलनानि तदन्तरे । आक्षजं वलनं मध्ये स्यात् समध्रुवसूत्रयोः । कदम्बध्रुवसूत्रान्तरायनं च त्रिभे ग्रहात् । कदम्बसमसूत्रान्तः स्फुटं सर्वदिशां च तत् । अथ वा परितः खेटात् स्वाङ्कभागान्तरे न्यसेत् । त्रिज्यावृत्तं ततस्तत्र विषुवत्समवृत्तयोः । मध्येऽक्षवलनं विद्याद्विषुवत्क्रान्तिवृत्तयोः । अन्तरं चायनं क्रान्तिसमवृत्तान्तरे स्फुटम् । तत्रापमण्डलं प्राची तस्मा याम्योत्तरः परः । वलनानयने क्षेपः क्षिप्तो यैस्ते कुबुद्धयः । नक्रादिस्थकदम्बस्य स्यातां याम्योत्तरे समम् । आयनं वलनं तस्मान्नायनादौ प्रजायते । ततो भ्रमति गोले स नक्रादिर्यथा यथा । तथा तथा भ्रमत्येष कदम्बो निजमण्डले । कुम्भादावथ मीनादौ याम्योदग्वलयस्थिते । जायते वलनं तद्वत् सौम्यसूत्रकदम्बयोः । अन्तरं शिञ्जिनीरूपं कदम्बभ्रममण्डले । आयनाङ्गतकालांशक्रमक्रान्तिज्यका हि सा । उत्क्रमज्या यतो बाणः शिञ्जिनी तु क्रमज्यका । सन्निभाकात् क्रमक्रान्तिज्यातो वलनमायनम् । यैरुक्तमुत्क्रमक्रान्त्या भ्रान्त्या तैर्नाशितं हि तत् । युक्त्यानयैव विज्ञेयमक्षजं च क्रमज्यया । परोक्तिरन्यथा ब्रूयाद्युयः परान् न प्रदूषयेत् । तस्यैव दूषणं तद्धि न दोषोऽतोऽन्यदूषणे । उत्क्रमज्यानिरासोऽयमन्यथा वाथ कथ्यते । जिनांशैर्जिनवृत्ताख्यं कदम्बात् परितो न्यसेत् । क्रान्तियाम्योत्तरं वृत्तं कदम्बद्वयकीलयोः । प्रोतं कृत्वा चलं न्यस्तं द्वन्द्वान्ते स्याद् ध्रुवोपरि । द्वन्द्वान्ताच्चाल्यतेऽंशैर्यैस्तैरेव चलति ध्रुवात् । जिनवृत्ते तदंशानां तत्र ज्या क्रान्तिशिञ्जिनी । आयनं तेन वलनं द्युज्याग्रे जायते ग्रहात् । ग्रहध्रुवान्तरे यस्माद्द्युज्या चापांशकाः सदा । त्रिज्यावृत्ते यतो देयं तस्मातः परिणाम्यते । एवमत्रांशकैर्वृत्तं समाख्यात् परितो न्यसेत् । समकीलकयोः प्रोतं तच्च याम्योत्तरं चलम् । तत्तत्खेटोपरि न्यस्तं यैरंशैः स्वाधितो नतम् । समवृत्तेऽक्षवृत्ते च तैरेव स्यान्नतं ध्रुवात् । समवृत्तनतांशज्याक्षज्यापरिणताक्षजम् । द्युज्याग्रे वलनं प्राग्वत् त्रिज्याग्रे परिणाम्यते । उपपत्त्यानया सम्यक् समवृत्तनतांशजम् । वलनं स्यात् तथा मध्ये स्वाहोरात्रनतादपि । अपमाक्षवलयोर्योगः समदिक्त्वेऽन्यथान्तरम् । तत्त्रिज्यावर्गविश्लेषपदं भक्तार्धशिञ्जिनी । नताहदोर्ज्यया क्षुण्णा वलनं पलजं स्फुटम् । नतं स्वाह्नाहतं भक्तं द्युदलेनाप्तभागकैः । क्रमज्यात्रिज्यया क्षुण्णा स्थूलं वा द्युज्यया हृता । द्युज्यावृत्तापवृत्तैक्ये न्यसेद्वा रविमण्डलम् । बिम्बाग्रे वलनं तद्वदन्तरं वृत्तयोस्तयोः । बिम्बान्तबिम्बमध्योत्थक्रान्तिसौम्योर्व्यास्तदनन्तरम् । अर्कदोर्भोग्यखण्डघ्नं बिम्बार्द्धं तत्पदाहृत् । जिनज्याघ्नं त्रिभज्याप्तमेवं स्यादन्तरं हि तत् । बिम्बार्धहृत् त्रिभज्याप्तमेतत् त्रिज्या नतं भवेत् । गुणहारकबिम्बार्धत्रिज्यानाशे कृते सति । भोग्यखण्डं जिनांशज्यागुणं तत्त्वाश्विभाजितम् । सन्निभाकात् क्रमक्रान्तेस्तत् तुल्यं जायतेऽथ वा । क्रमक्रान्तेरिदं वीक्ष्य भ्रान्तिं त्यजत बालिशाः! । नामितं तद्वद्बिम्बं तिर्यक् क्रान्तिस्तु सा समा । अत्र द्युज्यानुपातो यस्तिर्यक्करणाय सः" मू० । "अथ वलनेषु दृक्कर्मणि चोत्क्रमज्यानिराकरणाय मूलसूत्रेऽपि बहूक्तं तथापि किञ्चिदिहोच्यते । विषुवद्वृत्तं समवृत्तं प्रकल्प्य दक्षिणोत्तरवृत्तस्य मध्ये आयनवलनस्योपपत्तिप्रतीत्यर्थं पृथग्दर्शयेत् । अपमण्डलप्राच्यपराया एकः कदम्बो याम्या अन्यः सौम्या दिक् । एवं विषुवद्वृत्तप्राच्यपराया ध्रुवौ । यदा मकरादिर्याम्योत्तरवृत्ते तदैव कदम्बोऽपि । अतो विषुवत्क्रान्तिवृत्तयोरेकैव याम्योदक् । तथा दक्षिणोत्तरवृत्तस्य कुम्भादेश्च मध्ये स्वाहोरात्रवृत्ते पञ्चगुणाङ्कचन्द्रा १९३५ असवो वर्त्तन्ते । ते षष्ट्युद्धृताः कालांशाः स्युः ३२।१५ । अथ कुम्भादिर्यावद्याम्योत्तरवृत्तं नीयते तावत् कदम्बो निजमण्डले चक्रांशाङ्किते तावद्भिरेव कालांशैः ३२।१५ दक्षिणोत्तरवृत्तसम्पातात् प्रत्यगवलम्ब्यते । कदम्बयाम्योत्तरसूत्रयोरन्तरं वलनम् । सा च तेषामंशानां कदम्बवृत्ते ज्या । अतः क्रमज्या ।

उत्क्रमज्या तु बाणरूपा भवति। कदम्बवृत्ते या ज्या सा क्रान्तिज्या। अतस्तेषामंशानां क्रमक्रान्तिज्या वलनम्। अथ वैकराशेः क्रमक्रान्तिज्या त्रिज्यागुणा द्युज्याहृता तथापि सैव भवति। अथ वान्यप्रकारेणोत्क्रमज्यानिराकरणं द्युज्यानुपातस्य प्रतिपाद्यते। क्रान्तिवृत्तेऽर्कस्थानेऽर्कबिम्बं मुद्रिकाकारं विन्यस्य बिम्बपरिधौ यत्र स्वाहोरात्रवृत्तं लग्नं यत्र च क्रान्तिवृत्तं तयोरन्तरं यद्दक्षिणोत्तरं तत् तत्र बिम्बे प्राच्यपरयोर्वलनम्। तच्चार्कक्रान्तिबिम्बार्धकलायुतस्यार्कस्य क्रान्तेश्चान्तरम्। अतस्तस्यानयनम्। रविदोर्ज्यायां क्रियमाणायां यद्भोग्यखण्डं तेन मानार्धकला गुण्याः शरद्विदस्रैः २२५ भाज्याः। फलं दोर्ज्ययोरन्तरं स्यात्। तत्र तावत् स्फुटभोग्यखण्डज्ञानायानुपातः। यदि त्रिज्यातुल्यायां कोटौ प्रथमं ज्यार्धं शरद्विदस्रा भोग्यखण्डं तदाभिमतायामस्यां किमिति फलं स्फुटं भोग्यखण्डम्। तेन गुणितं बिम्बार्धं शरद्विदस्रैर्भाज्यम्। एवं स्थिते शरद्विदस्रमितयोर्गुणहारयोर्नाशे कृते बिम्बार्धस्य कोटिज्या गुणस्त्रिज्या हरः। फलं दोर्ज्ययोरन्तरम्। ततः क्रान्त्यर्थमनुपातः। यदि त्रिज्यया जिनज्या लभ्यते तदानेन दोर्ज्यान्तरेण किमिति। फलं क्रान्त्यन्तरम्। तद्बिम्बव्यासार्धवृत्ते वलनम्। अथान्योऽनुपातः। यदि बिम्बव्यासार्धवृत्ते एतावद्वलनं तदा त्रिज्याव्यासार्धवृत्ते किमिति। अत्र त्रिज्यातुल्ययोर्गुणहरयोस्तथा बिम्बार्धमितयोश्च तुल्यत्वान्नाशे कृते कोटिज्याया जिनांशज्या गुणस्त्रिज्या हरः। फलं कोटिक्रमक्रान्तिज्या। तत् त्रिज्यावृत्ते वलनम्। एवं विषुवद्वृत्तस्थित एव ग्रहे। यतो भूमध्यात् खस्वस्तिकस्थबिम्बमध्यं प्रति यत् सूत्रं नीयते तत् त्रिज्यासूत्रं दण्डवत्। तदुपरिस्थं बिम्बं छत्रवत् समन्तात् सममेव। यत् तत्परितस्त्रिज्यावृत्तं यत्र च वलनज्या देया तदपि भूसममेव स्थितम्। अतस्तत्र यथागतमेव वलनम्। यदा किल मेषान्ते ग्रहस्तदा तत्क्रान्त्या खस्वस्तिकादुत्तरे नतं बिम्बं स्यात्। त्रिज्यासूत्रं तदा कर्णरूपम्। बिम्बमध्याच्च लम्बसूत्रं ध्रुवयष्ट्यन्तं द्युज्या। सा तत्र कोटिः। क्रान्तिज्या भुजः। यथा किञ्चित् कर्णस्थित्या धृते दण्डे छत्रमपि तत्सधर्मिण्यां दिशि कर्णरूपं भवति। तत्र वलनज्ययापि कर्णरूपिण्या भवितव्यम्। यत् पूर्वमानीतं क्रान्त्यन्तरं लम्बसूत्रप्रतिस्पर्धि तत् कोटिरूपं जातम्। तस्य कर्णकरणायानुपातः। यदि द्युज्याकोट्या त्रिज्या कर्णस्तदाऽनया किमिति। पूर्वं कोटिज्याया जिनज्या गुणस्त्रिज्या हरः। इदानीं त्रिज्या गुणो द्युज्या हरः। अत्रापि त्रिज्यातुल्ययोर्गुणहरयोर्नाशे कृते कोटिज्या जिनज्यागुणा द्युज्यया भक्ता वलनं स्यादित्युपपन्नम्। युक्तत्रानयैव विज्ञेयमयनजं च क्रमज्ययेति। यथायनवलनज्ञानार्थं ध्रुवात् परितो जिनभागैः कदम्बभ्रमवृत्तं निबद्धं तथा याम्योत्तरक्षितिजयोर्यः संपातः स समसंज्ञकः। तस्मादप्यक्षांशैः परितोऽक्षवलनज्ञानार्थं वृत्तं बध्नीयात्। तत् किलाक्षवलयसंज्ञम्। तदपि भांशैरङ्कम्। तत्राक्षवलनोपपत्तिर्दर्शनीया। तद्यथा मध्याह्नेऽर्कात् समचिह्नं प्रति नीयमानं वृत्ताकारं सूत्रं ध्रुवचिह्नलग्नं याति। अतस्तत्र विषुवद्भ्रमवृत्तयोरेकैव याम्योत्तरा वलनाभाव इत्यर्थः। अथ यदि दिनार्धोन्नतं सूर्यं कृत्वा समचिह्नात् सूर्यं प्रति नीयमानं सूत्रं यत्र समभण्डले लगति तत्खस्वस्तिकयोर्मध्ये यावन्तोंऽशास्तावन्त एवाक्षवृत्ते समसूत्रध्रुवयोर्मध्ये भवन्ति। यतस्तत्समवृत्तानुकारं बद्धम्। तेषां भागानामक्षवलये यावती क्रमज्या तावदेव समसूत्रध्रुवयोरन्तरम्। अथ क्षितिजस्थेऽर्के क्षितिजमेव समसूत्रम्। तत्राक्षवृत्ते च नवतिर्नतांशाः। तेषां ज्याऽक्षवलयेऽक्षज्यातुल्या स्यात्। अतः समभण्डलगतैर्नतांशैर्वलनं साधयितुं युज्यते। ते तु महायासेन ज्ञायन्ते। न तु सुखेन। अतस्तज्ज्ञानार्थं स्थूलोऽनुपातः सुखार्थं कृतः। यदि दिनार्धतुल्येन स्वाहोरात्रनतेन नवतिः समभण्डलनतांशा लभ्यन्ते तदिष्टेन किमिति। लब्धनतांशानां या क्रमज्या साऽक्षज्यावृत्ते परिणाम्यते। यदि त्रिज्यावृत्ते एतावती ज्या तदाक्षज्यावृत्ते कियतीति। लब्धं किल वलनज्या स्यात्। परं सा द्युज्याग्रे, न त्रिज्याग्रे। यतः समसूत्रध्रुवयोरन्तरं तत्। ग्रहध्रुवयोर्मध्ये द्युज्याचापांशा एव वर्त्तन्ते। यदि द्युज्यावृत्त एतावती तदा त्रिज्यावृत्ते कियतीति। एवं सति पूर्वत्रैराशिके त्रिज्या हरः। इदानीं गुणः। तुल्यत्वात् तयोर्नाशे कृते नतांशज्याया अक्षज्या गुणो द्युज्या हरः। फलं स्थूला वलनज्या स्यात्। अथ सूक्ष्माप्युच्यते। मध्यकालोऽर्कस्य शङ्कुः शङ्कुतलमपि च साध्या। अग्राशङ्कुतलयोः समदिशोरैक्यमन्यथान्तरं स किल बाहुः पूर्वं प्रतिपादित एव।

याम्योत्तरसमवृत्तयोरन्तरं जग्राहृपं दक्षिणोत्तरं वाक्षवलनं स्यात्। यथा विषुवद्वृत्तादुत्तरतो दक्षिणतो वा क्रान्तिजग्रान्तरे द्युज्याहृत्तं तथा समवृत्तादपि वाक्ष-वशादुत्तरतो दक्षिणतो वा वाक्षतुल्येऽन्तरे उपवृत्तं कल्प्यम्। तदपि सांशैरक्षात्। वाक्षवर्गोनत्रिज्या-वर्गस्य पदं तस्मिन् वृत्ते द्युज्यावद्व्यासार्धम्। अथ द्युज्यावृत्तोपवृत्तयोर्यौ प्राक्पश्चात्संपातौ तयोर्जीवावद् यत् सूत्रं निबध्यते तस्यार्धमुपवृत्ते नतांशानां ज्या। सैवाहोरात्रवृत्तनतांशानां भुजज्या। अथ तदानय-नम्। नतासूनां या भुजजीवा सा द्युज्यावृत्ते परि-णाम्यते। यदि त्रिज्यावृत्ते एतावती तदा द्युज्यावृत्ते कियतीति। एवमुपवृत्तनतांशज्या भवति। ततो यद्युप-वृत्तव्यासार्धे एतावती तदाक्षज्याव्यासार्धे कियतीति। ततो द्युज्यार्धे एतावती वलनज्या तदा त्रिज्यार्धे कियतीति। अत्र प्रथमेऽनुपाते त्रिज्या हरो द्युज्या गुणः। तृतीयेऽनुपाते त्रिज्या गुणो द्युज्या हरोऽत-स्तुल्यत्वात् तयोर्नाशे कृते नतासूनां भुजज्याक्षजीवया गुणितोपवृत्तव्यासार्धेन भक्ता या स्पष्टा वलनज्या स्यात्। अत उक्तमपाान्तवयोर्योग इत्यादि। अथ दृष्टान्तः। यत्र किल दृष्टभान्तक्रान्तितुल्योऽक्षः २०। २८ तत्र दृष्टभान्तस्थोऽर्को दिनार्धे खस्वस्तिके भवति। तदा क्रान्तिवृत्तं दृङ्मण्डलाकारं स्यात्। खस्तिकस्थोऽर्कौ राशिपञ्चकं सिंहान्तः। स च तदा क्षितिजे वर्त्तते। तत् प्राक्परयोरन्तरं क्षितिज प्रत्यक्षं वलनं दृश्यते। सा च सिंहान्तस्यापा। तत् कथं खस्तिकस्थार्कोत्क्रम-क्रान्तिर्वलनम्। अतोऽसत्। अस्मदानयनं विना नेदृ-शमपाकृर्णं वलनमुत्पद्यत इत्यर्थः। अथान्यो महान् दृष्टान्तः। यत्र देशे षट्षष्टिभागाः ६६ अक्षः। तत्र मेषादौ क्षितिजस्थे सर्वेऽपि राशयः समकालमेव क्षितिजस्था भवन्ति। तदा क्रान्तिवृत्तमेव क्षितिजं भवतीत्यर्थः। तत्र मेषादौ दृषभादौ मिथुनादौ वा स्थिते रवौ परमं त्रिज्यातुल्यमेव स्फुटं वलनं स्यात्। यतः क्रान्तिवृत्तप्राचुर्यतरा जाता। तथा विक्षेपाभावे सति तदा रवेर्दक्षिणस्यां दिशि स्पर्शः। चन्द्रस्योत्तर-स्यामित्यर्थः। एतदुक्तं भवति। तत्र देशे तस्मिन् काले तस्य त्रिज्यातुल्यस्य वलनस्यान्यथानुपपत्त्यास्मदीयमेव वलनानयनं समीचीनम्। तत्र देशेऽक्षज्या ३१४०। मेषादिगे रवौ द्युज्या ३४३८। चरज्याखवः ०। क्षितिजस्थेऽर्कै नतघटिकाः १५। आयनवलनचापांशाः २४। आक्षवलनचापांशाः ६६। स्फुटवलनस्य चा-पांशाः ९०। दृषादिगे रवौ द्युज्या ३१६६। चरज्या-सवः १६७०। नतघटिकाः १९। २८। आयनवलन-चापांशाः २१। ४। अक्षजस्य ६८। ५६। स्फुटवल-नस्य चापांशाः ९०। मिथुनादिगे द्युज्या ३२१८। चरासवः २४६५। नतघटिकाः २४। ५७। आयन-वलनांशाः २१। ३२। अक्षजस्य ७७। २८। स्फुटस्य ९०। एवं सर्वत्र।"

**वलभि(भी)** स्त्री वल्यते आच्छाद्यते वल-अभि वा ङीप्। वडभीशब्दार्थे गोपालस्वामि अमरटी०।

**वलय** पुंन० वल-अयन्। १हस्तपादकटकादौ अमरः। उत्तरपदस्थः तदाकारवेष्टने यथा भूवलयम्। २वेष्टन-भूमौ ४गोले च। ५गलरोगभेदे भावप्र० "वलास एवा-यतमुन्नतञ्च शोथं करोत्यन्नगतिं निवार्य। तं सर्वथैवा-प्रतिकार्यवीर्यं विवर्जनीयं वलयं वदन्ति"। ६मेखलायां ७कङ्कणे जटा०। [अमरः।

**वलयित** त्रि० वलयमिव आचरितम् वलय+क्विप्-क्त। वेष्टिते

**वला** स्त्री वल-अच्। (वेडेला) ओषधिभेदे रायमुकुटः। २बलाशब्दार्थे च। [अजा० टाप्।

**वलाक** पुंस्त्री० वल-आकन्। वकपक्षिणि अमरः स्त्रियां

**वलाहक** पु०वारि वहति पृषो०। १मेघे २हस्तके च अमरः। ३पर्वते दैत्यभेदे ५नागभेदे मेदि० श्रीकृष्णस्य हयभेदे "सुन्दनस्तु सदानन्दः सारथिस्तस्य दारुकः। तुरङ्गाः शैव्यसुग्रीवमेघपुष्पवलाहकाः" त्रिका०।

**वलि** पु० वल-इन्। उपहारद्रव्ये कोषादिस्थत्रिमल्यन्दे।

**वलिर** त्रि० वल-बलार्थे व वल्लसंवरणमस्त्यस्य इरन्। केकरे अमरः।

**वलिश** न० वलिना उपहारद्रव्येण श्यति मत्स्यान् शो-क। वडिशशब्दार्थे। [पटवे जटा०।

**वलीक** न० वल्यते संव्रियतेऽनेन ईकन्। वनीकशब्दार्थे

**वलूक** न० वल-ऊक। १कह्लारे २पक्षिभेदे त्रिं०कौ०।

**वल्क** भाषणे चु०उभ०द्वि०सेट्। वल्कयति ते अववल्कत् त।

**वल्क** न० वल-संवरणे क वस्य नेत्त्वम्। १वृक्षादीनां त्वचि वल्कले २मत्स्यानां त्वचि शल्के (आंइस) मेदि०।२खण्डे च विश्वः। ४पक्षिशरीरे पु० राजनि०।

**वल्कतरु** पु० वल्कप्रधान तरुः शा०त०। पुवाकवृक्षे राजनि०।

**वल्कद्रुम** पु० वल्कप्रधानो द्रुमः। भूर्जपत्रवृक्षे राजनि०।

**वल्कल** न० वल-कलन् कस्य नेत्वम्। १त्वचे (दारचिनि) वृक्षे राजनि० २त्वचि (छाल) पुंन० अमरः। ३शिलावल्कायां स्त्री राजनि०।

**वल्कलोध्र** पु० वल्कप्रधानो लोध्रः। पट्टिकालोध्रे राजनि०।

**वल्ग** गतौ प्लुतगतौ च भ्वा० पर० सक० सेट्। वल्गति अवल्गीत्। [हेमच०

**वल्गा** स्त्री वल्ग-अच्। (लागाम) अश्वमुखस्थे रज्जुभेदे

**वल्गित** न० वल्ग-भावे क्त। १अश्वस्य गतिभेदे प्लुतगतौ अमरः। २गमने ३वहुभाषणे च।

**वल्गु** पु० वल-संवरणे उ-गुक् च। १छागे २मनोहरे त्रि० मेदि०। संज्ञायां कन्। वल्गुक चन्दने वने पणे च न०। चारुणि सुन्दरे च त्रि० अजयः। अश्वौष्ट्रादित्यभित्यन्ये।

**वल्गुपत्त्र** पु० वल्गूनि पत्त्राणि यस्य। वनमुद्गे शब्दर०।

**वल्गुला** स्त्री वल्ग-उल। १वागुच्यां सोमराज्यां २खगभेदे राजनि० संज्ञायां कन्। वल्गुलिका तैलपायिकायां हेमच०

**वल्भ** भक्षणे भ्वा० आत्म० सक० सेट्। वल्भते अवल्भिष्ट।

**वल्मिकि** पु० वल-इकि मुट् च। कीटविशेषकृते मृत्तिकास्तूपे (उयेर ढिपि) शब्दर०। वल-इक मुट् च। वल्मिक तत्रार्थे भरतः।

**वल्मीक** पुंन० वल-ईक मुट् च। क्षुद्रकीटकृतमृत्कूटे अमरः तन्मृदा शौचनिषेधो विष्णुपु० उक्तो यथा "वल्मीकमूषिकोत्खातां मृदमन्तर्जलां तथा। शौचावशिष्टां गेहाच्च नादद्यात् लेपसम्भवाम्"। देवप्रतिमायाः शिल्पिदोषशान्तये तन्मृदा प्रतिमाक्षालनं विहितं यथा "वल्मीकमृत्तिकाभिश्च गोमयेन सुभस्मना। क्षालयेत् शिल्पिसंस्पर्शदोषाणामुपशान्तये" देवप्र० त०। तेन देवमूर्त्तीनां स्नापनमपि देवप्र० त० विहितं यथा "स्नापयेत् प्रथमं देवं तोयैः पञ्चविधैरपि। पश्चात्तैः पञ्चगव्यैः पञ्चमृत्पिण्डकैरपि। मृत्तिका करिदन्तस्य पर्वताश्वखुरस्य च। कुशवल्मीकसम्भूता मृत्पञ्चकमुदीरितम्" देवप्र० त०। तत्राविर्भूते प्राचेतसे स्वनामख्याते रामायणकर्त्तरि २मुनिभेदे ३रोगभेदे च विश्वः। तद्रोगनिदानादि भावप्र० उक्तं यथा "ग्रीवांसकक्षाकरपाददेशे सन्धौ गले वा त्रिभिरेव दोषैः। ग्रन्थिः स वल्मीकवदक्रियाणां जातः क्रमेणैव गतप्रवृद्धिः। मुखैरनेकैः स्रुतितोदवद्भिः विसर्पवत् सर्पति चोन्नताग्रैः। वल्मीकमाहुर्भिषजो विकारम् निष्प्रत्यनीकं चिरजं विशेषात्"। वल्मीकवदित्यनेन प्रचुरच्छिद्रत्वमुन्नतत्वमवगाढमूलत्वञ्च सूच्यते निष्प्रत्यनीकमुपचारायोग्यम्"। ततः भवार्थे इञ्। वाल्मीकि वल्मीकभवे प्राचेतसे मुनौ शब्दरत्ना०।

**वल्मीकशीर्ष** न० वल्मीकस्य शीर्षमिव। स्रोतोऽञ्जने राजनि०

**वल्मीकूट** न० वल्मीकं कूटमिव पृषो०। वल्मीके हेमच०

**वल्यु(ल्यू)ल** छेदने पवित्रताकरणे च अद० चुरा० उभ० सक० सेट्। वल्यु(ल्यू)लयति ते अववल्यु(ल्यू)लत् त।

**वल्ल** संवरणे भ्वा० आत्म० अक० सेट्। वल्लते अवल्लिष्ट।

**वल्ल** पु० वल्ल-घञ्। १गुञ्जात्रयपरिमाणे "वल्लस्त्रिगुञ्ज" लीला० २गुञ्जाद्वये वैद्यकम्। ३सार्द्धगुञ्जामाने "गोधूमद्वितयोन्मिता तु कथिता गुञ्जा तया सार्द्धया वल्लः" राजनि०।

**वल्लकी** स्त्री वल्ल-क्वुन् गौरा० ङीष्। १वीणायाम् अमरः। २सल्लकीवृक्षे च राजनि०।

**वल्लभ** पु० वल्ल-अभच्। १दयिते २अध्यक्षे अमरः। ३उत्तमाश्वे च मेदि०। ४दयितायां स्त्री हेमच०।

**वल्लभपाल** पु० वल्लभं पालयति पाल-अण्। अश्वपाले

**वल्लर** न० वल्ल-अरन्। १कृष्णागुरुणि मेदि० २गहने ३कुञ्जे च राजनि०। ४मञ्जर्यां शब्दर०।

**वल्लरि(री)** स्त्री वल्ल-अरि वा ङीप्। १मञ्जर्याम् अमरः। २मेथिकायां ३चित्रमूले च राजनि०।

**वल्लव** पुंस्त्री० वल्लु-घञ् तं वाति वा-क। १गोपे अमरः स्त्रियां ङीष्। २पाचके अमरः ३भीमसेने मेदि०।

**वल्लि(ल्ली)** स्त्री वल्ल-इन् वा ङीप्। १लतायाम् अमरः। २पृथिव्याञ्च शब्दच० दीर्घान्तस्तु ३अजमोदायां मेदि० ४कैवर्त्तिकायाम् ५चव्ये च राजनि०।

**वल्लीज** न० वल्ल्यां जायते जन-ड। मरिचे राजनि०।

**वल्लीदूर्वा** स्त्री वल्लीरूपा दूर्वा। मालादूर्वायाम् राजनि०।

**वल्लीबदरी** स्त्री वल्लीरूपा बदरी। भूमिबदर्य्याम् राजनि०।

**वल्लीमुद्ग** पु० वल्लीप्रधानः मुद्गः। वनमुद्गे (मुगानि) राजनि०

**वल्लीवृक्ष** न० वल्लीव दीर्घो वृक्षः। सालवृक्षे राजनि०।

**वल्लुर** न० वल्ल-उरन्। १कुञ्जे २मञ्जर्यां ३क्षेत्रे ४निर्जनस्थाने ५शाद्वले हेमच०। ६गहने च मेदि० वल्ल-अरन्। वल्लर तत्रार्थे न० शब्दर०।

**वल्लूर** त्रि० वल्लु-ऊरन्। आतपादिना १शुष्कमांसे अमरः २शूकरमांसे मेदि० ३वनक्षेत्रे ४वाहने ५ऊषरभूमौ च हेमच०।

**वल्वजा** स्त्री वल्ल-यत्। धात्रीवृक्षे राजनि०।

**वल्वज** पु॰ वलते भुवं वेष्टयति वल-क्विप् तादृशः सन् व्रजति गच्छति व्रज-अच् । १उलपे तृणभेदे अमरः । (बाबुइ) २इक्षुभेदे स्त्री राजनि॰ ।

**वल्ह** दीप्तौ चु॰ उभ॰अक॰सेट् । वल्हयति अववल्हत् त

**वल्ह** उत्कर्षे भ्वा॰ आ॰ अक॰ सेट् । वल्हते अवल्हिष्ट ।

**वव** पु॰ वा-ड प्रकारे द्वित्वम् । ज्योतिषोक्ते तिथ्यर्द्धात्मके प्रथमे करणे । अस्य औष्ट्यादित्वमित्यन्ये ।

**वश** स्पृहायाम् अदा॰पर॰सक॰सेट् । वष्टि उष्टः उशन्ति । अवट् अवाशीत् अवशीत् उवाश ऊशतुः ।

**वश** पुंन॰ वश-भावे अप्, कर्त्तरि अच् वा । १आयत्तत्वे २प्रभुत्वे च आयत्ते त्रि॰ शब्दर॰ ।

**वशंवद** त्रि॰ वशं वशकरं मधुरं, वशोऽहमिति वा वदति वद-खच् मुम् च । १प्रियवाक्यवादिनि २मधुरवादिनि (तवाहं वशः) इति ३वादिनि च । [करणे ।

**वशक्रिया** स्त्री वशस्य क्रिया करणं कृ-भावे श । वशी-

**वशग** त्रि॰ वशं गच्छति गम-ड । वशीभूते ।

**वशवर्त्तिन्** त्रि॰ वशे वर्त्तते वृत-णिनि । वशीभूते ।

**वशा** स्त्री वश-अच् । १वन्ध्यायां २योषायां ३सुतायां ४करिण्यां स्त्रीगव्याञ्च मेदि॰ । अनेन जातेः समासे परनि॰ गोवशा । [चन्दने स्त्री ।

**वशिक** त्रि॰ वशोऽस्त्यस्य ठन् । १शून्ये अमरः २अगुरु-

**वशित्व** न॰वशिनो भावः त्व । १स्वातन्त्र्ये २ईश्वरस्य ऐश्वर्यभेदे च । तल् । वशिताप्यत्र स्त्री । [स्वतन्त्रे च ।

**वशिन्** त्रि॰ वशोऽस्त्यस्य इनि । १जितेन्द्रिये २स्वाधीने

**वशिर** न॰ वश-इरन् । १सामुद्रलवणे अमरः । २गजपिप्पल्याम् ३चव्ये च पु॰ राजनि॰ ।

**वशिष्ठ** अतिशयेन वशी इष्ठन् इनेर्लुक् । अतिशयजितेन्द्रियतायुक्ते मुनिभेदे ।

**वशीकरण** न॰ अवशः वशः क्रियतेऽनेन वश-च्वि-कृ-ल्युट् । तन्त्राद्युक्ते वशतासम्पादके मणिमन्त्रादौ ।

**वशीर** पु॰ वश-ईरन् । गजपिप्पल्याम् जटा॰ ।

**वश्य** न॰ वश-यत् । १लवङ्गे शब्दर॰। २आयत्ते त्रि॰ अमरः

**वष** वधे भ्वा॰ पर॰ सक॰ सेट् । वषति अवषीत् अवाषीत् । ववषतुः ।

**वषट्** अव्य॰ वह-डषटि । देवोद्देश्यकहविस्त्यागे अमरः ।

**वषट्कार** पु॰ वषट्+कृ-घञ् । १देवोद्देशकत्यागरूपे यज्ञे २वषडिति करणे यजतिशब्दे कात्या॰वाक्यं दृश्यम् ।

**वषट्कृत** त्रि॰ वषट् इति कृतम् कृ-क्त । हुते अमरः ।

**वष्क** गतौ भ्वा॰ आत्म॰ सक॰ सेट् । वष्कते अवष्किष्ट ।

**वष्कय** पु॰ वष्क-अयन् । एकहायने वत्से अमरः ।

**वष्कयणी** स्त्री वष्कयमेकहायनवत्सं नयति स्थानान्तरं नी-ड गौरा॰ ङीष् णत्वम् । चिरप्रसूतायां गवि अमरः । जात्या समासेऽस्य परनि॰ गोवष्कयणी ।

**वष्कयिणी** स्त्री वष्कय एकहायनो वत्सोऽस्त्यस्या इनि । चिरप्रसूतायां गवि अमरः वष्कयणीति वा पाठः । "वष्कयिण्याश्चिदोमस्ं तर्पणं वलकृत्पयः" भावप्र॰ ।

**वस** स्नेहे छेदने वधे च सक॰ चु॰ उभ॰ सेट् । वासयति ते अवीवसत् त । अधि+गन्धादिनासंस्कारे सक॰ ।

**वस** स्तम्भे दिवा॰पर॰सक॰सेट् । वस्यति इरित् अवसत् अवासीत् उदित् क्त्वा वेट् ।

**वस** निवासे भ्वा॰पर॰सक॰अनिट् यजा॰ । वसति अवात्सीत् उवास ऊषतुः उषितः उषित्वा । अधि+अनु+उप+आ+वा वसतेराधारस्य कर्मता अधिवसति वैकुण्ठं हरिः सि॰कौ॰ अनुवसति उपवसति आवसति । उप+ अभोजने तन्नाधारस्य कर्मता "एकादश्यामुपवसेत्" इत्यादि ।

**वस** आच्छादने अदा॰ आ॰ सक॰ सेट् । वस्ते अवसिष्ट ।

**वस** वासने सुरभीकरणे अद॰चु॰उभ॰सक॰सेट् । वसयति ते अववसत् त ।

**वसति(ती)** स्त्री वस-अति वा ङीप् । १वासे २यामिन्याम् "वसतीरुषित्वा" रघुः । ३निकेतने मेदि॰ ४स्थाने च ५शिविरे सि॰ कौ॰ ।

**वसतिवरी** स्त्री ब॰व॰ सोमग्रहणार्थासु अप्सु । "अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणं स्यन्दमानानामनस्तमिते" कात्या॰ श्रौ॰ ८।९।७। "सोमार्था आपो वसतीवरीशब्देनोच्यन्ते" कर्क॰ । अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञानामपां ग्रहणमभिधीयते" वेददी॰ यजु॰ ६।२३ ।

**वसन** न॰ वस-आच्छादने कर्मणि ल्युट् । १वस्त्रे अमरः । भावे ल्युट् । २छादने मेदि॰ वस-वासे आधारे ल्युट् । ३निवासे ४स्त्रीकटीभूषणे च शब्दर॰ ।

**वसन्त** पु॰ वस-झ । मधुमाधवात्मके ऋतुभेदे "मधुश्च माधवश्च वासन्तिकावृतुः" यजु श्रुतिः । २अतिसारे शब्दर॰। ३नाट्ये विदूषकोपाधौ । ४रागभेदे च । "आन्दोलिता च देशाख्या लोला प्रथममञ्जरी। मन्दारी चेति रागिण्यो वसन्तस्य सदानुगाः" इत्युक्ता अस्य षट् रागिण्यः षट् इत्यन्ये रागिणीशब्दे दृश्याः ।

अस्य गानकालः । "श्रीपञ्चमीं समारभ्य यावत् स्याच्छ-यनं हरेः । तावद्वसन्तरागस्य गानमुक्तं मनीषिभिः" सङ्गीतदा० । ४तालविशेषे । "जयमङ्गलगन्धर्वमकरन्द-त्रिभङ्गमाः । रतितालो वसन्तस्य जगणस्त्वोऽथ गारुविः" वसन्तताले कर्त्तव्यो नगणो मगणस्तथा ।" सङ्गीतदा० ।

**वसन्तक** पु० वसन्ते कायति कै–क । श्योनाकवृक्षे शब्दमा० ।

**वसन्तकुसुम** पु० वसन्ते कुसुमं यस्य । सेलुवृक्षे शब्दमा० ।

**वसन्तकुसुमाकर** पु० प्रमेहरोगनाशके औषधभेदे ।

"प्रवालरसमौक्तिकाभ्वरमिदं चतुर्भागभाक् पृथक् पृथ-गथ कृते रजतहेमतो द्व्यं शके । अयोभुजगरङ्गकं त्रि-स्वकं विमर्द्याखिलं शुभेऽहनि विभावयेत् भिषगिदं धिया सप्तधा । द्रवैर्वनिशेक्षुजैः कमलमालतीपुष्पजैः पयःकदलिकन्दजैर्मलयजैर्घनाभ्युद्भवैः । वसन्तकुसुमा-करोरसपतिर्दिवल्लोऽशितः समस्तगदहृद्भवेत् किल नि-जानुपानैरयम्" इत्युयोगतरङ्गिणी । [राजनि० ।

**वसन्तजा** स्त्री वसन्ते जायते जन–ड । माधवीलतायाम्

**वसन्ततिलक** न० "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" छन्दो० उक्ते चतुर्दशाक्षरपादके छन्दोभेदे

**वसन्तदूत** पु० वसन्तस्य दूत इव । १कोकिले २आम्रवृक्षे ३पञ्चमरागे च विश्वः । ४माधवीलतायाम् ५पाटलीवृक्षे स्त्री मेदि० गौ० ङीष् ६गणिकारिकायां ७पिक्याञ्च स्त्री ङीष् राजनि० ।

**वसन्तद्रु** पु० वसन्तस्य द्रुः । आम्रवृक्षे शब्दर० तत्काले तस्य जायमानमुकुलत्वात् तथात्वम् वसन्तद्रुमादयोऽप्यत्र ।

**वसन्तसख** पु० वसन्तस्य सखा अस्य०न्ता० । कामदेवे हला० ।

**वसा** स्त्री वस–अच् । १मांसजाते देहस्थे धातुभेदे मेदसि अमरः । अस्थिकरशब्दे ५५८पृ० दृश्यम् । २मांसरोहिण्यां लतायाञ्च राजनि० । [त्रिका० ।

**वसाढ्य** पुंस्त्री० वसाभिः आढ्यः । प्रचुरमेदस्के शिशुमारे

**वसि** पु० वस–इन् । वसने उणा० । [धरणिः ।

**वसिर** न० वस–इरन् । १सामुद्रलवणे २गजपिप्पल्यां च

**वसिष्ठ** पु० वसिष्ठ+पृषो० । ब्रह्मणः मानसपुत्रेषु सप्तर्षिषु मुनिभेदे भा० अनु० अन्याऽपि तन्निरुक्तिर्यथा "वरि-ष्ठोऽस्मि वसिष्ठोऽस्मि वसे वासगृहेष्वपि । वरिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम्" ।

**वसु** न० वस–उ । १धने २रत्ने अमरः ३वृद्ध्यौषधे ४श्यामे मेदि० । ५स्वर्णे विश्वः ६जले च सि०कौ० । ७वकवृक्षे ८वृक्षे ९वह्नौ १०रश्मौ ११गणदेवताभेदे च पु० अमरः ।

"धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविति स्मृताः" भा० आ० ६६अ० । १२अष्टसङ्ख्यायाञ्च १३मधुरे १४शुष्के च त्रि० हेमच० । १५दीप्तौ १६वृद्धौषधौ च स्त्री शब्दच० । १७वसुदेव-ताके धनिष्ठानक्षत्रे पु० ज्यो०त० । १८चेदिराजाख्ये देवभेदे

**वसुक** पु० वसुना सूर्यनाम्ना कायति कै–क । १अर्कवृक्षे अमरः । २वकवृक्षे च मेदि० ।

**वसुकीट** पु० वसूनि धने कीट इव । याचके हारा० ।

**वसुच्छिद्रा** स्त्री वसुसङ्ख्यानि पुष्पे छिद्राण्यस्याः । महा-मेदायाम् रत्नमा० । [दिवे क्षत्रियभेदे अमरः ।

**वसुदेव** पु० वसुना दीव्यति दिव–अच् । श्रीकृष्णजनके या-

**वसुदेवभू** पु० वसुदेवात् भवति भू–क्विप् । श्रीकृष्णे वसुदेव-सुतादयोऽप्यत्र । [दधाति धा–क वा । पृथिव्याम् अमरः

**वसुधा** स्त्री वसूनि धीयन्तेऽस्यां धा–बाहुलकात् आधारे क, वसूनि

**वसुधारा** स्त्री वसोश्चेदिराजस्य प्रियार्थं धारा घृतादिसन्त-न्ततिः । माङ्गल्येषु चेदिराजवसूद्देशेन दीयमानायां घृतादिधारायाम् ।

"कुड्यलग्नां वसोधारां सप्त वारान् घृतेन तु । कारयेत् पञ्च वारान् वा नातिनीचां न चोच्छ्रिताम् । आयुष्मा-निति शान्त्यर्थं जप्त्वा तत्र समाहितः । षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्" छन्दोगप० ।

२जिनशक्तिभेदे हेमच० । ३कुवेरपुर्यां शब्दमा० ।

**वसुन्धरा** स्त्री वसूनि धारयति धृ–खच् मुम् ह्रस्वः । पृथि-व्याम् अमरः ।

**वसुप्राण** पु० वसूनि दीप्तयः प्राणा इव यस्य । अग्नौ शब्दर० ।

**वसुमती** स्त्री वसूनि सन्त्यस्यां मतुप् । पृथिव्याम् अमरः ।

**वसुरोचिस्** पु० वसुने धनाय रोचते रुच–इसुन् । यज्ञे सि०कौ० ।

**वसुल** पु० वसु दीप्तिं लाति ला–क । देवे त्रिका० ।

**वसुहट्ट** पु० वसूनां दीप्तीनां हट्ट इव । वकवृक्षे जटा० ।

**वस्त** वध गतौ च सक० याचने द्वि० चु० उभ० सेट् । वस्त-यति ते अववस्तत् त । [अमरः स्त्रियां ङीष् ।

**वस्त** पुंस्त्री वस्यते बध्यते यज्ञार्थं वस्त–कर्मणि घञ् । छागे

**वस्तक** न० वस्त इव कायति कै–क । कृत्रिमलवणे हेमच० ।

**वस्तकर्ण** पु० वस्तस्य कर्णः पत्राकारेऽस्त्यस्य अच् । शालवृक्षे राजनि० ।

**वस्तगन्धा** स्त्री वस्तस्येव गन्धोऽस्याः । अजगन्धायाम् राजनि० । [राजनि० ।

**वस्तमोदा** स्त्री वस्तस्येव मोदो यस्याः । अजमोदायाम्

**वस्ति** पु० वस्ते आच्छादयति मूत्रम् वस—तिच्। नाभेरधोभागे मूत्राधारे १स्थाने २वासे च ३वसनदशायां पुंस्त्री ब०व० अमरः (पिचकारी) औषधदानार्थे द्रव्यभेदे पु० तद्विधिः भावप्र०

"वस्तिर्द्विधानुवासाख्यो निरूहश्च ततः परम्। यः स्नेहो दीयते स स्यादनुवासननामकः। कषायक्षीरतैलैर्यो निरूहः स निगद्यते। वस्तिभिर्दीयते यस्मात्तस्माद्वस्तिरिति स्मृतः।" वस्तिभिः छागादीनां मूत्राशयैः "तत्रानुवासनाख्यो हि वस्तिर्यः सोऽत्र कथ्यते। अनुवासनभेदश्च मात्रावस्तिरुदीरितः। पलद्वयन्तस्य मात्रा तस्मादर्द्धोऽपि वा भवेत्। अनुवास्यस्तु रूक्षः स्यात्तीक्ष्णाग्निः केवलानिली। नानुवास्यस्तु कुष्ठी स्यान्मेही स्थूलस्तथोदरी। नास्थाप्या नानुवास्याश्च जीर्णोन्मादतृडर्दिताः। शोषमूर्च्छारुचिभयश्वासकासक्षयातुराः। नेत्रं कार्य्यं सुवर्णादिधातुभिर्वृक्षवेणुभिः। नलैर्दन्तैर्विषाणाग्रैर्मणिभिर्वा विधीयते।" नेत्रं नाडी तथा चोक्तं विश्वप्रकाशे "नेत्रं मन्थगुणे वस्त्रे तरुमूले विलोचने। नेतृवस्ते च नाड्याञ्च नेता नेतरि भेद्यवदिति"। "एकवर्षात्तु षड्वर्षाद्यावन्मानं षडङ्गुलम्। ततो द्वादशकं यावन्मानं स्यादष्टसम्मितम्। ततः परं द्वादशभिरङ्गुलैर्नेत्रदीर्घता। मुखच्छिद्रं कलायाभं छिद्रं कोलास्थिसन्निभम्। यथासङ्ख्यं भवेन्नेत्रं श्लक्ष्णं गोपुच्छसन्निभम्। गोपुच्छसन्निभं मूले तस्मात् क्रमात् क्रमात् कृशम्"। मुखच्छिद्रादिप्रमाणं नेत्रं क्रमेण षड्वर्षो यद्वा दशवर्षो यद्वा तदूर्द्धं वर्षाश्च ज्ञेयाः। "आतुराङ्गुष्ठमानेन मूले स्थूलं विधीयते। कनिष्ठिकापरीणाहमग्रे च गुटिकामुखम्।" परिणाहोऽत्र स्थौल्यम् "तन्मूले कर्णिके द्वे च कार्य्ये भागाच्चतुर्थकात्।" कर्णिका गवादिकर्णवत् "योजयेत्तत्र वस्तिञ्च बन्धद्वयविधानतः। मृगाजशूकरगवां महिषस्यापि वा भवेत्।" वस्तिरिति शेषः। "मूत्रकोषस्य वस्तिस्तु तदलाभे तु चर्म्मणः। कषायरक्तः सुमृदुर्वस्तिः स्निग्धो दृढो हितः। व्रणवस्तेस्तु नेत्रं स्यात् श्लक्ष्णमष्टाङ्गुलोन्मितम्। मुद्गच्छिद्रं गृध्रपक्षनालिकापरिणाहि च। शरीरोपचयं वर्णं बलमारोग्यमायुषः। कुरुते परिवृद्धिञ्च वस्तिः सम्यगुपासितः। दिवा शीते वसन्ते च स्नेहवस्तिः प्रदीयते। ग्रीष्मवर्षाशरत्काले रात्रौ स्यादनुवासनम्। न चातिस्निग्धमशनं भोजयित्वानुवासयेत्। मदं मूर्च्छाञ्च जनयेद्द्विधा स्नेहः प्रयोजितः।" द्विधा भोजने वस्तौ च। "रूक्षं भुक्तवतोऽत्यन्तं बलं वर्णञ्च हापयेत्। युक्तस्नेहमतो जन्तुं भोजयित्वानुवासयेत्"। युक्तस्नेहं यथोचितस्नेहं भोज्यं भोजयित्वेत्यर्थः। "हीनमात्रावुभौ वस्ती नातिकार्य्यकरौ स्मृतौ। अतिमात्रौ तथानाहक्लमातीसारकारकौ" उभौ वस्ती अनुवासननिरूहाख्यौ। "उत्तमा स्यात्पलैः षड्भिर्मध्यमा स्यात्पलैस्त्रिभिः। पलाद्यर्द्धेन हीना स्यादुक्ता मात्रानुवासने। शताह्वासैन्धवाभ्याञ्च देयं स्नेहे च चूर्णकम्। तन्मात्रोत्तममध्यान्त्या षट्चतुर्द्वयमाषकैः। विरेचनात्सप्तरात्रे गते जातबलाय च। कृतान्नायानुवास्याय वस्तिर्देयोऽनुवासनः। अथानुवास्यमभ्यक्तमुष्णाम्बुस्वेदितं शनैः। भोजयित्वा यथाशास्त्रं कृतचङ्क्रमणं ततः। उत्सृष्टानिलविण्मूत्रं योजयेत्स्नेहवस्तिना" उष्णाम्बुस्वेदितम् उष्णाम्बुना स्नापितम्। "सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः। कुञ्चितापरजङ्घस्य नेत्रं स्निग्धे गुदे न्यसेत्। बद्ध्वा वस्तिमुखं सूत्रैर्वामहस्तेन धारयेत्। पीडयेद्दक्षिणेनैव मध्यवेगेन धीरधीः। जृम्भाकासक्षवादींश्च वस्तिकाले न कारयेत्। त्रिंशन्मात्रामितः कालः प्रोक्तो वस्तेस्तु पीडने। ततः प्रणिहिते स्नेहे उत्तानो वाग्यतो भवेत्। सजानुनः करावर्त्तं कुर्य्याच्छोटिकया पुनः। एषा मात्रा भवेदेका सर्व्वत्रैवेष निश्चयः। निमिषोन्मेषणं पुंसामङ्गुल्या च्छोटिकाथ वा। गुर्व्वक्षरोच्चारणं वा स्यान्मात्रेयं स्मृता बुधैः। प्रसारितैः सर्व्वगात्रैर्यथावीर्य्यं प्रसर्पति" यथावीर्य्यं स्नेहादि। "ताडयेत्तलयोरेनं त्रींस्त्रीन्वारान् शनैः शनैः। स्फिजोश्चैव तथा श्रोणीं शय्याञ्चैवोत्क्षिपेत्ततः। स्फिजोश्चैनं स्वपाणिभ्यां पूर्ववत्ताडयेद्बुधः। शय्याञ्च पदतस्तस्य त्रीन् वारानुत्क्षिपेत्ततः। जाते विधाने तु ततः कुर्य्यान्निद्रां यथासुखम्। सानिलः सपुरीषश्च स्नेहः प्रत्येति यस्य तु। उपद्रवं विना शीघ्रं स सम्यगनुवासितः। जीर्णान्नमथ सायाह्ने स्नेहे प्रत्यागते पुनः। लघ्वन्नं भोजयेत्कामं दीप्ताग्निस्तु नरो यदि। अनुवासिताय दातव्यमितरेऽह्नि सुखोदकम्। धान्यशुण्ठीकषायं वा स्नेहव्यापत्तिनाशनम्"। सुखोदकमुष्णोदकं व्यापत्तिर्व्याधिः। "अनेन विधिना षड्वा सप्त चाष्टौ नवापि वा। विधेया वस्तयस्तेषामन्ते चैव निरूहणम्। दत्तस्तु प्रथमो वस्तिः स्नेहयेद्वस्तिवङ्क्षणौ। सम्यग्दत्तो द्वितीयस्तु मू

द्वितीयमनिलं जयेत्। बलं वर्णञ्च स जयेत्तृतीयस्तु प्रयोजितः। चतुर्थपञ्चमौ दत्तौ स्नेहयेतां रसासृजी। षष्ठो मांसं स्नेहयति सप्तमो मेद एव च। अष्टमो नवमश्चापि मज्जानञ्च यथाक्रमम्"। यथाक्रममिति वचनादष्टमोऽस्थि स्नेहयेत्। "एवं शुक्रगतान् दोषान् द्विगुणः साधु साधयेत्।" अष्टादशदिवसावधिवस्तिफलम् "अष्टादशाष्टादशकान्दिनात् यो ना निषेवते। स कुञ्जरबलोऽश्वस्य जवतुल्योऽमरप्रभः। रूक्षाय बहुवाताय स्नेहवस्तिं दिने दिने। दद्याद्वैद्यस्तथान्येषामग्न्याबाधभयात् त्र्यहात्। स्नेहोऽल्पमात्रो रूक्षाणां दीर्घकालमनत्ययः।" अनत्ययः अबाधः। "तथा निरूहः स्निग्धानामल्पमात्रः प्रशस्यते। अथ वा यस्य तत्कालं स्नेहो निर्याति केवलः। तस्याप्यल्पतरो देयो न हि स्निग्धेऽवतिष्ठते।" अवतिष्ठते दत्तः स्नेह इति शेषः "अशुद्धस्य मलोन्मिश्रः स्नेहो नैति यदा पुनः। तदाङ्गसदनाध्माने शूलं श्वासश्च जायते। पक्वाशये गुरुत्वञ्च तत्र दद्यान्निरूहणम्। तीक्ष्णं तीक्ष्णौषधैर्युक्तं फलवर्त्तिमथापि वा। यथानुलोमनो वायुर्मलः स्नेहश्च जायते। तथा विरेचनं दद्यात्तीक्ष्णं नस्यञ्च शस्यते। यस्य नोपद्रवं कुर्य्यात् स्नेहवर्त्तिरनिःसृता। सर्वोऽल्पो वावृतो रौक्ष्यादुपेक्ष्यः स विजानता। अनायातन्त्वहोरात्रे स्नेहं संशोधनैर्हरेत्। स्नेहवस्तावनायाते नान्यः स्नेहो विधीयते। शुण्ठ्येरण्डपूतीकभार्गीदेवदारुरौहिषम्। शतावरीं सहचरं काकनासां पलोन्मिताम्। यवमाषातसीकोलकुलत्थान् प्रसृतोन्मितान्। चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषेण तेन च। पचेत्तैलाढकं सर्वैर्जीवनीयैः पलोन्मितैः। अनुवासनमेतद्धि सर्ववातविकारनुत्।" पूतीकः करञ्जः रौहिषं दीर्घवृन्तगन्धतृणविशेषः। काकनासा (काकाठोठी) प्रसृतम् पलद्वयम्। "शोफा यस्य व्यापदस्तु जायते वस्तिकर्मणः। दूषितान् सम्प्रदायेन तांश्चिकित्सेत्तु सुश्रुतात्। सम्प्रदायेन समुचितनेत्रादिदानप्रथा। "स्नानाहारविहाराश्च परिहाराश्च तद्वशः स्नेहपानसमाः कार्य्या नात्र कार्य्या विचारणा।"

**वस्तिकर्माढ्य** पु० वस्तिकर्मणा तच्छोधनव्यापारेणाढ्यः। अरिष्टकवे शब्दच०।

**वस्तिमल** न० ६त०। मूत्रे हेमच०।

**वस्तु** न० वस-तुन्। १द्रव्ये २पदार्थे त्रिका० ३सत्यपदार्थे च।

**वस्तुक** न० वस्तु+इवार्थे कन्। १वास्तुके शाकभेदे २श्वेतचिल्लीशाके च स्त्री राजनि०।

**वस्त्य** न० वस्तौ साधु यत्। गृहे अमरः।

**वस्त्र** न० वस-ष्ट्रन्। परिधानाद्युपयुक्ते कार्पासादौ वसने। वस्त्रधारणगुणाः यथा "स्नातस्यानन्तरं सम्यग्वस्त्रेण तनुमार्जनम्। कान्तिप्रदं शरीरस्य कण्डूत्वग्दोषनाशनम्। कौषेयं चित्रवस्त्रञ्च रक्तवस्त्रं तथैव च। वातश्लेष्महरं तत्तु शीतकाले विधारयेत्।" कौषेयं पट्टाम्बरं तसरवस्त्रञ्च। "मेध्यं सुशीतं पित्तघ्नं काषायं वस्त्रमुच्यते। तद्धारयेदुष्णकाले तच्चापि लघु शस्यते।" काषायं (कोकटी) इति लोके। कषायरागरक्तं वा। "शुक्लन्तु शुभदं वस्त्रं शीतातपनिवारणम्। नचोष्णं नच वा शीतं तत्तु वर्षासु धारयेत्। यशस्यं काम्यमायुष्यं श्रीमदानन्दवर्द्धनम्। त्वच्यं वशीकरं रुच्यं नवं निर्म्मलमम्बरम्।" काम्यं कामोद्दीपकम्। "कदापि न जनैः सम्परिधार्य्यं मलिनमम्बरम्। तत्तु कण्डूकृमिकरं ग्लान्यलक्ष्मीकरं परम्।" अलक्ष्मीरशोभा दारिद्र्यं वा।" भावप्र०

अस्य परिधानविधिर्यथा भृगुः "विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च। श्रौतं स्मार्त्तं तथा कर्म न नग्नश्चिन्तयेदपि। विकच्छः परीधानाद् गलितकच्छः। तथा च "परीधानाद्बहिः कच्छा निबद्धा ह्यासुरी भवेत्" स्मृतिः "वामे पृष्ठे तथा नाभौ कच्छत्रयमुदाहृतम्। एभिः कच्छैः परीधत्ते यो विप्रः स शुचिः स्मृतः"। बौधायनः "नाभौ धृतञ्च यद्वस्त्रमाच्छादयति जानुनी। अन्तरीयं प्रशस्तं तदच्छिन्नमुभयोस्तयोः।" प्रचेताः "दशां नाभौ प्रयोजयेत्" स्मृतिः "न स्यात् कर्म्मणि कञ्चुकीति"। उत्तरीयधारणं चोपवीतवत् "यथा यज्ञोपवीतञ्च धार्य्यते च द्विजोत्तमैः। तथा सन्धार्य्यते यत्नादुत्तराच्छादनं शुभम्" स्मृतेः। अत्र यथा द्विजोत्तमैः सव्यापसव्यत्वादिना उपवीतं धार्य्यते तथा उत्तराच्छादनमपि द्विजोत्तमैरिति प्रदर्शनमात्रम् प्रागुक्तभृगुवचनेन सर्वेषां द्विवस्त्रताप्रतीतेः" पारस्करः "एकवेहासो भवति तस्य उत्तरार्द्धेन प्रच्छादयतीति" आ० त० रघु०। वस्त्रपरीधाननक्षत्रादि "मूलानुराधवसुतिष्यविशाखहस्तचित्रोत्तराश्विपवनादितिरेवतीषु। जन्मर्क्षजीवबुधशुक्रदिनोडुपवारौ धार्य्यं नवं वसनमीश्वरदेवतर्क्षे।" ज्यो० त०। "हस्ते चाम्बरं,

क्षयः शशिदिने, क्लेशः सदा भूमिजे, वस्त्राणां बहुता बुधे, सुरगुरौ विद्यागमः सम्पदः। नानाभोगयुतप्रमोदशयनं विद्याङ्गना भार्गवे, शौरौ स्युः खलु रोगशोककलहा वस्त्रे धृते नूतने” कर्मलोचनम्। वस्त्र क्षारसंयोगनिषिद्धदिनानि यथा। “नन्दमङ्गलषष्ठीषु द्वादश्यां श्राद्धवासरे। वस्त्राणां क्षारसंयोगाद्दहत्यासप्तमं कुलम्।” स्मा०त०।

परकीयवस्त्रधारणनिषेधो यथा “आसनं वसनं शय्या जायापत्यं कमण्डलुः। आत्मनः शुचिरेतानि न परेषां कदाचन”। ईषद्धौतादिवस्त्रस्य पश्चिमाग्राद्प्रसारितवस्त्रस्य च अधौतत्वं यथा “ईषद्धौतं स्त्रिया धौतं यद्धौतं रजकस्य तु। अधौतं तद्विजानीह्याद्दक्षिणपश्चिमे।” कर्मलोचनम्। सत्यतपाः “प्रागग्रमुदग्रं वा धौतं वस्त्रं प्रसारयेत्। पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनात् शुचि” अलाग्रं दशा इत्यर्थः। प्रचेताः “स्वयं धौतेन कर्त्तव्या क्रिया धर्म्या विपश्चिता। न च रजकधौतेन नाधौतेन भवेत् क्वचित्। पुत्रमित्रकलत्रेण स्वजातिबान्धवेन च। दासवर्गेण यद्धौतं तत् पवित्रमिति स्थितिः”। स्नानोत्तरं उष्णीषवस्त्रस्य धार्य्यत्वं यथा उष्णीषधारणं शिरोजलापनयनाय। तेन स्नानानन्तरं धार्य्यम्। तथा च महाभारतम् “आप्लुतस्याधिवासेन जलेन च सुगन्धिना। राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम्। जलक्षयनिमित्तं वै वेष्टयामास मूर्द्धनि”। शिथिलार्पितम् अगाढ़बद्धम्। निषिद्धवस्त्राणि यथा भारते “न स्यूतेन न दग्धेन पारक्येण विशेषतः। मूषिकोत्कीर्णजीर्णेन कर्म कुर्य्याद्विचक्षणः।” नारसिंहे “न रक्तमुल्बणं वासो न नीलञ्च प्रशस्यते। मलाक्तञ्च दशाहीनं वर्जयेदम्बरं बुधः। उल्बणम् उत्कटरक्तविशेषम्। आचाररत्ने उशना “दशाहीनेन वस्त्रेण कुर्य्यात् कर्माण्यभावतः”। विष्णुधर्मोत्तरे “वस्त्रं नान्यधृतं धार्य्यं न रक्तं मलिनं तथा। जीर्णं वाऽपदशञ्चैव श्वेतं धार्य्यं प्रयत्नतः। उपानहौ नान्यधृतां ब्रह्मसूत्रञ्च धारयेत्। न जीर्णमलवद्वासा भवेच्च विभवे सति।” योगियाज्ञवल्क्यः “स्नात्वैवं वाससी धौते अक्लिन्ने परिधाय च। प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षालयेत्ततः। अभावे धौतवस्त्राणां शाणक्षौमाविकानि च। कुतपो योगपट्टं वा द्विवासा येन वा भवेत्। अधौतेन च वस्त्रेण नित्यनैमित्तिकीं क्रियाम्। कुर्वन् फलं न चाप्नोति दत्तं भवति निष्फलम्”। कुतपो नेपालकम्बलः। तत्रापवादः “राङ्कवे पट्टसूत्रे च सूचीविद्धं न दुष्यति” विधानपा०। “नीलीरक्तं न दुष्यति” इति मिता०पाठः। तर्पणात् पूर्वं स्नानवस्त्रनिष्पीडने निषेधो यथा “निष्पीड़यति यः पूर्वं स्नानवस्त्रन्तु तर्पणात्। निराशास्तस्य गच्छन्ति देवाः पितृगणैः सह”। जावालिः “स्नानं कृत्वार्द्रवासास्तु विण्मूत्रं कुरुते यदि। प्राणायामत्रयं कृत्वा पुनः स्नानेन शुध्यति। नार्द्रमेकञ्च वसनं परिदध्यात् कथञ्चन”। हारीतः “आर्द्रञ्च सप्तवाताहृतमपि शुद्धमिति”। संक्रान्त्यादौ वस्त्रनिष्पीड़ननिषेधो यथा षट्त्रिंशन्मतनिगमौ “संक्रान्त्यां पक्षदश्याञ्च द्वादश्यां श्राद्धवासरे। वस्त्रं न पीड़येत्तत्र नच क्षारेण योजयेत्” ति०त०।

**वस्त्रकुट्टिम** न० वस्त्रनिर्मितं कुट्टिमं यत्र। १वस्त्रगृहे (तांबु) २छत्रे त्रिका०। [निर्मिते गृहे त्रिका०।

**वस्त्रगृह** न० वस्त्रनिर्मितं गृहम् शाक०। (तांबु) वस्त्र-

**वस्त्रग्रन्थि** पु० ६त०। नीव्याम् त्रिका०।

**वस्त्रपुत्रिका** स्त्री वस्त्रनिर्मिता पुत्रिका। वस्त्रनिर्मितपुत्तलिकायाम् शब्दमा०। [२खाकरखण्डे च राजनि०।

**वस्त्रभूषणा** स्त्री वस्त्रस्य भूषणं यस्याः ५व०। १मञ्जिष्ठायाम्

**वस्त्रयोनि** स्त्री ६त०। त्वक्फलकृमिरोमादौ अमरः।

**वस्त्ररञ्जन** पु० वस्त्रं रञ्जयति रन्ज-णिच्-ल्यु। कुसुम्भे राजनि०।

**वस्न** न० वस-न। १वेतने २मूल्ये ३वस्त्रे ४द्रव्ये च विश्वः ५धने ६मृत्यौ च अमरटीकायां रमानाथः। मूल्ये पु० अमरः।

**वस्नसा** स्त्री वस्नं स्यति सो-क। स्नायौ अमरः।

**वस्वौकसारा** स्त्री वस्वनामोकस्य सारो यत्र। १इन्द्रनगर्य्याम् २इन्द्रनद्यां ३कुवेरपुर्य्यां ४कुवेरनद्याञ्च हेम०।

**वह** दीप्तौ चु० उभ० सक० सेट् इदित्। वंहयति ते अववंहत्।

**वह** प्रापणे भ्वा० उभ० द्विक० यजा० अनिट्। वहति ते अवाक्षीत् अवोढ़ उवाह ऊहे ऊढ़ः। अस्य प्रधानकर्मण्येव लकारादयः।

**वह** पु० उह्यतेऽनेन वह-अच्। १वृषस्कन्धदेशे अमरः। वह-कर्त्तरि अच्। २घोटके ३वायौ ४पथि त्रिका०। ५नद्यां स्त्री हेमच०।

**वहत** पु० वह-अतच्। १वृषे २पान्थे च उणादिकोषः

**वहति** पु० वह–अति । १वायौ उणा० । २गवि ३सचिवे च मेदि० । [४गमने च ।

**वहन** न० वह-भावे ल्युट् । १पुरभेदे त्रिका० २प्रापणे ।

**वहन्त** पु० वह–झ । वायौ त्रि०कौ० २बाले उणा० ।

**वहल** पु० वह–अलच् । १पोते हारा० २दृढे त्रि० हेम० ।

**वहलगन्ध** न० वहलो दृढो गन्धो यस्य । शम्बरचन्दने राजनि० ।

**वहलचक्षुस्** पु०वहलानि चक्षुषीव पुष्पाण्यस्य । मेषशृङ्ग्यां (गाड़रशिङ्गा) रत्नमा० । [राजनि० ।

**वहलत्वच** पु० वहला दृढा त्वचा यस्य । श्वेतलोध्रे

**वहला** स्त्री वहलानि पुष्पादीनि सन्त्यस्य अर्श आद्यच् । १शतपुष्पायां राजनि० । २स्थूलैलायां भावप्र० ।

**वहित्र** न० वह–इत्र । १पोते जलयाने त्रिका० । स्वार्थे क । अत्रैवार्थे ।

**वहिरङ्ग** न० वहिः प्रकृतेर्वाह्यमङ्गं यस्य । व्याकरणोक्ते प्रत्ययादिनिमित्तके प्रकृत्यवयवादिकार्य्ये । "असिद्धं वहिरङ्गमन्तरङ्गे" व्या० परिभाषा ।

**वहिरिन्द्रिय** न० वहिर्देहाद्वाह्यस्य पदार्थस्य ग्राहक-मिन्द्रियम् । शब्दादिवाह्यविषयग्राहकेषु श्रोत्रादिषु ।

**वहिर्द्वार** न० वहिःस्थं द्वारम् । तोरणे अमरः ।

**वहिर्मुख** त्रि० वहिः बाह्यविषये मुखं प्रवणता यस्य । बाह्यविषयासक्तमनस्के विषयासक्ते १जने २विमुखे च ।

**वहिस्** अव्य० वह–इसुन् । बाह्ये अमरः ।

**वहेड़क** पु०वह–अच् वहः एड़क इव इहत् काण्डो यस्य । विभीतकवृक्षे (वहेड़ा) राजनि० ।

**वह्नि** पु० वह–नि । १अग्नौ २चित्रकवृक्षे अमरः ३भल्ला-तके ४निम्बूके राजनि० । तन्त्रोक्ते ५रकारे च । "वर्गाद्यं वह्निसंस्थम्" इति श्यामास्तोत्रम् । वह्निभेदादिकं यथा

"जृम्भको दीपकश्चैव विभ्रमभ्रमशोभनाः । आव-सथ्याहवनीयौ दक्षिणाग्निस्तथैव च । अन्वाहार्य्यो गार्हपत्य इत्येते दश वह्नयः" । अन्यैरन्यथोक्तानि यथा "भ्राजको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा । धारको बन्धकश्चैव द्रावकाख्यश्च सप्तमः । व्यापकः पावकश्चैव श्लेष्मको दशमः स्मृतः" । शरीरस्थवह्नेः नामानि यथा "वह्नयो दोषदूष्येषु संलीना दश देहिनः" । दोष-दूष्याश्च यथा "वातपित्तकफा दोषाः दूष्याः स्युः सप्त-धातवः" शा० ति० । "स्मार्त्ताग्नयो यथा "गार्हपत्यो दक्षिणाग्निस्तथैवाहवनीयकः । एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः" वह्नि०पु० । तत्र निषिद्धकर्माणि यथा "नाशुद्धोऽग्निं परिचरेत् न देवान् कीर्त्तयेदृषीन् । न चाग्निं लङ्घयेद्धीमान् नोपदध्यादधः क्वचित् । न चैनं पादतः कुर्य्यात् मुखेन न धमेद्बुधः । अग्नौ न निःक्षि-पेदग्निं नाद्भिः प्रशमयेत्तथा । न वह्निं मुखनिश्वासै-र्ज्वालयेन्नाशुचिर्बुधः । स्वमग्निं नैव हस्तेन स्पृशेन्नाप्सु चिरं वसेत् । नापक्षिपेन्नोपधमेत् न स्पर्शेण च पाणिना । मुखेनाग्निं समुद्धीतं मुखादग्निरजायत" कूर्मपु०१५ अ० । अग्निवैकृत्यं तस्य शान्तिश्च यथा "अनग्निर्दीप्यते यत्र राष्ट्रे यस्य निरिन्धनः । न दीप्यते चेन्धनवान् स राष्ट्रः पीड्यते नृपैः । प्रज्वलेदप्सु मांसं वा तथार्द्रञ्चापि किञ्चन । प्रासाद तोरणद्वारं नृपवेश्म सुरालयम् । एतानि यत्र दह्यन्ते तत्र राज-भयं भवेत् । विद्युता वा प्रदह्यन्ते तत्रापि नृपते-र्भयम् । धूमश्चानग्निजो यत्र तत्र विद्यान्महद्भयम् । विनाग्निं विस्फुलिङ्गाश्च दृश्यन्ते यत्र कुत्रचित् । त्रिरात्रोपोषितस्तत्र पुरोधाः सुसमाहितः । समिद्भिः क्षीरवृक्षाणां सर्षपैश्च घृतेन च । दद्यात् सुवर्णञ्च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवञ्च । एवं कृते पाप-मुपैति नाशं यदग्निवैकृत्यभवं द्विजेन्द्र" । वह्निपु०१७५ अ० । इतद्दैवताके कृत्तिकानक्षत्रे ज्योतिषम् ।

**वह्निकरी** स्त्री वह्निं देहस्थवह्निं करोति उद्दीपयति कृ–ट ङीप् । १धातकीवृक्षे (धाइफुल) शब्द० । २वह्न्युद्दीपके त्रि० । [दाहागुरुणि राजनि० ।

**वह्निकाष्ठ** न० वह्नेर्दीप्यदाहायानुकूलं काष्ठम् शा० त० ।

**वह्निगन्ध** पु० वह्नौ दाहकाले गन्धो यस्य । यक्षधूपे शब्दच०

**वह्निगर्भ** पु० वह्निर्गर्भे यस्य । १वंशे २शमीवृक्षे स्त्री शब्दर०

**वह्निज्वाला** स्त्री वह्नेर्ज्वालेव पीडाकारकत्वात् । १धातकी-वृक्षे राजनि० इत० । २वह्निशिखायाम् ।

**वह्निदीपक** पु० वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप-णिच्-ण्वुल् वह्निरिव दीप्यति दीप–ण्वुल् वा । १कुसुम्भे शब्दर० । २अग्न्युद्दीपके त्रि० । ३अजमोदायाम् स्त्री राजनि० । [ङीप् । जटामांस्याम् रत्नमा० ।

**वह्निनी** स्त्री वह्निं तत्कान्तिं नयति नी–ड गौरा० ।

**वह्निपुष्पी** स्त्री वह्निरिव तापकं पुष्पं यस्याः ङीप् । धातकी-वृक्षे राजनि० ।

**वह्निभोग्य** न० इत० । घृते शब्दच० ।

ग्रामकुलादीनां क्षेपः पापेन योजनम् । द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते । भगिनीमातृसम्बन्ध-मुपपातकशंसनम् । पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः । अभक्ष्यापेयकथनं महापातकदूषणम् । पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनमिति ।" द्रव्यं विनेत्यत्र द्रव्यशब्दोऽभिधेयपरः । तेनोच्यमानार्थव्यति-रेकेणैव विधमभिधानं वाक्पारुष्यमित्यर्थः इति कल्प-तरौ । द्रव्यं विना द्रव्यवैशिष्ट्यं विनेति मदनरत्ने । अभिघट्टनं उत्पाटनम् । निष्ठुराक्रोशे दण्डमाह याज्ञवल्क्यः "सत्यासत्यान्यथास्तोत्रैन्यू॑नाङ्गेन्द्रिय रोगिणाम् । क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदशा-निति । अन्यथास्तोत्रैर्निन्दास्तुतिः । न्यूनाङ्गाः करा-दिरहिताः । न्यूनेन्द्रियाः नेत्रादिरहिताः । रोगिणः कुष्ठ्यादयः अर्द्धत्रयोदशान् अर्द्धाधिकद्वादशपणानि-त्यर्थः । एतत् सवर्णविषयम् । अतएव बृहस्पतिः "समजातिगुणानान्तु वाक्पारुष्ये परस्परम् । विनयो-विहितः शास्त्रे पणा अर्द्धत्रयोदशाः" इति । "विष्णुरपि "समवर्णाक्रोशे द्वादश पणान्दण्ड्य इति"। परस्परमिति शेषः । मनुनारदावपि "समवर्णे द्विजातीनां द्वादशैव व्यति-क्रमे । वादेष्ववचनीयेषु तदेव द्विगुणं भवेदिति" । शङ्ख-लिखितावपि "समवर्णव्यतिक्रमे द्वादशपणा यथारूप-विशिष्टाक्षेपेषु विशिष्टस्य चतुर्विंशतिरविशिष्टव्यतिक्रमे च विशिष्टस्य ततोऽर्द्धमिति । अत्र द्वादशवार्द्धद्वादशयो-रुत्कृष्टानुत्कृष्टत्वेन व्यवस्था । कात्यायनोऽपि "यो गुणान् कीर्त्तयेत् क्रोधान्निर्गुणे वा गुणसृताम् । अन्य-सं ज्ञातियोजी च वाग्दुष्टं तन्नरं विदुरिति" "नारदोऽपि "दुष्टस्यैव तु यो दोषान् कीर्त्तयेत् क्रोधकारणात् । अन्यायदेशवादी च वाग्दुष्टं तन्नरं विदुरिति" "अत्र क्रोधकारणादित्यनेन दुष्टपरित्यागार्थं दोषकीर्त्तने न दोष इति सूचितम् । अतएवोक्तं कात्यायनेन "यत्र त्वात्परि-हारार्थं पतितस्तेन कीर्त्तितः । वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेदिति" "वचनात् दोषकीर्त्तनात् । यत्रा-भियोगादौ पातित्यादिकं साधयेत्तत्रापि वचनाद्दोषो न स्यादिति यत्र विभावयेदित्यस्यार्थ उक्तः स्मृतिचन्द्रिका-याम् । अत्रापि दण्डपारुष्यन्यायेन युगपत्प्रवृत्तयो-र्दण्डतुल्यत्वं अयुगपत्प्रवृत्तयोः पूर्वप्रवृत्तस्य दण्डाधि-क्यमिति द्रष्टव्यम् । जातिगुणकृते विशेषे दण्डवैषम्य-माह बृहस्पतिः "समानयोः समो दण्डो न्यूनस्य द्विगु-णोदमः । "उत्तमस्याधिकः प्रोक्तो वाक्पारुष्ये परस्पर-मिति" । हीनस्योत्तमाक्षेपे द्विगुणः उत्तमस्य हीना-क्षेपेऽर्द्धपरिमितो दण्ड इत्यर्थः । याज्ञवल्क्योऽपि "अर्द्धोऽधमेषु द्विगुणः परस्त्रीषूत्तमेषु च । दण्डप्रण-यनं कार्यं वर्णजात्युत्तराधरैरिति" "अर्द्धः सार्द्धद्वाद-शपणात्मक इत्यर्थः पूर्ववाक्ये "पञ्चविंशतिको दम" इति पञ्चविंशतेः प्रकृतत्वात् । वर्णा ब्राह्मणादयः । जातयो मूर्द्धावसिक्तादयः । ते च ते उत्तराधराश्च वर्णजात्यु-त्तराधरास्तैरन्योन्याक्षेपे क्रियमाणे दण्डस्य प्रणयनम् ऊहनीयं ज्ञातव्यम् । उत्तराधरभावमालोच्य दण्डः कल्पनीय इत्यर्थः । तमेव कल्पनीयं दण्डं प्रदर्शयति मनुः "शतं ब्राह्मणमाक्रुश्य क्षत्त्रियो दण्डमर्हति । वैश्योऽप्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति । विप्रः पञ्चा-शतं दण्ड्यः क्षत्त्रियस्याभिशंसने । वैश्ये स्यादर्द्धपञ्चा-शच्छूद्रे द्वादशको दम इति ।" बृहस्पतिरपि क्षिपन् विप्रादिकं दद्यात् पञ्चाशत्पणिकं दममिति" । शङ्ख-लिखितावपि "आक्रोशे ब्राह्मणस्य क्षत्त्रियः पणशतं दण्ड्यः, शतार्द्धं वैश्यस्य पञ्चविंशतिं शूद्रस्येति"। बृह-स्पतिरपि ।"विप्रः शतार्द्धं दण्ड्यस्तु क्षत्त्रियस्याभिशंसने । विशस्तथार्द्धं पञ्चाशच्छूद्रस्यार्द्धत्रयोदश । शूद्रस्या-यमुदितो विनयोऽनपराधिनः । गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात् । वैश्यस्तु क्षत्त्रिया-क्रोशे दण्डनीयः शतम्भवेत् । तदर्द्धं क्षत्त्रियो वैश्यं क्षिपन् विनयमर्हति । शूद्राक्रोशे क्षत्त्रियस्य पञ्चविंश-तिको दमः । वैश्यस्य चैतद्द्विगुणः शास्त्रविद्भिरुदा-हृतः । वैश्यमाक्षारयन् शूद्रोदाप्यः स्यात् प्रथमं दमम् । क्षत्त्रियं मध्यमञ्चैव विप्रमुत्तमसाहसमिति ।" जिह्वाच्छेदनरूपोऽप्युत्तमसाहसो द्रष्टव्यः । तथा च स एव "धर्मोपदेशकर्त्ता च वेदादाहरणान्वितः । आक्रोशकस्तु विप्राणां जिह्वाच्छेदेन दण्ड्यते" इति । शूद्र इत्यनुषङ्गः । आपस्तम्बोऽपि "जिह्वाच्छेदनं शूद्र-स्यार्यं धार्मिकमाक्रोशतः" इति । गौतमोऽपि "शूद्रो द्विजातीनभिसन्धायाभिहत्य च वाग्दण्डपारुष्याभ्याम-ङ्गमोच्यो येनोपहन्यादिति" । अभिसन्धाय बुद्धिपूर्वं वाचातिक्रम्य अभिहत्य उपेत्य दण्डेन ताडयित्वा अङ्ग-मोच्यो येनाङ्गेनाभिहन्यते तेन वियोजनीय इत्यर्थः । गुर्व्वाक्रोशे त्वाहतुः शङ्खलिखितौ "तथाऽधिकृतान् वि-प्रान् गुरूंश्च निर्भर्त्सयन् पतनं ताडनं वा गोमयानुलेपनं

शरीरोत्कर्षं दर्पहरणं वा दण्डो भेति । दण्डः कार्षापणशतरूपः । अतएव विष्णुः "गुरूनाक्षारयन् कार्षापणशतमिति" । पुत्रादिभिर्मात्रादीनामाक्रोशे दण्डमाह मनुः "मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् । आक्षारयन् शतन्दाप्यः पन्थानञ्चाददद्गुरोरिति" । भ्रातरं ज्येष्ठभ्रातरम् । एतच्च सापराधेषु मात्रादिषु निरपराधायां जायायामिति मिताक्षरायामभाणि । श्वश्र्वाद्यधिक्षेपे दण्डमाह वृहस्पतिः "क्षिपन् श्वश्र्वादिकं दद्यात् पञ्चाशत्पणिकं दममिति ।" वाह्वादिच्छेदन निष्ठुरभाषाभिभाषणे दण्डमाह याज्ञवल्क्यः "बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः । शत्यस्तदर्द्धिकः पादनासाकर्णकरादिष्विति ।" बाह्वादिविनाशे वाचिके करिष्यामीति वाचा प्रतिपादितं शत्यः शतपरिमितो दण्डः । पादादिभङ्गं करिष्यामीत्याक्षेपे पञ्चाशत्परिमितो दण्ड इत्यर्थः । एवंवादिनोऽशक्तस्य दमयथा दण्डनीया इत्याह स एव "अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दशेति ।" यः पुनः शक्तोऽशक्तस्य बाह्वादिभङ्गाक्षेपं करोति न केवलं स दण्ड्यः किन्तु अशक्तक्षेमार्थं प्रतिभुवमपि दापनीय इत्याह स एव "तथा शक्तः प्रतिभुवन्दाप्यः क्षेमाय तस्य त्विति" । अश्लीलभाषणे दण्डमाह स एव "अभिगन्तास्मि भगिनीं मातरं वा तवेति ह । शपन्तन्दापयेद्राजा पञ्चविंशतिकं दममिति ।" तीव्राक्रोशे दण्डमाह स एव "पतनीय कृते क्षेपे दण्डमध्यमसाहसम् । उपपातकयुक्ते तु दाप्यः प्रथमसाहसमिति ।" पतनीयैः पातित्यहेतुभिर्ब्रह्महत्यादिभिः । उपपातकानि गोवधादीनि । मनुरपि "ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्य्यो विजानता । ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः । विट्शूद्रयोस्त्वेवमेव स्वजातिं प्रति तत्त्वतः । छेदवर्ज्जं प्रणयनं दण्डस्येति विनिश्चयः । पापोपपातककारो महापातकशंसकाः । आद्यमध्योत्तमान्दण्डान्दद्युस्ते यथाक्रममिति ।" विष्णुरपि "परस्परपतनीये क्षेपे कृते तूत्तमसाहसं उपपातकयुक्तन्तु मध्यमम् त्रैविद्यवृद्धानां क्षेपे जातिपूगानाञ्च ग्रामदेशयोः प्रथममिति" । देशाद्याक्रोशे दण्डमाह वृहस्पतिः "देशादिकं क्षिपन्दाप्यः पणानर्द्धत्रयोदश । पापेन योजयन् दर्पाद्दाप्यः प्रथमसाहसम् । एष दण्डः समाख्यातः पुरुषापेक्षया मया । समन्यूनाधिकत्वेन कल्पनीयो मनीषिभिरिति ।" याज्ञवल्क्योऽपि "मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोरिति ।" राज्ञ आक्रोशे दण्डमाह नारदः "अवक्रुश्य च राजानं वर्त्मनि स्वे व्यवस्थितम् । जिह्वाच्छेदाद्भवेच्छुद्धिः सर्वस्वहरणेन वेति ।" याज्ञवल्क्योऽपि "राज्ञोऽनिष्टप्रवक्तारन्तस्यैवाक्रोशकन्तथा । तन्मन्त्रस्य च भेत्तारञ्छित्त्वा जिह्वाम्प्रवासयेदिति ।" सत्यदोषाभिधानेऽपि वाक्पारुष्यदण्डोऽस्त्येव तथा च नारदः "पतितं पतितेत्युक्त्वा तथा चौरेति वा पुनः । वचनात्तुल्यदोषः स्यान्मिथ्याद्विर्दोषतां व्रजेदिति ।" मनुनारदावपि "काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम् । तथ्येनापि ब्रुवन्दाप्यो दण्डङ्कार्षापणावरमिति ।" विष्णुरपि "काणखञ्जादीनान्तथ्यवाद्यपि कार्षापणद्वयमिति ।" एतच्च दुर्वृत्तविषयमिति माधवीये विद्यारण्यश्रीपादैरभ्यधायि । मिथ्यावदनशीलानां दण्डमाह कात्यायनः "अनृताख्यानशीलानाञ्जिह्वाच्छेदो विशोधनमिति ।" हारीतोऽपि "मिथ्याभाषिणां मेलकानाञ्च राजा जिह्वाच्छिन्द्यादुद्दण्डयेद्वेति" मेलको भण्डकः । कस्यचिदाक्पारुष्यकृतोऽर्द्धदण्डमाहोशनाः "मोहात् प्रमादात्संहर्षात् प्रीत्या वोक्तं मयेति यः । नाहमेवं पुनर्वक्ष्ये दण्डार्द्धन्तस्य कल्पयेदिति ।"

**वाक्य** न० वच–ण्यत् चस्य कः । "वाक्यं स्याद् योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः" इत्युक्ते १पदसंघे सा०द० । २स्वार्थबोधसमाप्ते पदसमुदाये वैयाकरणाः । [अवाङ्क्षीत् ।

**वाङ्क्ष** सृ,हायां भ्वा० पर० सक० सेट् इदित् । वाङ्क्षति

**वागीश** पु० वाचामीशः । १वृहस्पतौ "वागीशाद्याः सुमनस" इति न्यायमाला । २सरस्वत्यां स्त्री "वागीशा हृदये यस्य" इति भाग०टीकोपक्रमे श्रीधरः । ३पुष्पवर्षे च

**वागीश्वर** पु० ६त० । १वृहस्पतौ २गुरौ च ३तत्पत्न्यां स्त्री ङीप् "वागीश्वरीस्तत्पत्नां फुल्लेन्दीवरलोचनाम् । वागीश्वरेण संयुक्ताम्" इति तन्त्रम् । ४सरस्वत्यां स्त्री ङीप् ५मञ्जुघोषे पु० त्रिका० । [सोमराजप्राम् अमरः ।

**वागुजी** स्त्री वाचा गुज्यते व्यज्यते गुज–क गौरा० ङीप् ।

**वागुरा** स्त्री वा–हिंसने उरच् गतु च । मृगबन्धे मृगबन्धनपाशादौ अमरः । [वध्य । व्याधे ।

**वागुरावृत्ति** पु० वागुरा मृगबन्धनपाशादिरेव वृत्तिर्जीविका

**वागुरिक** पु० वागुरा प्रहरणं यस्य वागुरयाचरति वा ठक् । व्याधे अमरः ।

**वाग्गुद** पुं स्त्री० पक्षिभेदे त्रिका० गुडूहरणे तज्जातिमक्षि

मनुनोक्ता "गोधा गां वागगुदो गुडम्" इत्येति शेषः

**वाग्गुलि** पु० राज्ञां ताम्बूलदातरि रत्नमाला।

**वागडम्बर** पु० ६त०। १वाक्यस्तोमे २बहुलवाक्ये च।

**वाग्दण्ड** पु० वाचो वागिन्द्रियस्य दण्डः संयमनम्। १मित-२भाषणे २वाक्यसंयमे च।

**वाग्दत्ता** स्त्री वाचा दत्ता। विधिना वाक्यमात्रेण दातृकृतसङ्कल्पायां कन्यायाम् "वाचा दत्ता मनोदत्तेति" उद्वा०त०

**वाग्दरिद्र** त्रि० ६त०। मितभाषिणि शब्दमा०।

**वाग्दान** न० ६त०। कन्याया वाङ्मात्रेण दाने "ततो वाग्दानपर्य्यन्तं यावदेकाहमेव च" शु०त०।

**वाग्दुष्ट** त्रि० वाचा दुर्वचनेन दुष्टः। शुद्धेऽपि वस्तुन्यशुद्धरूपतया कथनेन दूषिते। "वाग्दुष्टं भावदुष्टं च वर्जयेदिति" स्मृतिः।

**वाग्देवता** स्त्री वाचां देवता। सरस्वत्यां "वाग्देवता चरितचित्रितचित्तसद्मा" जयदेवः। वाग्देव्यादयोऽप्यत्र।

**वाग्मिन्** त्रि० वाच्+अस्त्यर्थे ग्मिनि चस्य कः तस्य लोपः। १प्रशस्तवाक्यवक्तरि अमरः। २वृहस्पतौ पु० मेदि०। ४विष्णौ पु० विष्णुस०। [२निर्वेदे ३कल्ये अजयः।

**वाग्य** त्रि० वाचं यच्छति यम–ड। १वाग्दरिद्रे शब्दमा०

**वाग्यत** त्रि० वाक् वागिन्द्रियव्यापारो यता येन। मौनधारिणि मुनौ अमरः "वाग्यतस्त्रिषवनं चरेत्" स्मृतिः।

**वाग्यम** त्रि० वाचं तद्व्यापारं यच्छति यम–अच्। मुनौ अमरः।

**वाग्मती** स्त्री "हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाङ्मती नदी" इत्युक्ते नदीभेदे। सा च मिथिलादेशसन्निकृष्टतया वहति।

**वाङ्मय** त्रि० वाक्स्वरूपम् मयट् चस्य कः तस्य ङः। १वाक्यस्वरूपे शास्त्रे। २वाक्यजनिते पापभेदे च। "पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्" मनुः। तथा "परुषवचनमपवादः पैशुन्यमनृतं वृथालापो निष्ठुरवचनम् वाङ्मयानि षट्। परेषां देशजातिकुलविद्याशिल्परूपवृत्ताचारपरिच्छदशरीरकर्मजीविनां प्रत्यक्षदोषवचनं परुषम्। "यस्मात् क्रोधसन्तापत्रासंजननं वचः। परुषं तच्च विज्ञेयं यस्मान्यच्च तथाविधम्। चक्षुष्मानिति लुप्ताक्षं चाण्डालं ब्राह्मणेति च। प्रशंसानिन्दनं द्वेषात् परुषाच्च विशिष्यते"। तेषामेव परुषवचनानामपरोक्षमुदाहरणम् अपवादः। गुरुतल्पपतितब्रह्मघ्नादिमित्रसकाशे कर्णोपघातार्थं दोषोपाख्यानं पैशुन्यम्। अनृतं द्विविधं असत्यमसंवादश्चेति "देशराष्ट्रप्रसङ्गाच्च परार्थपरिजल्पनात्। नर्महासप्रसङ्गाच्च भाषणं व्यर्थभाषणम्। गुह्याङ्गामेध्यसंज्ञानां भाषणं निष्ठुरं विदुः। यदन्यद्वा वचो नीचस्त्रीपुंसोर्मिथुनाश्रयम्। इत्येवं षड्विकल्पस्य दुष्टवाक्यस्य भाषणात्। इह चामुत्र च क्रूरमनर्थं प्रतिपद्यते"। प्रशंसयानिन्दनं प्रशंसानिन्दनम्। अत्र चतुर्विधषड्विधयोरविरोधः। असत्यासमत्वभेदानादरेण पारुष्यापवादयोरैक्यात् निष्ठुरस्य परुषान्तर्भावाच्च। असम्बद्धप्रलापव्यर्थभाषणयोः पर्य्यायत्वाच्चार्थान्तरम्" ति०त०।

**वाङ्मुख** न० ६त० उपन्यासे प्रथमवाक्योपक्रमे अमरः।

**वाचंयम** त्रि० वाचं यच्छति वाचा+यम-ख मुम् ह्रस्वश्च। १मितभाषिणि। २मौनावलम्बिनि मुनौ पु० अमरः।

**वाच** पुंस्त्री० वच–णिच्–अच्। (वाचा) इति ख्याते मत्स्यभेदे राजवल्लभः स्त्रियां ङीष्।

**वाचक** त्रि० वक्ति अभिधावृत्त्या बोधयति वच–ण्वुल्। "साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः" इत्युक्ते १शब्दभेदे २कथके त्रि०। वाचयति वच-णिच्-ण्वुल्। ३पुराणादिपाठके पु० "वाचकः पूजितो येनेति" पुरा० "ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्। श्रुत्वान्यवर्णजाद्राजन्! वाचकान्नरकं व्रजेत्"। तथा "देवार्चामग्रतः कृत्वा ब्राह्मणानां विशेषतः। पवित्रे शिथिलं कुर्य्याद्वाचकः कुरुनन्दन!। पुनर्बध्नीत तत्सूत्रं न मुक्तां धारयेत् क्वचित्। हिरण्यं रजतं गाश्च तथा कांस्योपदोहनाः। दत्त्वा तु वाचकायेह श्रुतस्याप्नोति तत् फलम्"। कांस्योपदोहनाः कांस्यक्रोडाः "वाचकः पूजितो येन प्रसन्नास्तस्य देवताः"। तथा "ज्ञात्वा पर्वसमाप्तिञ्च पूजयेद्वाचकं बुधः। आत्मानमपि विक्रीय य इच्छेत् सुफलं फलम्"। तथा "विस्पष्टमद्रुतं शान्तं स्पष्टाक्षरपदं तथा। कलस्वरसमायुक्तं रसभावसमन्वितम्। बुध्यमानः सदात्वर्थं ग्रन्थार्थं कृत्स्नशो नृप!। ब्राह्मणादिषु सर्वेषु ग्रन्थार्थं चार्पयेन्नृप!। य एवं वाचयेद् ब्रह्मन् स विप्रो व्यास उच्यते"। तथा "सप्तस्वरसमायुक्तं काले काले विशाम्पते!। प्रदर्शयन् रसान् सर्वान् वाचयेद् वाचको नृप" ति०त०।

वाचकलक्षणादि हेमा० दा० नन्दिपु० उक्तं यथा

"वाचको ब्राह्मणः प्राज्ञः श्रुतशास्त्रो महामनाः। अभ्यस्ताक्षरविन्यासो कृतशास्त्रविशारदः। शब्दार्थवित्

प्रगल्भश्च विनीतो मेधया युतः। नीतिज्ञो वाक्यशुद्धाढ्यः स्वरेणाखिलभाषकः" इत्युपक्रमे एवंविधानतो वाच्यं वाचकेन विपश्चिता। तपःशमात्मकं सर्वं स्वर्गादिफलसाधकम्। शनैर्विबोध्य वै वाच्यमध्यात्मादि च यद्भवेत्। क्रुद्धोक्तियुद्धसंक्षोभं धारावर्त्तेन (वेगेन) वाचयेत्। सरागं ललितैर्वाक्यैर्वाचयेत् हास्यकर्मे। नानावृत्तानुरूपेण लालित्येन च वाचयेत्। सर्गाध्याये समाप्ते च कथापर्य्यन्त एव वा। प्रशस्तशब्दसंयोगे कुर्य्याद्दिति विरामणम्। समाप्तौ वाचको भीष्म! ब्रूयादेवं विचक्षणः। अवधार्य जगच्छान्तिमन्ते शान्त्युदकं सृजेत्। सुश्रुतं सुश्रुतं ब्रूयादस्तु व्याख्यातमित्यदः। लोकः प्रवर्त्ततां धर्मे राजा चास्तु सदा जयी। धर्मवान् धनसम्पन्नो गुरुत्वात् निरामयः। इति प्रोच्य यथाऽऽसनं गन्तव्यं च विभावतः।

**वाचन** न०वच-णिच्-स्वार्थे वा णिच्-ल्युट्। १पठने २कथने च युच्। पठने स्त्री। [पापादौ।

**वाचनिक** त्रि० वचनेन निर्वृत्तम् ठक्। वाक्यनिष्पादिते

**वाचस्पति** पु० ६त०अलुक्समा०। १बृहस्पतौ। २पुष्यनक्षत्रे च

**वाच(चा)** स्त्री उच्यतेऽसौ अनया वा वच-क्विप् नि० वा टाप्। १वाक्ये अमरः २वागिन्द्रिये च।

**वाचाट** त्रि० वाक्+कुत्सायां वाच्शब्दोऽस्त्यर्थे आटच् भत्वात् न कः। कुत्सितबहुभाषिणि अमरः। आलच्। वाचालोऽप्यत्र।

**वाचिक** त्रि० वाचा कृतम् वाच्+ठक् भत्वात् न कः। १वाक्यनिष्पादिते पापादौ वाङ्मयशब्दे दृश्यम्। २वाक्यारम्भभेदे। "आलापश्च विलापश्च संलापश्च प्रलापकः। अनुलापोऽपलापश्च सन्देशश्चातिदेशकः। अपदेशोपदेशौ च निर्देशो व्यपदेशकः। कीर्त्तिता वचनारम्भा द्वादशामी मनीषिभिः" उज्ज्वलमणिः। [नैर्मल्ये च।

**वाचोयुक्ति** स्त्री ६त० अलुक्स०। १वाचादर्शितयुक्तौ २वाक्य-

**वाच्य** न० वच–भावे ण्यत् न कः। १दूषणे २प्रतिपादने धरणिः। ३कथने च। कर्मणि ण्यत्। ४दूष्ये ५प्रतिपाद्ये अभिधया बोध्यार्थे च सा० द०। "नचाल्पत्वबहुत्वाभ्यां प्रयोगाणां विशिष्यते। वाच्यवाचकभावोऽयमश्वपादादिशब्दवत्। विभीतकेऽप्यक्षशब्दो यद्यप्यल्पैः प्रयुज्यते। तथापि वाचकस्तस्य जायते शकटाक्षवत्" म०त०भट्टपा०। [भावे–अ। वाञ्छा।

**वाञ्छ** कांक्षे भ्वा०पर०सक०सेट् इदित्। वाञ्छति अवाञ्छीत्।

**वाज** न० वज–घञ्। १पक्षे २घृते ३जले ४यज्ञे च मेदि०। ५शरपक्षे अमरः ६वेगे पु० ७निस्वने ८पक्षे पु० मेदि० १०मुनौ पु०विश्वः। [कात्या०श्रौ०तत्प्रकारादि दृश्यम्।

**वाजपेय** पुंन० वाजमन्नं घृतं वा पेयमत्र। यागभेदे

**वाजपेयिन्** पु० वाजपेय+अस्त्यर्थे इनि। १वाजपेययागकर्त्तरि उपचारात् २तद्वंश्ये च।

**वाजसन** पु० वाजमन्नं सनोति ददाति सन–अच्। १विष्णौ विष्णुस०। २शिवे भा० आनु० १७अ०।

**वाजसनि** पु० वाजस्य अन्नस्य सनिर्दानं येन। सूर्य्ये "आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इत्युक्तेः तस्य वृष्टिद्वारा अन्नदातृत्वात् तथात्वम्।

**वाजसनेय** पु० वाजसनेः सूर्य्यस्य छात्रः ढक्। याज्ञवल्क्ये "आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते" बृहदारण्य० श्रुतिः। अस्यार्थः। आदित्यादधीतान्यादित्यानि शुक्लानि शुद्धानि। इयमत्र आख्यायिका। व्यासशिष्यो वैशम्पायनो याज्ञवल्क्यादिभ्यः स्वशिष्येभ्यो यजुर्वेदमध्यापयत्। तत्र दैवात् केनापि हेतुना क्रुद्धो वैशम्पायनो याज्ञवल्क्यं प्रत्युवाच मदधीतं त्यजेति। स योगसामर्थ्यात् मूर्त्तां विद्यां विधायोद्ववाम। वान्तानि यजूंषि गृह्णीतेति गुरुणा अन्ये वैशम्पायनशिष्यास्तित्तिरयो भूत्वा यजूंष्यभक्षन्। तानि यजूंषि बुद्धिमालिन्यात् कृष्णानि जातानि। ततो दुःखितो याज्ञवल्क्यः सूर्य्यमाराध्यान्यानि शुक्लानि यजूंषि प्राप्तवान्। तानि च जाबालगौधेयकाण्वमाध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्यः पाठितवान्" वेददी०। "एवं स्तुतः स भगवान् वाजिरूपधरो रविः। यजूंष्ययातयामानि मुनयेऽदात् प्रसादतः। यजुर्भिरकरोच्छाखा दशपञ्चशतैर्विभुः। जगृहुर्वाजसन्यस्ताः। काण्वमाध्यन्दिनादयः" भाग० १२।६।६७ श्लो०।

**वाजसनेयिन्** पु० ब०व०। वाजसनेयेन प्रोक्तमधीयते इनि। यजुर्वेदशाखाभेदाध्यायिषु विप्रादिषु। २तदुक्तरीत्या कर्माहेषु शूद्रेषु च "शूद्रा वाजसनेयिनः" सं०मा०त०।

**वाजिदन्त** पु०वाजिनां दन्त इव पुष्पमस्य। १वासके रत्नमा०। कप्। वाजिदन्तक तत्रैव।

**वाजिन्** पु० वाजः वेगः पक्षो वा अस्त्यस्य इनि। १घोटके २वाणे ३वासके च शब्दर०। ४वेगवति त्रि० स्त्रियां ङीप्। सा च ५अश्वगन्धायाम् ६पाठक्याम् स्त्री

राजनि० । ७देवभेदे पु० । वाजिनशब्दे दृश्यम् ।

**वाजिन** पु० वाजिभ्यो देयम् अण् । आमिक्षानिःसृतजले "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति श्रुतिः ।

**वाजिपृष्ठ** पु० वाजिन इव पृष्ठमस्य । अम्लानवृक्षे शब्दच० ।

**वाजिभक्ष** पु० भक्ष्यते भक्ष-कर्मणि घञ् ६त० । चणके राजनि० । [मुद्गे राजनि० ।

**वाजिभोजन** पु० वाजिभिर्भुज्यते भुज-कर्मणि ल्युट् ।

**वाजीकरण** न० अवाजी वाजीव क्रियतेऽनेन वाजिन्+च्वि कृ-ल्युट् । "यद्द्रव्यं पुरुषं कुर्य्यात् वाजिवत् सुरतक्षमम् । तद्वाजीकरणं ख्यातम्" इत्युक्ते वीर्य्यवृद्धिकरणे औषधभेदे । सुश्रुते दृश्यम् ।

**वाञ्छा** स्त्री वाछि-अ । इच्छायाम् इष्टसाधनताधीजन्येऽभीष्टविषये चित्तवृत्तिभेदे अमरः ।

**वाट** पु० वट-घञ् । १पथि २वृतिस्थाने च मेदि०गौरा०ङीष् ४वास्तुभूमौ ५कुट्यां स्त्री मेदि० । ६वाट्यालके शब्दर० ।

**वाटिका** स्त्री वट-ण्वुल् । १वास्तुभूमौ (वेड़ियाला) २क्षुपे ३हिङ्गुपत्र्यां च शब्दच० । [क्षुपभेदे रत्नमा० ।

**वाट्या** स्त्री वाटौ हिता तत्र साधुर्वा यत् । (वेड़ियाला)

**वाट्याल** पु० वाटीमलति भूषयति अल-अण् । (वेड़ियाला) क्षुपभेदे शब्दर० गौरा० ङीष् तत्रैव स्त्री । ण्वुल् । वाट्यालक तत्रार्थे पु० शब्दर० । [अर्शाडिष्ट ।

**वाड्** आप्लावे भ्वा० आ० अक०सेट् ऋदित् चङि न ह्रस्वः । वाडते

**वाढ़** न० वह-क्त नि० । १अतिशये २तद्युक्ते त्रि० अमरः । इष्ठो० साधिष्ठः । वाढम् ३प्रतिज्ञायां ४स्वीकारे च अव्य० अमरः ।

**वाण** पु० वण-घञ् । १शरे अमरः २गवां स्तने ३दैत्यभेदे ४केवले मेदि० ५वह्नौ त्रिका० ६काण्डावयवे विश्वः ७भद्रमुञ्जे राजनि० कादम्बरीग्रन्थकारके दकविभेदे च "पञ्चवाणस्तु वाणः" इति प्रसन्नराघवम् ।८नीलझिण्ट्यां पु स्त्री० अमरः । अस्त्रोष्ट्रादित्वमित्यन्ये । [शब्दर० ।

**वाणपुर** न० ६त० । शोणितपुरे (कोट्टरी) पुराख्ये पुरभेदे

**वाणवार** पु० वाणं परक्षिप्तशरं वारयति वृ० वृ-अण् । योधादेश्चोलाकारे सन्नाहे कवचे शब्दच० ।

**वाणहन्** पु० वाणं तन्नामासुरं हतवान् हन-ताडने भूते क्विप् । श्रीकृष्णे वाणजिदादयोऽप्यत्र ।

**वाणि** स्त्री वण-इण् वा ङीप् । १वयने अमरः २वयनदण्डे ३वेतनि हेमच० । ५वाक्ये ६तद्देवतायाञ्च अमरः ङीप् ।

**वाणिनी** स्त्री वण-णिनि ङीप् । १नर्त्तक्यां २छेके ३मत्तस्त्रियाम् हेमच० । वाण+अस्त्यर्थे इनि । ४शरयुते त्रि० ।

**वात** गतौ सेवायां सुखीकरणे च सक० अद० चु०उभ०सेट् । वातयति ते अववातत् त ।

**वात** पु० वा-क्त । स्पर्शमात्रविशेषगुणके भूतभेदे १पवने अमरः । अनिलशब्दे १६४पृ० दृश्यम् । २देहस्थे धातुभेदे च । ३गन्तरि त्रि० । जारे ५दुष्टनायके च "प्रभातवाता हतीति" भट्टिः । ६वातजन्ये रोगभेदे भावप्र० यथा

"कषायकटुतिक्तकप्रमितरूक्षलघ्वन्नतः पुरःपवनजागरप्रतरणाभिघातश्रमैः । हिमादनशनात् तथा निधुवनाच्च धातुक्षयात् मलादिरयधारणात् मदनशोकचिन्ताभयैः । अतिस्रुतजमोक्षणात् गदकृतातिमांसक्षयादतीव वमनात् स्रुणामतिविरेचनादामतः । पयोदसमये दिनक्षणदयोस्तृतीयांशयोर्जरामतिगतेऽशिते शिशिरसंज्ञकालेऽपि च । देहे स्रोतांसि रिक्तानि पूरयित्वाऽनिलो बली । करोति विविधान् रोगान् सर्वाङ्गैकाङ्गसंश्रयान्" । प्रमितत्वात्र वैपरीत्ये प्रापसर्गस्तेन अपरिमितमित्यर्थः । प्रकर्षेण मितमत्यल्पं वा लघ्वन्नम् अतिपुराणं शाल्यादि । कतिचिदन्नानि नवान्यपि वातलानि यत आह गुणरत्नमालायाम् "नीवारस्त्रिपुटः सतीनचणकः श्यामाकमुद्गाढ़कीनिष्पावाश्च मकुष्टकश्च वरटामङ्गल्यकः कोद्रवः" । एते वातकरा इति शेषः । नीवारः प्रसाधिका (चीना) इति लोके । त्रिपुटः (खसारी) । सतीनः कलायः । निष्पावो राजमाषः । (वरवटी) इति लोके । मकुष्टकः (नाढा) इति लोके । वरटा वरटिका (वररै) इति लोके । मङ्गल्यकः (मसुरी) इति लोके । पुरःपवनः प्राग्वातः, आमतः आमेन मार्गावरणात् । यत उक्तम् वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन चेति" । पयोदसमये वर्षासु । जरामतिगतेऽशिते भुक्तेऽजीर्णताकृते । देहे स्रोतांसीत्यादिना संप्राप्तिरुक्ता । कषायादिभिर्हेतुभिर्वर्षादौ समये हेतुभते बली अनिलः प्रवृद्धो वायुः करोति विविधान् रोगान् । ते रोगाः कथ्यन्ते "शिरोग्रहोऽलसेऽत्वं जृम्भात्यर्थं हनुग्रहः । जिह्वास्तम्भो गद्गदत्वं मिन्मिनत्वञ्च मूकता । वाचालता प्रलापश्च रसानामनभिज्ञता । बाधिर्य्यं "कर्णनादश्च श्रवणाक्षस्य" तथार्द्दितम् । मन्यास्तम्भोऽत्र मथितो बाहुशोषोपबाहुकः । अर्दिता चैव विश्वाची अङ्गंशात उदीरितः ।

आध्मानञ्च प्रत्याध्मानं वाताष्ठीला प्रत्यष्ठीला ।"तूणी च प्रतितूणी च वह्निवैषम्यमेव च । आटोपः पार्श्वशूलञ्च त्रिकशूलं तथैव च । मुहुश्च मूत्रलं मूत्रनिग्रहो मलगाढता । पुरीषस्याप्रवृत्तिश्च ष्टम्भसी च ततः परम् । कलायखञ्जता चापि खञ्जता पङ्गुता तथा । क्रोष्टुशीर्षक खल्ली च वातकण्टक एव च । पादहर्षो पाददाह आक्षेपो दण्डकाभिधः । वातपित्तकृताक्षेपस्तथा दण्डापतानकः । अभिघातकृताक्षेप आयामो द्विविधः स्मृतः । आन्तरश्च तथा बाह्यश्चो धनुर्वातश्च कुब्जकः । अपतन्त्रोपतानश्च पक्षाघातोऽखिलाङ्गकः । कम्पस्तम्भो व्यथातोदो भेदश्च स्फुरणं तथा । रौक्ष्यं कार्श्यञ्च कार्ष्ण्यञ्च शैत्यं लोम्नाञ्च हर्षणम् । अङ्गमर्दोऽङ्गविभ्रंशः शिरासङ्कोच एव च । अङ्गशोषश्च भीरुत्वं मोहश्चञ्चलचित्तता । निद्रानाशः स्वेदनाशो बलहानिस्तथैव च । शुक्रक्षयो रजोनाशो गर्भनाशः परिश्रमः । एत एवाशीतिसंख्यारोगा योगेन रूढितः । वातव्याधीतिनामानो सुनिभिः परिकीर्त्तिताः" । एत एव शिरोग्रहादय एव । योगेन वातेन वाताद्व्याधिर्वातव्याधिरिति निरुक्त्या तदा वातज्वरादिष्वपि प्रसङ्गः स्यादत आह रूढितः प्रसिद्धितः शिरोग्रहादयोऽशीतिरेव वातव्याधिसंज्ञाः प्रसिद्धा न तु वातज्वरादयः" । तल्लक्षणादिकं तत्र दृश्यम् ।

**वातक** पु॰ वात इव चञ्चलः इवार्थे कन् । १अशनपर्ण्याम् स्वार्थे क । २जारे च ।

**वातकर्म्मन्** न॰ वातानां कर्म । अपानेन मरुत्त्यागे पर्द्दने ।

**वातकिन्** त्रि॰ वातोऽस्यास्य इनि कुक् च । वातरोगयुक्ते अमरः स्त्रियां ङीप् ।

**वातकेतु** पु॰ वातस्य केतुरिव । धूलौ रजसि त्रिका॰ ।

**वातगुल्म** पु॰ वातेन गुल्म इव । १वात्यायां त्रिका॰ । २वातनिमित्ते गुल्मरोगभेदे गुल्मशब्दे २६२६ पृ॰ दृश्यम् ।

**वातघ्नी** स्त्री वातं रोगभेदं हन्ति-हन-टक् ङीप् । १शालपर्ण्याम् (शालपानि) २अश्वगन्धायां ३शिमुडीक्षुपे च राजनि॰ ।

**वातचक्र** न॰ वृ॰स॰ २७अ॰उक्ते पूर्वादिवातानां कालभेदेन शुभाशुभसूचके वातभेदे

"पूर्वः पूर्वसमुद्रवीचिशिखरप्रस्फालनाघूर्णितश्चन्द्रार्कांशुसटाभिघातकलितो वायुर्यदाकाशतः । नैकान्तस्थितनीलमेघपटलां शारद्यसंवर्द्धितां आसन्नोत्कटसस्यमण्डिततलां विद्यात्तदा मेदिनीम् । यदाग्नेयो वायुर्मलयशिखरास्फालनपटुः प्लवत्यस्मिन्योगे भगवति पतङ्गे प्रवसति । तदा नित्योद्दीप्ता ज्वलनशिखरालिङ्गिततला खगात्योष्णोच्छ्वासैर्वमति वसुधा भस्मनिकरम् । तालीपत्रलताविताननतरुभिः शाखामृगान्नर्तयन् योगेऽस्मिन् प्लवति ध्वननृत्युपरुषो वायुर्यदा दक्षिणः । सर्वोद्योगवशुन्नताश्च गजवत्तालाङ्कुशैर्घट्टिताः कीनाशा इव मन्दवारिकणिकान्मुञ्चन्ति मेघास्तदा । स्वच्छैलालवलीलवङ्गनिचयान् व्याघूर्णयन् सागरे भानोरस्तमये प्लवन्विरतो वायुर्यदा नैर्ऋतः । क्षुन्नृष्णान्तमानुषास्थिशकलप्रस्तारभारस्तदा मत्ता प्रेतवधूरिवोग्रचपला भूमिस्तदा लक्ष्यते । यदा रेणूत्पातैः प्रविकटसटाटोपचपलः प्रवातः पश्चार्धे दिनकरकरापातसमये । तदा सस्योपेता प्रवरन्द्ररावद्धसमरा धरा स्थाने स्थानेऽप्यविरतवसामांसरुधिरा । आषाढीपर्वकाले यदि किरणततेरस्तकालोपयातो वायव्यो वह्निवेगः प्लवति वनरिपुः पन्नगादानुकारी । आनीयाद्यारिधाराप्रमुदितमुदितां सुप्तमण्डूककान्तां सस्योत्ताधैकचिह्नां सुखवहुलतया भाव्यसेनामिवोर्वीम् । मेरुप्रस्तमरीचिमण्डलतले शीष्मावसाने रवौ वात्याम्भोदिकदम्बगन्धसुरभिर्वायुर्यदा चोत्तरः । विद्युद्भ्रान्तिसमस्तकान्तिकलनामत्तास्तदा तोयदा उन्मत्ता इव नष्टचन्द्रकिरणां गां पूरयन्त्यम्बुभिः । ऐशानो यदि शीतलोऽमरगणैः संसेव्यमानो भवेत् पुन्नागागुरुपारिजातसुरभिर्वायुः प्रचण्डध्वनिः । आपूर्णोदकयौवना वसुमती सम्पन्नसस्याकुला धर्मिष्ठाः प्रणतारयो नृपतयो रक्षन्ति वर्णांस्तदा" ।

**वाततूल** न॰ वातेन उड्डीयमानं तूलम् । (वुडिरसुता) आकाशे उड्डीयमाने सूत्रे हारा॰ । [२धूलौ ।

**वातध्वज** पु॰ वातो ध्वज इव यस्य १मेघे शब्दमा॰ । हेम॰ ।

**वातपोथ** पु॰ वातं रोगभेदं पुथ्यति छिनत्ति पुथ-अण् । पलाशवृक्षे अमरः । [मृगे (वाकोटा) अमरः ।

**वातप्रमी** पुंस्त्री॰ वातं प्रमिणोति प्र+मी-ई किच्च । १शीघ्रगे

**वातमज** पुंस्त्री॰ वातमनुलक्ष्य अजति अज-अच् स्वभावः । मृगभेदे जटा॰ स्त्रियां ङीष् । [जटा॰ स्त्रियां ङीष् ।

**वातमृग** पुंस्त्री॰ वातानुगो मृगः शाक॰ । शीघ्रगे मृगभेदे

**वातरक्त** न॰ वातजं दुष्टं रक्तम् रुधिरं यत्र । रोगभेदे

"लवणाम्लकटुक्षारस्निग्धोष्णाजीर्णभोजनैः । क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः । कुलत्थमाषनि-

शाकादिपललेक्षुभिः । दध्यारनालसौवीरशुक्ततक्रसुरासवैः । विरुद्धाध्यशनक्रोधदिवास्वप्नातिजागरैः । प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् । स्थूलानां सुखिनां चापि प्रकुप्येद्वातशोणितम् । हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं संविदाह्याशनस्य"। क्षारो यवक्षारादिः । अजीर्णभोजनैः अजीर्णाय भोजनैः अतिमात्रभोजनैरित्यर्थः । क्लिन्नादीनि मांसस्य विशेषणानि । क्लिन्नं शटितम् । शुष्कमातपे शोषितम् । अम्बुजं मत्स्यादिमांसम् । आनूपं गौड़ादिपूर्वदेशजं मांसम् । पिण्याकं तिलखलिः । मूलकं प्रसिद्धमेव । निष्पावः (बोड़ा) शाकम् । शाकं पत्रशाकम् । आदिशब्देन हन्ताकादीनि फलशाकानि गृह्यन्ते । पललं शटितत्वादिदोषरहितमपि मांसं वातशोणितं प्रकोपयेत् । शटितादि तु मांसं विशेषतो वातशोणितं प्रकोपयेत् । आरनालं सन्धानभेदः । शुक्तं सन्धानभेदः । सौवीरं सन्धानभेदः । तक्रं चतुर्थांशजलयुक्तं वस्त्रपूतं दधि । सुरा सन्धानभेदः । आसवः सन्धानभेदः । विरुद्धं क्षीरमत्स्यादि । अध्यशनम् । "अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते"। अतिजागरो निशि । प्रायशः बाहुल्येन । सुकुमाराणाम् अल्पतरकायव्यापाराणाम् । अथ वा । मिथ्याहारविहारिणाम् अयथाहारविहाराभ्यां स्थूलानां सुखिनाञ्च रक्तदुष्ट्या हस्त्यश्वोष्ट्रैर्गच्छतः यतो वायुर्विवर्द्धते रुधिरञ्चाधो गच्छति । हस्त्यादय उपलक्षणानि । यद्वानाद्यतिचलतः । अश्नतः विदाह्यन्नम् । विदाहि निष्पावकुलत्थसर्षपशाकादि । संविदाह्याशनस्य । संविदाहेऽशनं यस्य भुक्ते विदग्धे तदुपरि भुञ्जानस्येत्यर्थः । अध्यशनकृत्याध्येतद्वचनं विदग्धाजीर्णभोजनस्य विशेषतो हेतुत्वार्थम् । पश्चात् वातशोणितं प्रकुप्येदित्यनेनान्वयः । एतेषां कारणानां मध्ये केनचिद्वायुः केनचिदुभयमपि प्रकुप्येत् । संप्राप्तिमाह "कृत्स्नं रक्तं विदहत्याशु तच्च दुष्टं स्रुतं पादयोश्चीयते तु । तत् संपृक्तं वायुना दूषितेन तत् प्राबल्यादुच्यते वातरक्तम्" । पूर्वोक्तैर्हेतुभिः कृत्स्नं समस्तं रक्तं विदहति अत्र दहधातुरविवक्षितकर्मकः । तेन विदहति विदग्धं भवतीत्यर्थः । तच्च दुष्टरक्तम् । स्रुतम् अधोगतम् पादयोश्चीयते सञ्चितं भवति । तद्रुधिरं दूषितेन स्वहेतुना संपृक्तं मिलितं वातरक्तम् उच्यते । ननु चैतस्य संप्राप्तिरुक्ता सुश्रुतेन "शीघ्रं रक्तं दुष्टिमायाति तच्च वायोर्मार्गं संरुणद्ध्याशु यातः । क्रुद्धोऽत्यर्थं मार्गरोधात् स वायुरत्युद्रिक्तं दूषयेद्रक्तमाशु" । अत्र प्रथमं रक्तस्य दुष्टिरतो रक्तवातमिति व्यपदेष्टुमुचितं भवत्यत आह तत्प्राबल्यादिति । तस्य वातस्य दोषत्वेन प्राधान्याद्वातरक्तमिति व्यपदिश्यते । पूर्वरूपमाह "स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् । सन्धिशैथिल्यमालस्यं सदनं पिड़कोद्गमः । जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु । निस्तोदस्फुरणं भेदो गुरुत्वं सुप्तिरेव च । कण्डूः सन्धिषु रुग्दाहो भूत्वा नश्यति चासकृत् । वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम्" । अथाधिकवातस्य रक्तस्य लक्षणमाह "वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् । शोथस्य रौक्ष्यं कृष्णत्वं श्यावताहवृद्धिहानयः । धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् । शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः" । तत्र पादयोः शूलादिकमधिकम् यत आह सुश्रुतः "स्पर्शोद्विग्नौ तोदभेदप्रशोषैः स्वापोपेतौ वातरक्तेन पादाविति" । अत्र सुप्तिः स्पर्शाज्ञता । अधिकरक्तं वातरक्तमाह "रक्ते शोथोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते । स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः" । अधिकपित्तं तदाह "पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदस्तृषा । स्पर्शासहत्वं रुग्दाहः शोथपाकौ भृशोष्णता" । विदाहश्च पादयोरेव बोद्धव्यः यत आह सुश्रुतः "पित्तासृग्भ्यामुग्रदाहौ भवेतामत्यर्थोष्णौ रक्तशोथौ मृदू च" । पादाविति शेषः । अधिककफं तदाह "कफाधिक्ये तु गुरुता सुप्तिः स्निग्धत्वशीतता" । गुरुतादयः पादयोरेव यत आह सुश्रुतः कण्डूमन्तौ श्वेतशीतौ सशोथौ पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते" । असाध्यवातरक्तस्य उपद्रवानाह "अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः । मूर्च्छा च मदरुक् तृष्णाज्वरमोहप्रकोपकाः । हिक्कापङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः । अङ्गुलीवक्रतास्फोटदाहमर्मग्रहार्बुदाः" मांसकोथो मांसगलनम् । असाध्यत्वादिकमाह "एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन चापि यत् । अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् । एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् । त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः" ।

**वातरक्तघ्न** पु० वातरक्तं रोगभेदं हन्ति हन–टक् । कुक्कुरवृक्षे (कुकुरसोङा) शब्दच० ।

**वातरक्तारि** पु० ६त० । (गुलुञ्च) ख्यातायां लतायाम् [शब्दच० ।

**वातरङ्ग** पु० वातस्येव सततं रङ्गश्चलनमस्य । चलदले अश्वत्थवृक्षे अमरः ।

**वातरायण** पु० वा–क्विप् ततस्तरप् वातरमयनं यस्य चलत्वम् । १उन्मत्ते २प्रयोजनशून्ये पुरुषे ३काण्डे ४करपात्रे ५कूटे ६परसंक्रमे मेदि० । ७सरलद्रुमे च शब्दर० ।

**वातरूष** पु० वातेन रूष्यते रूष–घञ् । १वातुले २उत्कोचे ३इन्द्रचापे च मेदि० ।

**वातर्द्धि** पु० वातस्य ऋद्धिर्यतः । १काष्ठलोहनिर्मितमात्रे त्रिका० ६त० । २वायुवृद्धौ स्त्री ।

**वातल** पु० वातं रोगभेदं लाति ला–क । १चणके शब्दच० । २वायुकारके द्रव्ये त्रि० ।

**वातव्याधि** पु० वातेन देहस्थधातुभेदेन जनितो व्याधिः शाक० । वातरोगे वातशब्दे दृश्यम् ।

**वातशीर्ष** न० वातस्य शीर्षमिव । वस्तौ राजनि० ।

**वाताटः** पु० वात इवाटति अट–अच् । १सूर्याश्वे त्रिका० २वातमृगे शब्दर० ।

**वाताण्ड** पु० मुष्करोगविशेषे तस्य लक्षणं यथा "वृषणौ दूषयेद्वायुः श्लेष्मणा यस्य संहतः । तस्य मुष्कस्थलत्येको रोगो वाताण्डसंज्ञकः" माधवकरः ।

**वाताद** पु० वाताय वातनिवृत्तयेऽद्यतेऽसौ अद–घञ् । (बादाम) फलप्रधानवृक्षे भावप्र० ।

**वातापि** पु० अगस्त्यनाशिते इल्वभ्रातरि असुरभेदे । "वातापिर्भक्षितो येनवातापिश्च महाबलः । समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु" इति भोजनान्ते पाठ्यमन्त्रः ।

**वातापिसूदन** पु० वातापिं सूदयति हिनस्ति सूद–ल्यु । अगस्त्ये मुनौ त्रिका० भा० व० १८८ अ० तत्कथा दृश्या ।

**वातामोदा** स्त्री वातेनामोदो यस्याः । कस्तूर्याम् शब्दमा०

**वातायन** न० वातस्यायनं गतिर्येन । १गवाक्षे अमरः । वातस्येव शीघ्रमयनं गतिरस्य । २अश्वे पुंस्त्री० त्रिका० स्त्रियां ङीष् ।

**वातायु** पु० वातमयते अय–उण् । हरिणे अमरः

**वातारि** पु० वातस्य रोगभेदस्यारिः । १एरण्डवृक्षे २शतमूल्यां ३शेफालिकायां ४यवान्यां ५भार्ग्यां ६स्नुह्यां ७विडङ्गे ८सूरणे ९भल्लातके १०जतुकायां ११दुग्धालीवृक्षे च राजनि० ।

**वाताश्व** पु० वात इव शीघ्रगोऽश्वः । आजानेये अश्वभेदे हये त्रिका० ।

**वाति** पु० वा–क्तिच् । १वायौ २सूर्य्ये ३चन्द्रे च उणा० ।

**वातिक** पु० वातादागतः ठक् । देहस्थधातुजन्ये रोगभेदे राजनि० ।

**वातिग** पु० वातिं वायुं गच्छति गम–ड । १वार्त्ताकौ २धातुवादिनि त्रि० मेदि० । गम–अच् । वातिगमोऽप्यत्र शब्दर०

**वातिङ्गण** पु० वातिं देहस्थवातं सेवनात् गणयति गण–खच् मुम् च । वार्त्ताकौ त्रिका० ।

**वातीय** न० वाताय वातनिवृत्तये हितः छ । काञ्जिके शब्दच०

**वातुल** पु० वातानां समूहः उलच् । वातसमूहे भरतः ।

**वातुलि** पुंस्त्री० वा–उलि ठट् च । (वादुड़) ख्याते खगे हारा० ।

**वातूल** त्रि० वात+अस्त्यर्थे ऊलच् । १वातरोगयुक्ते उन्मत्ते अमरः । समूहार्थे ऊलच् । २वातसमूहे न० भरतः ।

**वातोना** स्त्री वातमूनयति ऊन–अण् । १गोजिह्वाक्षुपे राजनि० वातेनोनः । २वायुहीने त्रि० ।

**वात्या** स्त्री वातानां समूहः यत् १वातसमूहे अमरः "वितत्य वात्यामयचक्रचङ्क्रमान्" नैष० ।

**वात्सक** न० वत्सानां समूहः वुञ् । वत्ससंघे अमरः ।

**वात्सल्य** न० वत्सलस्य भावः ष्यञ् । पुत्रादिस्नेहानुगुणे रसभेदे उज्ज्वलमणिः "यशोदा वत्सले स्मृता" ।

**वात्स्य** पु० वत्सस्यापत्यं यञ् । गोत्रप्रवर्त्तके मुनिभेदे ।

**वात्स्यायन** पु० वत्सस्य गोत्रापत्यं युवा वत्स+यञ् ततो यूनि फक् । १यूनि वत्सगोत्रापत्ये । २न्यायसूत्रभाष्यकारके पक्षिलाख्ये मुनौ पुं त्रिका० ।

**वाद** पुं स्त्री वद–घञ् । १तत्त्वबुभुत्सया कथने "प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः" इति २गौतमोक्ते विचारात्मके वाक्यभेदे । "वादः प्रवदतामहम्" गीता ।

**वादन** न० वद–णिच्–कर्मणि ल्युट् । १मृदङ्गादिवाद्ये भावे ल्युट् । मृदङ्गादिताडनरूपे २व्यापारे ।

**वादर** न० वदरायाः कार्पास्याः विकारः अण् । कार्पाससूत्रनिर्मिते वस्त्रादौ । वदरशब्दस्य ज्योत्स्नादित्वमित्यन्ये ।

**वादरङ्ग** पु० वादरं वदरासम्बन्धिपत्रादिसादृश्यं गच्छति गम खच् डिच्च । अश्वत्थवृक्षे त्रिका० ।

**वादरत** त्रि० वादे विवादे रतः रम–क्त । बहुदिनविवादशीले ।

**वादरा** स्त्री वातं वायुं राति ददाति रा—क पृषो० तस्य दः [कार्पास्याम् शब्दर०।

**वा(बा)दरायण** पु० व(बा)दरीप्रधानं स्थानं वाबादरं तदयनं स्थानं यस्य। नित्यं व(ब)दरिकाश्रमवासिनि १वेदव्यासे। स्वार्थे इञ्। वा(बा)दरायणिरप्यत्र शब्दच०। अपत्ये इञ्। वा(बा)दरि व्यासपुत्रे शुकदेवे। [मधुयष्टौ शब्दच।

**वादल** न० वातं लाति गृह्णाति ला—क पृषो० तस्य दः।

**वादाम** न० वातमर्मति छिनत्ति अम—अण् पृषो० तस्य मः। स्वनामख्याते फलभेदे भावप्र०।

**वादि** त्रि० वद—इन्। विदुषि उणादिकोषः। [शब्दर०।

**वादिर** न० वद—णिच्—किरच्। व(ब)दरीवृक्षफले वृक्षे

**वादित्र** न० वद-णिच्—इत्र। मृदङ्गादिवाद्ये अमरः।

**वादिन्** त्रि० वदति वद—णिनि। १वक्तरि २अर्थिनि ३वादकथाकर्त्तरि ४विचारस्थले ५प्रथमपक्षप्रतिपादके च।

**वाद्य** न० वद-णिच्-यत्। वादनीये मृदङ्गादौ अमरः। वंशशब्दे ततादिभेद उक्तस्तत्र

ततं यथा "अलावनी ब्रह्मवीणा किन्नरी लघुकिन्नरी। विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया। हस्तिका कुब्जिका कूर्म्मी शारङ्गी परिवादिनी। त्रिशवी शतचन्द्री च नकुलौष्ठी च ढंसवी। औडुम्बरी पिनाकी च निवन्धः शुष्कलस्तथा। गदावारणहस्तश्च रुद्रोऽथ स्वरमण्डलः। कपिलासी मधुस्यन्दी घोणेत्यादि ततं भवेत्"। अलावनी यथा "कनिष्ठिकापरिध्यर्द्धमध्यच्छिद्रेण संयुतः। दशयष्टिमितो दण्डः खादिरो-वैणवोऽथ वा। अधःकरभवानूर्द्धं स्त्वावल्याभिशोभितः। नवाङ्गुलादर्धमच्छिद्रोपरिचन्द्रार्द्धसन्निभाम्। निवेश्यात्र तुम्बिकां भद्रालावुखण्डं निवेशयेत्। द्वादशाङ्गुलविस्तारं दृढपक्वं मनोहरम्। तुम्बिकावेधमध्येन दण्डच्छिद्रे तु निर्म्मिताम्। अलावुमध्यगां डोरीं कृत्वा खल्लान्तु काष्ठिकाम्। तथा संवेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत्ततः। यथा स्यान्निश्चलालावुर्बन्धश्च करभोपरि। पञ्चाङ्गुलिषु संत्यज्यालावुं खल्लाञ्च बन्धयेत्। कौशान्तनिर्मिता पट्टमयी रुक्मलताथ वा। समा श्लक्ष्णा दृढा तत्र तन्त्री देया विचक्षणैः। एतल्लक्षणसंयोगिन्यलावनी प्रकीर्त्तिता। विन्दुना न समेतं तु तुम्बं निःक्षिप्य वक्षसि। अध्यमानामिकाभ्याञ्च वाद्या दक्षिणपाणिना। तारे मन्द्रे च घोषे च त्रिस्थाने विन्दुरिष्यते। तुम्बीमूलं समुत्पत्य वामाङ्गुष्ठेन धारयेत्। ततस्ताभिस्तु सर्वाभिः स्वरव्यक्तिर्विधीयते। निस्वरो दक्षिणः पार्श्ववीनस्तत्र चतुःस्वरः। अलावन्यां स्थिता ज्ञेयाः सप्त षड्जादयः स्वराः। रागव्यक्तिर्यथा रागे भवेत् षड्जादिभेदतः। अंशन्यासविभेदाच्च तथात्रापि विधीयते। इयमलावनी प्रोक्ता मनःश्रवणरञ्जनी। प्रत्यक्षा शारदा देवी वीणारूपेण संस्थिता"। शुषिरं वंशशब्दे उक्तम्। आनद्धं यथा

"आनद्धे मर्द्दलः श्रेयान् इत्युक्तं भरतादिभिः। मुरजपटहढक्काविश्वकोदर्पवाद्यं पणववनसवृक्षालावजाह्निवल्यः। करटकमठभेरी स्यात् कुडक्का हुडुक्का झनसमुरलिभल्लीढक्कलीदौण्डिमाना। डमरुटमुकिमड्डु कुण्डलीस्तुङ्गनामा रणभिघटवाद्यं दुन्दुभी च रजस्य। क्वचिदपि डुडुकी स्यात् दर्दुरं चाप्युपाङ्गं प्रकटितमनुबन्धं वाद्यमित्थं जगत्याम्। त्रिपुरमथनकर्तुस्ताण्डवे तत् प्रयाणे ततमथ शुषिरञ्चानद्धमित्थं घनञ्च। मर्द्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः। रक्तचन्दनजो वाद्यो गम्भीरध्वनिरञ्जकैः। सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते। त्रयोदशाङ्गुलं वाममथ वा द्वादशाङ्गुलम्। दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा। करणानद्धवदनो मध्ये चैव पृथुर्भवेत्। सण्मासीयो भवेत् शस्तस्तच्चर्म करणं मतम्। मृत्तिकानिर्मितश्चैव मृदङ्गः परिकीर्त्तितः। पातयेत् खरलं वाद्ये वादनार्थञ्च मर्द्दले। विभूतिगैरिकं भक्तं केन्दुकेन च संमतम्। यद्वा चिपीटकं देयं जीवनीसत्त्वमिश्रितम्। सर्वमेकत्र पिण्डस्य लेपः खरलिरुच्यते। वामास्ये पूरिकां कृत्वा लेपं दद्याच्च दक्षिणे। एवं मर्द्दलकः प्रोक्तः सर्ववाद्योत्तमो मतः। अस्य संयोगमासाद्य सर्वं वाद्यञ्च शोभते। एतदङ्गे बीजकाष्ठे दलमर्द्धाङ्गुलं विदुः"। मर्द्दलः त्रयोदशाङ्गुलवाममुखो द्वादशाङ्गुलदक्षिणमुखः। मुरजस्त्वादशाङ्गुलवाममुखः सप्तदशाङ्गुलदक्षिणमुखः मर्द्दलमुरजयोरयं भेदः। घनं यथा। "अनुरक्तं विरक्तञ्च द्विविधं घनवाद्यकम्। गीतानुगमनुरक्तं विरक्तं तालसंश्रयम्। करतालः कांस्यतालो जयघण्टोऽथ शुक्तिका। कम्बिका पञ्च वाद्यञ्च पट्टतोयं च घर्घरम्। झञ्झातालश्च मञ्जीरकर्त्तर्युक्तुर इत्यपि। द्वादशैते मुनीन्द्रेण कथिता घनसंज्ञकाः। त्रयोदशाङ्गुलव्यासौ शुद्धकांस्यविनिर्मितौ। मध्यमुखौ स्तनाकारौ तन्मध्ये रज्जुगुम्फितौ।

पद्मिनीपत्रसदृशौ कराभ्यां रज्जुयन्त्रितौ। कर-तालावुभौ वाद्यौ पाटैर्भरतकैरिति। यद्वा त्रयोदशयव-व्यासं वक्त्रयवोन्मितम्। यवपञ्चकगम्भीरं मध्ये च यवसप्तकम्। निम्नतं वर्त्तुलं निम्नं यवत्रयमितं ततः। पृष्ठतो मध्यदेशे च श्रीवलिङ्गसमाकृति। ब-ल्यस्तपैश्चीनिर्दग्धशुद्धकांस्यविनिर्मितम्। संरक्ताङ्गुलि सुस्निग्धसुदीर्घमधुरध्वनिम्। घनानुसारि संरक्तं दृढं शुक्लं मनोहरम्। काश्मीरादिसमुद्भूतं ताल-माङ्गमनीषिणः। सुनादं दक्षिणं तालं ततो हीनञ्च वामकम्। कुर्वीत तद्द्वयं कार्य्यं तज्जन्यङ्गुष्ठयोर्गतम्। वामहस्तस्थतालस्य मध्यमं सन्निनादितम्। तिर्य्यगद्-क्षिणतालस्य परिध्वंशेन तालयेत्। तालादौ वाद-येच्चैव द्रुतदीर्घलघुद्रुतैः”। अन्येषां लक्षणं विस्तरभयान्नोक्तम्। “रुक्मिण्याः सत्यभामायाः कालि-न्दीमित्रविन्दयोः। जाम्बवत्या नाग्नजित्या ल-क्ष्मणाभद्रयोरपि। कृष्णस्याष्टमहिषीणां पुरोद्वाह-महोत्सवे। ततं सुषिरमानद्धं घनञ्च युगपज्जनाः। अवादयन्नसंख्यातमिति पौराणिकी श्रुतिः। ततं वाद्यन्तु देवानां गन्धर्वाणाञ्च शौषिरम्। आनद्धं राक्ष-सानान्तु किन्नराणां घनं विदुः” सङ्गीतदा०

**वाद्यभाण्ड** न० कर्म०। वादनीयपात्रे।

**बा(वा)ध** विघाते भ्वा०आत्म०सक०सेट्। बा(वा)धते अबा-(वा)धिष्ट। चङि न ह्रस्वः।

**ब(वा)ध** पु० बा(वा)ध-घञ्। १प्रतिरोधे २प्रतिबन्धे न्या-योक्ते साध्याभाववत्त्वेन ज्ञाने ४हेत्वाभासभेदे। भावे च। बा(वा)धाप्यत्र २पीडायाञ्च स्त्री अमरः ल्युट्। बा-(वा)धनमप्यत्रार्थे न० शब्दच०।

**बाधूक्य** न० वध्वां बाधु यत् कुक् च। विवाहे त्रिका०।

**वार्ध्रीणस** पु० वार्ध्री नस+पृषो०। वार्ध्रीनसे खड्गिनि च।

**वान** न० वन-घञ्। १शुष्कफले अमरः। २शुष्के त्रि०मेदि०। वनस्येदं तत्समूहो वा अण्। ३वनसम्बन्धिनि त्रि०। ४तत्-संघे न०। वे-भावकर्मादौ ल्युट्। ५सीवनकर्मणि ६कटे। वा-भावादौ ल्युट्। ७गतौ मेदि०। ८जल-स्रुतवातोर्मौ ९सुरङ्गायां १०सौरभे हेमच० ११गोच्चोरजे १२तवक्षीरे राजनि०। १३वर्त्तिकाखगे स्त्री जटा०।

**वानप्रस्थ** पु० वाने वनसमूहे प्रतिष्ठति स्था-क। १मधूकवृक्षे २पलाशवृक्षे। वनप्रस्थ एव स्वार्थे ष्यञ्। “गृहस्थस्तु यदा पश्येत् वलीपलितमात्मनः। पुत्रेषु दारान् नि-क्षिप्य वनं गच्छेत् सहैव वा” इत्युक्ते ३आश्रमभेदे मेदि०। स च द्विविधः पचमानः अपचमानश्च। तत्र पचमानः अश्मकुट्टः। अपचमानस्तु दन्तोलूखलिकः।

तस्य धर्मो यथा “भूशय्या मूलफलाशित्वं स्वाध्यायस्तप एव च। संविभागो यथान्यायं धर्मोऽयं वनवासिनः। तपस्तप्यति योऽरण्ये यजेद्देवान् जुहोति च। स्वा-ध्याये चैव निरतो वनस्थस्तापसो मतः। तपसा कर्षितोऽत्यर्थं यस्तु ध्यानपरो भवेत्। सन्न्यासीह स विज्ञेयो वानप्रस्थाश्रमे स्थितः” गारुडे ४९अ०। याज्ञवल्क्य उवाच “वानप्रस्थाश्रमं वक्ष्ये तत् शृणुष्व महर्षयः। पुत्रेषु भार्य्यां निःक्षिप्य वनं गच्छेत् सहैव वा। वानप्रस्थो ब्रह्मचारी साग्निः सोपासनः क्षमी। अफालकृष्टेनाग्नींश्च पितृदेवातिथींस्तथा। भृत्यांस्तु तर्पयेत् श्मश्रुजटालोमभृदात्मवान्। दान्तः त्रिष-वणस्नायी निवृत्तश्च प्रतिग्रहात्। स्वाध्यायवान् ध्यान-शीलः सर्वभूतहिते रतः। अह्नो मासस्य वर्षस्य वा कुर्य्याद्वाऽन्नपरिग्रहम्। कृत्वा त्यजेदाश्वयुजे नयेत् कालं व्रतादिना। पक्षे गते तु वाश्नीयाद्दन्तोलूख-लिको भवेत्। चान्द्रायणी स्वपेद्भूमौ कर्म कुर्य्यात् फलादिना। ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिले-शयः। आर्द्रवासास्तु हेमन्ते योगाभ्यासाद्दिनं नयेत्। १०२ अ०। “जटित्वमग्निहोत्रित्वं भूशय्याऽजिनधारणम्। वने वासः पयोमूलनीवारफलवृत्तिता। प्रतिग्रहा-न्निवृत्तिश्च त्रिस्नानं व्रतधारिता। देवतातिथिपूजा च धर्मोऽयं वनवासिनः। २१५ अ०। “एवं गृहाश्रमे स्थित्वा द्वितीयभागमायुषः। वानप्रस्थाश्रमं गच्छेत् सदारः साग्निरेव च। निःक्षिप्य भार्य्यां पुत्रेषु गच्छे-द्वनमथापि वा। दृष्ट्वाऽपत्यस्य चापत्यं जर्ज्जरीकृतविग्रहः। शुक्लपक्षस्य पूर्वाह्णे प्रशस्ते चोत्तरायणे। गत्वाऽरण्यं नियमांस्तपः कुर्य्यात् समाहितः। फलमूलानि पू-तानि नित्यमाहारमाहरेत्। यताहारो भवेत्तेन पूजयेत् पितृदेवताः। पूजयेदतिथिं नित्यं स्नात्वा चाभ्यर्चयेत् सुरान्। ग्रामादानीय वाश्नीयादष्टौ ग्रासान् समाहितः। जटाश्च बिभृयान्नित्यं नखरो-माणि नो त्यजेत्। स्वाध्यायं सर्वदा कुर्य्यात् नियच्छे-द्वाचमन्यतः। अग्निहोत्रन्तु जुहुयात् पञ्च यज्ञान् समा-चरेत्। मुन्यन्नैर्विविधैर्मेध्यैः शाकमूलफलेन वा। ची-रवासा भवेन्नित्यं स्नायात् त्रिषवणं शुचिः। सर्व-

**विक्रीत** पु० इक्षाकुवंश्यनृपभेदे वाल्मीकि० २१ अध्याये दृश्यम् ।

**विक्ष** पु० विक्षणति वि+क्षण-ड । करिशावके त्रिका० ।

**विक्रम** पु० विशेषेण क्रामति वि+क्रम-अच । १त्रि-विक्रमे, २विष्णौ, "मेधावी विक्रमः क्रमः" विष्णुस० । ३विक्रमादित्यनृपे "रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्विदाभरणम् । भावे घञ् । ४क्रमणे मेदि० । करणे घञ् । ५चरणे, त्रिविक्रमः । ६शौर्यातिशये, ७सामर्थ्ये च राजनि० । षष्टिवर्षमध्ये "लवणं मधु गन्धस्य महार्घं विक्रमे प्रिये !" इत्युक्तलक्षणे १वत्सर-भेदे मेदि० । प्रभवादिशब्दे ४४७४ पृ० दृश्यम् ।

**विक्रमादित्य** पु० विक्रमेणादित्य इव । स्वनामख्याते नृपभेदे विक्रमार्कोऽप्यत्र "नो दुष्टः श्रुत एव वा क्षितितले श्रीविक्रमार्कोपमः" त्रिका० ।

**विक्रमिन्** पु० वि+क्रम-णिनि । १सिंहे, राजनि० २विष्णौ विष्णुपु० । ३विक्रमयुक्ते त्रि० स्त्रियां ङीप् ।

**विक्रय** पु० वि+क्री-अच् । मूल्यग्रहणेन परस्वत्वापादके व्यापारे अमरः ।

विक्रये विहिताविहितनक्षत्राणि यथा "यमाहिशक्राग्निश्रुतामपूर्वा नेष्टाः क्रये विक्रयणे प्रशस्ताः । पौष्णाश्विचित्राशतविष्णुवाताः क्रये हिता विक्रयणे निषिद्धाः" । ज्योतिःसारः । क्रयविक्रयनिर्णयो यथा "मूल्यं दास्यामीति नियमं कृत्वा ग्रहणादपि क्रयसिद्धिः । तथाच विवादचिन्तामणौ कात्यायनः "पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् । ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात्" । अतएव वृहस्पतिः "गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् । पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" । क्रयविक्रये समयविशेषाभ्यन्तरे पश्चात्तापादसिद्धिः । यथाह मनुः "क्रीत्वा विक्रीय वा किञ्चित् यस्येहानुशयो भवेत् । सोऽन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाददीत वा" । एतद्याज्ञवल्क्योक्तेतरपरम् । यथा याज्ञवल्क्यः "दशैकपञ्चसप्ताहमासत्र्यहार्द्धमासिकम् । वीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणं । अत्र वृहस्पतिः "अतोऽर्वाक् पण्यदोषस्तु यदि सञ्जायते क्वचित् । विक्रेतुः प्रतिदेयन्तत् क्रेता मूल्यमवाप्नुयात्" । अतस्तद्द्रव्यपरीक्षणकालात् । कात्यायनः "अविज्ञातन्तु यत् क्रीतं दुष्टं पश्चाद्विभावितम् । क्रेता तत् स्वामिने देयं पण्यं कालेऽन्यथा न तु" । काले प्रागुक्तपरीक्षाकालाभ्यन्तरे । परीक्षिते तु वृहस्पतिः "परीक्षेत स्वयं पण्यं अन्येषाञ्च प्रदर्शयेत् । परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत्" । अत्र विशेषयति नारदः "क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी । विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतम् । द्वितीयेऽह्नि ददत् क्रेता मूल्यात्त्रिंशांशमाहरेत् । द्विगुणन्तु तृतीयेऽह्नि परतः क्रेतुरेव तत्" । आहरेत् दद्यात् विक्रेत्रे इति शेषः । द्विगुणं त्रिंशांशस्य । याज्ञवल्क्यः "राजदैवोपघातेन पण्ये दोषमुपागते । हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः" । नारदः "उपहन्येत वा पण्यं दह्येतापह्रियेत वा । विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः । दीयमानं न गृह्णाति क्रीतं पण्यन्तु यः क्रयी । स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः" प्राय० त० । "न्यासं कृत्वा परत्राधिं कृत्वा वाधिं करोति च । विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा" । न्यासं कृत्वा आधिं करोति आधिं कृत्वा वा विक्रयं करोति । विक्रयपदं सत्त्वध्वंसकत्वात् दानं लक्षयति तत्र परा क्रिया सिद्धेत्यर्थः । एवञ्च विक्रेतृदात्रोर्मरणादिना आध्युद्धारे विक्रयदाने तत्कर्तृतुल्यस्वत्वजननात् तत्र तत्क्रेतृप्रतिग्रहीतृभ्यामाध्युद्धारः कार्यः इति । न च "स्थावरस्य समस्तस्य गोत्रसाधारणस्य च । नैकः कुर्यात् क्रयं दानं परस्परमतं विना । विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः । एको ह्यनीशः सर्वत्र दानाधमनविक्रये" इति व्यासवचनाभ्यामेकस्य दानबन्धकविक्रयानधिकारः इति वाच्यं यथेष्टविनियोगार्हत्वरूपस्य स्वत्वस्य द्रव्यान्तर इवात्राप्यविशेषात् वचनञ्च स्वामित्वेन दुर्वृत्तपुरुषकर्त्तृकापचयविक्रयादिना कुटुम्बविरोधादधर्मज्ञापनार्थं निषेधकं न तु विक्रयाद्यनिष्पत्त्यर्थमिति" दायभागः । एवञ्च "स्थावरे विक्रयो नास्ति कुर्य्यादाधिमनुज्ञया" इति स्थावरस्य केवलविक्रयप्रतिषेधात् एवं "भूमिं यः प्रतिगृह्णातीत्यादिवचने दानप्रशंसादर्शनाच्च विक्रयेऽपि कर्त्तव्ये सहिरण्यमुदकं दत्त्वा दानरूपेण स्थावरविक्रय इति" विज्ञानेश्वरः । वस्तुतस्तु स्थावरविक्रयनिषेधः अविभक्तस्थावरविषयः । तत्रापि यदि विक्रयं विना अवस्थितिर्न भवति तदा विक्रयः कर्त्तव्यः । पूर्वपुरुषार्जितनष्टोद्धारे विशेषयति मिताक्षरायाम् "स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम् । असम्भूय सुतान् सर्वान् न दानं न च विक्रयः" इ-

त्यादि। अस्यापवादमाह "एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः" दायतत्त्वे रघु०। द्रव्यविशेषविक्रयनिषेधो यथा स्मृतिः "विक्रीणन् मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम्। कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात्। कपिलाक्षीरपानेन ब्राह्मणीगमनेन च। वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत्" कालिकापु०। "विक्रयं सर्ववस्तूनां कुर्वन् शूद्रो न दोषभाक्। मधु चर्म सुरां लाक्षां त्यक्त्वा मांसञ्च पञ्चमम्" मनुः। "सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्। अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च। यद्यवश्यन्तु विक्रेयास्तिला धान्येन तत्समाः" आह्नि० त०। "गवां विक्रयकारी च गवां गोष्ठे कृमिर्भवेत्" इति यमवचनम्। "गोवधोऽयाज्यसंयाज्यपारदार्य्यात्मविक्रयाः। तडागारामदाराणामपत्यस्य च विक्रयः। व्रात्यता बान्धवत्यागो भृत्याध्यापनमेव च" इत्यारभ्य ... विक्रयः" मनुः।

**विक्रयानुशय** पु० विक्रयस्यानुशयः पश्चात्तापः। विक्रीतपदार्थस्य परावृत्तिफलके १अनुतापे तन्निमित्ते २विवादभेदे

**विक्रयिक** पु० विक्रयः अस्त्यस्य ठन्। विक्रेतरि अमरः।

**विक्रयिन्** त्रि० वि+क्री-ताच्छील्ये इनि। विक्रयशीले शब्दच०। स्त्रियां ङीप्। [भावे क्त। २विक्रमे।

**विक्रान्त** पु० वि+क्रम-क्त। १सिंहे राजनि० २शूरे च अमरः।

**विक्रिया** स्त्री वि+कृ-भावे श। १विकारे अन्यथास्थितस्य वस्तुनोऽन्यथा परिणामे।

**विक्रीयासम्प्रदान** न० विक्रीय न सम्प्रदानं क्रेत्रे यत्र। अष्टादशविवादान्तर्गते विवादविशेषे तत्स्वरूपादिकं वीरमि० उक्तं यथा

"अथ विक्रीयासम्प्रदानाख्यव्यवहारपदम्। तत्स्वरूपमाह नारदः "विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते। विक्रीयासम्प्रदानं तद्विवादपदमुच्यते इति" तत्र विक्रेयद्रव्यस्य द्वैविध्यषड्विधत्वे क्रमेणाह स एव "लोकेऽस्मिन् द्विविधम्पण्यं जङ्गमं स्थावरं तथा। षड्विधस्तस्य च बुधैर्दानादानविधिः स्मृतः। गणितन्तुलिमं मेयं क्रियया रूपतः श्रियेति"। दानं विक्रयः आदानं क्रयः। गणयित्वा यस्य क्रयः तद्गणितम्। गणितं संख्येयं क्रमुकफलादिकम् एवं तुलिमादिकं तुलिमन्तुलाधृतं हेमचन्दनादिकम्। मेयं व्रीह्यादिकम् क्रियया वाहनदोहनादिरूपया युक्तमिति शेषः। रूपतः रूपेण युक्तं वस्तु पण्याङ्गनादि। श्रिया दीप्त्या युक्तं पद्मरागादिकम्। यदा विक्रेता मूल्यं गृहीत्वा याचमानाय क्रेत्रे विक्रीतं वस्तु न ददाति तदा यत्कर्त्तव्यं तदाह स एव "विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति। स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलमिति" यो गृहीतमूल्यो विक्रेता अजातानुशयाय क्रेत्रे प्रार्थयमानाय नार्पयति तच्च पण्यं यदि स्थावरात्मकं तदा क्षयेण सहितमसौ दाप्यः। यदा तु जङ्गमात्मकं तदा क्रियाफलेन सहितम् इत्यर्थः। विक्रयानन्तरं जात उपभोगोऽत्र क्षयः क्रियाफलं दोहनादिक्रियाफलं क्षीरादिकम्। इदञ्च क्रयकालापेक्षया अर्पणकाले मूल्याधिक्ये वेदितव्यम्। मूल्यह्रासे त्वन्यथाभिधानात्। तथा च स एव "अर्घश्चेदपहीयेत सोदयम्पण्यमावहेदिति"। अर्वाक् चेदपहीयेतेति कल्पतरौ पाठः। अर्वाक् विक्रीतस्य क्रेत्रे समर्पणात् पूर्वं अपहीयेत हीनमूल्यं भवेत्सोदयम्पण्यमावहेत्। विक्रयकाले यावन्मूल्यं गृहीतं तावता मूल्येनार्पणसमये मूल्यह्रासवशाद्यावदुपचयसहितं लभ्यते तावद्दद्यादित्यर्थः। यदा तु मूल्यसाम्यं तदा पण्यारोपणस्य रूपस्यासम्भवात् "निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च। याच्यमानमदत्तश्चेद्वर्द्धते पञ्चकं शतमिति" वचनोक्तवृद्धिसहितम्पण्यं दाप्यः। अतएव याज्ञवल्क्यः "गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति। सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते" इति। गृहीतमूल्यम्पण्यं विक्रेता यदि प्रार्थयमानाय स्वदेशवणिजे क्रेत्रे न समर्पयति तच्च पण्यं यदि क्रयकाले बहुमूल्यं सत्कालान्तरे अल्पमूल्येनैव लभ्यते तदा सोदयं वृद्ध्या सहितं विक्रेता क्रेत्रे दापनीयः। यदा मूल्यह्रासकृतः पण्यस्योदयो नास्ति किन्तु क्रयकाले यावता मूल्येन लब्धं यावत्पण्यमिति प्रतिपन्नं तावदेव तदा तत्पण्यमादाय तस्मिन् देशे विक्रीतस्य यो लाभस्तेनोदयेन सहितं दापनीयः वचनद्वयस्यार्थः। चतुर्थस्य तु यो देशान्तरात् क्रयणार्थमागत्य क्रीणाति तस्मै देशान्तरे तत्पण्यविक्रये यो लाभस्तेन सहितं तत्पण्यं दापनीय इत्यर्थः। देशान्तरलाभसहितपण्यदानञ्च केवलकालांशवाम्य एव किन्तु मूल्यस्य वृद्धौ अपीत्याह नारदः "स्थानिनामेव नियमोदिग्लाभं दिग्विचारिणामिति"।

स्वामिनां विक्रेतृदेयस्वामिनाम् एष नियमः स्थावरस्य सयं दाप्य इत्यादिवचनोक्तो नियम इत्यर्थः। विष्णुर्विक्रेतुर्दण्डमप्याह "गृहीतमूल्यं यः पण्यं क्रेतुर्नैव दद्यात्तस्य सोदयं दाप्यो राज्ञा च पणशतं दण्ड्यः" इति। एतच्चानुशयरहितत्प्रविक्रेतृविषयमिति मदनरत्ने। यस्तु विक्रीयानुशयवशान्नार्पयति यश्च क्रीत्वाऽनुशयवशान्न गृह्णाति तौ प्रत्याह कात्यायनः "क्रीत्वा प्राप्तान्न गृह्णीयाद्यो न दद्याददूषितम्। स मूल्याद्दशभागन्तु दत्त्वा स्वद्रव्यमाप्नुयात्"। अप्राप्तेऽथ क्रियाकाले कृते नैव प्रदापयेत्। एष धर्मो दशाहात्तु परतोऽनुशयो नत्विति"। अदूषितं जलादिनेति शेषः। दोह्यवाह्यादिपण्यस्य दोहनवाहनादिरूपः कालोऽस्य क्रियाकालस्तस्मिन्नप्राप्ते सति अपहरणेऽदाने वा कृते सति न दशमभागं प्रदापयेत् किन्तु तमदत्त्वैव स्वीयं द्रव्यं प्राप्नुयादिति। एष धर्मो दशाहात्प्राग्वेदितव्यः तत ऊर्द्ध्वमनुशयो न कर्त्तव्यः। विक्रीयासम्प्रयच्छतो यद्विक्रीतं पण्यं विक्रेतुः पार्श्वे स्थितं तस्य यदि नाशः स्यात्तदा विक्रेतुरेव हानिरित्याह याज्ञवल्क्यः "राजदैवोपघातेन पण्ये दोषमुपागते। हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः" इति। अत्र याचितस्येति विशेषणोपादानात् याचनाभावे न विक्रेतुर्हानिरित्यर्थाद्गम्यते। नारदोऽपि "उपहन्येत वा पण्यं दह्येतापह्रियेत वा। विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छतः" इति। यथा याचितस्याप्रयच्छतो विक्रेतुर्हानिस्तथा दीयमानं पण्यमगृह्णतः क्रेतुरपीत्याह स एव "दीयमानन्न गृह्णाति क्रीतम्पण्यञ्च यः क्रयी। स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः" इति। अप्रयच्छतः विक्रेतुर्यो दोषः स एवास्य भवेदित्यन्वयः। क्रेतुर्दोषाभिधानस्य फलं पण्यस्य मूल्यं क्रेत्रे विक्रेता न प्रत्यर्पणीयमिति। दीयमानञ्च गृह्णातीति वदता दीयमानग्रहणे न मूल्यहानिरिति दर्शितम्। क्रयानन्तरं क्रेत्रा न याचितं विक्रेत्रा च न समर्पितं जातचौराद्युपद्रवस्तत्र द्वयोः समा हानिः। क्रेतृविक्रेत्रोरुभयोरपि याचनानर्पणशैथिल्येन सापराधत्वादित्युक्तं देवनभट्टैः स्मृतिचन्द्रिकायाम्। याज्ञवल्क्योऽपि "हानिश्चेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेदिति" क्रेतृदोषः दीयमानस्याग्रहणम्। यत्र पुनर्जातानुशयः क्रेता विक्रेता दीयमानञ्च गृह्णाति तत्राप्याह नारदः "दीयमानन्न गृह्णाति क्रीत्वा पण्यं च यः क्रयी। विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयादिति"। क्रयी जातानुशय इति शेषः। याज्ञवल्क्योऽपि "विक्रीतमपि विक्रेयं पूर्वक्रेतर्य्यगृह्णतीति"। यस्तदुष्टं पण्यं दर्शयित्वा सदोषं विक्रीणीते यश्चान्यहस्ते विक्रीतं तत्क्रेत्रनुशयाभाव एवान्यत्र विक्रीणीते तयोः समानो दण्ड इत्याह नारदः "निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति। स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव तु। तथान्यहस्ते विक्रीय योऽन्यस्मै तत्प्रयच्छति। द्रव्यन्तद्द्विगुणं दाप्यो विनयं तावदेव त्विति"। याज्ञवल्क्योऽपि "अन्यहस्ते च विक्रीतं दुष्टं वाऽदुष्टवद्यदि। विक्रीणीते दमस्तस्य मूल्यात्तु द्विगुणो भवेदिति" बुद्धिपूर्वविषयमेतत्। "ज्ञात्वा सदोषं यः पण्यं विक्रीणीते विचक्षणः। तदेव द्विगुणं दाप्यस्तत्समं विनयं तथेति" बृहस्पतिनोक्तत्वात्। अबुद्धिपूर्वकविक्रये तु क्रयपरावर्त्तनमेव। अन्यत्रापि विषयविशेषे परावर्त्तनमाह बृहस्पतिः "मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा। अस्वतन्त्रेण मूढेन त्याज्यन्तस्य पुनर्भवेदिति"। एतत्सर्वं दत्तमूल्ये पण्ये द्रष्टव्यम्। अत एव नारदः। "दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्त्तितः" इति। यत्र पुनर्मूल्यं न दत्तं तत्रापि स एवाह "अदत्तेऽन्यत्र समयान्न विक्रेतुरविक्रयः" इति। अदत्तमूल्ये तु पण्ये वाङ्मात्रेण क्रये कृते न परावर्त्तनीयमित्येवमादिसमयाभावे सति प्रवृत्तौ निवृत्तौ न कश्चिद्दोष इत्यर्थः। यत्र पुनर्वाङ्मात्रक्रयपरिहारार्थं विक्रेतृहस्ते क्रेता किञ्चिद्द्रव्यं दत्तं तत्र क्रेतृदोषवशेन क्रयासिद्धौ त्वाह व्यासः "सत्यङ्कारं च यो दत्त्वा यथाकालं न दृश्यते। पण्यं भवेन्निसृष्टन्तद्दीयमानमगृह्णतः" इति। निसृष्टं भवेत् उत्सृष्टं भवेदित्यर्थः। अत्र पण्यद्रव्यस्योत्सर्गः सत्यङ्कारद्रव्योत्सर्गोऽभिमतः। अन्यथा वाङ्मात्रक्रयकर्तृतुल्यत्वेन विक्रेतुः सत्यङ्कारद्रव्यग्राहकत्वकृतमन्यत्र विक्रयणाद्यपराधनिमित्तकं सत्यङ्कारद्रव्यस्य द्वैगुण्येन प्रतिदानं न स्यात्। अत्रापि विक्रीतमविक्रेयमित्यनुसन्धेयम्। अस्मिन्नेव विषये विक्रेतृदोषवशेन क्रयासिद्धौ त्वाह याज्ञवल्क्यः "सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिदापयेदिति" सत्यङ्कारः सत्यापनं कृतस्य क्रयस्य सत्यताकरणमिति यावत्। "क्लीबे सत्यापनं सत्यङ्कारः सत्याकृतिः स्त्रियाम्" इत्यमरः।

कोषाभिधानात्। स्वलङ्कराय कृतं स्वर्पितं स्वलङ्कारकृतं वयं स्वयं कर्त्तुं यद्विक्रेतृभ्यो कृतमित्यर्थः"।

विक्रेय त्रि० वि+क्री-यत्। विक्रयणीये पदार्थे। [२व्याकुलत्वे

विक्लव त्रि० वि+क्लु-अच्। १व्याकुलीभूते अमरः। भावे अप्

विक्लित्ति स्त्री वि+क्लिद-क्तिन्। जलतेजःसंयोगव्याःमवयवशैथिल्ये पूर्व्वारम्भकसंयोगनाशानन्तरशिथिलसंयोगापत्तौ।

विक्लिन्न त्रि० वि+क्लिद-क्त। १आर्द्रे २शीर्णे ३जीर्णे च मेदि०। ४विक्लेदयुक्ते। [शब्दे च वैद्यकम्।

विक्षाव पु० वि+क्षु घञ्। १शब्दे अमरः। २कासादिरोगकृत-

विक्षिप्त त्रि० वि+क्षिप-क्त। १विशेषेण क्षिप्ते २योगशास्त्रोक्ते चित्तस्य भूमिभेदे न०। यथोक्तं पातञ्जलभाष्यविवरणयोः "क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्ज्जनीभूतः समाधिर्न योगपक्षे वर्त्तते" भा०। "क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणम् अत्यन्तमस्थिरं, मूढन्तु तमःसमुद्रेकान्निद्रावृत्तिमत्। विक्षिप्तं क्षिप्ताद्विशिष्टं विक्षिप्तं विशेषोऽस्य स्थेमबहुलस्य कादाचित्कः स्थेमा वा चाह्वाःस्थेमबहुलता सांसिद्धिकी वा व्याधिस्त्यानाद्यन्तरायजनिता वा" विव०।

विक्षीर पु० विशिष्टं विगतं वा क्षीरमस्य। १अर्कवृक्षे राजनि० २विगतक्षीरे त्रि०।

विक्षेप पु० वि+क्षिप-घञ्। १त्यागे २प्रेरणे ३दूरीकरणे च। "चित्तस्य विक्षेपा नवविधाः पात० सूत्रभाष्ययोर्दर्शितास्ते च चित्तविक्षेपशब्दे २९४१पृ० अन्तरायशब्दे च दृश्याः। वेदान्तसिद्धचित्तविक्षेपाः २०० पृ० उक्ताः। विमण्डले यत् ग्रहस्थानं तस्य क्रान्तिवृत्ताद् यत् तिर्य्यगन्तरं स विक्षेपः" सि०शि० उक्ते ४शरे च। "भूषाणामर्द्धरचना तथा विभ्रमवेक्षणम्। रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके" सा० द० उक्ते स्त्रीणां ५सत्त्वजालङ्कारभेदे। ६कथाविच्छेदरूपे निग्रहस्थानभेदे "कार्य्यव्यासङ्गात् कथाविच्छेदो विक्षेपः" गौ०सू० "यत्र कर्त्तव्यं व्यासज्य कथां व्यवच्छिनत्ति। इदं मे करणीयं विद्यते तस्मिन्नवसिते कथयिष्यामि इति विक्षेपो नाम निग्रहस्थानम्। एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यते इति" वा०भा०। "असम्भवत्कालान्तरकत्वेनारोपितं कार्य्यं व्यासङ्गस्तस्मात् कथाविच्छेदस्तथा" वृत्तिः।

विक्षेपशक्ति स्त्री विक्षेपस्य जनिका शक्तिः। वेदान्तोक्ते अविद्याशक्तिभेदे। "विक्षेपशक्तिस्तु यथा रज्ज्वज्ञानं स्वावृतरज्ज्वौ स्वशक्त्या सर्पादिकमुद्भावयति एवमज्ञानमपि स्वावृतात्मनि स्वशक्त्या आकाशादिप्रपञ्चमुद्भावयति तादृशं सामर्थ्यम्। तदुक्तम् "विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेदिति"। वेदान्तसा०।

विख त्रि० विगता नासिका यस्य खादेशः। गतनासिके अमरः। ख्यादेशः। विख्योऽप्यत्र त्रिका०।

विखुर पुंस्त्री० १राक्षसे त्रिका० स्त्रियां ङीष्। २चौरे संक्षिप्त०

विख्यात विशेषेण ख्यातः प्रसिद्धः वि+ख्या-क्त। प्रसिद्धे

विगणन न० विशेषेण गणनम् गण-ल्युट्। ऋणशोधनार्थे सङ्ख्यागणने।

विगत त्रि० वि+गम-क्त। १प्रभारहिते अमरः। २विशेषगते रुद्र० ३अपगते च हेमच०। ४खगगतौ न०। "विगतं विगतम्" भट्टिः। [स्कायां स्त्रियाम् शब्दरत्ना०।

विगतार्त्तवा स्त्री विगतमार्त्तवं रजो यस्याः। गतरज-

विगन्धक पु० विरुद्धः गन्धोऽस्य कप्। १इङ्गुदीवृक्षे राजनि०। २हपुषायां स्त्री० टापि अत इत्त्वम्।

विगम पु० वि+गम-घञ्। १नाशे, २अपाये च।

विगर्हण न० वि+गर्ह-ल्युट्। निन्दने।

विगर्हित त्रि० वि+गर्ह-क्त। १निन्दिते २निषिद्धे च। भावे-क्त। ३निन्दायाम् न०।

विगाढ त्रि० वि+गाह-क्त। १स्नाते, २कृतावगाहने च।

विगान न० वि+गै-ल्युट्। निन्दायाम् हेमच०।

विगीत त्रि० वि+गै-क्त। निन्दिते।

विगीति स्त्री वि+गै-क्तिन्। निन्दायाम्।

विगुण त्रि० विरुद्धो गुणोऽस्य। गुणरहिते।

विगूढ त्रि० वि+गुह-क्त। १गर्हिते, २गुप्ते च मेदि०।

विगृहीत त्रि० वि+ग्रह-क्त। १गृहीते, व्याकरणोक्ते विग्रहवाक्यस्थे २पदे च।

विग्र त्रि० विगता नासिकाऽस्य ग्रादेशः। विगतनासिके अमरः

विग्रह पु० वि+ग्रह-अच्। १देहे, २विस्तारे, ३युद्धे पुंन० अमरः। ४समासादिवृत्तिसमानार्थकवाक्यभेदे, ५विभजने च "अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः" हरि०।

विघटिका स्त्री विभक्ता घटिका यया प्रा०व०। घटिकाषष्टिभागे पलात्मके काले राजनि०। वि+घट-ण्वुल्। २वियोजके त्रि०

**विघटित** त्रि० वि+घट-क्त । १वियोजिते २विशेषेण रचिते च

**विघट्टित** त्रि० वि+घट्ट-क्त । १चालिते २वियोजिते च ।

**विघस** पु० वि+अद-घञ् । भोजनशेषे मेदि० २आहारे च शब्दच० । ३सिक्थके न० राजनि० । ४दैवपैत्रदत्तशेषे

**विघसाशिन्** त्रि० विघसं देवतादिदत्तावशेषमश्नाति अश–णिनि । दैवपैत्रकार्य्यानन्तरं तदवशिष्टभोजिनि ।

**विघात** पु० वि+हन-क्त । १व्याघाते २आघाते च ।

**विघातिन्** त्रि० वि+हन-णिनि । १निवारके । २नाशके, ३नाशप्रतियोगिनि च "नित्यस्यायं वस्तुनिमित्तो विघाती" इति व्याकरणका० । ण्वुल् । विघातकोऽप्यत्र ।

**विघ्न** पु० वि+हन-क । १व्याघातके अन्तराये अमरः । २क्षणपाकफलायां शब्दच० । [गणेशे शब्दर० ।

**विघ्ननायक** पु० विघ्नानामुत्पत्त्यनुत्पत्त्योः नायकः । विघ्नेशे

**विघ्नकारिन्** त्रि० विघ्नं करोति कृ–णिनि । १घोरदर्शने २विघातके च मेदि० । स्त्रियां ङीप् । [ऽप्यत्र ।

**विघ्ननाशक** पु० ६त० । गणेशे शब्दच० ल्यु । विघ्ननाशनादयो-

**विघ्नराज** पु० विघ्ने राजते राज–अच् । गणेशे अमरः । ६त० । विघ्नेशादयोऽप्यत्र ।

**विघ्नहारिन्** पु० विघ्नं हरति हृ–णिनि । गणेशे त्रिका० ।

**विघ्नित** त्रि० विघ्नो जातोऽस्य इतच् । जातविघ्ने ।

**विघ्नेशानकान्ता** स्त्री ६त० । श्वेतदूर्वायाम् राजनि० ।

**विच** पृथक्करणे रु० जु० वा उ० अक० अनिट् । विनक्ति विवेक्ति विङ्क्ते विविक्ते । इरित् अविचत् अवैक्षीत् ।

**विचकिल** पु० विच+क किल-क कर्म्म० । १मदनवृक्षे । २मल्लीभेदे मेदि० । [३नागदन्त्यां स्त्री राजनि० टाप् ।

**विचक्षण** पु० वि+चक्ष-ल्यु न ख्यादेशः । १पण्डिते अमरः

**विचक्षुस्** त्रि० वि+चक्ष–उसि न ख्यादेशः । १विमनस्के त्रिका० । विगतं चक्षुर्यस्य । २नेत्रशून्ये त्रि० । [चयने च ।

**विचयन** न० वि+चि-ल्युट् । १अन्वेषणे शब्दच० । २पुष्पादि-

**विचर्चिका** स्त्री वि+चर्च-ण्वुल् । पामनि रोगभेदे अमरः । सा च क्षुद्रकुष्ठविशेषः । "एकं कुष्ठं स्मृतं पूर्वं गजचर्म ततः स्मृतम् । ततश्चर्मदलं प्रोक्तं ततश्चापि विचर्चिका । विपादिकाभिधा चैव पामा कच्छुस्ततः परा । ततो दद्रुश्च विस्फोटः किटिमञ्च ततः परम् । ततश्चालसकं प्रोक्तं शतारुश्च ततः परम् । क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः । सकण्डूः पिडका श्यावा बहुस्रावा विचर्चिका" पिडका क्षुद्रपिडका । "दाल्यते त्वक् खरा रूक्षा-सास्योर्वा विचर्चिका । पादे विपादिका ज्ञेया स्यान्मेदाद्विचर्चिका" । "केचिद्विचर्चिकातो विपादिकां भिन्नामाहुः" भावप्र० । कुष्ठशब्दे २१५४ पृ० दृश्यम् ।

**विचार** पु० वि+चर-घञ् । १तत्त्वनिर्णये सन्दिग्धे वस्तुनि प्रमाणेन तत्त्वपरीक्षायां २तदनुगुणे वाक्यस्तोमे च । "विपरीतोद्भावकपरविजिगीषया न्यायप्रयोग इति" केचित् प्राहुः । यथा पदार्थानुमानस्थले पर्वतो वह्निमान् धूमवत्त्वादित्यादि । अत्र च पर्वते वह्नौ साधनीये प्रतिवादिना च पर्वतो न वह्निमानित्यादि विपरीतवाक्ये प्रयुक्ते मध्यस्थस्य संशयो जन्यते । तन्निरस्त्यर्थं वादिना पर्वतो वह्निमानित्यादिप्रतिज्ञादिघटितवाक्यप्रयोगरूपः विचारः क्रियते इति । ४विगतश्चारो यस्मात् प्रा०ब० । चारशून्ये च "विचारदृक्चारदृगप्यवर्त्तत" ।

**विचारण** न० वि+चर-णिच्-ल्युट् । १विचारे शब्दर० । युच् । तत्रैव स्त्री अमरः । २मीमांसाशास्त्रे हेमच०

**विचारित** त्रि० विचारो जातोऽस्य इतच् । कृतविचारे ।

**विचाल** त्रि० वि+चल–कर्त्तरि ण । १अभ्यन्तरे २अन्तराले-हेमच० । वि+चल–णिच् भावे अच् । २अन्यथास्थितस्य वस्तुनो विशेषरूपतापादने "अधिकरणविचाले च" पा० "द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात् । एकं राशिं पञ्चधा कुरु" सि०कौ० । [ङीप् ।

**विचि(ची)** पुंस्त्री विच-इक् । तरङ्गे भरतः । स्त्रीत्वपक्षे वा

**विचिकित्सा** स्त्री वि+कित-स्वार्थे सन् अ । सन्देहे अमरः ।

**विचित्र** न० विशेषेण चित्रम् । १कर्बुरवर्णे । २तद्वति त्रि० शब्दच० ३आश्चर्य्ये त्रि० । ४कृगेर्वारौ स्त्री राजनि० । ५अर्थालङ्कारभेदे न० अलङ्कारशब्दे ४०२ पृ० दृश्यम् । संज्ञायां कन् । भूर्जपत्रवृक्षे पु० राजनि० ।

**विचित्रवीर्य्य** पु० शान्तनुत्पादात्मजे नृपभेदे भा०आ०१०६ अ०

**विचित्राङ्ग** पुंस्त्री० विचित्रमङ्गं यस्य । (चिते) १व्याघ्रभेदे शब्दच० २मयूरे पुंस्त्री० शब्दर० उभयत्र स्त्रियां ङीष् ३आश्चर्य्यदेहे त्रि० ।

**विचेतस्** त्रि० विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । १दुष्टचित्ते २विशिष्टचित्ते च । ३दुर्मनस्के हेमच० ।

**विचेष्टित** त्रि० विगतं चेष्टितमस्य । १चेष्टाशून्ये, वि+चेष्ट-भावे क्त । २विशेषेण चेष्टायाम् न० ।

**विच्छ** दीप्तौ चु०उभ०सक०सेट् । विच्छयति ते अविविच्छत् त

**विच्छ** गतौ तु० पर० स्वार्थे आय, आयपक्षे उ०सक० सेट् । विच्छायति विच्छायते विच्छति । अविच्छायीत् अविच्छायिष्ट अविच्छीत् ।

**विच्छन्दक** पु॰ विशिष्टः छन्दो यत्र कप् । ईश्वरगृहे अमरः "उपर्य्युपरि यद्गेहं तद्विच्छन्दकसंज्ञितम्" ।

**विच्छाय** न॰ वीनां पक्षिणां छाया नपुंसकत्वम् । पक्षिसमूहच्छायायाम् अमरः । विगता छाया यस्य । २छायारहिते त्रि॰ मेदि॰ । ३विशिष्टकान्तियुते मणौ भरतः ।

**विच्छित्ति** स्त्री वि+छिद-क्तिन् । १अङ्गरागे २हारभेदे ३विच्छेदे मेदि॰ । ४छेदे ५विनाशे ६स्त्रीणां चेष्टाभेदे च । "स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्" सा॰द॰

**विच्छिन्न** त्रि॰ वि+छिद-क्त । १विभक्ते २समालब्धे च मेदि॰ ३कुटिले हेमच॰ । भावे-क्त । ४छेदने न॰ ।

**विच्छेद** पु॰ वि+छिद-भावे घञ् । १वियोगे २अन्तराहित्ये ३विभागे च ।

**विज** पृथक्करणे जु॰ उभ॰ सक॰ अनिट् । वेवेक्ति वेविक्ते इरित् अविजत् अवैक्षीत् अविक्त ।

**विज** भये चाल्ये च रु॰ पर॰अक॰सेट् । विनक्ति अविजीत् । ईदित् ओदित्त्व विग्नः । [ईदित् ओदित्त्व क्त-विग्नः ।

**विज** भये चल्ये च तु॰आ॰अ॰अनिट् । विजते अविजिष्ट ।

**विजन** त्रि॰ विगतो जनो यस्मात् प्रा॰ब॰ । निर्जने अमरः ।

**विजनन** न॰ वि+जन-ल्युट् । १गर्भमोचने प्रसवे हेमच॰ २उद्भवे शब्दच॰ ।

**विजपिल** न॰ विज-क पिल-क कर्म॰ । पङ्के उज्ज्वलदत्तः ।

**विजन्मन्** त्रि॰ विरुद्धं जन्म यस्य । जारजे ।

**विजय** पु॰ वि+जि-कर्त्तरि अच् । १अर्ज्जुने मेदि॰ । "अभिप्रयामि संग्रामे यदहं युद्धदुर्म्मदान् । नाजित्वा विनिवर्त्तामि तेन मां विजयं विदुः" भा॰ वि॰ ४४अ॰ । २विमाने हेमच॰ ३यमे च । ४विष्णोरनुचरभेदे । जयशब्दे ३०५॰ पृ॰ दृश्यम् । तच्छन्दशब्दे दर्शिते ५छन्दोभेदे ६कल्किपुत्रभेदे कल्किपु॰ १२अ॰ । भावे अच् । जये ८परिभवपूर्वकपराभवे च ।

**विजयकुञ्जर** पु॰विजयाय कुञ्जरः । राजवाहनगजे त्रिका॰

**विजया** स्त्री १आश्विनशुक्लपक्षीयदशम्याम् २उमायाः सखीभेदे वामनपु॰ ४अ॰ "कथयतु विजया" इति मुद्राराक्षसम् । ३दुर्गायां हेमच॰ "विजित्य पद्मनाभानं दैत्यराजं महाबलम् । विजया तेन सा देवी लोके चैवापराजिता" देवीपु॰४५अ॰ । ४जयन्त्यां ५शेफालिकायां ६मञ्जिष्ठायां ७शमीभेदे, ८अग्निमन्थे राजनि॰। ९भङ्गायाम् (सिद्धि) हेमच॰ तत्पर्य्यायगुणादि भावप्र॰ उक्तं यथा "भङ्गा गञ्जा मातुलानी मादिनी विजया जया । भङ्गा कफहरी तिक्ता ग्राहिणी पाचनी लघुः । तीक्ष्णोष्णा पित्तला मोहमदवाग्वह्निवर्द्धिनी" भावप्र॰ । अष्टद्वादशीमध्ये "यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् । तदा सा तु महापुण्या द्वादशी विजया स्मृता" इत्युक्ते १०द्वादशीभेदे "शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत् । सप्तमी विजया नाम" इत्युक्ते सप्तमीभेदे च । ११यमभार्य्यायां १२हरितक्यां जटा॰ । १३वचायां रत्नमा॰ । १४मन्त्रविद्याभेदे "विद्यामथैनं विजयां जयाञ्च" भट्टिः ।

**विजल्प** पु॰"व्यक्तयाऽसूयया गूढमानमुद्रान्तरालया । अघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः" उज्ज्वलमण्युक्ते वाक्यभेदे ।

**विजात** त्रि॰ विरुद्धं जातः । १जारजाते विशेषेण जाता । २जातापत्यायां स्त्रियां स्त्री हेमच॰ । [धर्म्मावलम्बिनि ।

**विजातीय** त्रि॰ विभिन्नां जातिं धर्ममर्हति छ । विभिन्न-

**विजिगीषा** स्त्री विजेतुमिच्छा वि+जि-सन् भावे अ । १लोदरपूरणेच्छया निन्दनीयकर्मादौ प्रवृत्तौ २तन्निन्दाऽगणने रमा॰ ३विजयेच्छायाञ्च । उ । विजिगीषु जयेच्छावति त्रि॰ शब्दच॰ ।

**विजिगीषाविवर्जित** त्रि हृत॰ । औदरिके अमरः ।

**विजिन(ल)** न॰ विज-इनच् इलच् किच्च । सरसव्यञ्जने "पाकदूरवासक्तं व्यञ्जने तु भवेत् त्रयम् । तैलपाकसुसंस्कारे प्रशस्तसुसंस्कृतम् । विजिनं लावणीकञ्च विजिलं पिच्छिलञ्च तत्" शब्दर॰ ।

**विजुल** पु॰ विज-उलच् किच्च । शाल्मलीकन्दे राजनि॰ ।

**विजृम्भण** न॰ वि जृभि-ल्युट् । १विकाशे २मुखविकाशहेतुभूते वायुव्यापारभेदे (हाइतोला) । अ विजृम्भा स्त्री ।

**विजृम्भित** त्रि॰ वि+जृभि-क्त । १विकाशिते मेदि॰ २जृम्भायुक्ते भावे क्त । ३प्रकाशे ४चेष्टायां ५जृम्भायां च मेदि॰।

**विज्जन** न॰ विद्-वेधनं जनयति जन-अच् । वाणे त्रिका॰

**विज्जल** न॰ व्यध-ताडे क्विप् विदा जडयति जडि-अच् डस्य लः । १वाणे त्रिका॰ । २विजिले हेमच॰ ।

**विज्जुल** न॰ विज-उलच् जुट् । त्वचे (दारचिनि) राजनि॰

**विज्जुलिका** स्त्री विज्जुल+संज्ञायां कन् कापि अत इत्त्वम् । जलुकायां राजनि॰ । [विज्जुले पु॰ राजनि॰ ।

**विज्ञ** त्रि॰विशेषेण जानाति वि+ज्ञा-क ।१प्रवीणे अमरः ।२प-

**विज्ञात** त्रि॰ वि+ज्ञा-क्त । १ख्याते अमरः । २ज्ञाते च ।

**विज्ञान** न॰ वि+ज्ञा-ल्युट् । १ज्ञाने २कर्मणि मेदि॰ ३शि॰

ल्यादिज्ञाने अमरः। ४वेदान्तोक्ते अविद्यावृत्तिभेदे च। ५बौद्धमतसिद्धे आलयरूपे ज्ञाने च। "चतुर्दशानां विद्यानां धारणं हि यथार्थतः। विज्ञानमितरत् विद्यात् येन धर्मो विवर्द्धते" कूर्मपु० १४अ० उक्ते ६चतुर्दशविद्याज्ञाने च।

**विज्ञानमयकोष** पु० विज्ञानात्मकः कोष इवावरकत्वात्। ज्ञानेन्द्रियसहिते बुद्धिपदार्थे।

**विज्ञानस्कन्ध** पु० बौद्धमतसिद्धेषु रूपविज्ञानवेदनासंज्ञा-संस्काररूपेषु स्कन्धेषु आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहे।

**विज्ञानिक** त्रि० विज्ञानमस्त्यस्य ठन्। विज्ञानयुक्ते भरतः।

**विज्झोली** स्त्री विज-उल-पृषो०। पङ्क्तौ त्रिका०।

**विट** आक्रोशे सक० स्वने अक० भ्वा० पर० सेट्। वेटति अवेटीत्।

**विट** पु० विट क। १षिङ्गे जारे अमरः। २शृङ्गाररसनायकानुचरे "सम्भोगहीनसम्पद् विटस्तु धूर्त्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्" सा०द०। ३धूर्त्ते, "विट! विटपमसुं ददस्व तस्यै" माघः ४पर्वतभेदे ५लवणभेदे ६खदिरभेदे ७मूषिके च मेदि०। ८नारङ्गवृक्षे शब्दमाला।

**विटङ्क** न० वि+टकि-अच्। कपोतपालिकायां प्रासादाद्यग्रस्थे काष्ठनिर्मिते कपोतावासस्थाने। (पायराखोप) अमरः।

**विटप** पुंन०। विटं विस्तारं वा पाति पिबति वा पा०क। १शाखायां, २पल्लवविस्तारे अमरः। ३स्तम्बे ४पल्लवे च शब्दर० ५विटपालके ६तद्पायिनि च मेदि० "पिबति च पाति च यासकौ रहस्त्वाद् विट! विटपमसुन्ददस्व तस्यै" माघः। ७आदित्यपत्रे पु० राजनि०। ८ऊरुवङ्क्षणान्तरस्थाने हेमच० ९विटाधिपे मेदि०। [वृक्षे राजनि०।

**विटपिन्** पु० विटप+अस्त्यर्थे इनि। १वृक्षे अमरः। २वट-

**विटप्रिय** पु० ६त०। मुद्गरवृक्षे राजनि०।

**विटमाक्षिक** पु० विटप्रियः माक्षिकः। धातुभेदे हेमच०।

**विटि(टी)** स्त्री विट-कि वा ङीप्। पीतचन्दने शब्दमाला।

**विट्खदिर** पु० विडिव दुर्गन्धः खदिरः। (गुयेबावला) वृक्षे अमरः। [अमरः स्त्रियां ङीप्।

**विट्चर** पुंस्त्री विषि-विष्ठायां चरति चर-अच्। ग्राम्यसूकरे

**विट्पति** पु० विशति विश-क्विप् विशः कन्यायाः पतिः। जामातरि जटाधरः। [पक्षिभेदे जटा०।

**विट्सारिका** स्त्री विडिव दुर्गन्धः सारिका। (गुयेशालिक)

**विड** आक्रोशे भ्वा० पर० सक० सेट्। वेडति अवेडीत्।

**विड** न० विड-क। लवणभेदे अमरः। "विडं सक्षारमूर्ध्वाधःकफवातानुलोमनम्" ऊर्ध्वं कफमधोवातं सञ्चारयतीत्यर्थः। "दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च। विबन्धानाहविष्टम्भशूलगौरवशूलनुत्" भावप्र०।

**विडङ्ग** पुंन० विड-अङ्गच्। १स्वनामख्याते औषधभेदे अमरः। "विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु। शूलाध्मानोदरश्लेष्मक्रिमिवातविबन्धनुत्" भावप्र०। २अभिज्ञे त्रि० मेदि०।

**विडम्बन** न० वि-डवि+ल्युट्। १तिरस्करणे २अनुकरणे च। युच्। विडम्बनाप्यत्र स्त्री। "इयञ्च तेऽन्या पुरतो विडम्बनेति" कुमारः।

**विडाल** पुंस्त्री विड-कालन्। स्वनामख्याते १पशुभेदे अमरः स्त्रियां ङीष्। २नेत्रपिण्डे मेदि० ३नयनौषधभेदे च भावप्र० ४विदार्य्यां स्त्री राजनि० ङीष्। संज्ञायां कन्। हरिताले न०। स्वार्थे क। विडाले पशौ पु० स्त्री०। संज्ञायां कन्। नेत्रौषधभेदे तद्विधिः भावप्र० उक्तो यथा "विडालको बहिर्लेपो नेत्रे पक्ष्मविवर्जिते। तस्य मात्रा परिज्ञेया मुखालेपविधानवत्"। मुखालेपस्तु "अङ्गुलस्य चतुर्थांशो मुखालेपः कनिष्ठकः। मध्यमस्तु त्रिभागः स्यादुत्तमोऽर्द्धाङ्गुलो भवेत्"। स्थितिकालोऽपि तस्योक्तो यावत् कल्को न शुष्यति। तेनापि शुष्यहीनः स्यात्तया दूषयति त्वचम्"। स च "यष्टीगैरिकसिन्धूत्थदार्वीतार्क्ष्यैः समांशकैः। जलपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः"। तार्क्ष्यं रसाञ्जनम्। "रसाञ्जनेन वा लेपः पथ्याबिल्वदलैरपि। वचाहरिद्राविश्वैर्वा तथा नागरगैरिकैः"।

**विडालपदक** न० कर्षपरिमाणे भावप्र० कर्षशब्दे १७७४ पृ० दृश्यम्। [शब्दे २४१४ पृ० दृश्यम्।

**विडीन** न० वि+डी-क्त। पक्षिणां गतिभेदे जटा० खगगति-

**विडुल** पु० विड-कुलन्। वेतसवृक्षे हेमच०।

**वि(डो)डौजस्** पु० विष-क्विप् विट् व्यापकमोजो यस्य पृषो० वा ओत्। इन्द्रे अमरः।

**विड्गन्ध** न० विष इव गन्धोऽस्य। विड्लवणे रत्नमाला।

**विड्लवण** न० विडिव दुर्गन्धं लवणम्। स्वनामख्याते लवणभेदे रत्नमाला।

**विड्वराह** पुंस्त्री० विट्प्रियो वराहः शाक०। १ग्राम्यसूकरे जटा० स्त्रियां ङीष्। "हन्तुं विड्वराहक" इति क्रान्तः।

**वितंस** पु॰ वि+तन्स-घञ्। पक्षिणां बन्धनसाधने रज्ज्वादौ भरतः।

**वितण्डा** स्त्री वि+तडि-भावे अ। स्वपक्षस्थापनेन परपक्षमात्रनिराकरणे कथाभेदे अमरः। २कच्छीशाके ३शल्लकीवृक्षे ४करव्यां मेदि॰ ५दर्व्यां हारा॰।

वितण्डाकथालक्षणं गौ॰ सू॰ उक्तं यथा "स प्रतिपक्षस्थापनाहीनो वितण्डा" सू॰ "स जल्पो वितण्डा भवति किंविशेषणः। प्रतिपक्षस्थापनया हीनः। यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्त्तत इति। अस्तु तर्हि प्रतिपक्षहीनो वितण्डा यद्वै खलु तत्परप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षः न त्वसौ साध्यं कञ्चिदर्थं प्रतिज्ञाय स्थापयतीति तस्मात् यथान्यासमेवास्तु" वा॰भा॰।

वृत्तौ तु सूत्रमन्यथा व्याख्यातं यथा "क्रमप्राप्तां वितण्डां लक्षयति स इति। यद्यपि तच्छब्देन जल्पो न परामष्टुं शक्यते जल्पस्य स्थापनाद्वयवतः प्रतिपक्षस्थापनाहीनत्वस्य विरुद्धत्वात् तथापि स्थापनाद्वयवत्त्वं विहाय जल्पैकदेशः परामृश्यते प्रतिपक्षो द्वितीयपक्षः तथाच प्रतिपक्षस्थापनाहीना विजिगीषुकथा वितण्डेति। न च स्वस्य स्थापनीयाभावात् कथमियं कथा प्रवर्त्ततामिति वाच्यम् परपक्षखण्डनेन जयस्यैवोद्देश्यत्वात्। परे तु परपक्षखण्डनेनैव स्वपक्षस्थापनादेव सिद्धेस्तत्साधनाभावेऽपि न प्रवृत्त्यनुपपत्तिरिति वदन्ति"।

**वितथ** त्रि॰ वि+तन-कथन्। मिथ्याभूते पदार्थे अमरः। स्वार्थे यत्। वितथ्य तत्रैव। [उणादिको॰

**वितद्रु** स्त्री वि+तम-रु दान्तदेशः। पञ्चावदेशस्थे नदीभेदे

**वितरण** न॰ वि+तॄ-ल्युट्। दाने अमरः।

**वितर्क** पु॰ वि+तर्क-भावे अच्। १सन्देहे २ऊहे च मेदि॰। ३ज्ञानसूचके शब्दर॰। ४अर्थालङ्कारभेदे अलङ्कारशब्दे ४०२ पृ॰ दृश्यम्।

**वितर्दि** स्त्री वि+तृद-इन् वा ङीप्। वेदिकायाम् अमरः। पृषो॰ वितर्द्धिरप्यत्र स्त्री भरतः वा ङीप्।

**वितल** न॰ विशेषेण तलम्। पातालभेदे शब्दर॰। पातालशब्दे ४२९९ पृ॰ दृश्यम्। २तलशून्ये त्रि॰।

**वितस्ति** पुंस्त्री॰ वि+तस-क्तिच्। द्वादशाङ्गुलपरिमाणे विस्तृत सकनिष्ठाङ्गुष्ठान्तपरिमाणे अमरः।

**वितान** न॰ वि+तन-कर्मभावादौ घञ्। १वृत्तिभेदे मेदि॰ २अवसरे विश्वः। ३यज्ञे ४विस्तारे अमर। ५चन्द्रातपे पुंन॰ ६तुच्छे ७मन्दे च त्रि॰अमरः। ८शून्ये त्रि॰ धरणिः। स्वार्थे क। चन्द्रातपे। संज्ञायां कन्। काण्डहत्ते राजनि॰। ९आहवनीयाद्यग्नीनां विस्तारे। वितानेन निर्वृत्तः ठक्। वैतानिक वितानसाध्ये अग्न्याधेयप्रभृतौ त्रि॰ "अग्न्याधेयप्रभृतीन्याह वैतानिकानि" आश्व॰ श्रौ॰ २सू॰। "वितानेषु भवानि वैतानिकानि वितानसाध्यानीत्यर्थः। वितानशब्दोऽत्र सूत्रे भावनचनोऽग्नीनां विस्तारवचनः" नारा॰। वितायन्तेऽग्नयोऽस्मिन् वि+तन॰ आधारे घञ्। १०अग्निहोत्रादिकर्मणि। "अथैतस्य समाम्नायस्य वितानेयोगापत्तिं व्याख्यास्यामः" आ॰ श्र॰ १सू॰। "वितताः अग्नयो यस्मिन्निति श्रौतकर्मजातमग्निहोत्रादि वितानशब्देनोच्यते" नारा॰। तत्र साधु ठक्। वैतानिक अग्निहोत्रादिकर्मसाधने अग्नौ पु॰। "वैतानिकेऽग्नौ कुर्वीत" मनुः।

**वितानमूलक** न॰ वितानाय मूलमस्य कप्। उशीरे राजनि॰।

**वितुन्न** न॰ वि+तुद-क्त। १सुनिषण्णके अमरः संज्ञायां कन्। २धान्यके ३तुत्थे च न॰ अमरः। ४भूम्यामलक्यां स्त्री राजनि॰। संज्ञायां कन्। ५तामलक्यां पु॰ अमरः।

**वित्त** त्यागे अद॰ चु॰ उभ॰ सक॰ सेट्। वित्तयति ते अविवित्तत् त वित्तापयतीत्यपि।

**वित्त** न॰ वित्त्यते त्यज्यते वित्त-घञ्। १धने अमरः। विद-क्त वा दस्य न नः। २ख्याते, ३विचारिते ४ज्ञाते हेमच॰ ५लब्धे च त्रि॰।

**वित्ति** स्त्री विद-क्तिन्। १ज्ञाने २लाभे ३विचारे च मेदि॰।

**वित्तेश** पु॰ ६त॰। कुबेरे।

**वित्सन** पु॰ विद-लाभे क्विप् तां सनोति सन-दाने अच् वृषभे शब्दच॰। [अवेयिष्ट।

**विथ** याचने भ्वा॰ आ॰ द्विक॰ सेट् ऋदित् न ह्रस्वः। वेथते

**विथुर** पु॰ विथ-उरच् किच्च। १चौरे २राक्षसे च उणा॰।

**विथ्या** स्त्री विथ-यत्। गोजिह्वायाम् शब्दच॰।

**विद** सुखाद्यनुभवे आख्याने, वादे च सक॰ वासे अक॰ चु॰ उभ॰ सेट्। वेदयति ते अवीविदत् त।

**विद** लाभे तु॰ उभ॰ सक॰ अनिट् मुचादि। विन्दति ते। लृदित् अविदत् अवित्त। विवेद विविदे। वित्त्वा वित्तम्।

**विद** मीमांसे रुधा॰ आ॰ सक॰ अनिट्। विन्ते अवित्त।

**विद** भावे, दिवा॰ आ॰ अक॰ अनिट्। विद्यते अवित्त।

**विद** ज्ञाने अदा० पर० सक० सेट् । वेत्ति-वेद । अवेदीत् ।

**विद्** पु० विद्-क्विप् । १पण्डिते अमरः २बुधग्रहे च ज्यो० ।

**विद** पु० विद्-क । १पण्डिते अमरः २बुधग्रहे च ज्यो० ।

**विदंश** पु० विदश्यतेऽनेन वि+दन्श करणे घञ् । अवदंशे (चाटनि) राजनि० ।

**विदग्ध** त्रि०वि+दह-क्त । १नागरे त्रिका० २निपुणे राजनि० ३पण्डिते च शब्दच० । ४नायिकाभेदे स्त्री रसमञ्जरी । परकीयाशब्दे ४२२१ पृ० दृश्यम् । ५विशेषेण दग्धे त्रि० ।

**विदथ** पु० विद कथच् । १योगिनि, २कृतिनि च मेदि० ।

**विदर** न०वि+दॄ-अच् ।(फणिमनसा) वृक्षे शब्दर० । भावे अप् २विदलीकरणे पु० शब्दर० । प्रा०व० । ३विगतभये त्रि० ।

**विदर्भ** पुंस्त्री० विगताः दर्भाः कुशा यतः । देशभेदे कुण्डिन-नगरे (बड़नागपुर) ।

**विदल** त्रि० विशेषेण दल्यते दल-कर्मणि क । १द्विधाभूते २दाडिमकल्के ३वंशादिपात्रे ४स्वर्णादेरवयवे च न० । ५कलायादौ न० अमरभरतौ ६रक्तकाञ्चने ७पिष्टके न० शब्दच० । ८मिष्टान्ने (तेवोड़ि) स्त्री राजनि० । प्रा०व० । ९दलशून्ये त्रि० ।

**विदा** स्त्री विद-अङ् । १ज्ञाने २बुद्धौ च मेदि० ।

**विदादि** पु०अपत्यादौ "विदादिभ्योऽञ्" पा०अञ्प्रत्ययनिमित्ते शब्दगणे स च गणः पा० गणसूत्रे दृश्यः ।

**विदार** पु० वि+दॄ-णिच् भावादौ अच् । १विदारणे २जलो-च्छ्वासे च मेदि० । ३युद्धे हेमच० । ४द्विधाकरणे ।

**विदारक** पु०वि+दॄ-णिच्-ण्वुल् । १जलमध्यस्थतरुशिलादौ अमरः । २विदारणकर्त्तरि त्रि० ३शुष्कनद्यादेर्जलधारण-योग्ये गर्त्ते न० सर्वधरः । ४जलवल्कले शब्दर० ।

**विदारण** न०वि+दॄ णिच्-भावादौ ल्युट् ।१भेदने २विडम्बे च मेदि० । ३मारणे शब्दर० । ४युद्धे पुंस्त्री० मेदि० । ५कर्णिकारवृक्षे पु० शब्दच० ।

**विदारिणी** स्त्री वि+दॄ-णिनि ङीप् । काश्मर्याम् राजनि० ।

**विदारी** स्त्री वि+दारि+कर्मणि अच् गौ० ङीष् । १शाल-पर्ण्याम् । (शालपान) मेदि० ।२भूमिकुष्माण्डे च अमरः "विदारी वातपित्तघ्नी बल्या वृष्या रसायनी" राजव० । ३कण्ठरोगभेदे भावप्र० "सदाहतोदं श्वयथुं सुताम्र-मन्तर्गले पूतिविशीर्णमांसम् । पित्तेन विद्यात् वदने विदारीं पार्श्वे विशेषात् स तु येन शेते" स तु पुरुषो येन पार्श्वेन विशेषात् बाहुल्येन शेते तस्मिन् पार्श्वे सा विदारी भवतीत्यर्थः" ।

**विदारीगन्धा** स्त्री विदार्याः भूमिकुष्माण्डस्येव गन्धो यस्याः । शालपर्ण्याम् (शालपान) अमरः ।

**विदाल** पु० वि+दॄ-घञ् । १कङ्कपादे २कङ्कखासे हेमच० ।

**विदाहिन्** न० वि+दह-णिनि । दाहजनकद्रव्ये ।

**विदित** त्रि० विद्-क्त । १ज्ञाते अमरः २प्रार्थिते च मेदि० ३कवौ पु० जटा० । भावे-क्त । ४विख्यातौ ४उपगमे शब्दच० ५ज्ञाने च । तदस्यास्ति अच् । ६ज्ञातरि त्रि० । "विदितः समाययाविति" किरा० ।

**विदिश्** स्त्री विगता दिशौ । दिशोर्मध्ये अग्निनिरृति-वाय्वीशानकोणचतुष्टये अमरः ।

**विदु** पु० विद-कु । हस्तिकुम्भमध्यभागे अमरः ।

**विदुर** त्रि० विद-कुरच् । १नागरे २धीरे ३कौरवाणां अन्तिके दासीगर्भजाते धर्मावतारभेदे च मेदि० भा०आ० १०६अ० । ४ज्ञातरि च अमरः ।

**विदुल** पु० विद-कुलच् । १वेतसे २जलवेतसे मेदि० ३गन्ध-रसे च रत्नमा० । ४ऋषिभेदे भा० उ० १३२ अ० ।

**विदूर** न० विशिष्टं दूरम् । १अतिदूरे २तत्रस्थे पदार्थे त्रि० । "विदूरे केयूरे कुरु" इति सा०द० ३परि० । ३वैदूर्यमणि-सम्भवस्थाने पु० "विदूरभूमिर्नवमेघशब्दात्" कुमारः ।

**विदूरज** न० विदूरे देशभेदे जायते जन-ड । वैदूर्यमणौ ।

**विदूरथ** पु०१दादशमनोः पुत्रभेदे २पौरवे नृपभेदे विष्णुपु०२२अ० ।

**विदूराद्रि** पु० विदूरे देशेऽद्रिः पर्वतः । पर्वतभेदे । यत्र वैदूर्यमणिरुत्पद्यते ।

**विदूषक** पु० विदूषयति वि+दूष-णिच्-ण्वुल् । १शृङ्गाररस-सहायभेदे २परनिन्दके त्रि० मेदि० । "शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः । भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः । कुसुम-वसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः । हास्यकरः, कलह-रतिर्विदूषकः स्यात् स्वकर्मज्ञः" सा० द० ३प० ।

**विदेश** पु० विभिन्नो देशः । देशान्तरे "को विदेशः सविद्या-नाम्" चाणक्यः ।

**विदेह** पु० विगतो देहः देहसम्बन्धो यस्य । १जनकाख्ये नृपे "असमाप्ते ततो यज्ञे वशिष्ठस्तागमद्द्विजः । तं दृष्ट्वा कु-पितः प्राह मत्याख्यातोऽसि पार्थिव! । यस्मात् तस्मात् शमेयं त्वां विदेहस्त्वं भविष्यसि" वह्निपु० । तदीये २जनपदे च स च देशः मिथिलादेश इति ख्यातः । कूर्मविभागे ह०स०१४ उक्तः । कूर्मविभागशब्दे दृश्यम् । ३तद्देशस्थे नृपे ब०व०च ३कैवल्यप्राप्तियुते ४देहसम्बन्धशून्ये

च त्रि॰ ३मिथिलायां स्त्री हेमच॰। ५देहशून्ये देवे पात॰ सूत्रभाष्यादौ देवस्य विदेहत्वं वर्णितं यथा "भवप्रत्ययो विदेहप्रकृतिलयानाम्" सू॰।

"स खल्वयं द्विविध उपायप्रत्ययो भवप्रत्ययश्च तत्रोपायप्रत्ययो योगिनां भवति" भवप्रत्ययो विदेहप्रकृतिलयानाम्" विदेहानां देवानां भवप्रत्ययः ते हि स्वसंस्कारमात्रोपयो(भो)गेन चित्तेन कैवल्यपदमनुभवन्तः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्ति" भाष्यम्। "भवन्ति जायन्तेऽस्यां जन्तव इति भवोऽविद्या स खल्वयं भवः प्रत्ययः कारणं यस्य निरोधसमाधेः स भवप्रत्ययः। अत्र तयोर्मध्ये उपायप्रत्ययो योगिनां मोक्षमाणानां भवति विशेषविधानेन शेषस्य मुमुक्षुसम्बन्धं निषेधति। केषां तर्हि भवप्रत्ययः। इत्यत्र उक्तेत्तरम्। विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः। तद् व्याचष्टे विदेहानां देवानां भवप्रत्ययः भूतेन्द्रियाणामन्यतमस्मात्मत्वेन प्रतिपन्नानामुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषतया षाट्कौशिकशरीररहिताः विदेहाः ते हि संस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः प्राप्नुवन्तः विदेहाः। अवृत्तिकत्वस्य कैवल्येन सादृश्यम्। स्वाधिकारसंस्कारशेषता च वैरूप्यम्। संस्कारमात्रोपभोगेनेति क्वचित् पाठः तत्रार्थः संस्कारमात्रमेवोपभोगो यस्य न तु चित्तवृत्तिरित्यर्थः। प्राप्तावधयः संस्कारविपाकं तथाजातीयकमतिवाहयन्ति अतिक्रामन्ति पुनरपि संसारे विशन्ति तथा च वायुप्रोक्तं "दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौतिकास्तु शतं पूर्णम्" विवरणम्। तेषां देवानां मध्ये यस्य विवेकसाक्षात्कारस्तस्य कैवल्यप्राप्तिः "यो यो देवानां प्रत्यबुध्यत स विमुच्यते" इति श्रुतेः। मीमांसासिद्धे देहशून्ये ५अचेतने मन्त्रात्मके देवे च। अविपद्शब्दे ४५१ पृ॰ दृश्यम्।

**विदेहकैवल्य** न॰ कर्म॰। "न तस्य प्राणा ह्युत्क्रामन्ति इहैव समवलीयन्ते" श्रुत्युक्ते जीवन्मुक्तस्य देहपतनान्तरं निर्वाणमोक्षे।

विदेहकैवल्यनिष्पत्तिप्रकारादि शा॰ सू॰ भाष्ययोरुक्तं यथा "भोगेन त्वितरे क्षपयित्वा सम्पद्यते" सू॰। अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात् क्षय उक्तः इतरे त्वारब्धकार्ये पुण्यपापे उपभोगेन क्षपयित्वा ब्रह्म सम्पद्यते "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इति। "ब्रह्मैव सन् ब्रह्माप्येति" इति चैवमादिश्रुतिभ्यः। ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपातात् भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्त्तेत न, निमित्ताभावात् उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तं न च तादृशमत्र किञ्चित् कारणम्। नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते न, तस्य दग्धबीजत्वात्। मिथ्याज्ञानावष्टम्भं हि कर्मान्तरं देहपाते उपभोगान्तरमारभते तच्च मिथ्याज्ञानं सम्यग्दर्शनेन दग्धमिति साध्वेतत् आरब्धकार्यक्षये विदुषः कैवल्यम्" भा॰। तत्रैव ४पादे च सू॰भाष्ययोरुक्तं यथा "सम्पद्याविर्भावः स्वेनशब्दात्" सू॰ "एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" श्रुतिविषयवाक्यं तत्र पूर्वपक्षं दर्शयित्वा सिद्धान्तितं भाष्यकृता यथा "केवलेनैवात्मनाविर्भवति न धर्मान्तरेणेति कुतः? स्वेन रूपेणाभिनिष्पद्यते इति स्वशब्दात्" भा॰। "मुक्तः प्रतिज्ञानात्" सू॰। "योऽत्राभिनिष्पद्यते इत्युक्तः स पूर्वबन्धविनिर्मुक्तः शुद्धेनैवात्मनावतिष्ठते" कुतः? प्रतिज्ञानात्। "एतं त्वेव ते भूयोऽनुव्याख्यास्यामि" इति प्रतिज्ञातस्य "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति चोपन्यस्य स्वेनरूपेणाभिनिष्पद्यते स उत्तमः पुरुषः" इति (श्रुतिः) भा॰। "अविभागेन दृष्टत्वात्" सू॰। "अविभक्त एव परेणात्मना मुक्तोऽभिनिष्पद्यते कुतः? दृष्टत्वात्" "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति" एवं मुनेर्विजानत आत्मा भवति गौतम!" इत्येवमादीनि सु॰ स्वरूपनिरूपणपराणि वाक्यान्यविभागमेव दर्शयन्ति नदीसमुद्रादिनिदर्शनानि च" भा॰। विवेकचू॰ अप्युक्तं यथा "पाषाणवृक्षतृणधान्यकटाम्बराद्या दग्धा भवन्ति हि मृदेव यथा तथैव। देहेन्द्रियासुमनआदिसमस्तदृश्यम् ज्ञानाग्निदग्धमुपयाति परात्मभावम्। विलक्षणं यथा ध्वान्तं लीयते भानुतेजसि। तथैव सकलं दृश्यं ब्रह्मात्मनि विलीयते। घटे नष्टे यथा व्योम व्योमैव भवति स्फुटम्। तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम्। क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले। संयुक्तमेकतां याति तथात्मन्यात्मविन्मुनिः। एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम्। ब्रह्मभावं प्रपद्यैव यतिर्नावर्त्तते पुनः। सदात्मकत्वविज्ञानदग्धाऽविद्यादिवर्ष्मणः। अमुष्य ब्रह्मभूतत्वात् ब्रह्मणः कुत उद्भवः"।

"विद्वांश्च विदुच्यते" न तस्य प्राणा ह्युत्क्रामन्ति इहैव समवलीयन्ते" इत्याद्या श्रुतयश्चात्र प्रमाणम् ।

**विद्ध** त्रि॰ व्यध-क्त । १छिद्रिते अमरः । २क्षिप्ते ३सदृशे ४बाधिते मेदि॰ ५ताड़िते च ।

**विद्धकर्णी** स्त्री॰ विद्धः कर्ण इव पत्रमस्य । पाठायाम् (आकनादि) हिक्कपकोषः । स्त्रीत्वमपि तत्रैव अमरः । ङीप् । स्वार्थे क । तत्रार्थे स्त्री शब्द र॰ । [पदार्थे त्रि॰ ।

**विद्यमान** पु॰ विद-शानच् । १वर्त्तमानकाले, २तद्वृत्तौ

**विद्या** स्त्री विद-क्यप् । १ज्ञाने । २तत्त्वसाक्षात्कारे "विद्यया ऽमृतमश्नुते" इति श्रुतिः । ३दुर्गायां शब्दच॰ ४गणिकारिकाद्ये शब्दच॰ तन्त्रोक्ते ५देवीमन्त्रे च । "शतलक्षप्रजप्तापि तस्य विद्या न सिध्यतीति" श्यामास्तवः । ६विद्याहेतौ शास्त्रे "अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थञ्च विद्या ह्यष्टादशैव ताः" प्रा॰ त॰ विष्णुपु॰ । विद्याभेदे देवताभेदाः हेमा॰ व्र॰ विष्णुधर्मोत्तरे उक्ता यथा "ऋग्वेदस्तु स्मृतो ब्रह्मा यजुर्वेदस्तु वासवः । सामवेदं तथा विष्णुः रुद्रस्त्वाथर्वणो भवेत् । शिक्षा प्रजापतिर्ज्ञेया कल्पो ब्रह्मा प्रकीर्त्तितः । सरस्वती व्याकरणं निरुक्तं वरुणः प्रभुः । छन्दो विष्णुस्तथैवाग्निर्ज्योतिषं भगवान् रविः । मीमांसा भगवान् सोमो न्यायमार्गः समीरणः । धर्मस्य धर्मशास्त्राणि पुराणञ्च तथा महः । इतिहासं प्रजाध्यक्षो धनुर्वेदः शतक्रतुः । आयुर्वेदस्तथा साक्षाद्देवो धन्वन्तरिः प्रभुः । कलावेदो महादेवी नृत्यशास्त्रं महेश्वरः । सङ्कर्षणः पञ्चरात्रं रुद्रः पाशुपतं तथा । पातञ्जलमनन्तश्च सांख्यञ्च कपिलो मुनिः । अर्थशास्त्राणि सर्वाणि धनाध्यक्षः प्रकीर्त्तितः । कलाशास्त्राणि सर्वाणि कामदेवो जगद्गुरुः । अन्यानि यानि शास्त्राणि यत्कर्माणि प्रचक्षते । स एव देवता तस्य शास्त्रं कर्म च दैववत्" । श्रुतौ तु विद्याभेदः द्विविधः पराऽपराभेदात् उक्तः । यथा ब्रह्मावगमः सा परा "यथाऽक्षरमधिगम्यते सा परेतिश्रुतेः" । ऋग्वेदादिलक्षणा अपरा सा च अध्ययनाध्यापनरूपा ।

**विद्याचन(ण)** त्रि॰ विद्यया ख्यातः । विद्या+चन(ण) विद्यया विख्याते । [ख्याते ।

**विद्याचुञ्चु** पु॰ विद्यया विख्यातः विद्या+चुञ्चु । विद्यया

**विद्यादल** पु॰ विद्यायै ज्ञानाय दल्यतेऽसौ । भूर्जवृक्षे शब्दच॰

**विद्यादान** न॰ ६त॰ । १अध्यापने २पुस्तकादिदाने च । "विद्यादानञ्च अध्यापनेन व्याख्यया विलिख्यार्पणेन च भवतीति ज्यो॰त॰रघु॰ । तत्राध्यापनविधिः श्रुतौ यथा "योऽधीत्यार्थिभ्यो विद्यां न प्रयच्छेत् स काको वान्धस्सन् स्यात् श्रेयसो द्वारमपावृणुयात् अनध्यापने दोषश्रवणात् तस्यावश्यकत्वं गम्यते । "अष्टवर्षं मानवकमुपनयीत तमध्यापयीत" इत्यादिस्मृतौ च अध्यापनाविधिलाभः । व्याख्यानादिविधिलाभस्तु "अज्ञानतिमिरोऽपेतान् सन्देहपटलान्वितान् । निरामयान् यः कुरुते शास्त्राञ्जनशलाकया । इह कीर्त्तिं राजपूजां लभते सद्गतिं च सः" ज्यो॰त॰ । तद्वत्पुस्तकादिदानस्यापि वक्ष्यमाणप्रमाणात् तत्र ज्ञानरूपविद्यादानप्रकारः हेमा॰दा॰वह्निपु॰उक्तो यथा "वाजपेयसहस्रस्य सम्यगिष्टस्य यत् फलम् । तत्फलं समवाप्नोति विद्यादानान्न संशयः । तस्माद्देवालये नित्यं धर्मशास्त्रस्य वा स्मृतेः । पठनं कारयेत् राजन्! यदीच्छेत् धर्ममात्मनः । गोभूहिरण्यवासांसि शयनान्यासनानि च । प्रत्यहं तेन दत्तानि भवन्ति नृपसत्तम! । धर्माधर्मौ न जानाति लोकोऽयं विद्यया विना । तस्मात् सदैव धर्मात्मन्! विद्यादानरतो भवेत् । वेदशास्त्ररहस्यो यदि नैव नृपोत्तम! । ततोऽज्ञानतमोऽन्धस्य कावस्था जगतो भवेत् । ब्रह्मादयः सुराः सर्वे ऋषयो दग्धकिल्विषाः । मनुप्राः पितरश्चैव विद्यादाने प्रतिष्ठिताः । चतुर्युगानां राजेन्द्र! एकसप्ततिसंख्यया । वेदशास्त्रप्रदः स्वर्गे पूज्यते सुरसत्तमैः । इत्युपक्रमे "दानं विशेषफलदं जगतीह नान्यद्विद्यां विहाय वदनाजलतांधिवासाम् । गोभूहिरण्यगजवाजिरथादि सर्वं तां यच्छतां किमिति भूप! भवेन्न दत्तम्" । तत्रैव नन्दिपु॰ "अध्यापयेच्छुभान् शिष्यानभिजातान् सुमेधसः । एवं विद्याप्रदानं हि सर्वदानोत्तमोत्तमम् । सर्वदा सर्ववर्णानामयं च सुव उत्तमः । अनेन विधिना दत्त्वा विद्यां पुण्यपरो नरः" । स्वयंविद्यादानासामर्थ्ये आ॰ त॰ भविष्यपु॰ उक्तं यथा "अध्यापकस्य यो वृत्तिं दत्त्वाऽध्यापयति द्विजान् । किं न दत्तं भवेत्तेन धर्मकामार्थमिच्छता" । तद्वत्पुस्तकादिदानमपि विद्यादानं हेमा॰ दा॰ उक्तं यथा नन्दिपु॰ "विद्या च सर्वा दानानां सुकृतोऽस्य विधिं बुधः । श्रुत्वा विद्याञ्च विधिवत् श्रद्धया भावितात्मना । सत्पात्रेभ्यस्तां दद्यात् विशेषात् पुण्यशालिषु । उप-

योग्यञ्च यद् यस्य तत्तस्य प्रतिपादयेत्”। ततः पुस्तकलेखनप्रकारस्तद्दानविधिश्च विस्तरेणोक्तस्तत्र दृश्यः। विद्योपयोगिद्रव्यादिदानेऽपि विद्यादानं भवति यथोक्तं हेमा०दा० देवीपु० “आत्मवित्तानुसारेण विद्यादानं करोति यः। असाध्यं फलमाप्नोति आद्यतुल्यं न संशयः। स्त्री तथानेन विधिना विद्यादानफलं लभेत्। भर्त्रा चैवाननुज्ञाता विधवा च तदर्हयेत्”। विधानमाह “विद्यार्थिने सदा दद्याद् वस्त्राभ्यङ्गञ्च भोजनम्। वर्त्तिका सुदकं दीपं यस्मात्तैलं विना न सः। लेखनीघटितं तीक्ष्णं मसीपात्रन्तु लेखनीम्। दत्त्वा तु लभते वत्स! विद्यादानमनुत्तमम्। पुस्तकस्तरणं दत्त्वा सुप्रमाणं सुशोभनम्। विद्यादानमवाप्नोति सत्यवन्तश्च बुद्धिमान्। यन्त्रकं त्वासनञ्चैव दत्त्वासनमथापि वा। विद्यावाचनशीलाय दत्तं भवति राज्यदम्। अञ्जनं नेत्रपादानां दत्तं विद्यापरायणे। भूमिर्दत्ता च लेखस्य स्वर्गराज्यफलप्रदम्। यस्य भूम्यां स्थितो नित्यं विद्यादानं प्रवर्त्तयेत्। तस्यापि भवति स्वर्गस्तत्प्रभावान्न संशयः”। “येऽपि पत्रं मसीपात्रं लेखनीं सम्पुटादिकम्। दद्युः शास्त्राभियुक्ताय तेऽपि विद्याप्रदायिनाम्। यान्ति लोकान् शुभान् मर्त्याः पुण्यभाजो नराधिप!”। नान्दिपु० “विद्यादानमवाप्नोति प्रदानात् पुस्तकस्य च। शिल्पानि शिक्षयेद् यस्तु पौण्डरीकफलं लभेत्। शिल्पभाण्डप्रदानेऽपि तद्विद्यादानजं फलम्। आहितेषु प्रदत्तस्य तथा कृत्वा निवारणम्। विद्यादानफलं प्रोक्तं नात्र कार्य्या विचारणा। पापहस्तस्य च तथा दत्त्वा चैव परां गतिम्। विद्यादानफलं प्राप्य स्वर्गलोके महीयते। येन जीवति भाण्डेन तस्मै तद्भाण्डदायकः। सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते” विष्णुधर्मो०। तत्रैव स्कन्दपु० विद्यादानोपक्रमे “पुस्तकास्तरणं दत्त्वा बहलं तत्प्रमाणतः। तदासनं वितानं वा शिवलोके महीयते। यः शीर्णसमुद्धृतं निम्नखातं सुलक्षणम्। दद्यात् सम्पुटकं कृत्वा चर्मणा वापि निर्मितम्। शिवज्ञानाभियुक्ताय तदध्ययनहेतवे। सुश्लक्ष्णं फलकं वापि विद्यादानफलं लभेत्। यः सौवर्णं सुसम्पूर्णं सर्वरत्नोपशोभितम्। सपिधानं समञ्जूषं विद्याकोशसमाश्रयम्। कारयेद्वापि रौप्येण ताम्रेण चतुरस्रकम्। कांस्यारकूटं लौहं वा दारुवंशादिनिर्मितम्। सुश्लक्ष्णातिरक्तेन चर्म्माणाभिनवेन च। अन्तर्बहिश्च मण्डयेत् विद्यादाने नवं दृढम्। सुदृढं कटकोपेतं दृढस्थाननिवेशनम्। कुर्य्यात्तालकसंयुक्तं विद्यावर्त्तिकरण्डकम्। एवं वित्तानुसारेण कारयित्वा दृढं नृपः। विद्यासिंहासनं तत्र संपूज्य विधिवद्बुधः। तस्मिन् पुण्याहशब्देन विद्याकोशघटं न्यसेत्। एवं यः शिवविद्यायाः कुर्य्यादायतनं शुभम्। स मुक्तः पातकैः सर्वैर्विद्यादानफलं लभेत्। विद्यामण्डलकं कृत्वा विद्याव्याख्यानमण्डपे। तत्राभ्यर्च्य शिवां विद्यां तद्व्याख्यां शृणुयात्ततः। सोऽपि याति शिवस्थानं कार्य्यकालसमन्वितम्। अनेन विधिना ज्ञानं यः शृणोति प्रवर्त्तितः। स साम्राज्यश्रियं सौख्यं देहान्ते मुक्तिमाप्नुयात्”। तत्रैव देवीपु० “तस्मात् सर्वप्रयत्नेन विद्या देया सदा नरैः। इहैव कीर्त्तिमाप्नोति अन्तो याति परां गतिम्। यस्तु देव्या गृहे नित्यं विद्यादानं प्रवर्त्तयेत्। स भवेत् सर्वलोकानां पूज्यः पूज्यपदं व्रजेत्”। वराहपु० “लेखापयित्वा तच्छास्त्रं देयं गुणवते सदा। तपस्विने, धर्म्मरते प्रतिपालनतत्परे। वस्त्रयुग्मेन संवीतं पुस्तकं प्रतिपादयेत्। वाचकं पूजयेच्चापि वस्त्रालङ्कारभूषणैः। अनेनैव विधानेन विद्यादानफलं लभेत्”।

**विद्याधन** न० विद्यया लब्धं धनम्। विद्यया लब्धे “उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम्। विद्याधनन्तु तद्विद्यात्” इति, “शिष्यादार्त्विज्यतः प्राप्तं सन्दिग्धप्रश्ननिर्णयात्। स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्। विद्याधनन्तु तत् प्राहुः” इति “शिल्पिष्वपि हि धर्म्मोऽयम्” इत्युपक्रम्य “परं निरस्य वादेन विद्यया द्यूतपूर्वकम्”। विद्याधनं तु तद्विद्यादित्युक्ते च धने।

विद्याधनविभागे विशेषः “विद्याधनं तु यद् यस्य तत्तस्यैव धनं भवेत्। कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः। भागो यवीयसां तत्र यदि विद्यानुपालिनः” दायभा०। दायतत्त्वे तु “भागं विद्याधनात्तस्मात् स लभेताश्रुतो यत्” इति पाठः। दायभा० नारदवाक्ये “देयं वैद्येन तद्धनम्” पाठः। “परभक्तोपयोगेन विद्या प्राप्ताऽन्यतस्तु या। तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते” दाय०त० कात्यायनः। “अन्यतः पितृमातृकुलव्यतिरिक्तात्” रघु०। “नाविद्यानां तु वैद्येन देयं विद्याधनात् क्वचित्। समविद्याधिकानां तु देयं वैद्येन तद्धनम्” “कुले विनीतविद्यानां भ्रातृणां

जायते तोयं तोयात् शस्यानि शाखिनः। तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः। सूर्य्यपश्च नीरञ्च काले तस्मात् सदुद्भवः। सूर्य्यो मेघादयः सर्वे विधात्रा ते नियोजिताः। यत्राब्दे यो जलधरो गजश्च सागरोऽभवत्। शस्याधिपो नृपो मन्त्री विधात्रा ते निरूपिताः। जलाढ़कानां शस्यानां तृणानाञ्च निरूपितम्। अब्देऽब्देऽस्त्येव तत् सर्वं कल्पे कल्पे युगे युगे। हस्ती समुद्रादादाय करेण जलमीप्सितम्। ददाति घनाय तद्वाताहतेन प्रेरितो घनः। स्थाने स्थाने पृथिव्याञ्च काले काले यथोचितम्। ईश्वरेच्छाविभूतं पूर्वं तत्प्रतिबन्धकम्। भूतं भव्यं भविष्यञ्च सन्ततं सुदृढ़ञ्च मध्यमम्। धात्रा निरूपितं कर्म केन तात! निवार्य्यते" ब्रह्मवै०जन्म०२१अ०। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजा" गीता। आसन्नवृष्टिसूचकानि यथा "मयूराः स्तनयित्नूनां शब्देन हर्षिता दृढ़ः। केकायन्ति प्रतिवने सततं वृष्टिसूचकाः। मेघानुगानां मधुरस्वानकानां मनोहरः। श्रूयतामिनन्दानां वृष्टिसन्निधिसूचकः। गगने शक्रचापेन कृतं वाक्यतमास्पदम्। धारासारशरैस्तापं छेत्तुं प्रति समुद्गतः" कालिकापु० १५अ०।

**वृष्टिघ्नी** स्त्री वृष्टिं हन्ति कारणत्वेन जहाति हन–क ङीप्। क्षुद्रैलायाम् शब्दच०।

**वृष्टिजीवन** त्रि० वृष्टिः वृष्टिजलमेव जीवनं पालनोपायो यस्य। १वृष्टिजलमात्रोपजीविनि चातके। २देवमातृके देशे हेमच०। [चाता०। २वृष्टिभवे त्रि०।

**वृष्टिभू** पु० वृष्टौ तदुपलक्षिते काले भाति भू–क्विप्। १भेके

**वृष्टिवैकृत** न० ६त०। उपद्रवसूचके वृष्टिविकारे यथोक्तं वृ० सं० ४६अ०

"दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं सपरचक्रम्। रोगो ह्यनृतुभवायां नृपवधोऽनभ्रजातायाम्। शीतोष्णविपर्य्यासे नो सम्यगृतुषु च समस्तेषु। षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं च। अन्यर्त्तौ सप्ताहं प्रकृतिवर्षं प्रधाननृपमरणम्। रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः। धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयं विद्यात्। अङ्गारपांशुवर्षे विनाशमायाति तन्नगरम्। उपला विना जलधरैर्विकृता वा प्राणिनो यदा वृष्टाः। छिद्रं वाप्यतिवृष्टौ शस्यानामीतिसञ्जननम्। क्षीरघृतक्षौद्राणां दध्नो वा रुधिरोष्णोदकयोर्वा वर्षे। देशविनाशो ज्ञेयोऽसृग्वर्षे चापि नृपयुद्धम्। यद्यमलेऽर्के छाया न दृश्यते दृश्यते प्रतीपा वा। देशस्य तदा सुमहद्भयमायातं विनिर्देश्यम्। व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथ वा रात्रौ। प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत्। सूर्य्येन्दुपर्जन्यसमीरणानां योगः स्मृतो वृष्टिविकारकाले। धान्यान्नगोकाञ्चनदक्षिणाश्च देयास्ततः शान्तिमुपैति पापम्"।

**वृष्णि** पु० वृष–नि किच्च। १यादववंशे नृपभेदे शब्दच०। २श्रीकृष्णे ३मेषे अमरः। ४चण्डे ५पाषण्डे च त्रि० शब्दर०।

**वृष्णिगर्भ** पु० वृष्णिः यादवकुलं गर्भो यस्य। श्रीकृष्णे हारा०

**वृष्य** पु० वृषाय हितो यत् वृष–क्यप् वा। १माषे हेमच०। २शुक्रवृद्धिकारके त्रि० भावप्र०। ३वाजीकरणे न० ४आमलक्यां ५शतावर्य्यां ६ऋषभनामौषधौ च स्त्री राजनि०। ७ऋद्धिनामौषधौ रत्नमा०। [राजनि०।

**वृष्यकन्दा** स्त्री वृष्यः शुक्रवर्द्धकः कन्दो यस्याः। विदार्य्याम्

**वृष्यगन्धिका** स्त्री वृष्यः शुक्रवर्द्धको गन्धो यस्याः काप् अत इत्वम्। अतिबलायाम् राजनि०। कप्भावे वृष्यगन्धा वृद्धदारके स्त्री शब्दच०। [वृष्यवल्लिका तत्रैव स्त्री।

**वृष्यवल्ली** स्त्री कर्म०। १विदार्य्याम् राजनि०। स्वार्थे क ह्रस्वः।

**वृह** दीप्तौ वा चु० उभ०सक० पक्षे भ्वा० पर० इदित्। वृंहयति ते अववृंहत् त। वृंहति अवृंहीत्।

**वृह** वृद्धौ शब्दे च अक० भ्वा० पर० सक० सेट्। वर्हति अवर्हत् अवर्हीत्। [इदित्। वृंहति अवृंहीत्

**वृह** ध्वनौ हस्तिध्वनौ वृद्धौ च भ्वा०पर० पर०अक० सेट्।

**वृह** वृद्धौ भ्वा०पर०सक० सेट्। वर्हति अवर्हीत्।

**वृह** उद्यमे तु०पर०अक०सेट्। वृहति। अवर्हीत्-अवृक्षत्।

**वृह** वृद्धौ भ्वा०आत्म० सक० सेट् इदित्। वृंहते अवृंहिष्ट।

**वृहच्चञ्चु** पु० वृहती चञ्चुरिव मञ्जरी यस्य। महाचञ्चुशाके राजनि०। [१फलपूरे शब्दचि०। २उदारचित्तयुते त्रि०।

**वृहच्चित्त** पु० वृहत् उदारं चित्तं यस्मात् ५ब०। यस्य वा ६ब०।

**वृहच्छल्क** पु० वृहत् शल्कोऽस्य। चिङ्गटमत्स्ये जटा०।

**वृहत्** त्रि० वृ०वृह–अति। महति अमरः स्त्रियां गौरा० ङीष्।

**वृहती** स्त्री वृहत्+गौरा० ङीष्। १महत्यां स्त्रियां २क्षुद्रवार्त्ताक्याम् राजनि०। ३वारिधान्यां ४वाचि ५कण्टकारिकायाम् मेदि०। ६नवाक्षरपादके छन्दोभेदे वृ०र०। संज्ञायां कन् ह्रस्वः। उत्तरीयवस्त्रे स्त्री अमरः।

बृहतीपति पु॰ बृहतीनां वाचां पतिः । बृहस्पतौ हेमच॰।

बृहत्कन्द पु॰ बृहत् कन्दो यस्य । १गृञ्जने रत्नमा॰ । २विष्णुकन्दे च राजनि॰ ।

बृहत्काश पु॰ कर्म॰ । ( खागड़ा ) तृणभेदे हारा॰ ।

बृहत्कालशाक पु॰ कर्म॰ । ( बड़ कालकासुन्दे ) शाकभेदे त्रिका॰ ।

बृहत्कुक्षि पु॰ बृहत् कुक्षिर्यस्य । तुन्दिले (भुँडे) अमरः ।

बृहत्ताल पु॰ कर्म॰ । हिन्ताले राजनि॰ ।

बृहत्तिक्ता स्त्री कर्म॰ । पाठायाम् (आकनादि) राजनि॰ ।

बृहत्तृण पु॰ बृहत्तृणं यत्र । वंशे शब्दच॰ ।

बृहत्त्वच् पु॰ बृहती त्वक् यस्य । (छातियान) वृक्षे रत्नमा॰

बृहत्पत्र पु॰ बृहत् पत्त्रमस्य । १हस्तिकन्दे (हातिकान्दा) राजनि॰ । २त्रिपर्णिकायां स्त्री राजनि॰ ।

बृहत्पाटलि पु॰ चु॰ पट–अलि कर्म॰ । धुस्तूरवृक्षे त्रिका॰।

बृहत्पाद त्रि॰ बृहत् पादो मूलमस्य । वटवृक्षे शब्दच॰।

बृहत्पालिन् पु॰ बृहतः पालयति पाल–णिनि । वनजीरके राजनि॰ ।

बृहत्पीलु पु॰ कर्म॰ । महापीलौ राजनि॰ ।

बृहत्फला स्त्री बृहत् फलं यस्याः । १कटुतुम्ब्याम् २महेन्द्रवारुण्यां ३कुष्माण्ड्यां ४महाजम्ब्वां च राजनि॰ ।

बृहत्साम न॰ कर्म॰ । "त्वामिद्धि हवामहे" इत्यस्यामृचि गीयमाने साम्नि "बृहत्साम तथा साम्नाम्" गीता ।

बृहदङ्ग पुंस्त्री॰ बृहदङ्गमस्य । गजे शब्दच॰ स्त्रियां ङीष् ।

बृहदम्ल पु॰ कर्म॰ । (कामराङ्गा) वृक्षे शब्दच॰ ।

बृहदेला स्त्री कर्म॰ । स्थूलैलायाम् राजनि॰ ।

बृहद्गृह पु॰ कारूषदेशे त्रिका॰ । स च हिमालयस्य पश्चाद्दक्षिणस्यां मालवदेशसन्निकृष्टः ।

बृहद्गोल न॰ कर्म॰ । ( तरमुज ) लताफले शब्दच॰ ।

बृहद्दल व॰ बृहत् दलमस्य । १पट्टिकालोध्रे २हिन्ताले च राजनि॰ ।

बृहद्वल न॰ कर्म॰ । महालाङ्गूले त्रिका॰ । [च अमरः ।

बृहद्भानु पु॰ बृहद्भानुः किरणो यस्य । १वह्नौ २चित्रकवृक्षे

बृहद्रथ पु॰ बृहत् रथोऽस्य । १इन्द्रे २यज्ञपात्रभेदे ३सामभेदे च । [जनि॰ ।

बृहद्राविन् पु॰ बृहत् रौति–रु–णिनि । क्षुद्रोलूके रा-

बृहद्वल्क पु॰ बृहत् वल्कमस्य । पट्टिकालोध्रे राजवल्लभः ।

बृहद्वात पु॰ बृहत् वातो धातुभेदो यस्मात् ५ब॰ । (देधान) वृक्षे रत्नमाला ।

बृहद्वारुणी स्त्री कर्म॰ । महेन्द्रवारुण्याम् राजनि॰ ।

बृहद्बीज पु॰ बृहत् बीजमस्य । आम्रातके शब्दच॰ ।

बृहन्नल पु॰ बृहत् नलो यस्य । महापोटगले मेदि॰ ।

बृहन्नला(डा) पुंस्त्री॰ बृहत् नलो यस्य वा लस्य डः । अर्जुने हेमच॰ विराटपर्वणि तत्कथा दृश्या ।

बृहस्पति पु॰ बृहत्याः वाचः पतिः सुषो॰ नि॰ । १जीवे देवाचार्य्ये अमरः २ग्रहभेदे सू॰सि॰खगोलशब्दे तत्कक्षादिमानं तद्रूपादि च ग्रहयज्ञशब्दे दृश्यम् । बृहस्पतिना च बौद्धधर्मः प्रवर्त्तितो यथाक्तं मत्स्यपु॰२४अ॰ "ततो बृहस्पतिः शक्रमकरोदुपतर्पितम् । ग्रहशान्तिविधानेन पौष्टिकेन च कर्मणा । गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः । जिनधर्मं समास्थाय वेदबाह्यं स वेदवित् । वेदत्रयी परिभ्रष्टांश्चकार धिषणाधिपः । वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान् । जघान शक्रो वज्रेण सर्वधर्मबहिष्कृतान्" । बृहस्पतिसवः यज्ञभेदः ।

वृ वरणे क्र्या॰ प॰ उभ॰ सक॰ सेट् । वृणाति वृणीते अवारीत् अवरिष्ट–अवरीष्ट अवृत । ववरतुः ।

वे स्यूतौ भ्वा॰उभ॰यजा॰सक॰ अनिट् । वयति ते अवासीत् अवास्त वा वयादेशः उवाय ऊयतुः ऊवतुः ।

वेग पु॰विज–घञ् । १प्रवाहे हेमच॰। २जवे अमरः ३महाकालफले मेदि॰ ४रेतसि हेमच॰ । ५मूत्रविष्ठादिनिःसारणयत्ने ६न्यायोक्ते संस्कारभेदे च "स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः" । "क्षितिर्जलं तथा तेजः पवनो मन एव च । परापरत्वमूर्तत्वक्रियावेगाश्रया अमी" भाषा॰ तस्य क्षित्यादिगुणतोक्ता । "स्वभावतः प्रवृत्तानां मलादीनां जिजीविषुः । न वेगं धारयेद्धीरः कामादीनाञ्च धारयेत्" राजनि॰ ।

वेगसर पुंस्त्री॰ वेगेन सरति सृ–ट । वेगगामिहये १अश्वतरे हेमच॰ । स्त्रियां ङीष् । २वेगगामिमात्रे त्रि॰ स्त्रियां ङीप् । [२वेगवति त्रि॰ अमरः स्त्रियां ङीप् ।

वेगिन् पु॰ वेग+अस्त्यर्थे इनि । १श्येनविहगे राजनि॰ ।

वेचा स्त्री विच–पृथक्त्वे अच् । वेतने हला॰ ।

वेजानी स्त्री विज–अच् तमानयति आ–नी–ड गौरा॰ ङीष् सोमराज्याम् शब्दच॰ ।

वेड न॰ विड–अच् । १सान्द्रनिष्पिष्टद्रवस्थे हेमच॰ २नौकायां स्त्री हेमच॰ ।

वेडमिका स्त्री रोटिकाभेदे भावप्र॰ कृतान्नशब्दे दृश्यम् ।

वेण निशामने वाद्यादाने गतौ ज्ञाने चिन्तायाञ्च भ्वा॰ उभ॰

सक० सेट् । वेणति ते । अवेणीत् अवेणिष्ट । अदित् चाङि न लुकः ।

**वेण** पु० वेण–अच् । १वर्णसङ्करजातिभेदे "वैदेहकेन त्व म्बष्ट्यामुत्पन्नो वेण उच्यते" मनुः । २पृथुराजपितरि नृपभेदे "सत्पुत्रेण तु जातेन वेणोऽपि ३नदीभेदे स्त्री । त्रिदिवं ययौ" विष्णु पु० । दन्त्यान्तत्वमप्येत्यन्ये ।

**वेणि(णी)** स्त्री वेण–इन् वा ङीप् । १केशरचनाभेदे अमरः २जलसमूहे जटा० । ३तत्प्रवाहे हेमच० । ४देवताड़वृक्षे अमरः । ५नदीभेदे तदुत्पत्तिकथा पद्मोत्तर० १५६ अ० । ६गङ्गायमुनासरस्वतीमेलनस्थाने च । प्रयागशब्दे दृश्यम् ।

**वेणीर** पु० वेण–ईरन् । अरिष्टवृक्षे (निम) शब्दच० ।

**वेणु** पु० वेण–उण् । १वंशे अमरः । २तद्विकारे वंशीवाद्ये च शब्दच० । "आ पूरय वेणुम्" इत्युद्भटः । ३नृपभेदे मेदि० ।

**वेणुक** न० वेणुरिव वेणोर्विकारो वा कन् । तोत्त्रे हेमच० । (पाचनबाड़ि) ।

**वेणुकर्कर** पु० वेणुरिव कर्करः । करवीरवृक्षे त्रिका० ।

**वेणुज** पु० वेणुतो जायते जन–ड । १वेणुजाते यवाकारे तण्डुले राजनि० । २वंशजाते दण्डादौ त्रि० ।

**वेणुध्म** पु० वेणुं वंशीं धमति ध्मा–क । वेणुवादके अमरः ।

**वेणुन** न० वेण–उनन् । मरिचे रत्नमा० ।

**वेणुपत्री** स्त्री वेणोरिव पत्त्रमस्याः । वंशपत्रीवृक्षे रत्नमा० ।

**वेणुयव** पु० वेणुजातो यव इव । १वंशजाते २तण्डुलाकारे पदार्थे राजनि० । [ज्ञेयः] । वेणुवादक तत्रैव त्रि० ।

**वेणुवाद** त्रि० वेणुं वादयति वद–णिच्–अण् । वेणुवादके

**वेणुवीज** न० ६त० । वेणुजाते यवाकारे पदार्थे राजनि० ।

**वेतन** न० अज–तनन् वीभावः । १कृतकर्मणोमूल्ये अमरः । भृतिशब्दे दृश्यम् । २जीवनोपाये हेमच० ।

**वेतनानपाकर्मन्** न० ६त० । व्यवहारभेदे तत्स्वरूपादिकं वीरमि० उक्तं यथा नारदः "भृतानां वेतनस्योक्तो दानादानविधिक्रमः । वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्" । वेतनं कर्ममूल्यं तस्यानपाकर्म भृत्याय समर्पणं समर्पितस्य वा परावर्त्तनम् । तत्र समर्पणे विशेषमाह स एव "भृत्याय वेतनं दद्यात् कर्मस्वामी यथाक्रमम् । आदौ मध्येऽवसाने तु कर्मणो यद्विनिश्चितम्" । तुभ्यमेतावद्दं दास्यामीति यद्वेतनं परिमाणतो निश्चितं तत्त्रिधा विभज्य कर्मण आदिमध्यान्तेषु त्रिषु कालेष्वन्यतमकाले वा दद्यादित्यर्थः । एतावत्तावद्वेतनं दास्यामीति भाषायाः अभावे । अभावे त्वाह स एव "भृतावनिश्चितायां तु दशभागमवाप्नुयुः । लाभं गोवीर्य्यशस्यानां वणिग्गोपकृषीवलाः" इति । दशभागं दशमभागलाभोवीर्य्यं पाल्यमानगवादिभवक्षीरादि । यदि कर्मस्वामी भृत्याय दशमभागस्य प्रयच्छति तदाऽसौ राज्ञा दाप्य इत्याह याज्ञवल्क्यः "दाप्यस्तु दशमभागं वाणिज्यपशुशस्यतः । अनिश्चित्य भृतिं यस्तु कारयेत् स महीक्षिता" इति । यस्तु स्वामी वेतनपरिच्छेदमकृत्वैव भृत्यं कर्म कारयति स तस्मात् वाणिज्यपशुशस्यलक्षणात् कर्मणः सकाशात् यल्लब्धं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीय इत्यर्थः । यत् तु "त्रिभागं पञ्चभागं वा गृह्णीयात् सीरवाहकः" इति बृहस्पतिवचनं तदुपस्कारायासबाहुल्यात्कृष्टक्षेत्रविषयम् । व्यवस्थितविकल्पार्थम् । भक्ताच्छादनं व्यवसायाकाङ्क्षायामाह स एव "भक्ताच्छादभृतः सीरी भागं गृह्णीत पञ्चमम् । जातशस्यात्त्रिभागं तु प्रगृह्णीयादथाऽभृतः" इति । भक्ताच्छादनाभ्यां भृतः कृषीवलो लाङ्गलविकृष्टक्षेत्रजातशस्यात् पञ्चमभागं गृह्णीयात् । ताभ्यामभृतस्तु तृतीयं भागमित्यर्थः । यत्र वा यस्मै-तावद्दास्यामीति नास्ति परिभाषा तत्र बृहस्पतिनोक्तम् "समुद्रयानकुशला देशकालार्थदर्शिनः । नियच्छेयुर्भृतिं यान्तु सा स्यात् प्रागक्तता तदा" इति । एतावद्दास्यामीति परिभाषितेऽपि कश्चित्ततो न्यूनमपि स्वामिनात्मपरिकल्पितं देयं कश्चित्ततोऽधिकमपि देयमित्याह याज्ञवल्क्यः "देशं कालञ्च योऽतीयाल्लाभं कुर्य्याच्च योऽन्यथा । तत्र स्यात् स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके" इति । यो भृत्यः स्वाम्यनुज्ञां विना स्वातन्त्र्येण वाणिज्यादिकर्मणः फलसाधकत्वापादकं देशं कालं चातिक्रामति लाभं वा बहुतरं व्यत्ययेन स्वल्पं करोति तस्मै पूर्वपरिभाषितभृतिमध्ये स्वामी स्वेच्छानुसारेण किञ्चिद् दद्यात् । यस्तु स्वातन्त्र्येण बहुलाभं करोति तस्मै परिभाषितमूल्यादधिकं किञ्चिद्देयं स्वामिना पारितोषिकमित्यर्थः । अनेकभृत्यसाध्यकर्मणि वेतनार्पणप्रकारमाह स एव "यो यावत् कुरुते कर्म तावत् तस्य तु वेतनम् । उभयोरप्यसाध्यं चेत् साध्ये कुर्य्याद् यथाश्रुतम्" इति । उभयोरपीत्यपिना बहूनां ग्रहणम् अत्रिन् स्फादौ कृते भवतामेतावद्दास्यामीति परिभाषिते द्विवहुभिरारब्धं कर्म यदि व्याध्यादि-

श्चात्र समापितं तदा तेषु यो यावत् कर्म करोति तस्मै तत्कर्मानुसारेण मध्यस्थपरिकल्पितं वेतनं देयम् । न तु साम्येन दानन्न च परिसमाप्त्यभावाददानम् । यदि तैः समापितं तदा यथा परिभाषितं देयन्न तु प्रत्येकं कृत्स्नं दातव्यं नापि कर्मानुसारेण परिकल्प्य दातव्यमित्यर्थः । यस्तु वेतनं गृहीत्वा समर्थोऽपि न कर्म करोति तं प्रत्याह बृहस्पतिः "गृहीतवेतनः कर्म न करोति यदा भृतः । समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम्" इति । दमं शक्त्यनुसारेण राज्ञा दाप्यः । गृहीतञ्च वेतनं द्वैगुण्येन स्वामिने दद्यादित्यर्थः । नारदोऽपि "भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेत्" इति । याज्ञवल्क्योऽपि "गृहीतवेतनः कर्म त्यजन् द्विगुणमावहेत्" इति । अस्मिन्नेव विषये यावता वेतनेन भृत्यत्वमङ्गीकृतं तावदेव स्वामिने देयन्न तु राज्ञे दण्डमित्यर्थः । यद्यङ्गीकृतां भृतिं दत्त्वा बलात्कारयितव्य इत्याह नारदः "कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्" इति । प्रतिश्रुत्येति प्रारब्धस्याप्युपलक्षणार्थम् अतएव कात्यायनः "कर्मारभ्य तु यः कृत्वा विच्छिन्नैव तु कारयेत् । बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति" इति । कियद् द्रव्यं दण्ड्य इत्यपेक्षायामाह्व तु मनुबृहस्पती "प्रतिश्रुत्य न कुर्याद् यः स कार्यः स्याद् बलादपि । स चेन्न कुर्यात् तत्कर्म प्राप्नुयाद् द्विशतं दमम्" इति । द्विशतं कार्षापणद्विशतमित्यर्थः । यत् तु मनुवचनम् "भृतोऽनार्तो न कुर्याद् यो दर्पात् कर्म यथोदितम् । स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्" इति । तदल्पदण्डत्वाद्भागाधिकृतविषयमिति स्मृतिचन्द्रिकायाम् । कर्षणादि न्यूनकर्मकरणविषयमिति मदनरत्ने । किञ्चिन्न्यूनकर्मकरणे त्वाह स एव "यथोक्तमार्तः सुस्थो वा यस्तत्कर्म न कारयेत् । न तस्य वेतनं देयमल्पोनस्यापि कर्मणः" इति । सुस्थो वा कर्म कारयेदिति वदता सुस्थोऽपि स्वयं कर्तृत्वनियमो नास्तीति दर्शयति । आर्तो यदि स्वास्थ्यप्राप्त्यनन्तरं स्वाङ्गीकृतं कर्म करोति तदार्तो दीर्घकालतया कालक्षेपेऽपि भृत्यदोषाभावाद्वेतनमसौ निर्विवादं लभत इत्याह स एव "आर्तस्तु कुर्यात् सुस्थः सन् यथाभाषितमादितः । सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनम्" आदितः आदौ यथाभाषितं यथाभिप्रायं तथा कुर्यादित्यर्थः । सुदीर्घस्यापि कालस्य अल्पमेऽपीति शेषः ।

यस्तु कालविशेषावधिकं कर्म प्रतिज्ञाय तत्कालात् पूर्वमेव कर्म त्यजति तं प्रत्याह नारदः "कालेऽपूर्णे त्यजन् कर्म भृतेनाशमवाप्नुयात्" । अत्र दण्डमप्याह विष्णुः "भृतकश्चापूर्णे काले त्यजन् सकलमेव मूल्यं जह्यात् राज्ञे च पणशतं दद्यादिति" । मूल्यं वेतनम् । स्वामिदोषात्त्यागे तु यावति काले कर्म कृतं तत्कालानुसारेण कल्पितं वेतनं लभत इत्याह नारदः "स्वामिदोषादपक्रामन् यावत् कृतमवाप्नुयात्" इति । स्वामिदोषो विनापराधं निष्ठुरभाषणादिः । अत्र दण्डमप्याह विष्णुः "स्वामी चेद्भृतकमपूर्णे काले जह्यात् तस्य सर्वमेव मूल्यं दद्यात् पणशतञ्च राजन्यत्र भृतदोषादिति" । स्वामिद्रव्यस्य भृत्यदोषेण नाशे यत् कर्त्तव्यं तदाह स एव । "तद्दोषेण यद्विनश्येत्तत् स्वामिने देयमन्यत्र दैवोपघातादिति" । दैवोपघातो राजकृतस्याप्युपलक्षणम् । स्वामिने देयं मूल्यद्वारेणेति शेषः । अत्र दोषविशेषात् विशेषमाह बृहन्मनुः "प्रमादान्नाशितं दाप्यः समं द्विद्रोहनाशितम्" इति । प्रमादान्नाशितमनवधाननाशितं सममेव दद्यात् । द्रोहनाशितं चौर्य्यप्रयत्नादिना द्रोहेण नाशितं द्विदाप्यो द्विगुणं दाप्य इत्यर्थः । भृत्यदोषाभावे यदन्यत एव नष्टं तन्न देयमित्याह स एव "न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वेति" । ऊढं नीतम् । यस्तु वाहको वाह्यं द्रव्यं प्रज्ञाहीनत्वादिना स्वदोषेण नाशयति तं प्रत्याह नारदः "भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः । दाप्यो यत्तत्र नश्येत्तु दैवराजकृताद्दृते" इति । भाण्डं वहनीयं द्रव्यं मन्त्वादि व्यसनं नाशम् । अत्र भाण्डवाहकयोर्न्द्रव्यं बलीवर्दकणीवलयोरुपलक्षणमिति मदनरत्ने । अत्रापि "प्रमादान्नाशितं दाप्यः समं द्विद्रोहनाशितमिति" बृहन्मनूक्तो विशेषोऽवगन्तव्यः । यस्तु वाहकः स्वदोषेण प्रस्थानविघ्नं करोति स द्विगुणां भृतिं दाप्य इत्याह कात्यायनः "विघ्नं यो वाहको दाप्यः प्रस्थाने द्विगुणां भृतिम्" इति । विघ्नं करोतीति शेषः । वाहकग्रहणं प्रदर्शनार्थं न तु विवक्षितन्तेनायुधीयादेर्विघ्नकारिणोऽप्येतदिति मन्तव्यम् । अतएव नारदः "द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन्" इति सामान्येनोक्तवान् । याज्ञवल्क्योऽपि "प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम्" इति । एतच्च भृत्यान्तरलाभादकालासम्भवविषयम् । अङ्गीकृतकर्मकरणस्यापि यदा सद्दा-

कालान्तरलाभेन प्रस्थानविघ्नोत्पादकत्वं तदा त्वाह स एव "प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजन्। भृतिमर्द्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि च" इति। प्रक्रान्ते कर्म्मणि स्वाङ्गीकृतं कर्म त्यजन् भृत्यो भृतेः सप्तमभागं दाप्यः। गमने प्रारब्धे पथि त्यजन् भृतेश्चतुर्थं भागम्। अर्द्धपथे त्यजन् सर्वां भृतिमित्यर्थः। त्याजकोऽपि चेत्यस्यायमर्थः गमनारम्भानन्तरं स्वामी यदि त्याजयति तदा पूर्वोक्तक्रमेण भृत्याय सप्तमभागादिकं दापनीय इति। एतच्चाव्याधितादिविषयम् व्याधितस्यापराधाभावात्। यत्तु स्वामिना त्याजने चतुर्थभागदापनमुक्तं तदविक्रीतभाण्डस्वामिविषयम्। विक्रीतभाण्डस्वामिना यत् कर्त्तव्यं तदाह बृहस्पतिः "पथि विक्रीय तद्भाण्डं वणिक् भृत्यं त्यजेद् यदि। अथ तस्यापि देयं स्याद् भृतेरर्द्धं क्रमेत यः" इति। पथि भाण्डस्य चौरादिभिः प्रतिरोधे राजादिभिरपहृते स्वामिनः कर्त्तव्यमाह कात्यायनः "यदा च पथि तद्भाण्डमाच्छिद्येत ह्रियेत वा। यावानध्वा गतस्तेन प्राप्नुयात् तावतो धनम्" इति। तेन भारवाहकस्वीकृतेन यानादिना। भाण्डनेतारं प्रत्याह नारदः "अनयन् भाटयित्वा तु भाण्डवान् यानवाहनम्। दाप्यो भृतिचतुर्भागं सर्वामर्द्धपथे त्यजन्" इति। यानं शकटादि वाहनम् अश्वादि। अयमर्थः यो यानादिना भाण्डनयनं कर्त्तुं परकीयं यानादिकं भाटयित्वा प्रस्थानादिकार्य्योपाधिकं परिक्रयं कृत्वा तन्न नयति स यानस्वामिने परिकल्पितस्य भाटकस्य चतुर्थांशं दाप्यः। यस्तु तन्नीत्वाऽर्द्धमार्गे त्यजति स सर्वां भृतिं दाप्य इति। यस्तु शकटादिकं भाटयित्वा तस्यैवोपकारमूल्यमादाय देशान्तरं गच्छति भाटकं च न प्रयच्छति तं प्रत्याह बृहस्पतिः "यो भाटयित्वा शकटं नीत्वा वाऽन्यत्र गच्छति। भाटं न दद्याद् दाप्यः स्यादनूढस्यापि भाटकम्" इति। अनूढस्यापि अकृतोपकारस्यापीत्यर्थः। यस्तु कृते काले समनन्तरं याचनादेः समर्पणं न करोति तस्य समर्पणपर्य्यन्तभाटकदानमाह कात्यायनः "हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः। नार्पयेत् कृतकार्य्यः संस्थाप्यदाप्यः स भाटकम्। गृहवार्य्यापणादीनि गृहीत्वा भाटकेन यः। स्वामिने नार्पयेद् यावत्तावद्दाप्यः स भाटकम्" इति। वारिशब्देन तदाधारभूतं पात्रं लक्ष्यते। नार्पयेत् कृतकार्य्यः सन्नित्यनुषङ्गः। परभूमौ गृहनिर्माणाय भाटकदातारं प्रत्याह नारदः "परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः। स तद्गृहीत्वा निर्गच्छेत् तृणकाष्ठेष्टकादिकम्" इति। स्तोमम् भाटकं स्तोमाप्रदानेऽप्याह स एव "स्तोमाद्विना वसित्वा तु परभूमावनिश्चितम्। निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात् कथञ्चन। यान्येव तृणकाष्ठानि निष्टका विनिवेशिताः। विनिर्गच्छंस्तु तत् सर्वं भूमिस्वामिनि वेदयेत्" इति। स्वामिने निवेदयेदित्यर्थः। अनिश्चितमिति वदता तृणकाष्ठादिग्रहणाग्रहणपरिभाषाविहीनविषयमेतदिति दर्शितम्। परिभाषाविषये तु यथा परिभाषितं कर्त्तव्यम्। भाटकेन गृहीतानां जलपात्रादीनां भङ्गे नाशे च विशेषमाह स एव "स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत्। गृहीतुराहरेद्भग्नं नष्टञ्चान्यत्र संप्लवात्" इति। स्तोमवाहीनि भाटकगृहीतानि पूर्वपरिभाषितभाटकानि तत्स्वामिने प्रापयेदिति पूर्वार्द्धार्थः। भग्नमेकदेशेन विकृतं, नष्टम् कार्त्स्न्येन विकृतम्। संप्लवः परस्परसङ्घर्षः तद्भिन्नप्रकारेण यद्भग्नं नष्टञ्च तद्भाटकगृहीतुर्भवति। संप्लवेन तु यद्भग्नं नष्टञ्च तद्भाटकदात्रा पूर्ववत् कृत्वा मूल्यदानेन वा देयमित्यर्थः। व्याधितस्य भृत्यस्य स्वामिना पथि त्यागे दण्डमाह कात्यायनः "त्यजेत् पथि सहायं यः श्रान्तं रोगार्त्तमेव वा। प्राप्नुयात् साहसं पूर्वं ग्रामे त्र्यहमपालयन्" इति। स्वाम्यनुज्ञातेन भृत्येनापराधे कृते योऽपराधः स्वामिन एवेत्याह बृहस्पतिः "प्रभुणा विनियुक्तः सन् भृतको विदधाति यत्। तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात्" इति। स्वामी कृतकर्म्मणे भृतकाय यदि न वेतनं ददाति तदाऽसौ राज्ञा दापनीयः इत्याह स एव "कृते कर्म्मणि यः स्वामी न दद्याद्वेतनं भृते। राज्ञा दापयितव्यः स्याद् वेतनस्यानुरूपतः" इति। वेश्यातदुपभोक्तृविषये नारद आह "शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्। अनिच्छन् शुल्कदातापि शुल्कहानिमवाप्नुयात्" इति। एतदव्याधितादिविषयम्। व्याधितादिविषये त्वाह बृहस्पतिः "व्याधिता सम्भ्रमव्यग्रा राजकार्य्यपरायणा। आमन्त्रिता च नागच्छेदवाच्या वडवा स्मृता" इति। आमन्त्रिता आहूता। वडवा दासी तद्ग्रहणमत्र पण्यस्त्रीप्रदर्शनार्थम्। उपभोक्तारं प्रत्याह नारदः "अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम्। अक्रमेण तु सङ्घाते घातदन्तनखादिभिः। अयोनौ यः समाक्रा-

वेद् बहुभिरपि वाचयेत्। शुल्कं योऽष्टगुणं दाप्यो विनयं तावदेव तु” इति। वेश्यायाश्च पराधे दण्डादिकं मत्स्यपुराणे दर्शितम् “गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति। तां दण्डं दापयेद्द्व्यादितरस्यापि भाटकम्” इति। इतरस्य दत्तशुल्कस्य। तत्रैव विशेषान्तरमुक्तम् “अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात्। तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम्। नीत्वा भोगस्य यो दद्याद् दाप्यो द्विगुणवेतनम्। राजश्च द्विगुणं दण्डं तथा धर्मो न हीयते। बहूनां व्रजतामेकां सर्वे तद् द्विगुणं धनम्। तस्यै दद्युः पृथक् राज्ञे दण्डञ्च द्विगुणस्मरम्” इति। अत्र निर्णेतॄनाह नारदः “वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः। तत्समुत्थेषु कार्य्येषु निर्णयं संशये विदुः” इति।

**वेतस** पु० अज–असुन् तुक् च वीभावः। (वेत) वृक्षभेदे अमरः। स्त्रीत्वमपि शब्दच० तत्र गौरा० ङीष्।

**वेतसाम्ल** पु० वेतस इव अम्लः। अम्लवेतसे जटा०।

**वेतस्वत्** त्रि० वेतसाः सन्त्यत्र भूम्ना वेतस+ड्मतुप्। बहुवेतसयुक्ते देशे अमरः।

**वेताल** पु० अज–विच् वीभावः तल–घञ् कर्म०। १मन्त्रविशेषे २भूताधिष्ठितशवभेदे अमरः ३शिवानुचरे भैरवभेदे कालिकापु०। ४द्वारपाले च शब्दर०।

**वेतालभट्ट** पु० विक्रमादित्यसभास्थे नवरत्नान्तर्गते कविभेदे

**वेत्तृ** त्रि०विद–तृच्। १ज्ञातरि २वोढ़रि ३लब्धरि च राजनि०

**वेत्र** पु० अज–त्रल् वीभावः। (वेत) वेतसवृक्षे राजनि०।

**वेत्रकीय** त्रि०वेत्र+छ–कुक् च। १वेत्रसमूहे २तद्युक्तदेशादौ च त्रि० कौ०।

[यष्टिधारपाले त्रि०।

**वेत्रधर** पु० वेत्रं धरति धृ–अच्। १द्वारपाले हला० २वेत्र-

**वेत्र(त्रा)वती** स्त्री वेत्रा बाहुल्येन सन्त्यस्याः मतुप् मस्य वः वा दीर्घः। १मालवदेशस्थे नदीभेदे “शरावती वेत्रवती चन्द्रभागा सरस्वती”। २कुन्तीहरमातरि वराहपु०।

**वेत्रासन** न०वेत्रनिर्मितमासनम्। वेत्रनिर्मिते आसने (मोड़ा)

**वेत्रासुर** पु० सिन्धुद्वीपात्मजेऽसुरभेदे वराहपु०।

**वेथ** याचने भ्वा० आत्म० द्वि० सेट् ऋदित् चङि न ह्रस्वः। वेथते अवेथिष्ट।

**वेद** पु० विद–अच् घञ् वा। १विष्णौ विष्णुसं०। २ज्ञाने ३धर्मज्ञाने तत्साधने धर्मब्रह्मप्रतिपादके मन्त्रब्राह्मणात्मके ग्रन्थभेदे ४यज्ञाङ्गे दर्भे च मेदि०। ५वृत्ताङ्के चतुर्संख्या०

कुशमुष्टिकृते यज्ञार्थभेदे “वेदं कृत्वा वेदिं कुर्य्यात्” श्रुतिः वेदयति विद–अच् णिच्–अच् विद-अच् वा। ७ज्ञापके ८ज्ञातरि च त्रि० “वेदोऽसि येन त्वं देव! वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः” यजु० २।२१ “एतौ वेदं प्रदृश्यति वेदोऽसीति “हे कुशमुष्टिनिर्मितपदार्थ! त्वं वेदोऽसि ज्ञानादात्मकोऽसि यद्वा वेत्तीति वेदः ज्ञाताऽसि। देवेभ्यो देवानां वेदोऽभवः ज्ञापकोऽभूः” वर्क०। तल्लक्षणञ्च अपौरुषं वाक्यं वेद इति मीमांसकाः। पौरुषेयत्वे पूर्वपक्षं दूषयित्वाऽपौरुषेयत्वं माधवेनोपन्यस्य समर्थितं यथा “अपौरुषेयत्वे सत्यलौकिकपरोक्षार्थानुभवसाधनं वेद इति” वेदलक्षणस्य मन्वादिस्मृत्यादावतिव्याप्तिमाशङ्क्य “अपौरुषेयत्वे सतीति विशेषणाददोष इति चेत् वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात् शरीरधारिजीवनिर्मितत्वाभावादपौरुषेयत्वमिति चेत् “सहस्रशीर्षा पुरुषः” इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात्। कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणापौरुषेयत्वं विवक्षितमिति चेत् न जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्। “ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यादिति श्रुतेः” (ईश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम्)। ततः मन्त्रब्राह्मणात्मकत्वं वेदलक्षणमुक्त्वा “मन्त्रब्राह्मणयोर्वेदनामधेयम्” इत्यापस्तम्बवचनं प्रमाणतयोपन्यस्तं ततश्च मन्त्रलक्षणमुक्त्वा तदितरत् ब्राह्मणमित्युक्तम्। तत्रैवोत्तरत्र नन्वेवमपि वेदस्य पौरुषेयत्वेन विप्रलम्भकवाक्यवदप्रामाण्यं स्यात् पौरुषेयत्वं च १पादे पूर्वपक्षत्वेन जैमिनिरसूत्रयत् यथा “वेदांश्चैके सन्निकर्षं पुरुषाख्येति” सू० “एके वादिनो वेदान् प्रति सन्निकर्षं मन्यन्ते। यथा रघुवंशादयः कालिदासप्रणीता इदानीन्तनास्तथा वेदोऽपि न तु वेदा अनादयः अतएव वेदकर्तृत्वेन पुरुषा आख्यायन्ते वैयासिकं भारतं वाल्मीकीयं रामायणमित्यत्र यथा भारतादिकर्तृत्वेन व्यासादय आख्यायन्ते तथा काठकं कौथुमं तैत्तिरीयमित्येवं तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वात् वेदाः पौरुषेयाः। ननु नित्यानामेव सतां वेदानामुपाध्यायसम्प्रदायप्रवर्त्तकत्वेन कठादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूत्रयति “अनित्यदर्शनाच्चेति” सू० अनित्याजननमरणवन्तो बबरादयो वेदार्थाः श्रूयन्ते “बबरः प्रावाहणिरकामयत” कुसुरुबिन्दु

ध्यौद्दालकिरकामयतेति" तथा सति ववरादिभ्यः पूर्वमभावादनित्या वेदाः । तस्मात् वेदवाक्यं पौरुषेयं वाक्यत्वात् कालिदासादिवाक्यवत् इत्यनुमानसूचकसूत्रकारः" इति पूर्वपक्षं सिद्धान्तयति । "उक्तं तु शब्दपूर्वत्वम्" सू० "तुशब्दो वेदानामनित्यत्वं वारयति । शब्दस्य वेदरूपस्य कठादिपुरुषेभ्यः पूर्वत्वमनादित्वम् प्राचीनैः सूत्रैरुक्तम् । "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इत्यत्र औत्पत्तिकशब्देन सर्वेषां शब्दानां वेदानां तदर्थानां तदुभयसम्बन्धानाञ्च नित्यत्वं प्रतिज्ञाय उत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितम् । का तर्हि काठकाद्याख्यायाः गतिरित्याशङ्क्य संप्रदायप्रवर्त्तनात् सेयमुपपद्यते" इत्युत्तरसूत्रयति "आख्याः प्रवचनादिति" सू० "अस्तियमाख्यायिकायागतिः (इयं प्रवचनरूपा संप्रदायप्रवर्त्तनेत्यर्थः") ववराद्यनित्यदर्शनं यदुक्तं तस्य किमित्युत्तरमित्याशङ्क्याह "परं तु श्रुतिसामान्यमात्रम्" सू० यत्परं ववरादिकं तत् तच्छब्दसामान्यमेव । न तु मनुष्यो ववरनामकोऽत्र विवक्षितः ववरध्वनियुक्तप्रवहणस्वभावस्य वायोरत्र वक्तुं शक्यत्वात् । पूर्वपक्षोक्तस्य वाक्यत्व हेतोः पराहतेः । तस्मान्नास्ति वेदस्य पौरुषेयत्वम् । अत्र संग्राहकश्लोकौ "पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता । काठकादिसमाख्यानात् वाक्यत्वाच्चान्यवाक्यवत् । समाख्यानं प्रवचनात् वाक्यत्वं तु पराहतम् । तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता" । ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्य्यत्वं सूत्रितं "शास्त्रयोनित्वादिति" । ऋग्वेदादिशास्त्रकारणत्वात् ब्रह्म सर्वज्ञमिति सूत्रार्थः ( तदेतस्य महाभूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद इत्यादि" श्रुतिः "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" स्मृतिश्चात्र मूलम् ) बाढं नैतावता पौरुषेयत्वं भवति मनुष्यनिर्मितत्वाभावात् । ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवन्नित्यत्वं बादरायणेनैव देवताधिकरणे सूत्रितम् "अतएव च नित्यत्वमिति" । वेदा०प० पौरुषेयत्वापौरुषेयत्वे अन्यथा निरुक्ते "यथा ननु क्षणिकत्वाभावेऽपि वियदादिवदादिमत्त्वेन परमेश्वरकर्त्तृकतया पौरुषेयत्वादपौरुषेयत्वं वेदानामिति तव सिद्धान्तो भज्येतेति चेन्न न तावत्पुरुषेणोच्चार्य्यमाणत्वं पौरुषेयत्वं गुरुमतेऽपि पौरुषेयत्वापत्तेः ( पाठ्यमानवेदानामिति शेषः ) नापि पुरुषाधीनोत्पत्तिमत्त्वं पौरुषेयत्वं नैयायिकाभिमतपौरुषेयत्वानुमानेऽस्मादादीनां सिद्धसाधनापत्तेः किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं तथा च सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदसमानुपूर्वीकं वेदं विरचितवान् न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदस्य, भारतादीनान्तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्" । शब्दचिन्तामणिकृता तु वेदलक्षणमन्यथा निरुच्य पौरुषेयत्वमीदृशमेव समर्थितं यथा "अथ वेदः पौरुषेयो वाक्यत्वात् भारतादिवत् इति चेत् कोवेदः अनुगतधर्माभावेन तस्य शाखासु नानार्थत्वात् तथा हि न सर्ववेदप्रयोगविषयो वेदः सुरत्वार्थकथनात् नापि शाखासमुदायः तस्य वेदनिरूप्यत्वात् समुदायस्याप्रतिपादकत्वेन वाक्यत्वासिद्धेः । नापि स्वर्गकामो यजेतेत्यादिवाक्यं स्मृतिभारतादेरपि तथात्वात्" इत्यादिवेदलक्षणे पूर्वपक्षमुक्त्वा पौरुषेयत्वसाध्ये तत्राह "पौरुषेयत्वं न तदर्थधीजन्यत्वं तदुच्चारणधीप्रभवत्वं वा अध्यापकाध्येतृधीजन्यत्वेन सिद्धसाधनात् स्वतन्त्रपुरुषप्रणीतजातीयत्वं यदि साध्यं तदाद्यभारते स्मृतौ च वाक्यत्वमनैकान्तिकम्" इत्यादिना । अतोत्तरमुक्तं यथा "शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणाजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वम् । ईश्वरप्रमाया अजन्यत्वात् वेदार्थस्यानुमानविषयत्वेऽप्यनुमानादेर्वेदोपजीवकतया स्मृतीनां भारतादिभागस्य च वेदसमानार्थकत्वेऽपि शब्दजन्यधीजन्यत्वात् वेदादर्थं प्रतीत्यैव तत्प्रणयनात्" ( अग्निर्हिमस्य भेषजमित्यादिवेदवाक्यसंग्रहाय अत्यन्तं लक्षणाप्रविष्टमत्यन्तं तु अदृष्टार्थकतावाक्यज्ञापनार्थमिति बोध्यम् ) । मथुरानाथेनैतद्विवृतं तत्र दृश्यम् । साध्यं च पौरुषेयत्वं सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वमिति निर्णीतमधिकं तत्र दृश्यम् ।

वेदाश्च चत्वारः तेषां शाखाविभागश्चरणव्यूहे उक्तः तत्र ऋग्वेदशाखाविभागः ऋग्वेदशब्दे १४११पृ० दर्शितः । "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति । तत्र चरकाणां द्वादश भेदा भवन्ति । चरकाः१ आह्वरकाः२ कठाः३ प्राच्यकठाः४ कपिष्ठलकठाः५ औपमन्यवाः६ आष्टककठाः७ चारायणीयाः८ पारायणीयाः९ वार्त्तान्तवेयाः१० श्वेताश्वतराः११ (श्वेताश्वतरा इति वा पाठः) । मैत्रायणीयाः१२श्चेति । तत्र मैत्रायणीयानां सप्त भेदा भवन्ति । मानवाः१ दुन्दुभाः२ चैकेयाः३ वाराहाः४ हा-

द्वाराय शुक्रोरमिततेजसे । ऋग्यजुःसामभूताय त्रयीधामवते नमः" । श्रीपराशर उवाच "इत्येवमादिभिस्तेन स्तूयमानः स वै रविः । वाजिरूपधरः प्राह व्रियतामभिवाञ्छितम् । याज्ञवल्क्यस्ततः प्राह प्रणिपत्य दिवाकरम् । यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ" श्रीपराशर उवाच "एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः । अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः । यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम ! । वाजिनस्ते समाख्याताः सूर्य्योऽश्वः सोऽभवद्यतः । शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम् । काण्वाद्यास्तु महाभाग ! याज्ञवल्क्यप्रवर्त्तिताः" विष्णुपु० ३अंशे ५अ०। सामवेदस्य संहिता यथा "सामवेदतरोः शाखा व्यासशिष्यः स जैमिनिः । क्रमेण येन मैत्रेय ! बिभेद शृणु तन्मम । सुमन्तुस्तस्य पुत्रोऽभूत् सुकर्म्मास्य वै सुतः । अधीतवन्तावेकैकां संहितां तौ महामती । सहस्रं संहिताभेदं सुकर्म्मा तत्सुतस्ततः । चकार तञ्च तच्छिष्यौ जगृहाते महाव्रतौ । हिरण्यनाभः कौशल्यः पौष्यिञ्जिश्च द्विजोत्तमः । उदीच्याः सामगाः शिष्यास्तस्य पञ्चशताः स्मृताः । हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तम ! । गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः । लोकाक्षिः कुथुमिश्चैव कुशीदिर्लाङ्गलिस्तथा । पौष्यिञ्जिशिष्यास्तद्भेदैः संहिता बहुलीकृताः । हिरण्यनाभशिष्यश्च चतुर्विंशतिसंहिताः । प्रोवाच कृतिनामासौ शिष्येभ्यः सुमहामतिः । तैश्चापि सामवेदोऽसौ शाखाभिर्बहुलीकृतः" । अथर्ववेदस्य संहिता यथा । "अथर्व्वाणमथो वक्ष्ये संहितानां समुच्चयम् । अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः । शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा । कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान् । वेददर्शस्य शिष्यास्तु मोदो ब्रह्मबलिस्तथा । शौल्कायनिः पिप्पलादस्तथान्यो मुनिसत्तमः । पथ्यस्यापि त्रयः शिष्याः कृता यैर्द्विज संहिताः । जाजलिः कुमुदादिश्च तृतीयः शौनको द्विज । शौनकस्तु द्विधा कृत्वा ददावेकान्तु बभ्रवे । द्वितीयां संहितां प्रादात् सैन्धवायनसंज्ञिने । सैन्धवो मुञ्जकेशश्च भिन्दन् वेदं द्विधा पुनः । नक्षत्रकल्पो वेदानां संहितानां तथैव च । चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः । श्रेष्ठास्त्वाथर्व्वणामेते संहितानां विकल्पकाः"। विष्णुपु० ३अंशे ६अ० ।

हेमाद्रि दा०ख० देवीपु० ७अ० वेदविभागोऽप्युक्तो यथा "किं वेदरूपं भगवन् उपाङ्गसंख्याभेदतः । अङ्गानि चैव वेदानां तन्मे ब्रूहि सनातन !" । ब्रह्मोवाच "ओङ्कारप्रभवा वेदा गायत्री वेदसम्भवा । षडङ्गास्ते समाख्याता बह्वोपाङ्गास्तथैव च । छन्दोलक्षणसंयुक्ता मातृकागर्भजाः स्मृताः । एक एव भवेद्वेदस्तच्चतुर्वेदः पुनः कृतः । शाखार्थमल्पयुक्तानां ग्रहणायातिविस्तरात् । संविभक्ता मया वत्स ! ऋग्यजुःसामाथर्वकाः । तत्र भेदास्तु ऋग्वेदे दश चैव प्रकीर्त्तिताः । चर्च्चयाः शाङ्खचर्याश्च श्रावका चर्चकास्तथा । श्रवणीयाः क्रमपाराः षट्क्रमाःषड्तुक्रमाः । दण्डाश्चेति समासेन पुनरेकैव पारणा । शाखाश्च त्रिविधा भूप ! शाकला-बाष्क-माण्डुकाः । तेषामध्ययनं प्रोक्तं सहस्राणि च सप्ततिः । चर्च्चानां वरसङ्ख्या तु चतुर्विंशच्छतानि च । ऋचां दश सहस्राणि ऋचां पञ्च शतानि च । ऋचामशीतिः पादश्च एतत् पारणमुच्यते । ऋग्वेदे तु भवेत्संख्या यजुर्वेदस्य श्रूयताम् । षडशीतिर्विभेदेन मया शिष्याः शिवाश्रया । दशधा चरकास्तत्र कारकाह्वारिद्रवीयाः, कठाः प्राच्यकठश्चैव कपिष्ठलकठास्तथा । नारायणीयाः श्वेताश्च श्वेताश्वतरमैत्रायणाः । पुनः सप्त विभेदेन मैत्रायण्यः प्रकीर्त्तिताः । मानवा दुन्दुभा वाराहाः छागेया हारिद्रवीयाः, श्यामाः श्यामायनीयाश्च तेषामध्ययनमुच्यते । अष्टादश सहस्राणि पाठा वेदविदोऽविदन् । द्विगुणं पदपाठीयास्त्रिगुणं क्रमपारगाः । षडङ्गानि यदाधीते स षडङ्गविदुच्यते । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोज्योतिषम् । षडङ्गानि भवन्त्येतान् उपाङ्गानि शृणुष्व भोः । प्रतिपदमनुपदं छन्दो भाषाधर्म्मान्वितम् । मीमांसा-न्यायतर्कश्च उपाङ्गाः परिकीर्त्तिताः । परिशिष्टाश्च संख्याता अष्टादश शृणुष्व तान्" । यूपलक्षणं छागलक्षणं प्रतिज्ञानुवाकसङ्ख्या-चरणव्यूह-श्राद्ध-कल्पसूत्राणि पार्षदमृग्यजुर्मिष्टकापूरणं प्रवराध्यायोक्थशास्त्रं क्रतुसंख्या निगमा यज्ञपार्श्वं होतृकम् । प्रसवोत्थानकूर्म्मलक्षणसंयुतम् । कथिताः परिशिष्टास्तु ऊनविंशतिसंख्यया । कठानां पुनरप्यन्याश्चत्वारिंशच्च वर्त्तताम् । प्राच्योदीच्या निरुक्ताश्च वाजसनेयास्तु पञ्च च । दशभेदविभिन्नाश्च कृष्णा मुनिपुङ्गव ! । जाबाला-बौधेयाःकाण्वामाध्यन्दिनाश्च शापेयाः । उपास्थिनः कपालाख्याः पौण्ड्रवत्साः आवटिकाः । परमावटिकाः पाराशरा

ह्वेव बौधायनीयाः । अयोध्या अयोधेयाश्च तेषामध्ययनानि च । द्विसहस्रे शतन्यूने वेदे वाजसनेयके । ऋग्गणोयं प्रसंख्यातस्ततोऽन्यानि यजूंषि च"। एतत्प्रमाणं यजुषां हि केवलम् "सखिलं साक्षयं परिसंख्यातं ब्राह्मणम् । चतुर्गुणन्तु जानीयात्तैत्तिरीया द्विधा पुनः । ऋचेयाः खाण्डिकेयाश्च खाण्डिकाः पञ्चधा पुनः । कालेया बौधायनीया हिरण्यकेशास्तथैव च । भारद्वाजापस्तम्बाश्च तेषां भेदाः प्रकीर्त्तिताः । अध्ययनं सौत्रिकञ्चैव प्रवचनीयं तथापरम् । सामवेदस्तु विस्तीर्णः सहस्रभेदशः पुरा । अनध्यायेष्वधीयानाः तदा इन्द्रेण धीमता । वज्रेण निहताः शेषांस्तान्वक्ष्ये शृणु सत्तम ! । राणायनीयाः कौथुमास्तत्र भेदान् पुनः शृणु । राणायनीयाः सप्तैव कथ्याह्यास्तपतांवर । कालवेया महाकालवेयालाङ्गलबैदुताः । कौथुमानामपि सप्त असुरायणरायणाः । प्रजालावैनस्त्याश्च परियोग्याः परिकायणाः । अध्ययनमपि तेषान्तु यथावत् कथितं शृणु । अष्टौ सामसहस्राणि सामानि च चतुर्दश । अष्टौ शतानि नवतीः दश सवालखिल्यकाः । सहुपर्णाश्च सख्याश्च एतं सामगणं विदुः । अथो अथर्ववेदस्य नव भेदा भवन्ति हि । पिप्पलादा वत्सदाश्च भूतायनाः कातयस्तथा । जज्वला ब्रह्मवेदाश्च शौनकी कनखी तथा । वेदस्पर्शिसौरविद्या तेषामध्ययनं शृणु" । पञ्चकल्पा भवन्ति "नक्षत्रकल्पो वैतानः संहिताविधिः आङ्गिरसम् । शान्तिकल्पश्च अथर्वणो भवन्ति हि । ऋग्वेदस्यात्रेयं गोत्रं वासुदेवं विदुर्बुधाः । काश्यपञ्च यजुर्वेदं रुद्रदेवन्तु तं विदुः । सामवेदोऽपि गोत्रेण भारद्वाजः पुरन्दरम् । अधिदेवं विजानीयात् वैतानन्तु अथर्वणः" ।

**वेदगर्भ** पु० वेदोगर्भे यस्य । सर्ववेदस्य प्रथमं कर्त्तरि १हिरण्यगर्भे २विप्रे च हेमच०। ३विष्णौ विष्णुस० ।

**वेदन** न०विद-ल्युट् । १ज्ञाने २सुखदुःखाद्यनुभवे ३विवाहे च "वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने" इति मनुः । युच् । वेदनापि उक्तार्थेषु स्त्री । सा च वैद्धमते स्कन्धपञ्चकान्तर्गतस्कन्धभेदे बौद्धशब्दे दृश्यम् ।

**वेदनिन्दक** पु० ६त० । १नास्तिके जटा० २बौद्धे च ।

**वेदपारग** पु० वेदानां पारमन्तं सीमां गच्छति गम-ड । समस्तवेदाध्ययिनि । [वेदरत्नत्वात्तथात्वम् ।

**वेदमातृ** स्त्री ६त०। गायत्र्यां मन्त्रभेदे तस्याः समात्रपाठेन

**वेदवत्** पु० वेदोऽध्ययनत्वेनास्त्यस्य मतुप् मस्य वः । १वेदाभ्यासरते द्विजे । २कुशध्वजराजकन्यायां सीतादिरूपेणाभिभूतायां स्त्री ।"कृते युगे वेदवती कुशध्वजसुता शुभा । त्रेतायां रामपत्नी सा सीतेति जनकात्मजा । तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा । त्रिहायणीति सा प्रोक्ता विद्यमाना युगत्रये" ब्रह्मवै०प्र०१२अ० ।

**वेदवास** पु० ६त० । ब्राह्मणे तस्य तत्पाठतदुक्ताचारानुष्ठानत्वात् तथात्वम् वेदावासादयोऽप्यत्र । [दक्षे त्रि० ।

**वेदविद्** पु० वेदं वेत्ति विद-क्विप् । १विष्णौ विष्णुस० २वे-

**वेदव्यास** पु० वेदान् व्यस्यति विभिन्नशाखत्वेन पृथक् करोति वि+अस-अण् । पराशरपुत्रे सत्यवतीगर्भजे १मुनिभेदे तथा भूतेषु अन्येषु २मुनिषु च ।

युगभेदे तद्भेदाश्च विष्णुपु० ३अं० ३अ० उक्ता यथा पराशर उवाच "यस्मिन् मन्वन्तरे व्यासा ये ये तांस्तान् निबोध मे । यथा च भेदः शाखानां व्यासेन क्रियते मुने ॥ अष्टाविंशतिकृत्वो वै वेदा व्यस्ता महर्षिभिः । वैवस्वतेऽन्तरे तस्मिन् द्वापरेषु पुनःपुनः । वेदव्यासा व्यतीता ये अष्टविंशतिसत्तमाः । चतुर्द्धा यैः कृतो वेदो द्वापरेषु पुनःपुनः । द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयम्भुवा१॥ द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः२ । तृतीये चोशनाः३व्यासश्चतुर्थे तु बृहस्पतिः४ । सविता५ पञ्चमे व्यासो मृत्युः६ षष्ठे स्मृतः प्रभुः । सप्तमे च तथैवेन्द्रो७ वसिष्ठ८श्चाष्टमे स्मृतः । सारस्वत९श्च नवमे त्रिधामा१० दशमे स्मृतः । एकादशे च त्रिवृषो११ भरद्वाज१२स्ततःपरम् । त्रयोदशे चान्तरीक्षो१३ धर्मी१४ चापि चतुर्दशे । त्रय्यारुणः१५ पञ्चदशे षोडशे तु धनञ्जयः१६ । कृतञ्जयः१७ सप्तदशे ऋणज्यो१८ऽष्टादशे स्मृतः । ततो व्यासो भरद्वाजो१९ भरद्वाजात्तु गौतमः२० । गौतमादुत्तरं व्यासो हर्य्यात्मा२१ योऽभिधीयते । अथ हर्य्यात्मनो वेणः स्मृतो वाजश्रवास्तु२२ यः । सोमो मुख्यायनस्तस्मात् तृणबिन्दु२३रिति स्मृतः । ऋक्षोऽभूद्भार्गवस्तस्मात् बाल्मीकि२४र्योऽभिधीयते । तस्मादस्मत् पिता शक्तिः२५ व्यासस्तस्मादहं२६(पराशरः) मुने ! । जातूकर्णो२७ऽभवन्मत्तः (पराशरादनन्तरम्) कृष्णद्वैपायन२८स्ततः । (ततो जातूकर्णात्परम् अष्टाविंशतिमे युगे)"अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः । एकोवेदश्चतुर्द्धा तु तैः कृतो द्वापरादिषु । भविष्ये द्वापरे चैव द्रौणिर्व्यासो भविष्यति । व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने"।

**वेदस्** पु० विद-असुन् । वेत्तरि । जातवेदाः विश्ववेदाः ।

**वेदाङ्ग** न॰ वेदस्याङ्गमिव । "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः । ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु" इत्युक्तेषु शिक्षादिषु षट्सु शास्त्रेषु । तेषामङ्गविशेषरूपत्वं शिक्षायामुक्तं यथा
"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते । शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते" ।

**वेदादि** पु॰ वेदस्यादिरिव तत्पाठे प्रथमोच्चार्य्यमाणत्वात् । प्रणवे

**वेदाधिप** पु॰ ६त॰ । "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपो भृगुः । सामवेदाधिपो भौमः शशिजोऽथर्ववेदपः" इत्युक्तेषु जीवादिषु २विष्णौ च शिब्द॰ स॰ ।

**वेदान्त** पु॰ ६त॰ । वेदशिरोभागे ब्रह्मप्रतिपादके उपनिषद्रूपे १ग्रन्थभेदे तदुपकारके २शारीरकसूत्रभाष्यादौ च उत्तरामीमांसाशब्दे १०६७पृ॰ दृश्यम् । शारीरकसूत्रञ्च बहुभिराचार्य्यैः स्वस्वमतानुसारेण व्याख्यातं तत्र रामानुजपूर्णप्रज्ञशब्दयोस्तत्तन्मतं प्रदर्शितं शाङ्करमतानुसारि मतस्य सिद्धान्तबिन्दुप्रदर्शितस्य सङ्क्षेपोऽत्र प्रदर्श्यते
"वेदान्तिमते सामान्यतः द्विविध एव पदार्थः दृग्दृश्यश्च तत्रैव सर्वपदार्थान्तर्भावात् । तत्र दृक्पदार्थ आत्मा । स च सर्वदैकरूपोऽप्यौपाधिकभेदात् त्रिविधः ईश्वरः जीवः साक्षी चेति । तत्र कारणीभूताज्ञानोपाधिरीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपहितो जीवः । जीवेश्वरानुगतसर्वानुसंधाट चैतन्यं साक्षी । तत्रेश्वरोऽपि त्रिविधः स्वोपाधिभूताविद्यागतसत्त्वादिगुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात् । तत्र कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता । तथा रज उपहितो ब्रह्मा स्रष्टा । हिरण्यगर्भस्तु महाभूतकारणत्वाभावान्न ब्रह्मा । तथापि स्थूलभूतस्रष्टृत्वेन कश्चिद्ब्रह्मेत्युपचर्य्यते । तथा तम उपहितो रुद्रः संहर्त्ता । एवञ्चैकस्यैव तस्य चतुर्भुजचतुर्मुखाद्याः पुमाकाराः श्रीभारतीभवान्याद्याश्च स्त्र्याकारा मत्स्यकूर्मादयोऽप्यवतारा लीलयैवाविर्भवन्ति । तथा जीवोऽपि त्रिविधः स्वोपाधिजाग्रदाद्यवस्थात्रयभेदेन विश्वतैजसप्राज्ञभेदात् । तत्राविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदभिमानी विश्वः । स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः । अयमेव शरीरद्वयान्तःकरणोपाधिरहितोऽन्तःकरणसंस्कारावच्छिन्नोऽविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञः । साक्षी तु सर्वानुसन्धाता सर्वानुगतस्तुरीयाख्य एकविध एव ।
अविद्यातत्कार्य्यात्मकप्रपञ्चो दृश्यपदार्थः तस्यापारमार्थिकत्वेऽपि व्यवहारिकत्वाभ्युपगमान्न स्वप्नादिवद्प्रातिभासिकत्वम् । दृश्योऽपि त्रिविधः अव्याकृतमूर्त्तामूर्त्तभेदात् । तत्र चिदाभाससहिताऽविद्या मूर्त्तामूर्त्तप्रपञ्चस्य मूलबीजशक्तिरनादिरव्याकृतमित्युच्यते । इयञ्चाव्याकृताख्याऽविद्येश्वरोपाधिः । सा च स्वयं जडाप्यजडेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्मभ्यां प्रयुक्ता सती शब्दस्पर्शरूपरसगन्धाश्रयाण्याकाशवायुतेजोजलपृथिव्यात्मकानि पञ्च सूक्ष्ममहाभूतानि जनयति । तत्र पूर्वपूर्वभूतभावापन्नाया एवाविद्याया उत्तरोत्तरभूतं प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशाद्भूतानामेकैकवृद्धीभूतगुणशालित्वं तथा चाकाशस्य शब्दो गुणः, वायोः शब्दस्पर्शौ, तेजसः शब्दस्पर्शरूपाणि, जलस्य तानि रसश्च, पृथिव्यास्तानि गन्धश्चेति । आकाशस्यैव दिग्व्यवहारजनकत्वेन दिशो न पृथक्पदार्थता । कालस्य चिज्जडसम्बन्धरूपतया तदाधाराविद्यात्मकतया च न पार्थक्यम् । तानि च सूक्ष्माणि पञ्च भूतानि अपञ्चीकृताख्यानि कारणभेदाच्च सत्त्वरजस्तमोगुणात्मकानि सत्त्वरजोंऽशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यं चित्स्वरूपमिव मिलित्वा जनयन्ति । तच्च समस्तं द्रव्यं ज्ञानशक्तिप्राधान्येऽन्तःकरणं तदपि द्विविधं मनोबुद्धिभेदात् चतुर्विधं मनोबुद्ध्यहङ्कारचित्तभेदादित्यन्ये । तदेव क्रियाशक्तिप्राधान्ये प्राणः । स च पञ्चधा प्राणादिभेदात् । एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात् प्रत्येकं ज्ञानकर्मेन्द्रियद्वयं जायते । यथाकाशात् श्रोत्रवाचौ, वायोस्त्वक्पाणी, तेजसश्चक्षुःपादौ, अद्भ्यो रसनापायू, पृथिव्या घ्राणोपस्थौ चोत्पद्येते । तत्र शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षुःरसनाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि । एतच्च सर्वं मिलित्वा सप्तदशकं लिङ्गशरीरम् । तच्च ज्ञानशक्तिप्राधान्येन समष्टौ हिरण्यगर्भ इति क्रियाशक्तिप्राधान्येन समष्टौ सूत्रमिति चोच्यते । अयं मूर्त्तपदार्थः कार्य्यत्वात् । समष्टिव्यष्टिजीवोपाधिसूक्ष्मभूतानि तु भोगायतनं शरीरं भोग्यविषयञ्चान्तरेण भोगं जनयितुमसमर्थानीति जीवकर्मप्रयुक्तानि तानि स्थौल्यार्थं पञ्चीकृतानि स-

वन्ति । तथा हि सर्वाणि भूतानि स्वस्वार्द्धं पे खेतरभूतानां चतुर्थांशैश्चतुर्भिर्योजनात् सर्वाण्येव पञ्चात्मकानि । स्वांशाधिक्याच्चाकाशादिव्यवहारः । तानि च पञ्चीकृतानि महाभूतानि मूर्त्तिस्थानि मिलित्वैकं कार्य्यमिन्द्रियाणामधिष्ठानं जनयन्ति । तदेव स्थूलशरीरमित्युच्यते । तत्र सत्त्वप्रधानं दैवं शरीरं रजःप्रधानं मानवं तमःप्रधानं तिर्य्यगादिस्थावरान्तानाम् । सर्वेषां देहानां पाञ्चभौतिकत्वेऽपि चित्ते रूपाणामिव भूतानां कश्चिन्न्यूनातिरेको न विरुध्यते । विषया अपि चतुर्दशभुवनाख्या घटादयश्च सत्त्वरजस्तमोऽंशतारतम्येन तेभ्य एव भूतेभ्यो जायन्ते । एतच्च सर्वं ब्रह्माण्डं विराडिति चोच्यते । सर्वं च सृष्टिप्रलयादिकं स्वप्नसृष्टिप्रलयवद्यास्तवमपि अनादित्वाज्ज्ञानादाढ्र्यात् व्यवहारक्षममिति मायिकत्वेऽपि न तुच्छत्वप्रसङ्गः" । अन्यदाकरे द्रष्टव्यम् । [भास्करे जटा० ।

**वेदान्तिन्** त्रि० वेदान्तो ज्ञेयत्वेनास्त्यस्य इनि । वेदान्त-

**वेदाभ्यास** पु० ६त० । "वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः । तद्दानञ्चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा" इत्युक्तेषु वेदपाठविचारानुशीलनतन्मन्त्रजपपाठनेषु ।

**वेदि** न० विद+इन् । १अभ्यटायाम् (आकनादि) २परिष्कृतायां भूमौ स्त्री अमरः वा ङीप् । "मध्येन सा वेदिविलग्नमध्या" कुमारः । ३पण्डिते पु० ४अङ्गुलिमुद्रायां स्त्री मेदि० । ५गृहस्थितपिण्डाकारमृत्तिकारूपे च "प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भः" रघुः । ६भूमिस्थे देशभेदे यथा अन्तर्वेदि उत्तरवेदिः दक्षिणवेदिरित्यादि । वेदिश्च डमरुकाकारपरिच्छिन्नावती यज्ञपशुबन्धनार्थं होमीयद्रव्यासादनार्थं वा अलङ्कारा परिष्कृता चतुरस्रादिरूपा भूमिः । तत्सादानाद्युक्तमण्डपस्थवेदिलक्षणं हेमा० दा० उक्तं यथा "मध्यतोऽन्तयोर्वेदीं मण्डपस्य विभागतः । चतुर्दीर्घोच्छ्रितहस्ताक्तिमपद्मपि वा । गवैकादशहारा वा इष्टकाभिः प्रकल्पयेत्" । वैदिककर्माङ्गवेदिलक्षणादिकं कात्या०श्रौ०२।६।१सूत्रादौ उक्तं यथा "अपरेणाहवनीयं वेदिं खनति" कात्या०श्रौ० "त्र्यङ्गुलखाताम्" सू० "त्र्यङ्गुलं खातमस्याः" कर्क० । "व्याममात्रीं पश्चात्" सू० "अपरस्यां दिशि तिर्य्यक्प्रमाणेन चतुररत्निमात्रां कर्कः । "त्र्यरत्निं प्राचीम्" सू० "त्र्यरत्निं प्राचीम् पूर्वापरायतां दीर्घाम् । पुरस्तात् ( पूर्वपार्श्वे ) तिर्य्यक्प्रमाणं यद्यपि नोक्तम् । तथाप्यरत्नित्रयात्मकमेव दर्शनात्" कर्कः । "अपरिमितां वा" सू० "कस्मिंश्चित् सूत्रग्रन्थे द्वावेवापरिमितशब्दौ श्रुतिवाक्यानुसरणादपरिमाणवाचिनौ अपरिमिता वा अपरिमितेष्टका वेति च । अन्ये तु अपरिमितं प्रमाणाद्भूय इत्युक्तत्वात् पूर्व्वोक्तपरिमाणादनियमेनाधिकपरिमाणवाचक" कर्क० "प्राक्प्रवणामुदक्प्रवणां" सू० "प्रवन्तेऽस्मिन्नापोऽनेन वेति प्रवणं नीचम् प्रवर्त्तते वा वनमुदकमस्मिन्निति तदेव निम्नम्" कर्क० । "मध्यसंगृहीताम्" सू० "तत्साधनप्रकारश्च परिशिष्टे उक्तः "आनीय रज्जुं पूर्वार्द्धात् पश्चार्द्धं यावदेव तु । द्विगुणीकृत्य तां रज्जुं मन्ते तस्यास्तु शङ्कुकौ । आवयनेन मानेन तया रज्ज्वाष्टभागया । या पृथक्तत्तृतीयेन भागेनाभ्यस्यसंग्रहाविति" कश्चित् "वेदिश्रोण्यंसयोर्मध्ये तया रज्ज्वाष्टभागयेति पाठः" कर्क० "अग्निमभितोऽंसौ" सू० "अंसौ आग्नेयैशानकोणौ आहवनीयमुभयतो भवतः अंसयोर्मध्ये आहवनीयो भवतीत्यर्थः अतोऽत्रापि वेदेरेवावयवौ श्रोणिवत् खननकरणादयश्च वेदिसम्बद्धाः संस्कारास्तयोरपि प्रवर्त्तन्ते । षडरत्निं रज्जुं मित्वा द्वितीयारत्न्यन्ते लक्षणं श्रोण्यङ्कनार्थम् ततोऽरत्निचतुर्थे भागे लक्षणमाकर्षणार्थम् तृतीयारत्न्यन्ते प्राच्यन्ताङ्कनार्थम् ततश्चतुर्थभागोने(ऽरत्नौ) अंसाङ्कनार्थम् ततः षडरत्नौ पाश इति अयं च पाशोऽविपर्य्यासेन साधनोपायः विपर्य्यासपक्षे तु षडरत्निं रज्जुमुभयतः पाशौ कृत्वा प्रथमं सार्द्धारत्न्यन्ते अंसाङ्कनार्थम् ततोऽर्धारत्नौ श्रोण्यङ्कनार्थम् ततोऽरत्नेश्चतुर्थे भागे आकर्षणार्थम् अरत्निद्वये च प्राच्यन्ताङ्कनार्थमिति । अपरिमितपक्षाश्रयणे च प्राचीप्रमाणं पुरस्तात्तिर्य्यक्प्रमाणं च तुल्यम् पश्चात्तिर्य्यक्प्रमाणं प्राचीप्रमाणं तृतीयभागेनाधिकमिति युक्त्या कल्पनीयम् । तत्र च प्राचीप्रमाणां रज्जुं द्विगुणां कृत्वा रज्जोर्मूलात् पुरस्तात्तिर्य्यक्प्रमाणार्द्धं मूलरज्ज्वोरन्तिकषष्ठभागस्थादौ आकर्षणार्थं लक्षणमिति" । अथ खननप्रमाणे पक्षान्तरमाह "आमूलच्छेदनादोषधीनाम्" सू० "प्राक्प्रवणामुदक्प्रवणामित्यस्मात् त्र्यङ्गुलखातामित्यायेन यावच्छब्दोऽत्रानुवर्त्तते अध्याहृयते वा । अस्मिन् पक्ष एव विशेषमाह" कर्क० "ओषधीनां मूलान्युच्छेत्तवै ब्रूयात्" सू० "इमं मे यमध्वर्युरग्नीधं प्रति ब्रूयात् । मूलानि च भूमिमध्ये दूरमपि यावत् प्रचरन्ति तावत्पर्य्यन्तम्" कर्क० । "आहार्य्यपुरीषां पशुकामस्य" सू० "ग्रामतुमार्ज्जनादेः सकाशाद्वेदिपुरीषमप-

सकर्णिकम् । सर्वेष्वपि दलेष्वीशं विन्यसेत् पूर्वतः क्रमात्” इत्यादि ।

काञ्चनपुरीव्रतं गरुडपु० “काञ्चनाख्या पुरी नाम व्रतं त्रैलोक्यपावनम् । शुक्लतृतीया कृष्णा च एकादश्यथ पूर्णिमा । संक्रान्तिर्वा महाभागे कुहूर्वा चाष्टमी तिथिः । पर्वस्वेतेषु दातव्या काञ्चनाख्या पुरी शुभा” ।

कामव्रतं भविष्यपु० “पुष्यादितस्त्रयोदश्यां कृत्वा नक्तं मधौ मधौ । अशोककाञ्चनं दद्यादिक्षुयुक्तं दशाङ्गुलम् । विप्राय वस्त्रसंयुक्तं प्रद्युम्नः प्रीयतामिति । कल्पं विष्णुपुरे स्थित्वा विशोकः स्यात् पुमान् नृप ! । एतत् कामव्रतं नाम सदा शोकविनाशनम्” ।

कामदासप्तमीव्रतं भविष्योत्तरोक्तम् । “फाल्गुनामलपक्षस्य सप्तम्यां च घनाघन ! । उपोषितो नरो नारी समभ्यर्च्य तमोपहम् । सूर्य्यनाम जपन् भक्त्या भावयुक्तो जितेन्द्रियः । तिष्ठन् प्रविशंश्चैव सूर्य्यमेवानुकीर्त्तयेत् । ततोऽन्यदिवसे प्राप्ते अष्टम्यां नियतो रविम् । स्नात्वा सम्यक् समभ्यर्च्य दद्याद्विप्राय दक्षिणाम्” ।

कामदेवव्रतं विष्णुधर्मोत्तरम् । “शुक्लपक्षे महाराज ! त्रयोदश्यामुपोषितः । पूजयेत् कामदेवन्तु वैशाखात् प्रभृति प्रभो ! । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । दद्याद् व्रतान्ते विप्राय गन्धवस्त्रयुगं तथा” । “कृत्वा व्रतं वत्सरमेतदिष्टमासाद्य नाकं सुचिरं मनुष्यः । मानुष्यमासाद्य भवत्यरोगः सुखान्वितोरूपसमन्वितश्च” ।

कामधेनुव्रतं वह्निपु० “कार्त्तिकः खलु मासो वै सर्वदेवमयो महान् । कृष्णपक्षे विशेषेण तत्र पञ्च दिनानि तु । पुण्यानि तेषु यद्दत्तमक्षयं सर्वकामिकम्” इत्युपक्रमे अमावस्यादिषु तत्र विशेषमुक्त्वा “नन्दा सुनन्दा सुरभी सुशीला सुमनास्तथा । निर्गता मथ्यमानाब्धौ अतः स्नानं शुभप्रदम्” । कामधेनोराविर्भावभावितत्वेनाह अतः प्रशस्तमित्यर्थः “तत्र स्नात्वा समभ्यर्च्य धेनुं पूज्य प्रयत्नतः । गोदानफलमाप्नोति नरो विगतकल्मषः । एकादश्यामुपोष्याथ नरो दिनचतुष्टयम् । घृतेन स्नापयेद्विष्णुं गव्येन पयसापि वा । नक्ताशी नीरवैर्द्रव्यैः पूजयेन्मधुसूदनम् । गन्धपुष्पैः सुनैवेद्यैर्वस्त्रालङ्कारभूषणैः । ततस्त्वमावस्यां च कामधेनुं ददाति यः सर्वाहिपत्र तु वैवचन्तु । विप्राय वै सर्वगुणाय यत्न कृत्वा व्रतं तत्फलतो भवेत्तु” ।

कामव्रतं मत्स्यपु० “कार्त्ते पुण्या त्रयोदश्यां शुक्लपक्षे जायते ध्रुवम् । दृष्टां रूपवतीं भार्यां लभेत् कामांश्च पुष्कलान् । मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः” ।

कामषष्ठीव्रतं वराहपु० “कामव्रतं महाराज ! शृणु मे गदतोऽधुना । येन कामाः समृध्यन्ते मनसा चिन्तिता अपि । षष्ठ्यां फलाशनो यस्तु वर्षमेकं व्रतं चरेत् । माघमासे सिते पक्षे पञ्चम्यां नक्तभोजनः । षष्ठ्यान्तु प्राशयेद्धीमान् ! फलमेकन्तु पार्थिव ! । ततो भुञ्जीत यत्नेन वाग्यतः शुद्धमोदनम् । ब्राह्मणैः सह राजेन्द्र ! अथ वा केवलं फलम् । तमेकं दिवसं स्थित्वा सप्तम्यां पारणं नृप ! । अग्निकार्य्यं च कुर्वीत गुहरूपेण केशवम् । पूजयित्वा विधानेन वर्षमेकं व्रतं चरेत्” ।

कामावाप्तिव्रतं विष्णुधर्मोत्तरोक्तम् । “कृष्णपक्षे चतुर्दश्यां महाकालमथार्च्चयेत् । तस्मात् काममवाप्नोति यथेष्टं नात्र संशयः” ।

कार्त्तिकमासव्रतं नारदोक्तम् । “माहात्म्यमभिधास्यामि मासस्यास्य वरानने ! । येन ते जायते भक्तिर्भक्त्या येनार्च्यते हरिः । कार्त्तिके कृच्छ्रसेवी यः प्राजापत्यरतोऽपि वा । षड्द्वादशाहं पक्षं वा मासं वा वरवर्णिनि ! । क्षपयित्वा नरो याति तद्विष्णोः परमं पदम् । एकभक्तोऽथ वा नक्ते तथा सुभ्रु ! अयाचिते । कृते नरैर्द्वादशाग्निर्भवेद्धु वै दीपमालया । तस्मिन् हरिदिनं पुण्यं तथा वै भीष्मपञ्चकम् । प्रबोधनीं नरः कृत्वा जागरेण समन्विताम् । न मातुर्जठरे याति अपि पापान्वितो नरः” ।

कार्त्तिकेयषष्ठीव्रतं भविष्योत्तरम् “मार्गशीर्षे सिते पक्षे षष्ठी भरतसत्तम ! । पुण्या पापहरा ज्ञेया शिवगीता गुहप्रिया । निहत्य तारकं षष्ठ्यां गुहस्तारकराजवत् । रराज तेन दयिता कार्त्तिकेयस्य सा तिथिः । स्नानदानादिकं कर्म तस्यामक्षयमुच्यते । येऽस्यां पश्यन्ति गाङ्गेयं दक्षिणाशां समाश्रितम् । ब्रह्महत्यादिपापैस्ते मुच्यन्ते नात्र संशयः । तस्मादस्यां सोपवासः कुमारं पर्णसम्भवम् । राजतञ्च महाराज स्वर्णमयञ्चाथ दारुजम् । कारयित्वार्थसारेण कामामर्षविवर्जितः । अपराह्णे ततः स्नात्वा सम्यगाचम्य बुद्धिमान् । पद्मासनस्थं गाङ्गेयं ध्यायंस्तिष्ठेच्च यन्त्रितः” ।

कालरात्रिव्रतं कालिकापु० “साधु भक्तोऽसि भर्गस्य ! कालरात्रिव्रतं मम । शृणु ! वक्ष्याम्यहन्तेऽद्य कर्त्तव्यं विधिवद्यथा । आश्विने मास्यतुलेऽष्टम्यां शुक्लपक्षे जितेन्द्रियः । अन्वहं स्थिरचित्तात्मा नियमस्था

भवेत् सुधीः । कालीव्रतमिदं ख्यातं कर्त्तव्यं सत्कुलोद्भवैः” । कालरात्रि काली ।

कालाष्टमीव्रतं वामनपु० “नभस्ये मासि च तथा या स्यात् कृष्णाष्टमी शुभा । युक्ता मृगशिरेणैव सा तु कालाष्टमी स्मृता । तस्यां सर्वैकलिङ्गेषु तिथौ स्वपिति शङ्करः । वसन्तसन्निधाने तु तत्र पूजाऽक्षया स्मृता” । इदं व्रतं भाद्रादिवर्षसाध्यम् ।

कीर्त्तिव्रतं पद्मपु० “अश्वत्थं भास्करं गङ्गां प्रणम्यैकत्र वाग्यतः । एकभक्तं नरः कुर्य्यादष्टम्यां वै विमत्सरः । व्रतान्ते विप्रमिथुनं पूज्य धेनुत्रयान्वितम् । वृक्षं हिरण्मयं दद्यात् सोऽश्वमेधफलं लभेत् । दिवि देवविमानस्थो गीयतेऽप्सरसाङ्गणैः । एतत्कीर्त्तिव्रतं नाम भूमिकीर्त्तिप्रदायकम्” ।

कुक्कुटीव्रतं भविष्योक्तं २०६२ पृ० ति०त० द्रष्टव्यम् ।

कुबेरतृतीयाव्रतं भविष्यपु० “तृतीयायान्तु वित्तेशं वित्ताढ्यो जायते ध्रुवम्” । पूजयित्वेति शेषः “क्रयादिव्यवहारे च लाभो द्विगुणो भवेत्” ।

कुमारषष्ठीव्रतं कालोत्तरोक्तम् । “चैत्रशुक्लात् समारभ्य व्रतार्थमधुनोच्यते । उपोष्य विधिना षष्ठीं विशेषात् षण्मुखं यजेत्” ।

कुम्भीव्रतं स्कान्दपु० “एकादश्यां कार्त्तिकस्य शुक्लपक्षे तु कारयेत् । कुम्भ्यादिनरकेभ्यस्तु उद्धरेत् स्वमशेषतः । प्रयत्नात् कार्त्तिके मासि विष्णारम्भे तु जागरम् । सुशुक्लैकादशीं रात्रौ विशेषादर्च्चयन्ति च । चतुरस्रं चतुर्द्वारं गोमयेनोपलिप्य च । चतुर्भिः शालिगोधूमवर्णकैरुपशोभितम् । स्नात्वा नारायणं पूज्य स्थण्डिले प्रतिमासु च । कृत्वा दिशां बलिं दत्त्वा विधानमवधारयेत् । दीपमालान्वितं गन्धपुष्पाद्यैः पूजयेत्ततः । कुम्भीं देवमयीं ध्यात्वा मुच्यते सर्वकिल्बिषैः” ।

कूर्म्मद्वादशीव्रतं धरणीव्रतोक्तम् “पौषमासस्य या पुण्या द्वादशी शुक्लपक्षतः । तस्यां प्रागिव सङ्कल्पं कुर्य्यात् स्नानादिकाः क्रियाः । निर्वर्त्याराधयेद्राजन्नेकादश्यां जनार्दनम् । पृथङ्मन्त्रैर्द्विजश्रेष्ठ ! देवदेवं जनार्दनम् । कूर्म्माय पादौ प्रथमन्तु पूज्य नारायणायेति कटिं हरेस्तु । सङ्कर्षणायेत्युदरं हरेस्तु उरो विशोकाय भवाय कण्ठम् । सुबाहवे चैव भुजौ शिरश्च नमो विशालाय रथाङ्गशङ्खौ । स्वनाममन्त्रैश्च सुधूपगन्धैर्नानानिवेद्यैर्विविधैः फलैश्च । अभ्यर्च्य देवं कलशं तदग्रे संस्थाप्य माल्याम्बरदामकण्ठम् । तं रत्नगर्भन्तु पुरेव कृत्वा स्वशक्तितो हेममयञ्च देवम् । समन्दरं कूर्म्मरूपेण कृत्वा संस्थापयेत्ताम्रपात्रे घृतस्य । पूर्णे घटे पर्य्यय सन्निवेश्याथो ब्राह्मणायैव सर्वं तु दद्यात्” । घृतस्य पूर्णे ताम्रपात्रे समन्दरं कूर्म्मरूपं निधाय घटोपरि निवेश्य प्रभाते दद्यादित्यर्थः” ।

कृच्छ्रव्रतानि विष्णुरहस्ये “सुपुण्ये कार्त्तिके मासि देवर्षिपितृसेविते । क्रियमाणे व्रते नृणां स्वल्पेऽपि स्यान्महाफलम् । क्रतूनां संवत्सरः पुण्यस्तस्माद्दर्शस्तु पूजितः । वर्षायाः कार्त्तिकः पुण्यः कार्त्तिकाद्भीष्मपञ्चकम् । नैवेद्यं पुष्पधूपञ्च अर्चनं सुविलेपनम् । दत्त्वैककार्त्तिके विष्णोः फलं सांवत्सरं लभेत् । अतः कार्त्तिकमासाद्य सदैव शुभकाङ्क्षिभिः । हरिमुद्दिश्य कर्त्तव्यं सुशक्त्या सुकरं व्रतम् । कार्त्तिकस्यासिते पक्षे वायुभक्षश्चतुर्दशीम् । समुपोष्य नरो भक्त्या पूजयेद्गरुड़ध्वजम् । उपवासस्तु कर्त्तव्यो वारिमध्ये स्थितेन च । जलकृच्छ्रमिदं कृत्वा विष्णुलोकं व्रजेन्नरः । दशम्यां पञ्चगव्याशी एकादश्यामुपोषितः । अर्चयेच्चाच्युतं देवं नियतश्च व्रतञ्चरेत् । कार्त्तिकस्यासिते कृत्वा नरो देवव्रतञ्चरेत् । दामोदरं समभ्यर्च्य देवो वैमानिको भवेत् । अपः क्षीरं दधि घृतं सप्तम्यादिचतुर्दिनम् । कार्त्तिकस्यासिते पीत्वा एकादश्यामुपोषितः । कृच्छ्रं पैतामहं नाम कुर्वन् संपूजयेद्धरिम् । प्राप्नोति परमं विष्णोः स्थानं त्रैलोक्यपूजितम् । त्रिरात्रं पयसः पानमुपवासपरस्य च । षष्ठ्यादौ कार्त्तिके शुक्ले कृच्छ्रो माहेन्द्र उच्यते” इत्यादि ।

कृच्छ्रचतुर्थीव्रतं स्कान्दपु० “मार्गशीर्षे शुभे मासि सिते पक्षे तु षण्मुखम् । चतुर्थ्यां नियमं कृत्वा विघ्नेशं पूज्य भक्तितः । पुष्पैर्गन्धैश्च नैवेद्यैः लड्डुकैश्च सुसंस्कृतैः । पक्वैस्तिलापूपैश्च तथा मोदकैः प्रभुम् । पूजयित्वा विधानेन प्रार्थयेत्तत्र मानवः” ।

कृत्तिकाव्रतं भविष्योत्तरोक्तम् । “कार्त्तिक्यां पौर्णमास्यान्तु गृह्णीयात् कृत्तिकाव्रतम् । षट् मासांस्तु व्रतं यावदिदं सञ्चिन्त्य चेतसि । पारणे पारणे चापि पुराणज्ञे द्विजोत्तमे । उद्यापनं प्रयच्छेत यथा विभवसारतः । कृत्तिकासु स्वयं सोमः कृत्तिकासु बृहस्पतिः । यदा स्यात् सोमवारेण सा महाकार्त्तिकी स्मृता । ईदृशी बहुभिर्वर्षैर्बहुपुण्यैर्न लभ्यते । तस्यापि न तथा नेया सु-

दीक्षेक्षेय आत्मनः। अन्यापि कार्त्तिकी पार्थ! कृत्तुपोष्या विधानतः। तस्या विधानं राजेन्द्र! शृणुष्वैकाग्रमानसः। कार्त्तिके शुक्लपक्षस्य पौर्णमास्यां दिनोदये। नक्तेन नियमं कुर्य्याद्दन्तधावनपूर्व्वकम्। उपवासेन वा शक्त्या ततः स्नात्वा जलाशये" इत्यादि।

कृष्णचतुर्द्दशीव्रतं भविष्यपु० "बालवृद्धातुराणाञ्च भोगिनां स्त्रीषु वालिशे। विधानन्तेषु वक्ष्यामि शृणुते ते यथा श्रुत!। भूतायां फाल्गुने कुर्य्यात् कृष्णपक्षेऽतिभक्तितः। दरिद्राणामनाथानामशक्तानां विशेषतः। सर्व्वकामप्रदं कृष्णचतुर्द्दश्यां शिवव्रतम्। रात्रौ विशेषपूजा तु महास्नपनसंयुता। महादीपद्वयं देयं शतमष्टोत्तरं पुनः। घृतं गुग्गुलं धूपं शिवं पशुपतिं यजेत्। खण्डखाद्यान्यनेकानि भक्ष्याणि विविधानि च। यथा समर्पयेत् भक्त्या वित्तशाठ्यं विना श्रुत!। रात्रौ जागरणं कार्य्यं शिवस्याग्रे शिवं जपेत्"। शिवधर्म्मोक्तम् "नारी चोपवसेदब्दं कृष्णामेकाञ्चतुर्द्दशीम्। वर्षान्ते प्रतिमां कृत्वा शालिपिष्टमयीं शुभाम्। गीतानुलेपनैर्माल्यैः पीतवस्त्रैस्तु पूजयेत्। पूर्व्वोक्तमखिलं कृत्वा शिवाय विनिवेदयेत्"।

कृष्णद्वादशीव्रतं वराहपु० "एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन न निर्द्वादशिको भवेत्। मार्गशीर्षस्य मासस्य श्रुतं सर्व्वं त्वया बुध!। अश्नीयान्मासि मास्येवं कुर्य्यात्संवत्सरं व्रती। नामानि देवदेवस्य केशवस्य पृथक् पृथक्। कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्द्दनः। उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः। योगेशः पुण्डरीकाक्षो मासनामान्यनुक्रमात्"। विष्णुधर्म्मोत्तरोक्तम् "माघ्यान्तु समतीतायां द्वादशी या भवेन्नृप!। ततः प्रभृति कर्त्तव्यं व्रतमेतदुपोषिता। द्वादशीषु च कृष्णासु नाम कृष्णस्य कीर्त्तयेत्। तेनैव नाम्ना कर्त्तव्यौ जपहोमौ तथैव च। तिलैर्निवेदनं कार्य्यं होमः कार्य्यस्तथा तिलैः। पौष्यान्तु समतीतायां कृष्णा या द्वादशी भवेत्। तस्यां व्रतावसाने तु तिलान् दद्याद्द्विजातिषु। सुवर्णञ्च महीपाल! रक्तवस्त्रं तथैव च। संवत्सरमिदं कृत्वा व्रतं मनुजपुङ्गव!। तिर्य्यग्योनिं न चाप्नोति स्वर्गलोकञ्च गच्छति। यावज्जीवं व्रतमिदं यः करोति समाहितः। न स दुःखमवाप्नोति नारकं मनुजोत्तम!। यत्र वैतरणी दुर्गा क्षुरधारा सपर्व्वता। पापानां यातना यत्र तत्रासौ न गमिष्यति"।

कृष्णव्रत पद्मपु० "एकादश्यां तु नक्ताशी मधुकं विनिवेदयेत्"। विप्रायेति शेषः "कृत्वा मत्स्यं च सौवर्णं स विष्णोः पदमाप्नुयात्। एतत् कृष्णव्रतं नाम कल्पान्ते सुखलाभकृत्"।

कृष्णषष्ठीव्रतं भविष्योत्तरोक्तम्। "कृष्णषष्ठ्यां प्रयत्नेन कृत्वा नक्तं विधानतः। मासो मार्गशिरस्यादावंशुमानिति पूजयेत्। विधिवत् प्राश्य गोमूत्रमनाहारो निशि स्वपेत्। अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः"। इत्यादि तदवधिवर्षसाध्यमिदम्।

कृष्णाष्टमीव्रतं देवीपु० "कृष्णाष्टम्यां विधानं वै निखिलं क्रियते यथा। क्रमेण मे तथा ब्रूहि तत् कर्त्तव्यं सुरेश्वर"। ईश्वर उवाच "हेमन्ते त्वथ सम्प्राप्ते मासि मार्गशिरे तथा। नक्तं कृत्वा शुचिर्भूत्वा गोमूत्रं प्राशयेन्निशि"। नक्तं कृत्वा नक्तमनुकल्पम् "आहरेद्वाशन यत्र यथान्नञ्च तथाशयेत्। तेन नक्तं समुद्दिष्टं प्राशिता प्राशितेन च" इति। तेन नक्तं समुद्दिष्टं प्राशितेनचेति क्वचित्प्राशितेन क्वचिदप्राशितेनेत्यर्थः। "कृष्णाष्टम्यां विधानं वै शङ्करं पूज्य भक्तितः। अतिरात्रस्य यज्ञस्य फलमष्टगुणं भवेत्। स्मरेच्च शाङ्करं नाम सायं रात्रौ दिवा यथा" इत्यादि। तदवधि वर्षसाध्यम् "कृष्णाष्टम्यां चैत्रमासे स्नातो नियतमानसः। कृष्णमभ्यर्च्य पूजाञ्च देवक्यां कुरुते तु यः। निराहारो जपन्नाम कृष्णस्य जगतः पतेः। उपविश्य जपन् स्नातः च्युतप्रस्खलितादिषु। पूजायाञ्चापि कृष्णस्य सप्तवारान् प्रकीर्त्तयेत्। पाषण्डिनो विकर्म्मस्थान् नालपेन्नैव नास्तिकान्। प्रभाते वाम्बुना स्नातो दद्याद्विप्राय दक्षिणाम्। भुञ्जीत कृतपूजश्च कृष्णस्यैव जगत्पतेः" इत्यादि। इदं तदवधि वर्षसाध्यम्। भविष्योत्तरोक्तम्। "कृष्णाष्टमीव्रतं पार्थ! शृणु पापहरं परम्। धर्म्मस्य जननं लोके रुद्रप्रीतिकरं परम्। मार्गशीर्षेऽथ वै मासि दन्तधावनपूर्व्वकम्। उपवासस्य नियमं कुर्व्वन्नक्तस्य च व्रती"। सपर्य्यासमर्थभेदेन व्यवस्थितो विकल्पः। इत्यादि तदवधि वर्षसाध्यमिदम्। व्रतान्तरं कृष्णाष्टमीशब्दे द्रष्टव्यम्।

कृष्णैकादशीव्रतं विष्णुधर्म्मोत्तरोक्तम्। "एकादशी तथा कृष्णा फाल्गुने मासि भार्गव!। चन्द्रोदेवस्य कर्त्तव्या पूजा धर्म्मभृतांवर। पूजनाच्चन्द्रदेवस्य येनायं गुणवर्जितम्। न प्राप्नोति तथा प्रीतिं गुणवन्तं न संशयम्"।

कौकिलाव्रतं भविष्योत्तरोक्तम्। "आषाढ़पौर्णमास्यान्तु सन्ध्याकाले ह्युपस्थिते। सङ्कल्पयेन्मासमेकं श्रावणी[illegible]

ह्यहम्। स्नानं करिष्ये नियता ब्रह्मचर्य्ये स्थिता सती। भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनान्दयाम्। इति सङ्कल्प्य पुरुषो नारी वा ब्राह्मणान्तिके। प्राप्यानुज्ञान्ततः प्राज्ञो सर्व्वसामग्रिसंयुतः" इत्यादि।

कोटीश्वरीतृतीयाव्रतं स्कन्दपु० "शृणु भद्रे ! परं गुह्यं सर्व्वकामफलप्रदम्। दुर्भगाणाञ्च नारीणां सौभाग्यकरणं परम्। लक्षेश्वरीति विख्यातं ततः कोटीश्वरीव्रतम्। तृतीया शुक्लपक्षे तु मासि भाद्रपदे भवेत्। तस्यां व्रतन्तु संग्राह्यं यावद्वर्षचतुष्टयम्। उपवासेन कर्त्तव्यं वर्षे वर्षे तु सुन्दरि !। अक्षतानां तण्डुलानां तिलानां वा सुलोचने !। लक्षमेकं विरच्याथ क्षिपेत् पयसि शोभने। क्षीरसंमिश्रितैः कार्य्या देव्यामूर्त्तिः सुलोचना। कृत्वा तु पुष्पप्राकारं पुष्पमालाभिमण्डितम्। संस्थाप्य पार्व्वतीं देवीं पूजयेद्भक्तिभावितः" इत्यादि।

कौमुदीव्रतं विष्णुरहस्योक्तम्। "मासि चाश्वयुजे शुक्ल एकादश्यामुपोषितः। कुर्य्यात् तु व्रतं श्रेष्ठं कौमुदाख्यं महाफलम्। अहिंसकः शुचिर्भूत्वा धौतवासा जितेन्द्रियः। द्वादश्यामर्च्चयेत् स्नात्वा वासुदेवं जगद्गुरुम्"।

क्षेमव्रतं विष्णुधर्म्मोत्तरोक्तम्। "यक्षाणां राक्षसानाञ्च चतुर्द्दश्याञ्च पूजनम्। कृत्वा क्षेममवाप्नोति क्रियासाफल्यमेव च"।

गणपतिचतुर्थीव्रतं भविष्यपु० "चतुर्थ्यान्तु महाराज ! निराहारो व्रतान्वितः। दत्त्वा तिलान्नं भुङ्क्ते यः स्वयं भुङ्क्ते तिलोदकम्"। दिवा निराहारो रात्रौ भुङ्क्ते इति विरोधपरिहारः। वर्षद्वये समासिद्धिर्व्रतस्य तु यदा भवेत्। विनायकस्तस्य तुष्टो ददाति फलमीप्सितम्"।

गन्धव्रतं शिवधर्म्मोक्तम् "पौर्णमास्यामुपवसेदब्दमेकं समन्वितः। वर्षान्ते सर्व्वगन्धाढ्यां प्रतिमां विनिवेदयेत्। सुविचित्रैर्महायानैर्दिव्यगन्धविभूषितैः। युगकोटिशतं साग्रं शिवलोके महीयते"।

गलन्तिकाव्रतं शिवरहस्योक्तम् "पवित्रतोययुक्तैर्यः कुम्भैः ग्रीष्मे शिवोपरि गालयेत्तु यः पयोधारां स ब्रह्मपदमश्नुते"।

गायत्रीव्रतं गरुड़पु० "अथोत्तमं परं ब्रह्मपरं शृणु ! भद्रदम्। चतुर्द्दश्यां महाभाग ! सर्व्वरोगार्त्तिशान्तये। ज्वरगुल्मप्लीहशूलकुष्ठातिसारसंयुतः। मर्त्त्यो नित्यमिदं कार्य्यं तदार्त्त्यपनुत्तये। स्नात्वा तु धृतवस्त्रः सर्व्वकामविवर्ज्जितः। आदित्यमुपतिष्ठेत गायत्रीञ्च जपन्नृजुः। उदयात् पूर्व्वमारभ्य यावदस्तं गतो रविः। निराहारो जितक्रोधो तावत्तिष्ठेत् समाहितः। रवावस्तङ्गते देवमर्च्चयेत् पुरुषोत्तमम्। उपोष्य विधिवत् स्नात्वा तथा पर्व्वणि सुव्रतः"। पर्व्वणि, पौर्णमास्याम्। एतच्च शुक्लचतुर्द्दशीव्रतं, पुराणे शुक्लपक्षस्य व्रतप्रकरणे पठितत्वात्।

गुड़तृतीयाव्रतं भविष्यपु० "गुड़पूपास्तु दातव्या मासि भाद्रपदे तु या। तृतीया पायसेनापि वामदेवस्य प्रीतये"।

गुणावाप्तिव्रतं विष्णुपु० "अतःपरं प्रवक्ष्यामि चतुर्म्मूर्त्तिव्रतं तव। द्विधा तु देवदेवस्य मूर्त्तिर्भवति यादव। घोरा सौम्या शिवा चान्या घोरा भवति पावकी। शिवा चाग्निपतिर्यस्मादग्नीषोमात्मकं जगत्। द्विधा घोरा विनिर्दिष्टा द्विधा सौम्या ततः पुनः। घोरा वह्निश्च सूर्य्यश्च सौम्या सोमजलाधिपौ। तेषां च पूजनं कार्य्यं प्रतिपत्प्रभृति क्रमात्। शुक्लपक्षात् तथारभ्य फाल्गुनस्य द्विजोत्तम !। आदित्यं पूजयेद्राजन् ! प्रथमेऽह्नि परः शुचिः। द्वितीयेऽह्नि तथा वह्निं तृतीयेऽह्नि जलाधिपम्। चतुर्थेऽह्नि शशाङ्कञ्च यथावन्मानवोत्तमः"।

गुरुव्रतं भविष्योक्तम् "अनुराधास्वथाचार्य्यं देवानां पूज्य भक्तितः। पूर्व्वोक्तक्रमयोगेन सप्त नक्तान्यथाचरेत्। हैमं हेममये पात्रे स्थापयेच्च बृहस्पतिम्। पीताम्बरयुगच्छन्नं पीतयज्ञोपवीतकम्। पादुकाच्छत्रसहितं सदण्डं सकमण्डलुम्। संपूज्य पुष्पनिकरैर्धूपैर्दीपाक्षतादिभिः। खण्डखाद्योपहारञ्च द्विजाय प्रतिपादयेत्"।

गुर्व्वष्टमीव्रतं भविष्यपु० "मासि भाद्रपदे राजन् ! शुक्लपक्षे यदाष्टमी। गुरुवारेण संयुक्ता सा तिथिर्द्धर्म्मवर्द्धिनी। सम्पूज्या सर्व्वपापघ्नी प्रेतयोनिविनाशनी। कुर्व्वीयान्नियमं सम्यक् दन्तधावनपूर्व्वकम्। एकभक्तेन राजेन्द्र ! तस्यां देवी बृहस्पतिः। स्नानं नद्यां तड़ागे वा गृहे वा नियमात्मना। सौवर्णं कारयेज्जीवं राजतं वा नरोत्तम ! तस्याभावे यथाशक्त्या श्रीखण्डेनापि कारयेत्"।

गुह्यकद्वादशीव्रतं भविष्योत्तरे "द्वादश्यां गुह्यकानर्च्च्य पञ्चामृतसंयुतैः। हैमं विप्राय वै दद्यादुपवासपरायणः। एतद्वै गुह्यकं प्रोक्तं व्रतं पापहरं शुभम्"।

गुहषष्ठीव्रतं भविष्योत्तरे "सर्व्वौषध्युदकस्नातः षष्ठ्यां पूज्य षडाननम्। सर्व्वोपचारदानैश्च यः करोति महात्मने। स्फाटिकोद्भवं रूपं शिखिनं स्थापयेत् षष्ठीम्"।

गृहाटः पेषयन्त्युदूखलं धान्यकण्डकम् । "उदकुम्भश्च पूर्णश्च एतेषामनुगश्च यत् । एतानि गृहिणां गेहे प्रख्याप्य पुरुषोत्तम ! । उपस्कारकृते नारी न शोचति कदाचन । एतद्गृहव्रतं नाम सर्वसौख्यप्रदायकम्" ।

गोपदत्रिरात्रव्रतं भविष्योक्तम् "पार्थ! भाद्रपदे मासि शुक्लपक्षे दिनोदये । तृतीयायां चतुर्थ्याञ्च श्रद्धया परिवत्सरम् । उपवासेन गृह्णीयात् व्रत नाम्ना तु गोपदम् । स्नात्वा नरोऽथ नारी वा पुष्पधूपविलेपनैः । दध्ना च घृतमिश्रेण पिष्टकैर्वनमालया । अभ्यङ्गयेद्गवां शृङ्गे सपुच्छे चैव भारत ! । दद्याद्गवाह्निकं भक्त्या वासः पूर्वापराह्णयोः । अनग्निपक्वं भुञ्जीयात् तैलक्षारविवर्जितम्" ।

गोपालनवमीव्रतं गरुड़पु० "तथा समुद्रगामिन्यां नवम्यां स्नानमाचरेत् । शुचौ तत्पुलिने तीरे सिकताभिरलङ्कृते । वसुदेवसुतं विष्णुं गोपीगणनिषेवितम् । वनमालाचितोरस्कं वन्यपुष्पैरलङ्कृतम् । बर्हिबर्हकृतापीडं पीतकौषेयवाससम् । समानवेषैरतुलैः क्रीड़द्भिरितरेतरम् । वृतं गोपकुमारैश्च नीलाकुञ्चितमूर्द्धजम् । ध्यात्वा देवं परं विष्णुं सर्वलोकेश्वरेश्वरम् । वन्यपुष्पैश्च गन्धाद्यैः शुचिभिश्च यथाविधि" ।

गोमयादिसप्तमीव्रतं भविष्यपु० "यः क्षिपेद्गोमयाहारः द्वादश सप्तमीः क्रमात् । राजेन्द्र ! यावकाहारः शीर्णपर्णाशनोऽपि वा । क्षीराशी वैकभक्तो वा भिक्षाहारोऽथ वा पुनः । जलाहारोऽथवा भूत्वा पूजयित्वा दिवाकरम् । पुष्पापहारैर्विविधैः पद्मसौगन्धिकोत्पलैः । नानाप्रकारैर्गन्धैश्च धूपैर्गुग्गुलचन्दनैः । शर्करापायसाद्यैश्च विचित्रैश्च विभूषणैः । अर्च्चयित्वा नरश्रेष्ठ ! हिरण्याद्यादिभिर्नरः । यथोक्तफलमाप्नोति क्रतुभिर्भूरिदक्षिणैः । तदत्र प्राप्यते वीर ! सप्तम्यां केवलं रवेः" ।

गौरीचतुर्थीव्रतं पद्मपु० "उमाचतुर्थ्यां माघे तु शुक्लायां योगिनीगणैः । प्रागभ्यर्चयित्वा दृष्टा च भूयः स्वाङ्गात् स्वकैर्गुणैः । तस्मात् सा तत्र संपूज्या नरैः स्त्रीभिर्विशेषतः । कुन्दपुष्पैः प्रयत्नेन सम्यग्भक्त्या समाहितैः । कुङ्कुमालक्तकाभ्याञ्च रक्तसूत्रैः सकङ्कणैः । अन्यैः पुष्पैस्तथा धूपैर्दीपैर्बलिभिरेव च । गुड़ार्द्रकाभ्यां [illegible]भ्याञ्च पालकैः । पूज्याः स्त्रियश्च विधवा[illegible] विप्राश्च शोभनाः । सौभाग्यवृद्धये पश्चात् भोक्तव्यं बन्धुभिः सहेति" ।

गौरीव्रतं कालोत्तरोक्तम् "गौरीव्रतमथो वक्ष्ये स्त्रीणां सौभाग्यवर्द्धनम् । चैत्रशुक्लतृतीयायां गौरीव्रतं समाचरेत् । उपोष्य तु प्रयत्नेन विधानमिदमाचरेत्" ।

गोवत्सद्वादशीव्रतं भविष्योत्तरे "संप्राप्ते कार्त्तिके मासि शुक्लपक्षे नृपोत्तम ! । द्वादश्यां कृतसङ्कल्पः स्नात्वा शुद्धे जलाशये । नरो वा यदि वा नारी नक्तं सङ्कल्प्य चेतसि । ततो मध्याह्नसमये कृत्वा देवार्चनादिकम् । प्रतीक्षेतागमं भक्त्या गवां गोध्यानतत्परः । सवत्सां तुल्यवर्णाञ्च शीलिनीं गां पयस्विनीम् । चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत्" ।

गोविन्दद्वादशीव्रतं विष्णुरहस्ये

"द्वादश्यां भोजयेद्विप्रान् तेभ्यो दद्याच्च दक्षिणाम् । प्रतिमासं तिथौ तस्यां गोभ्यो दद्याद्गवाह्निकम् । गवां क्षीरेण संयुक्तं दध्ना वाऽथ घृतेन वा । न तत्पात्रे च समश्नीयात्क्षारलवणं व्रती । संवत्सरमुपोष्यैव गोविन्दद्वादशीं नरः । पुनर्गोभ्यो यथा शक्त्या भूयो दद्याद्गवाह्निकम् । गोविन्दद्वादशीं या तु उपोष्य विधिवन्नरः । प्राप्नोति विधिवद्दत्त्वा गोसहस्रस्य यत् फलम्" ।

चण्डिकाव्रतं भविष्योत्तरोक्तम् "अष्टम्याञ्च चतुर्दश्यां पक्षयोरुभयोरपि । योऽन्नमेकं न भुञ्जीत चण्डिकाराधने रतः । स याति परमं स्थानं यत्र सा चण्डिका स्थिता" ।

चतुर्दशीजागरणव्रतं कालिकापु० "कार्त्तिके शुक्लभूतायां हरं स्नाप्य घृतादिभिः" । शुक्लभूतायां शुक्लचतुर्दश्याम् "समालभ्य न्यसेद्भूयः सौवर्णं वा प्रपञ्चकम् । सुरभिभिस्ततः पुष्पैरभ्यर्च्य गुग्गुलं दहेत् । नैवेद्यञ्च पुनर्दत्त्वा बलिं बाह्ये विनिःक्षिपेत् । वितानं दीपमादर्शं वस्त्रयुग्मं ध्वजांस्तथा । धूपोत्क्षेपञ्च घण्टाञ्च दत्त्वा देवाय शम्भवे । प्रदक्षिणं ततः कुर्य्याद्दण्डवच्चैरवश्य हि । ततस्तस्योपविष्टाञ्च जागरं परिकल्पयेत्" ।

चतुर्दशीव्रतं भविष्योत्तरे "चतुर्दश्यां निराहारः समभ्यर्च्य त्रिलोचनम् । पुष्पधूपादिनैवेद्यैः रात्रौ जागरणेन च । पञ्चगव्यं निशि प्राश्य स्वपेद्भूमौ विमत्सरः" ।

चतुर्दश्यष्टमीनक्तव्रतं भविष्योत्तरे "शृणु ! नक्तोपवासस्य विधानं पाण्डुनन्दन ! । येन विज्ञानमात्रेण नरो मोक्षमवाप्नुयात् । येषु केषु च मासेषु शुक्लपक्षे चतुर्दशीम् । ब्राह्मणं भोजयित्वा तु प्रारभेत् सुतितो व्रतम् । मासि मासि भवन्ति द्वे अष्टमी च चतुर्दशी । शिवार्च्चनरतो भूत्वा शिवध्यानैकमानसः । वसुधां भाजनं कृत्वा भुञ्जीयान्नक्तभोजनम् । उपवासात्परं भैक्ष्यं भैक्ष्या-

सुपरमयाचितम् । अयाचितात् परं नक्तं तस्मान्नक्तेन भोजयेत् । देवैश्च भुक्तं पूर्वाह्णे मध्याह्ने मुनिभिस्तथा । अपराह्णे च पितृभिः सन्ध्यायां गुह्यकादिभिः । सर्ववेलामतिक्रम्य नक्तभोजी सदा भवेत् । हविष्यभोजनं स्नानं सत्यमाहारलाघवम् । अग्निकार्य्यमधःशय्यां नक्तभोजी सदा भवेत्" ।

चतुर्मासी(चातुर्मास्य) व्रतं भविष्योत्तरे "शृणु पार्थ ! प्रवक्ष्यामि गोविन्दशयनव्रतम् । कटिदानं समुत्थानं चतुर्मासीव्रतक्रमम् । मिथुनस्थे सहस्रांशौ स्थापयेन्मधुसूदनम् । तुलां प्राप्ते महाराज ! पुनरुत्थापयेच्च तम् । अधिशयिते च दैवे एष एव विधिक्रमः । नान्यथा स्थापयेत् कृष्णं नान्यथोत्थापयेत्तथा । आषाढ़स्य सिते पक्षे एकादश्यामुपोषितः । स्थापयेत् प्रतिमां विष्णोः शङ्खचक्रगदाधराम् । काञ्चनीं राजतीं ताम्रमयीं पित्तलजां तथा । पीताम्बरधरां सौम्यां पर्य्यङ्के चास्तृते शुभे । शुक्लवस्त्रपटच्छन्ने सोपधाने सुपूजिते । प्रभाते च ततो विष्णोः कृताञ्जलिपुटस्तथा । चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि । इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ! । स्त्री वा नरो वा मद्भक्तो धर्मार्थं सुदृढव्रतः । गृह्णीयान्नियमानेतान् दन्तधावनपूर्वकान् । तेषां फलानि वक्ष्यामि तत्कर्त्तॄणां पृथक् पृथक् । मधुस्वरो भवेद्राजा ! पुरुषो गुड़वर्ज्जनात् । तैलस्य वर्ज्जनादेव सुन्दराङ्गः प्रजायते । कटुतैलपरित्यागाच्छत्रुनाशमवाप्नुयात् । मधूकतैलत्यागेन सौभाग्यमतुलं लभेत् । योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात् । कटुकाम्लतिक्तमधुक्षारकषायरसम् । यो वर्जयेत् स वैरूप्यं दौर्गन्ध्यं नाप्नुयात् क्वचित् । ताम्बूलं वर्जयेत् भोगी रक्तकण्ठश्च जायते । घृतत्यागाच्च लावण्यं सर्वस्निग्धतनुर्भवेत् । फलत्यागाच्च मतिमान् बहुपुत्रश्च जायते । शाकपत्राशनाद्रोगी अपक्वाद्मलो भवेत् । पादाभ्यङ्गपरित्यागाच्छिरोऽभ्यङ्गं विवर्ज्जयेत् । दीप्तिमान् दीपकायेन सोऽपि स्योद्रपतिर्भवेत् । दधिदुग्धैकनियमी गोभक्तो गोपतिर्भवेत् । इन्द्रातिथित्वमाप्नोति स्थालीपाकस्य वर्ज्जनात् । लभते सन्ततिं दीर्घां तैलपक्वस्य वर्ज्जनात् । भूमौ प्रस्तरशायी च विप्रो मुनिवरो भवेत् । सदा मुनिः सदा योगी मधुमांसस्य वर्ज्जनात् । निर्व्याधिर्नीरुगोजस्वी सुरामद्यं विवर्जयन् । एवमादिपरित्यागात् धर्मः स्यात् कुरुनन्दन ! । एकान्तरोपवासेन ब्रह्मलोके महीयते । धारणान्नखरोम्णाञ्च गङ्गास्नानफलं लभेत् । मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत् । अयं चातुर्मास्यव्रतारम्भो गुर्वस्तमयादावपि कार्य्यः । यदाह वृद्धगर्गः "न शैशवञ्च मौढ्यञ्च शुक्रगुर्वोर्न बाधते" । "स्वगृहत्वं चिन्तयेन्नादौ चातुर्मास्यविधौ नरः । पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम् । भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत् । नमो नारायणायेति जपन्यज्ञफलं लभेत् । विष्णुपादाब्जसंस्पर्शाद्दिनपापात् प्रमुच्यते । पादोदकाभिषेकाद्वै गङ्गास्नानं दिने दिने । पर्णेषु च नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् । नित्यं शास्त्रसमाख्यानाच्छ्लोकान् यस्तु प्रबोधयेत् । व्यासस्तुष्यति तस्याशु विष्णुलोकं स गच्छति । कृत्वा प्रदक्षिणकं विष्णोर्लोकमप्सरसां लभेत् । तीर्थाम्बुस्नापनाद्विष्णोर्निर्मलं देहमाप्नुयात् । पञ्चगव्याशनात् पार्थ ! चान्द्रायणफलं लभेत् । अयाचितेन प्राप्नोति पुत्रान् धर्म्यानशेषतः । षष्ठान्नकालभोक्ता यः कल्पस्थायी भवेद्दिवि" । षष्ठान्नकालभोक्ता उपवासद्वयान्तरितैकभक्तः "शिलोञ्छलेन भुञ्जानः प्रयागस्नानमाप्नुयात् । विष्णुदेवकुले कुर्य्याद्गुपलेपनमार्ज्जने । कल्पस्थायी भवेद्राजा स नरो नात्र संशयः । प्रदक्षिणशतं यस्तु करोति स्तुतिपाठकः । हंसयुक्तविमानेन स तु विष्णुपुरं व्रजेत् । गीतवाद्यकरो विष्णोर्गान्धर्वं लोकमाप्नुयात् । यामद्वयं जलत्यागान्न रोगैरभिभूयते । गुड़व्रती नरो दद्याद्गुड़ं ताम्रभाजनम् । सहिरण्यं नृपश्रेष्ठ ! लवणस्याप्ययं विधिः" ।

चतुर्मूर्त्तिचतुर्थीव्रतं विष्णुधर्मोत्तरोक्तम् "इदमन्यत् प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तव । वासुदेवांशकात् जाताः सर्वे देवगणा नृप ! । अधिकेन तु तेजेन साध्या जातास्तथा सुराः । तत्रापि चाधिकांशेन चतुरात्मा हरिः स्मृतः । नरो नारायणश्चैव हरिः कृष्णश्च वीर्य्यवान् । चतुरात्मा हरिर्जातो गृहे धर्मस्य यादव ! । आदित्येषु तु यावुक्तौ मित्रावरुणसंज्ञकौ । तावेव नान्यौ जानीहि हरिकृष्णौ च यादव । आदित्येषु यावुक्तौ शक्रविष्णू सुरोत्तमौ । तावेव सिद्धसाध्येषु नरनारायणौ पुनः । चैत्रशुक्लचतुर्थ्यान्तु सोपवासस्तु पूजयेत् । देवेशं चतुरात्मानं वित्तशक्त्या नराधिप ! । व्रतमेतन्नरः कृत्वा पूर्वोक्तादशवत्सरम् । न दुर्गतिमवाप्नोति मोक्षोपायञ्च विन्दति" ।

चतुर्युगव्रतं विष्णुधर्मोक्तम् "इदमन्यत् प्रवक्ष्यामि चतुर्युगव्रतं तव । कृतादिकं चतुर्युगं पूजयेत् सुसमाहितः । प्रथमे

चैत्रशुक्लस्य दिने पूज्यं कृतं युगम्। श्वेतेन वस्त्रयुग्मेन गन्धमाल्यादिना तथा। चैत्रशुक्लसमारभ्य प्रथमेऽहनि पूजयेत्। कृतं शुक्लेन सर्वेण गन्धमाल्यादिना द्विज!। द्वितीयेऽहनि रक्तेन तथा त्रेतान्तु पूजयेत्। तृतीयेऽहनि पीतेन द्वापरं पूजयेद्बुधः। चतुर्थेऽहनि कृष्णेन तिष्यं संपूजयेद्युगम्। सिद्धार्थकैः कुङ्कुमेन तथैव च हरिद्रया। तथैवामलकैः स्नानमसौ दिवसक्रमात्। क्षीरेण प्राशयात्मान्तु कुर्य्यात् प्रत्यहमेव च। कृत्वा व्रतं वत्सरमेतदेकं चतुर्युगं मोदति नाकपृष्ठे। संपूज्य देवं युगमूर्त्तिसंज्ञं चतुर्युगं शास्ति महीं समग्राम्”।

चन्द्रव्रतं वराहपु० “चन्द्रव्रतं पञ्चदश्यां शुक्लायां नक्तभोजनम्। दश पञ्च च वर्षाणि व्रतमेतत् समाचरेत्। अश्वमेधसहस्राणि राजसूयशतानि च। इष्टानि तेन राजेन्द्र! एतद्व्रतं समाचरेत्”। पद्मपु० “चान्द्रायणस्य यः कृत्वा हैमञ्चन्द्रं निवेदयेत्। चन्द्रव्रतमिदं प्रोक्तं चन्द्रलोकप्रदायकम्”।

चन्द्ररोहिणीशयनव्रतं पद्मपु० “रोहिणीचन्द्रशयनं सोमव्रतमिहोत्तमम्। तस्मिन्नारायणस्यार्च्चामर्च्चयेदिन्दुनामभिः। यदा सोमदिने शुक्ला भवेत्पञ्चदशी क्वचित्। अथ वा ब्रह्मनक्षत्रं पौर्णमास्यां प्रजायते। तदा स्नानं नरः कुर्य्यात् पञ्चगव्येन सर्षपैः”।

चन्द्रार्कव्रतं विष्णुधर्मोत्तरोक्तम् “अमावास्यान्तवेलायां सोपवासो नरोत्तम!। पद्मद्वये पूजयन्ति चन्द्रविकराग्निगौ। आदित्यमष्टदलके शशिनं षोडशारके। आदित्यं सर्व्वं रक्तेन चन्द्रं शुक्लेन यादव!। माल्यादिना महाभाग! होमयेत् तिलतण्डुलान्। घृतक्षीरयुतान् राजन्! तथार्च्चयेद्यथाविधि। व्रतान्ते ब्राह्मणेन्द्राय! कनकं प्रतिपादयेत्। रजतं वा महाभाग! यदृच्छेद्भूतिमात्मनः। कृत्वा व्रतं वत्सरमेतदिष्टं दद्याच्च दीपान् विधिवत् प्रभूतान्। चान्द्रं पदं प्राप्य विवर्द्धते सदा धनान्वितः स्यात् त्रिदिवे इहैव”।

चम्पाषष्ठीव्रतं स्कान्दपु० “यदि लभ्येत जीवेऽह्नि दैवेन नृपसत्तम!। षष्ठी भाद्रपदे शुक्ला वैधृतेन समन्विता। विशाखा भौमयोगेन सा चम्पेतीह विश्रुता। देवासुरमनुष्याणां दुर्लभा चम्पिकायनी। कृते त्रेतायां पद्मायनी द्वापरे पुनः। चत्वारिंशत् कलौ त्रिंशच्छायनी दुर्लभा तदा”।

चान्द्रायणव्रतं कूर्म्मपु० “अथ शुक्लचतुर्दश्यां पौर्णमासे समाहितः। चान्द्रायणव्रतं मासं चाहयेत् सर्व्वपापजित्। पूर्णेन्दुपौर्णमास्यान्तु पूजयेत् प्रत्यहं जलैः”।

चित्रभानुसप्तमीव्रतं भविष्यपु० “सप्तम्यां पूज्य देवेशं चित्रभानुं दिवाकरम्। रक्तैश्च गन्धकुसुमैर्म्महदारोग्यमाप्नुयात्”।

चैत्रभद्रमाघतृतीयाव्रतं भविष्योत्तरे “चैत्रे मासि तृतीयायां दन्तधावनपूर्व्वकम्। उपवासस्य नियमान् स्त्रीयाङ्क्तिभावतः। अञ्जनं च सताम्बूलं सिन्दूरं रक्तवाससी। वर्जयेत् सोपवासापि सर्वैधव्यकरं परम्। विधवा गतिमार्गेण कुमारी च यदृच्छया। कुर्य्याद्दार्य्याचनविधिं श्रूयतामत्र च क्रमः। विधिभाद्रपदे ह्येष सर्व्वसौख्यप्रदायकः। सप्तधान्यविधानेन शूर्पस्थां पूजयेदुमाम्”

चैत्रशुक्लप्रतिपद्विहितं तिलकव्रतम् भविष्यपु० “वसन्ते किंशुकाशोकशोभिते प्रतिपत्तिथिः। शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः। नारी नरो वा राजेन्द्र! संतर्प्य पितृदेवताः। नद्यास्तीरे तडागे वा गृहे वा तदलाभतः। पिष्टातकेन विलिखेद्वत्सरं पुरुषाकृतिम्। ततः प्रभृत्यनुदिनं तिलकालङ्कृतं मुखम्। धार्य्यं संवत्सरं यावच्छशिनेव नभस्तलम्। एवं नरो वा नारी वा व्रतमेतत् समाचरेत्। सदैव पुरुषव्याघ्र! भोगान् भुवि भुनक्त्यसौ”।

जयन्तीसप्तमीव्रतं भविष्यपु० “माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचना। जयन्ती नाम सा प्रोक्ता पुण्या पापहरा तथा। उपोष्या येन विधिना शृणु तं पार्वतीप्रिय! पारणानि तु चत्वारि कथितानि च पण्डितैः। पञ्चम्यामेकभक्तन्तु षष्ठ्यां नक्तं प्रकीर्त्तितम्। उपवासस्तु सप्तम्यामष्टम्यां पारणं भवेत्” इत्यादि इदं वर्षसाध्यम्।

जयपौर्णमासीव्रतं भविष्यपु० “पौर्णमासी महाराज! सोमस्य दयिता तिथिः। पूर्णमासो भवेद्यस्यां पूर्णमासी ततः स्मृता। तस्यां तु स्रोतसि स्नात्वा सन्तर्प्य पितृदेवताः। आलिख्य मण्डले सोमं नक्षत्रैः सहितं विभुम्। पूजयेत् कुसुमैर्धूपैर्नैवेद्यैर्घृतपाचितैः। शुक्लवस्त्रैर्दक्षिणाभिः पूजयित्वा समापयेत्। शाकाहारेण वन्यन्नैर्नक्तं भुञ्जीत वाग्यतः” इत्यादि।

जयाष्टमीव्रतं भविष्यपु० “माहात्म्यमपि वक्ष्यामि तदस्याश्च भारत!। जयेति या च विख्याता व्रतिनां जयदा-

यिनी । यस्माज्जया जयाशब्दं कुर्वन्ति व्रतिनो बुधाः । परिपूर्णं व्रतं यस्यां सा ज्ञेया जयपञ्चमी । जया च विजया चैव जयन्ती पापनाशिनी” जया, कार्त्तिक-शुक्लपञ्चमी” ।

जयावाप्तिव्रतं विष्णुधर्म्मोत्तरोक्तम् “आश्वयुज्यामतीतायां प्रतिपत्प्रभृतिक्रमात् । पूर्ववत् पूजयेद्देवं लोकनाथं त्रिविक्रमम्” । पूर्ववदिति रूपावाप्तिव्रतवत् “त्रिरात्रन्तु कार्त्तिक्यां यद्वाद्दु भक्षणमुत्तमम् । सर्व्वशस्य-धरं कृत्वा शक्त्या रत्नैरलङ्कृतम् । कृत्वा व्रतं मासमिदं यथोक्तं प्राप्नोति लोकं सुचिरं स्ववीर । ततोऽथ काले सुचिरं मनुष्यः प्राप्नोति सर्व्वत्र जयं त्रिलोक्याम्” ।

जयासप्तमीव्रतं भविष्यपु० “जया च विजया चैव जयन्ती चापराजिता । महाजया च नन्दा च भद्रा चासां प्रकीर्त्तिता । शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम् । यदा भवेत् तदा ज्ञेया जयानामेति सप्तमी” । पञ्चतारक-मिति रोहिण्यश्लेषामघाहस्ताश्च । तस्यां दत्तं हुतं जप्तं तर्पणं देवपूजनम् । सर्व्वं शतगुणं प्रोक्तं पूजा-श्चापि दिवाकर । हंसे हस्तसमारूढे शुक्ला या स-प्तमी परा” । हंसः सूर्य्यः “वर्षमेकन्तु कर्त्तव्यं विधि-नानेन भास्करम् । सौवर्णं कारयेद्भक्त्या द्विभुजं पद्म-धारिणम् । पारणात्रितयं तस्यां क्रियते गोपतेः पुरः” ।

जातित्रिरात्रव्रतं भविष्योत्तरे “ज्यैष्ठे मासि च कर्त्तव्यं त्रयोदश्यान्तु पाण्डव ! । नियमश्च गृहीतव्य आचार्य्या-नुज्ञया ततः । कृत्वैकभक्तं द्वादश्यामुपवासत्रयञ्चरेत् । मण्डपं कारयेत् तत्र सपताकं मनोहरम् । तत्र जातिः प्रकर्त्तव्या स्वर्णाद्विभवसारतः । रौप्यपुष्पाणि कार्य्याणि वंशपात्रे निधापयेत् । तत्र देवास्त्रयः पूज्या ब्रह्मविष्णु-महेश्वराः । सपत्नीकाः शुभैः पुष्पैः फलैश्च विविधैस्तथा” ।

जामदग्न्यद्वादशीव्रतं धरणीव्रतोक्तम् “वैशाखस्यैवमेवन्तु संक-ल्पविधिना नरः । तद्वत् स्नानं मृदा कृत्वा ततो देवालयं व्रजेत् । तत्राराध्य हरिं भक्त्या एभिर्मन्त्रैर्विचक्षणः । जामदग्न्याय पादौ तु उदरं सर्व्वधारिणे” इत्यादि ।

ज्ञानावाप्तिव्रतं विष्णुधर्म्मोक्तम् “भगवन् ! कर्म्मणा केन बु-द्धियुक्तो भवेन्नरः । एतदेव मनुष्याणां मनुष्यत्वमुदा-हृतम्” । मार्कण्डेय उवाच । “चैत्र्यान्तु समतीतायां यावन्मासं दिने दिने । पूर्ववत् पूजयेद्देवं नृसिंहमप-राजितम्” । पूर्ववदिति चैत्रमासोक्तरूपावाप्तिव्रतव-देकभक्तवह्निस्नानभूशय्यादिकं कर्त्तव्यमित्यर्थः । “होमञ्च प्रत्यहं कुर्य्यात् तथा सिद्धार्थकैर्न्नृप ! । ब्राह्मणान् भो-जयेच्चात्र तथा त्रिमधुरं नृप !” । त्रिमधुरं मधुघृत-शर्क्कराः “वैशाख्यां कनकन्दद्यात् त्रिरात्रोपोषितो नरः । ज्ञानावाप्तिप्रदन्त्वेतद्व्रतं बुद्धिविवर्द्धनम् । कृत्वा व्रतं मासमिदं यथोक्तमासाद्य नाकं सुचिरं मनुष्यः । मानु-ष्यमासाद्य तु बुद्धियुक्तो ज्ञानेन युक्तश्च तथा भवेच्च” ।

ज्येष्ठाव्रतं भविष्योत्तरे “मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठा यदा भवेत् । रात्रौ जागरणं कृत्वा गीतवादित्रनिः-स्वनैः । एवंविधविधानेन एभिर्मन्त्रैः सुपूजयेत् । ज्येष्ठे हि त्वं महाभागे ! सुरासुरनमस्कृते ! । ज्येष्ठे त्वं सर्व्वदे-वानां मत्समीपे सदा भव” ।

ज्यैष्ठव्रतानि महाभारते “ज्येष्ठामूलन्तु वै मासमेकभक्तस्तु यः क्षिपेत् । ऐश्वर्य्यमतुलं श्रेष्ठं पुमान् स्त्री वाभिजा-यते” । विष्णुधर्म्मे “कृष्णार्पितमना ज्यैष्ठमेकभक्तेन यः क्षिपेत् । अहिंस्रः सर्व्वभूतेषु वासुदेवपरायणः” ।

तपस्तरणसप्तमीव्रतं भविष्योत्तरे “शृणुष्वावहितो भूत्वा यु-धिष्ठिर ! तपोव्रतम् । मार्गशीर्षादिमासेषु कर्त्तव्यं भूति-मिच्छता । तस्मिन् स्थितो व्रते विप्रो बह्वृचो वेद-पारगः । ब्रह्मवित् कृष्णसप्तम्यां दद्यादर्घ्यं महीतले । ऋग्वेदवर्गत्रितयं पठित्वा सूर्य्यवल्लभम्” इत्यादि ।

तपोव्रतं पद्मपु० “माघे निशार्द्रवासाः स्यात् सप्तम्यां गो-प्रदो भवेत् । स्वर्गलोकमवाप्नोति तपोव्रतमिहोच्यते” ।

ताम्बूलसंक्रान्तिव्रतं स्कन्दपु० “अथान्यां सम्प्रवक्ष्यामि ताम्बू-लाख्यामनुत्तमाम् । विधानं पूर्ववत् कुर्य्याद्वान्यसंक्रान्तिवच्च तत् । ताम्बूलचन्दनाद्यञ्च प्रदद्यात्तां द्विजोत्तमात् । यावत् संवत्सरं पूर्णं रात्रौ रात्रौ ततः परम् । ता-म्बूलं भक्षयेद्विप्रान् कारयेच्चैव नान्तरम् । वत्सरा-न्ते तु कमलं कृत्वा चैव तु काञ्चनम् । पद्मकोशञ्च कुर्वीत तथा पूगीफलाव्ययम्” इत्यादि ।

तारकद्वादशीव्रतं भविष्योत्तरे “कथं तत् कृष्ण ! कर्त्तव्यं तारकद्वादशीव्रतम् । पापोऽपि सद्गतिं प्राप्तो यत्प्रभा-वात् खगध्वज !” । कृष्ण उवाच “मार्गशीर्षे सिते पक्षे गृहीत्वा द्वादशीव्रतम् । कृतान्तिमे जले स्नानमपराह्णे समाचरेत् । प्रणम्य भास्करं भक्त्या कृत्वा देवार्च्चनं तथा” ।

तिथिनक्षत्रवारव्रतानि कालोत्तरे “नक्षत्रतिथियोगेन ति-थीनां वारयोगतः । पुनरेव प्रवक्ष्यामि व्रतानि तु यथास्थितम् । रोहिण्याश्चाष्टमीयोगो यदा भवति सौम्यके । विशेषपूजा कर्त्तव्या पुत्रकामेन यत्नतः । पुष्ये

शुक्लचतुर्द्दश्यां गुरुयोगो यदा भवेत् । अथ वा सोमसंयोगो विशेषात् पूज्य शङ्करम् । पायसं घृतसंयुक्तं शिवाय विनिवेदयेत् । धूपदीपोपहाराद्यैः पूर्ववत् पूजयेच्छिवम् । प्राशनन्तु घृतं कार्य्यं सर्वकामप्रदं व्रतम् । आदित्यरेवतीयोगश्चतुर्द्दश्यां यदा भवेत् । अष्टम्यां वा मघायोगो शिवं संपूज्य पूर्ववत् । तिलास्तु प्राशने शस्ता आदित्यव्रतमीरितम् । आरोग्यं जायते तस्य पुत्रबन्धुगणैः सह । रोहिणीचन्द्रयोगश्च चतुर्द्दश्यां यदा भवेत् । अष्टम्यां सोमसंयोगात् तदा चन्द्रव्रतं चरेत् । प्रागुक्तेन विधानेन शिवं संपूज्य यत्नतः । दधि क्षीरन्तु नैवेद्यं प्राशनं क्षीरमेव च । कीर्त्तिमारोग्यमैश्वर्य्यं प्राप्नुयान्नानृतं वचः । अश्विनीभौमसंयोगश्चतुर्द्दश्यां यदा भवेत् । अष्टम्यां भरणीयोगस्तदा भौमव्रतं चरेत् । संपूज्य परया भक्त्या शिवं पञ्चोपचारतः । रक्तोत्पलप्राशनन्तु साम्राज्यं प्राप्नुयाच्छुभम् । रोहिणीबुधसंयोगश्चतुर्द्दश्यां यदा भवेत् । अष्टम्यां वा समासेन बुधव्रतं समाचरेत् । शिवा पूज्या विधानेन महास्नानपुरःसरम् । महावर्त्तिसमीपे तु प्राशनं पायसं स्मृतम् । पुत्रार्थदारास्य यशो वर्द्धते तस्य नान्यथा । रेवतीगुरुसंयोगश्चतुर्द्दश्यां यदा भवेत् । अष्टम्यां तिष्यसंयोगाद् गुरुव्रतं तदा चरेत् । प्राशनं कपिलाक्षीरन्तु शर्करासमन्वितम् । वागीशत्वमवाप्नोति व्रतस्यास्य प्रभावतः । श्रवणं भार्गवयुतं चतुर्द्दश्यां यदा भवेत् । शुक्रव्रतं तदा विद्धि पूर्वं अष्टमी यदा । संपूज्य परमेशानं यथाविभवविस्तरैः । प्राशनं मधु चैवात्र कर्त्तव्यं संयतात्मना । महाफलमवाप्नोति व्रतस्यास्य प्रभावतः । भरणीशनियोगस्तु चतुर्द्दश्यां यदा भवेत् । आर्द्रायोगस्तथाष्टम्यां तदा शनिव्रतं चरेत् । शिवं संपूज्य विधिवत् प्राशनं सस्यमेव च । शनिरेकादशस्थो हि फलं यच्छति शोभनम् । विरुद्धं नश्यते वत्स ! तदर्थं व्रतमाचरेत् । हेमकृष्यप्रवालञ्च कम्बलन्तु क्रमेण च । मञ्जु तीक्ष्णलौहस्य कृपाद् यत्नेन दापयेत् । यथा सम्भवतो वत्स ! आचार्य्याय प्रयत्नतः" ।

तिथियुग्मव्रतं यमस्मृतौ "द्वे अष्टम्यौ तु मासस्य चतुर्द्दश्यौ तु द्वे तथा । अमावस्यापौर्णमास्यौ सप्तम्यौ-द्वादशीद्वयम् । संवत्सरमभुञ्जानः सततञ्च जितेन्द्रियः । महत्तमं फलं यस्य यत्फलं सत्यवादिनाम् । [illegible] यद्वदाप्नोत्यभोजनात्"

तिन्दुकाष्टमीव्रतं भविष्यपु० "ज्यैष्ठे मासि द्विजश्रेष्ठ ! शुक्लाष्टम्यां त्रिलोचनम् । यः पूजयति देवेशमीशलोकं व्रजेन्नरः । ज्यैष्ठे मासि तथाषाढ़े श्रावणे च तथा परे । पूजयेच्चतुरो मासान् नीलोत्पलकदम्बकैः । त्रिपुरान्तकरं शम्भुं त्र्यम्बकाम्बकसूदनम् । गन्धानाञ्च कदम्बेन पूजयेत् गुग्गुलेन च । टेम्बुरुकफलं विप्र ! प्राशयेत् कायशोधनम्" टेम्बुरुकन्तिन्दुकफलम्" ।

तिलदाहीव्रतं स्कन्दपु० "विधिना केन कर्त्तव्यं तिलदाहीव्रतोत्तमम् । कस्मिन्मासे तिथौ चैव विधिना केन तद्भवेत्" श्रीभगवानुवाच "पौषमासे च या कृष्णा तिथिरेकादशी शुभा । तामुपोष्य तदा स्नानं कृत्वा नारायणं जपेत्" इत्यादि ।

तिलद्वादशीव्रतं विष्णुधर्मोत्तरम् "माघमासे तु सम्प्राप्ते आषाढ़ं भवेद्यदि । मूलं वा कृष्णपक्षस्य द्वादश्यां नियतव्रतः । गृह्णीयात् पुण्यफलदं विधानं तस्य मे शृणु ! । देवदेवं समभ्यर्च्य सुस्नातः प्रयतः शुचिः । कृष्णनाम्ना तु सम्पूज्य एकादश्यां महामतिः । उपोषितो द्वितीयेऽह्नि पुनः सम्पूज्य केशवम् । संस्तूय नाम्ना तेनैव कृष्णाख्येन पुनः पुनः । दद्यात्तिलांस्तु विप्राय कृष्णो मे प्रीयतामिति । स्नानप्राशनयोः शस्तास्तथा कृष्णतिला मुने ! । विष्णुप्रीणनमन्त्रैश्च समाप्ते वर्षपारणे । कृष्णकुम्भास्तिलैः सार्द्धं पक्वान्नेन च संयुताः । छत्रोपानद्युगैः सार्द्धं संवीता रत्नगर्भिणः । ब्राह्मणानां प्रदेयास्ते यथावन्मासंख्यया" इत्यादि । विष्णुधर्मे व्रतान्तरम् "माघ्यान्तु समतीतायां श्रवणेन तु संयुता । द्वादशी या भवेत् कृष्णा प्रोक्ता सा तिलद्वादशी । तिलैः स्नानं तिलैर्होमं नैवेद्यं तिलमोदकैः । दीपश्च तिलतैलेन तथा देयं तिलोदकम् । तिलाश्च देया विप्रेषु तस्मिन्नहनि पार्थिव ! । उपवासदिने राजन् ! ज्ञातव्याश्च तथा तिलाः । उपोषितेनापरेऽह्नि होतव्यश्च विशेषतः । इन्धनञ्च प्रदातव्यं ब्राह्मणेषु तथानघ ! । तिलप्रस्थं तदा दत्त्वा सोपवासो जितेन्द्रियः । न दुर्गतिमवाप्नोति नात्र कार्य्या विचारणा" इत्यादि ।

तीव्रव्रतं सौरपु० "अथात्मचरणौ भित्त्वा शिवस्थले वसेन्नरः । देहान्ते शिवसायुज्यं लभते नात्र संशयः" ।

दमनसप्तमीव्रतं विष्णुधर्मोत्तरे "चैत्रमासस्य सप्तम्यां शुक्लपक्षे नराधिप ! । गोमयेनोपलिप्ते तु सदा कुर्य्यात्तु मण्डलम् । तत्राष्टपत्रं कमलं कर्त्तव्यं वर्णकैः शुभैः ।

कृतोपवासस्तन्मध्ये भास्करं पूजयेन्नरः। व्रते समाप्ते दातव्यास्तुरगा ब्राह्मणाय तु। प्राप्याश्वमेधस्य फलं यथावल्लोकानवाप्याथ पुरन्दरस्य। उषोष्य राजन्! सुचिरञ्च कालं सायुज्यमायाति दिवाकरस्य”।

तुष्टिप्राप्तितृतीयाव्रतं विष्णुधर्मोत्तरे“तृतीया श्रावणे कृष्णा या च श्रवणसंयुता”। श्रावणोऽत्र पौर्णमास्यन्तोमासो ग्राह्यः अतः श्रवणकृष्णतृतीयायाः श्रवणयुक्तत्वं न दुर्घटम्। “तस्यां संपूज्य गोविन्दं तुष्टिमप्राप्नवाप्नुयात्”।

तेजःसंक्रान्तिव्रतं स्कान्दपु० “अथान्यां संप्रवक्ष्यामि तेजःसंक्रान्तिमुत्तमाम्। संक्रान्तिवासरं प्राप्य स्नानं कृत्वा विचक्षणः। शालितण्डुलसंयुक्तं कारणं कारयेच्छुभम्। तन्मध्ये दीपकं स्थाप्य प्रज्वलन्तं स्वतेजसा। तन्मुखे मोदकं स्थाप्य ब्राह्मणाय निवेदयेत्। अर्घ्यञ्च पूर्ववत् कार्य्यमेकभक्तन्तु पूर्ववत्। संवत्सरे तु सम्पूर्णे कुर्य्यादुद्यापनं बुधः” इत्यादि।

त्रयोदशद्रव्यत्यागसप्तमीव्रतं भविष्योत्तरे “भानोर्दिने सिते पक्षे अतीते चोत्तरायणे। सर्व्वोद्भिन्नत्वयवान् सह माषमुद्गगोधूमतिलमधुमैथुनकांस्यपात्रैः। अभ्यञ्जनाञ्जनशिलातलचूर्णितानि षष्ठीवती परिहरेद्दहनीष्टसिद्ध्यै। देवान् पितॄन् मुनिगणान् सजलाञ्जलीभिः सन्तर्प्य पूज्य गगनाङ्गनदत्तदीपम्। हुत्वानले तिलयवान् बहुशोघृताक्तान् भूमौ स्वपेत् हृदि निधाय दिनेशबिम्बम्। यानि त्रयोदशदिनैरिह वर्जितानि द्रव्याणि तानि परिहृत्य दिने च सप्तम्याम्। संप्राश्य शुद्धचणकानिह वर्षमेकं प्राप्नोति भारत! पुमान् मनसेप्सितानि”।

त्रिगतिसप्तमीव्रतं भविष्यपु० “सप्तम्यां शुक्लपक्षे तु फाल्गुन्यां या यजेन्नरः। जपेद्भवलीति नाम भक्त्या पुनः पुनः। देवार्चनं चाष्टशतं कृत्वैवं तु जपेच्छुचिः। स्नातः प्रस्थानकाले तु उत्थाने स्खलिते च्युते। पापवतान्! पतितांश्चैव तथैवान्त्यावसायिनः। नालापयेत् तथा भानुमर्चयेच्छ्रद्धयान्वितः। इदञ्चोच्चारयेन्मानोमनसा ध्यानतत्परः। हंस हंस कृपालो! त्वं अगतीनां गतिर्भव। संसारार्णवमग्नानां त्राता भव दिवाकर। एवं प्रत्याद्योपवासं कृत्वा नियतमानसः। पूर्वोक्त एव वान्येद्युः सकृत् प्राश्यार्जुनीयकम्” आर्जुनीयकं, गोमयकृष्णमयम्।

[त्रैविक्रमतृतीयाव्रतं विष्णुधर्मोत्तरे “शुक्लपक्षे तृतीयायां सोपवासो जितेन्द्रियः। मण्डलत्रितयं कुर्य्यात् वर्णकेन पृथक् पृथक्। मण्डलं दक्षिणे भागे श्वेतं कुर्य्यात् ततो नरः। रक्तं मध्ये रवेः कुर्य्यात् तादृक्श्वेतं ध्रुवस्य तु। विष्णोः पदत्रयं तेषु पूज्यं स्यात् मण्डलेन तु। भूमौ तु प्रथमं पादं द्वितीयं सूर्य्यमण्डले। तृतीये तु ध्रुवे देवे पूजयेत् प्रयतः शुचिः”।

व्रतान्तरं विष्णुधर्मोत्तरे “द्वितीयञ्च प्रवक्ष्यामि शृणु! त्रैविक्रमं व्रतम्। भूमिस्तु प्रथमः पादः अन्तरिक्षं तथा परः। तृतीयो दिवि विज्ञेया देवदेवस्य चक्रिणः। भुवः पतिः स्मृता वह्निरन्तरिक्षस्य चानलः। दिशांपतिस्तथा सूर्य्यस्तस्य विष्णोः पदत्रयम्। ज्यैष्ठशुक्लतृतीयायां सोपवासो जितेन्द्रियः। कल्ये कूपजले स्नातो वह्निं संपूजयेन्नरः। एतत् संवत्सरं कृत्वा नरस्त्रैविक्रमं व्रतम्। सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते”।

व्रतान्तरं विष्णुधर्मोत्तरे “वक्ष्यामि ते महाभाग! तव त्रैविक्रमव्रतम्। तृतीयं नृपशार्दूल! तन्मे निगदतः शृणु!। ज्यैष्ठे शुक्लतृतीयायां नरः समुपोषितः। भुवः सम्पूजनं कुर्य्याद्गन्धमाल्यानुलेपनैः। दीपैः रत्नैश्च विविधैर्दद्यात् विप्रेषु दक्षिणाम्। बीजपूर्णानि पात्राणि सहिरण्यानि भक्तितः। पूजैवमन्तरिक्षस्य माघाषाढे विधीयते। दक्षिणा तत्र दातव्या तथा वासायुगं द्विजे। दिवः पूजा च कर्त्तव्या श्रावणे प्राग्वदेव तु। छत्रञ्चोपानहं युग्मं दक्षिणां तत्र दापयेत्। एवं मासत्रयेणेह पारणं प्रथमं भवेत्। मासत्रयेण चान्येन ततो मासत्रये पुनः। ततो मासत्रये चान्यः स्वमन्यच्च चान्यथा। विद्धि यमित्थं धर्मस्य पारणानां चतुष्टयम्” इत्यादि।

त्रिविक्रमत्रिरात्रशतव्रतं विष्णुरहस्ये “यस्त्रिरात्रशतं कुर्य्यात् समुद्दिश्य जनार्दनम्। कुलानां शतमादाय स याति भवनं हरेः। नवम्यादिसिते पक्षे नरोमार्गशिरस्य च। प्रारभेत त्रिरात्राणां शतं तु विधिवत् व्रती। श्रद्धधानो जितक्रोधो नित्यस्नायी क्षमान्वितः। अभ्यर्चयेत् सदा विष्णुं कर्मणा मनसा गिरा। अष्टोत्तरसहस्रन्तु शतं वासुदेवं जपेत्। अष्टम्यामेकभक्ताशी दिनत्रयमुपावसेत्। एकादश्यां शुचि स्नातो वासुदेवार्चने रतः। द्वादश्यां पूजयेद्देवं गन्धमाल्यविलेपनैः। नैवेद्यधूपदीपाद्यैर्गीतनृत्यैश्च केशवम्। अनेन विधिना कृत्वा त्रिरात्राणां शतं नरः। निर्वापयेत् ततो भक्त्या विप्रेभ-

धिना व्रतम्। संप्राप्ते कार्त्तिके मासि व्रतमेतदनुत्तमम्”। प्रतिमासं त्रिरात्रद्वयमिति पञ्चाशता मासैः शतं तच्चाधिमासद्वतयोगाच्चतुर्भिर्वर्षैरिति कार्त्तिके समाप्तिः।

त्रिविक्रमव्रतं विष्णुधर्म्मोत्तरे “करोति केशवप्रीत्यै कार्त्तिकं माससमाप्नवान्। पूर्व्वे वयसि यत्तेन ज्ञानताऽज्ञानतापि वा। पापमाचरितं तस्मात् मुच्यते नात्र संशयः। अनेनैव विधानेन मार्गशीर्षेऽपि माधवम्। समभ्यर्च्यैकभक्तं वै वर्णिभ्यो यः प्रयच्छति” इत्युपक्रमे। “त्रैमासिकं व्रतमिदं यः करोति नरेश्वर!। स विष्णुप्रीणनात् पापैर्व्वुधैः परिमुच्यते। द्वितीये वत्सरे राजन्! मुच्यते चोपपातकैः। तद्वत् तृतीयेऽपि कृतं महापातकनाशनम्। व्रतमेतत्त्वरैः स्त्रीभिस्त्रिभिर्मासैरनुष्ठितम्। त्रिभिः संवत्सरैस्त्वेव प्रददाति फलं नृणाम्। त्रिभिर्मासैस्त्रयस्याभिस्त्रिविधात् पातकान्नृप!। त्रीणि नामानि देवस्य मोचयन्ति त्रिवार्षिकैः। यतस्ततो व्रतमिदं त्रिविक्रममुदाहृतम्। सर्व्वपापप्रशमनं केशवाराधनं परम्”।

सौरत्रिविक्रमव्रतं भविष्योत्तरे “समभ्यर्च्य जगन्नाथं देवमर्कमथापि वा। एककस्माति यो भक्तं द्वितीयं ब्राह्मणार्पणम्। करोति भास्करप्रीत्यै कार्त्तिकं माससमाप्नवान्। पूर्व्वे वयसि यत्तेन ज्ञानताऽज्ञानताऽपि वा। पापमाचरितं तस्मात् मुच्यते नात्र संशयः। व्रतमेतत्त्वरैस्त्रीभिस्त्रिभिर्मासैरनुष्ठितम्। त्रिभिः संवत्सरैस्त्वेव प्रददाति फलं नृणाम्। त्रिभिर्मासैस्त्रयस्यास्तु त्रिविधात् पातकान्नृप!। त्रीणि नामानि देवस्य मोचयन्ति त्रिवार्षिकात्। यतस्ततो व्रतमिदं त्रिविक्रममुदाहृतम्। सर्व्वभूतप्रशमनं भास्कराराधनं परम्”।

त्र्यम्बकव्रतं पद्मपु० “चतुर्दश्यान्तु नक्ताशी समान्ते गोयुगप्रदः। स शैवं पदमाप्नोति यजन्त्र्यम्बकं व्रतम्”।

दशादित्यव्रतं ब्रह्माण्डपुरा० “वच्ये सौरव्रतं पुण्यं दुःखशान्तकरं परं। दशाकरं हि भूतानां मनोरथकरं परं। भानुवारे सिते पक्षे दशम्यां चैव नारद!। प्रातः कालेऽथ मध्याह्ने स्नानं कुर्य्याद्यथाविधि” इत्यादि।

दशावतारव्रतं विष्णुपु० “एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम्। अर्च्चयेद् ब्राह्मणमुखे स गच्छेत्परमं पदम्। यथा तिथिर्व्वैष्णवी स्याद्द्वादशीशुक्लपक्षगा। तस्यामाराधयेद्देवं प्रयत्नेन जनार्द्दनम्”।

दामत्रयोदशीव्रतं भविष्यपु० “कार्त्तिके मासि विप्रेन्द्र! पुत्रकामो नरोत्तमे। अष्टम्यां कृष्णपक्षस्य पुत्रयेदाम्रवाहिन

उमाञ्च तां सतीं देवीं विधिवद्ब्राह्मणसत्तम!। य एतत् कुरुते भक्त्या उमामहेश्वरं व्रतम्। स एकमेव विप्रेन्द्र! स याति परमां गतिम्”। एकमेकं संवत्सरम् “चतुर्भिः पारणैरेवं समेकमेक कीर्त्तितं बुधैः। प्रथमन्तु त्रिभिर्मासैः पारणं कार्त्तिकादिभिः। कार्त्तिके मार्गशीर्षे तु पौषे मासि तथा परे। अन्नस्तकस्य पुष्पैस्तु फलैर्भक्ष्यैरनेकशः”।

दिवाकरव्रतं भविष्यपु० “आदित्यवारं हस्तेन युक्तं प्रगृह्णीत पाण्डव!। ततः प्रत्यादित्यदिनं सप्त वारान् प्रपूजयेत्। एकभक्तेन नक्ताशी ब्राह्मणान् पूजयेत् दिवा। दक्षिणां तु यथा शक्त्या दद्यात् विप्राय भक्तितः”

दीप्तिव्रतं पद्मपु० “सन्ध्यादीपप्रदो यस्तु समां तैलञ्च वर्जयेत्। समान्ते दीपकान् दद्याच्चक्रं शूलञ्च काञ्चनम्। वस्त्रयुग्मञ्च विप्राय स तेजस्वी भवेदिह। रुद्रलोकमवाप्नोति दीप्तिव्रतमिदं स्मृतम्”।

दुर्गन्धदौर्भाग्यनाशनत्रयोदशीव्रतं भविष्योत्तरे “ज्यैष्ठे मासि सिते पक्षे त्रयोदश्यां युधिष्ठिर!। स्नात्वा पुण्यनदीतोये पूजयेद्वृषभध्वजम्” इत्यादि।

दुर्गानवमीव्रतं भविष्यपु० “नवम्यां तु सिते पक्षे नियतः संयतेन्द्रियः। मासि चाश्वयुजे वीर! कार्त्तिके कार्त्तिकोत्तरे। पुष्पैश्च पूजयेद् दुर्गां जातिपुष्पैर्विधानतः। धूपार्थं गुग्गुलं दद्यान्नैवेद्यं गुड़पूपकान्। दुर्गेति नाम जप्तव्यं प्रयतोऽष्टशतं नृप!। माघे च फाल्गुने मासि चैत्रे चैत्रोत्तरे नृप!। शुक्लपक्षे तु अष्टम्यामुपवासपरायणः” इत्यादि वर्षसाध्यम्।

दुर्गाव्रतं देवीपु० “देवीव्रतं प्रवक्ष्यामि सर्व्वकामप्रसाधनम्। श्रावणे शुक्लपक्षे तु अष्टम्यां वायुभोजनः। स्नात्वा साञ्जपुटीभूत्वा जितक्रोधः क्रियान्वितः। देवीं सन्नाप्य तोयेन पुनः क्षीरेण वारिणा। ततो गुग्गुलधूपञ्च सह कुङ्कुमं दापयेत्” इत्यादि तदवधिवर्षसाध्यम्।

दूर्व्वागणपतिचतुर्थीव्रतं सौरपु० “चीर्णमेतद् व्रतं सर्वैः पुराकल्पे षडानन!। चतुर्थी या भवेच्छुक्ला नभोमासस्य पुण्यदा। तस्यां व्रतमिदं कुर्य्यात् कार्त्तिक्यां वा षडानन!। गजाननं चतुर्बाहुमेकदन्तं विपाटिनम्। तथा हैमीमयी दूर्व्वां तदाधारे व्यवस्थिताम्”। तदाधारे, विघ्नेशासने “संस्थाप्य विघ्नहन्तारं कलसे ताम्रभाजने। वेष्टितं रक्तवस्त्रेण सर्व्वतो भद्रमण्डले। पूजयेच्च कुसुमैः पत्रिकाभिश्च पञ्चभिः। बिल्वपत्रमपामार्गः शमी दूर्व्वा हरिप्रिया। शेफालिका तु हरश्रेष्ठ!

ततो राज्यं भविष्यति । सर्व्वोपहारसम्पन्नं सर्व्वोपस्कारमाहरेत् । कन्दपक्वं फलं शाकं लवणं गुडशर्करा । खण्डं कुस्तुम्बरी जीरं धान्यानि विविधानि च । दातव्यानि रघुश्रेष्ठ ! वन्यकाले तु भक्तितः" ।

दूर्व्वात्रिरात्रव्रतं पद्मपु० "शृणु ! दूर्व्वात्रिरात्रस्य विधिं कात्स्न्र्येन सुव्रत ! । मासि भाद्रपदे चैव शुक्लपक्षे त्रयोदशीम् । त्रिरात्रं समुपोष्यन्तु यावत् पूर्णा तिथिर्भवेत् । उमामहेश्वरं देवं सावित्रीं धर्म्ममेव च । दूर्व्वामूले तु संस्थाप्य मण्डपं कारयेत्ततः" इत्यादि ।

दूर्व्वाष्टमीव्रतं भविष्यपु० "ब्रह्मन् ! भाद्रपदे मासि शुक्लाष्टम्यां सुपोषितः । पूजयेच्छङ्करं भक्त्या यो नरः श्रद्धयान्वितः । स याति परमं स्थानं यत्र देवस्त्रिलोचनः । गणेशं पूजयेद्यस्तु दूर्व्वया यो हि तं मुने ! । कृत्वोपवासं सप्तम्यामष्टम्यां पूजयेच्छिवम् । दूर्व्वासमेतं विप्रेन्द्र ! दध्यक्षतफलैः शुभैः" । व्रतान्तरं दूर्व्वाष्टमीशब्दे द्रष्टव्यम् ।

देवमूर्त्तिव्रतं विष्णुधर्म्मोत्तरोक्तम् "ईशानञ्च तथा वह्निं विरूपाक्षं समीरणम् । जानीहि यदुशार्दूल ! देवमूर्त्तिचतुष्टयम् । तेषान्तु रूपनिर्म्माणं कृत्वा तानर्च्चयेद् बुधः । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । चैत्रशुक्ले महाभाग ! प्रतिपत्प्रभृतिक्रमात् । कौप-नादेय-ताडागकासारैः स्नानमाचरेत् । दध्ना तिलैर्य्यवैर्होमो घृतेन च तथा भवेत् । कर्पूरं कुङ्कुमञ्चैव तथैवागुरुचन्दनम् । ब्राह्मणेषु प्रदातव्यं तथा राजन् ! दिनक्रमात् । दिनत्रयं तथाऽश्नीयात् सायं प्रातरथार्च्चितम् । दिनमेकन्तु नाश्नीयात् व्रतचारी नरोत्तमः । एतत् संवत्सरं कृत्वा व्रतं पुरुषसत्तम । सर्व्वकामसमृद्धस्य यज्ञस्य फलमश्नुते" ।

देवव्रतं स्कन्दपु० "नक्तमब्दञ्चरित्वा तु गवा सार्द्धं कुटुम्बिने । हैमचक्रं त्रिशूलञ्च दद्याद्विप्राय वाससी । प्रणम्य भक्त्या शक्रस्य प्रियतां शिवकेशवौ । एतद्देवव्रतं नाम महापातकनाशनम् । यस्तु संवत्सरं पूर्णमेकभक्तो भवेन्नरः । अहिंसः सर्व्वभूतेषु वासुदेवपरायणः । नमोऽस्तु वासुदेवायेत्यहन्यष्टशतं जपेत् । पौण्डरिकस्य यज्ञस्य ततः फलमवाप्नुयात् । दश वर्षसहस्राणि स्वर्गलोके महीयते । ततश्च याति इह चागत्य माहात्म्यं प्रतिपद्यते" । कालोत्तरे व्रतान्तरं "वृहस्पतिकथायोगसहदशम्यां यदा भवेत् । उपोष्य पूजयेत्तस्यां देवदेवं महेश्वरम् । महास्नानप्रकारेण महावर्त्ति पुरःसरम् । अङ्गरागसमूहेन शुक्लपुष्पैः प्रपूजयेत् । धूपस्तु शक्लो देयः मधुना चन्द्रसंयुतः । सितवस्त्राणि वस्त्रञ्च आचार्य्याय प्रदापयेत् । जातीफलैः प्राशनञ्च रात्रौ जागरणं हितम् । एतद्देवव्रतं नाम आयुःश्रीकीर्त्तिवर्द्धनम्" ।

देवीव्रतं पद्मपु० "पयोव्रतं पञ्चदश्यां व्रतान्ते गोयुगप्रदः । लक्ष्मीलोकमवाप्नोति देवीव्रतमुदाहृतम्" देवीपु० व्रतान्तरं "क्षीराशी कार्त्तिके यस्तु देव्या भक्तिरतो नरः । शाकयावकनक्ताशी प्रातःस्नायी शिवारतः । पूजयेत्तिलहोमस्तु मधुक्षीरघृतादिभिः । कार्य्यस्तु देवीमन्त्रेण शृणु पुण्यफलं हरे" इत्यादि ।

द्वादशसप्तमीव्रतं भविष्योत्तरे "माघमासात् समारभ्य शुक्लपक्षे युधिष्ठिर ! । सप्तम्यां कृतसङ्कल्पो वर्षमेकं व्रती भवेत्" मासभेदे नियमभेदास्तत्रोक्ता द्रष्टव्याः ।

द्वादशसाध्यतृतीयाव्रतं विष्णुधर्म्मोत्तरे "मनोऽनुमन्ता प्राणश्च नरयानश्च वीर्य्यवान् । विनिर्भयो नयश्चैव हंसो नारायणस्तथा । प्रभवो विष्णुर्विश्वश्च साध्या द्वादश जज्ञिरे । तृतीयायां महाभाग ! पूजयेत्तानुपोषितः" । प्रत्येकतृतीयायां यावद्वर्षं सोपवास इति शेषः ।

द्वादशादित्यव्रतं विष्णुधर्म्मोत्तरे "धाता मित्रोऽर्य्यमा पूषा शक्रोऽंशोवरुणोभगः । त्वष्टा विवस्वान् सविता विष्णुर्द्वादशकस्तथा । पूजयेद् द्वादशादित्यान् शुक्लपक्षे उपोषितः । मार्गशीर्षादथारभ्य द्वादश्यां नियतव्रतः" ।

द्वादशीव्रतं कूर्म्मपु० "एकादश्यां निराहारो द्वादश्यां पुरुषोत्तमम् । अर्च्चयेद् ब्राह्मणमुखे स गच्छेत्परमं पदम् । एषा तिथिर्वैष्णवी स्याद् द्वादशी शुक्लपक्षगा । तस्यामाराधयेद्देवं प्रयत्नेन जनार्द्दनम्" ।

द्वीपव्रतं विष्णुधर्म्मोत्तरे "अथातः संप्रवक्ष्यामि द्वीपव्रतमनुत्तमम् । चैत्रशुक्लात्तथारभ्य प्रत्यहं दिनसप्तकम् । जम्बूशाककुशक्रौञ्चशाल्मलिद्वीपसंज्ञितम् । गोमेदं पुष्करञ्चैव प्रत्यहं पूजयेत् क्रमात् । नित्यमेव सदा स्नानं वहिरेव समाचरेत् । अधःशायी भवेन्नित्यं तद्देव दिनसप्तकम्" इत्यादि ।

धनसंक्रान्तिव्रतं स्कान्दपु० "धनसंक्रान्तिमाहात्म्यं शृणु स्कन्द ! विधानतः । यत्कृत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः । संक्रान्तिवासरं प्राप्य शुचिर्भूत्वा समाहितः । कलसं निर्व्रणं दद्यात् वारिपूर्णं निधापयेत् । सुवर्णसुसम्पन्नं कृत्वा प्रतिमान्तु दापयेत् । विधिनानेन सर्व्वान्ते प्रीयतां मे दिवाकरः" ।

धनप्राप्तिव्रतं धर्म्मोत्तरोक्तम् "भगवन् ! कर्म्मणा केन धनवान्

सुपुष्पैश्च मनोज्ञैः कुङ्कुमादिभिः । अर्च्चयीत तथा तथा देवीं त्वां भक्त्या भक्तवत्सले !" इत्यादि ।

ललिताव्रतं स्कान्दपु० "शृणु त्वमनवद्याङ्गि ! ललिताराधनक्रियाम् । आश्विनस्य सिते पक्षे दशम्यां नक्तभोजनम् । प्रतिमां हेममयीं दिव्यां सर्व्वालङ्कारभूषिताम् । वापी कार्य्या शुभे देशे तन्मध्ये वेदिका शुभा । हस्तमात्रा विस्तरा दशधान्यसमन्विता । वेदीकोणेषु संस्थाप्याः स्वर्णमयः पञ्च देवताः । विह्ना जलेन तन्मध्ये देवी स्थाप्या प्रयत्नतः । अव्रणं सजलं कुम्भं ताम्रपात्रसमन्वितम् । तत्र स्वर्णमयी देवी स्थाप्या च ललिता शुभा । चन्द्रन्तु रोहिणीयुक्तं राजतं कारयेत् पुरः । दक्षिणे ह्रीश्वरं स्थाप्य वामतो विघ्ननाशनम् । मूलमन्त्रेण गायत्र्या सर्व्वं तत्र प्रपूजयेत्" इत्यादि ।

ललिताषष्ठीव्रतं भविष्योत्तरे "भद्र ! भाद्रपदे मासि शुक्लषष्ठ्यां सुसंयता । नारी स्नात्वा प्रभाते च शुक्लमाल्याम्बरप्रिया । सुवेशाभरणोपेता भूत्वा संगृह्य वालुकाः । नवे वेणुमये पात्रे गृह्य गच्छेद्दशाङ्गुली । सोपवासा प्रयत्नेन तत्र देवीं प्रपूजयेत् । कृत्वा पञ्चयुगं रम्यं पुष्पमालाविचित्रितम् । तत्र संस्थाप्य तां देवीं पुष्पैः सम्पूजयेद्धरिम्" । तां देवीमिति जलान्तरगतां वालुकामानीय वंशपात्रे पञ्चपिण्डाकृतिं वालुकामयीं पूजयेदिति "ध्यात्वा तु ललितां देवीं तपोवननिवासिनीम् । पङ्कजं करवीरञ्च नेपालीं मालतीं तथा" । नेपाली पुष्पविशेषः, गृहीत्वा पूजयेदितिशेषः । नीलोत्पलं केतकीञ्च संगृह्य तगरं वरम् । एकैकाष्टशतं ग्राह्यमष्टाविंशतिरेव वा । अक्षताः कलिका गृह्य ताभिर्देवीं समर्च्चयेत्" ।

लावण्यावाप्तिव्रतं विष्णुधर्म्मोत्तरोक्तम् "कार्त्तिक्यां समतीतायां प्रतिपत्प्रभृतिक्रमात् । पटे वा यदि वार्च्चायां प्रद्युम्नं पूजयेद्विभुम् । बहिःस्नानं ततः कुर्य्यान्नक्तमश्नीत वाग्यतः । एकभक्तं महाराज ! हविष्यं प्रयतः सदा । मार्गशीर्षं ततः प्राप्य त्रिरात्रोपोषितः शुचिः । सम्पूज्य देवं प्रद्युम्नं जुहुयादग्नौ घृतमेव च । भोजयेद्ब्राह्मणांश्चात्र भोजनं लवणोत्कटम् । चूर्णितस्य ततः प्रस्थं लवणस्य द्विजातये । मञ्जारजतरक्तस्य वस्त्रयुग्मं तथा गुरोः । दद्याच्च कनकं राजन् ! कांस्यपात्रं तथैव च । व्रतेन लावण्यकरं प्रदिष्टं व्रतोत्तमं नाकगतिप्रदञ्च । न केवलं यादव ! सर्व्वकामान् नरस्य दद्यादुपकमप्रमानताम्" ।

लोकव्रतं विष्णुधर्म्मोत्तरोक्तम् "अतःपरं प्रवक्ष्यामि तव लोकव्रतं शुभम् । यास्तु व्याहृतयस्तत्र सप्त लोकाः प्रकीर्त्तिताः । आचरेत् प्रत्यहं स्नानं बहिर्नित्यमतन्द्रितः । चैत्रशुक्लात् समारभ्य क्रमेण दिनसप्तकम् । गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासञ्च क्रमेणैवं समाचरेत् । महाव्याहृतिभिर्होमस्तिलैः कार्य्यो दिने दिने । संवत्सरान्ते दद्याच्च तथा विप्रेषु दक्षिणाम् । सुवर्णं समहद्वासः कांस्यधेनुस्तथैव च । संवत्सरमिदं कृत्वा व्रतं पुरुषसत्तम ! । सर्व्वलोकचरः श्रीमान् स्वेच्छया स्यान्नराधिपः" ।

वटसावित्रीव्रतं स्कान्दपु० धर्म्मराजवरप्रदानानन्तरं सावित्र्युवाच "मदीयन्तु व्रतं देव ! भक्त्या नारी करिष्यति । भर्त्तुः साभिहिता साध्वी समस्तफलभाजना" । धर्म्मराज उवाच "नारी वा विधवा वापि अपुत्रा पतिवर्जिता । सभर्त्तृका सपुत्रा वा कार्य्यं व्रतमिदं शृणु । ज्यैष्ठ्यास्ते तु संप्राप्ते पौर्णमास्यां पतिव्रता । स्नात्वा चैव शुचिर्भूत्वा वटं सिञ्च्य चह्नटकैः । सूत्रेण वेष्टयेद्भक्त्या गन्धपुष्पाक्षतैः शुभैः । नमो वैवस्वतायेति भ्रमयन्ती प्रदक्षिणम् । रात्रौ कुर्व्वीत नक्तञ्च यावदेकं समाहिता । तथैव वटवृक्षस्य पत्रे पत्रे च पूजयेत् । संप्राप्ते च पुनर्ज्यैष्ठे लघुभुक् द्वादशीं नयेत् । दन्तानां धावनं कृत्वा नियमं कारयेत्ततः । त्रिरात्रं लङ्घयित्वा च चतुर्थे दिवसे शुभम् । चन्द्रायार्घ्यं प्रदत्त्वा च पूजयित्वा च तां सतीम् । मिष्टान्नानि यथाशक्त्या पूजयित्वा द्विजोत्तमान् । भोक्ष्येऽहन्तु जगद्धात्रि ! निर्व्विघ्नं कुरु मे शुभे । नियममन्त्रः "कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च । सप्तधान्यभृतं पात्रं प्रस्थैकेन द्विजोत्तम ! । वस्त्रद्वयोपरि स्थाप्य सावित्रीं ब्रह्मणा सह । हैमीं कृत्वा तयोः प्रीत्यै त्रिरात्रमुपवासयेत् । न्यग्रोधस्य तले तिष्ठेद्यावच्चैव दिनत्रयम् । लौवर्णीञ्चैव सावित्रीं सत्येन सह कारयेत् । रौप्यपर्य्यङ्कमारोप्य तयोपरि निवेशयेत् । पश्चाद्देयं यथाशक्त्या रथं रौप्यमयं शुभम् । तथा च काष्ठभारे च वटे चैव सविस्तरम् । एवञ्च मिथुनं कृत्वा पूजयेद्व्रततत्परा । वर्त्तुलं मण्डलं कृत्वा गोमयेन तपोधन ! । पञ्चामृतेन स्नपनं गन्धपुष्पोदकेन च । चन्दनागुरुकर्पूरैर्माल्यवस्त्रविभूषणैः । संपूज्य तत्र सावित्रीं मण्डले स्थापयेद्बुधः । पौराणिकेन मन्त्रेण अथ वा चन्दनेन च । त्र्यम्बकेन ततो देवीं समर्च्य वरदायिनाम् ।

अनेन विधिना स्नाप्य पूजयेद्व्रतवत्सरा” इत्यादि ।

वरचतुर्थीव्रतं स्कन्दपु० “चतुर्थ्यां मार्गशीर्षे तु शुक्लपक्षे नृपोत्तम ! । प्रारभ्य प्रतिमासञ्च चतुर्थ्यां गणनायकम् । संपूज्य विधिना कुर्य्यादेकभक्तं समाहितः । अयाचितञ्च वर्षं त्वेवं पूर्णसंवत्सरे ततः । द्वितीये वत्सरे चाथ नक्तं प्रतिचतुर्थि च । कुर्य्याद्वर्षमथाभ्यर्च्य तृतीयेऽयाचितं तथा । एवमेव प्रकुर्वीत चतुर्थे त्वादुपोषणम् । ततश्चतुर्थं संपाद्य तदुद्यापनमाचरेत् । इदं वरचतुर्थ्याख्यं व्रतं सर्व्वार्थसाधकम्” ।

वरव्रतं पद्मपु० “सप्तरात्रोषितो दद्यात् घृतकुम्भं द्विजातये । वरव्रतमिदं प्रोक्तं ब्रह्मलोकप्रदायकम्” ।

वराटिकासप्तमीव्रतं भविष्यपु० “या काचित् सप्तमी प्रोक्ता ततो वक्ष्यामि शोभनम् । वराटिकात्रयक्रीतं यत् किञ्चित् प्राशयेन्नरः । अनेन देहि मूल्येन यल्लब्धं तच्च भक्षयेत् । अभक्ष्यं वापि भक्ष्यं वा नात्र कार्य्या विचारणा । अनेन विधिना कार्य्या वराकाह्वयसप्तमी” ।

वराहद्वादशीव्रतं धरणीव्रते “एवं माघे सिते पक्षे द्वादशी धरणीभृतः । वराहस्य स्मृतख्यात्यां पुण्यां परमधार्म्मिकः । प्रागुक्तेन विधानेन सङ्कल्प्य स्नानमेव च । कृत्वा देवं समभ्यर्च्च्य एकादश्यां विचक्षणः । पुष्पैर्न्नैवेद्यगन्धैश्च ह्यर्च्चयित्वाच्युतं नरः । पश्चात्तस्याग्रतः कुम्भञ्च सपूर्णन्तु विन्यसेत् । एवं विधानतो दत्त्वा हरिं वाराहरूपिणम् । ब्राह्मणाय च तद्द् दद्यात् फलं तस्य निशामय । इह जन्मनि सौभाग्यं श्रीः कान्तिस्तुष्टिरेव च । धनवान् वित्तवान् भोगी अधनः धनवान् भवेत्” ।

वरुणव्रतं पद्मपु० “निशि कृत्वा जले वासं प्रभाते गोप्रदो भवेत् । वारुणं लोकमाप्नोति वरुणव्रतमुच्यते” ।

वसुव्रतं विष्णुधर्म्मोत्तरे “ध्रुवोऽध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च अष्टौ ते वसवः स्मृताः । अष्टात्मा वासुदेवोऽयं प्रभावेनोदयेन च । अष्टम्यां पूजयेद्यस्तु सोपवासो नराधिप ! । चैत्रमासाद्यथारभ्य शुक्लपक्षात् यादव ! । मन्त्रवेऽप्यथ वाचोह्य जपेच्च मनुजाधिप ! । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । बहिःस्नानेन राजेन्द्र ! तथाधःशयनेन च । व्रतान्ते तु सदा दद्याद्धेनुं विप्राय भक्तितः” । पद्मपु० “यश्चाष्टमीचतुर्द्दशी दद्यात् धेनुं तकनकान्विताम् । दिनं पयोव्रती तिष्ठेत् स याति परमं पदम् । एतद्वसुव्रतं नाम पुनरावृत्तिदुर्लभम्” ।

वत्सत्रिरात्रव्रतं भविष्योत्तरोक्तम् “चैत्रे तु कुसुदैर्द्देवं त्रिभिः प्रयतमानसः । त्रिरात्रं तत्र नक्ताशी वत्सां दत्त्वा द्विजातये । पयस्विनीरजाः पञ्च प्रदद्यात् स सुवर्णकाः । न जायते पुनरसौ जीवलोके कदाचन । एतद्वत्सव्रतं प्रोक्तं सर्व्वव्याधिविनाशनम्” ।

वह्निव्रतं विष्णुपु० “कृष्णपक्षे पञ्चदश्यां चैत्रादारभ्य यादव ! । वह्निसंपूजनं कृत्वा गन्धमाल्यान्नसम्पदा । तिलहोमस्तथा कुर्य्यान्नाम्ना वह्नेर्नराधिप ! । संवत्सरान्ते दद्याच्च सुवर्णं ब्राह्मणाय च । कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति वित्तं सततं यशश्च । धर्म्मं मतीरूपमनुत्तमञ्च कामान् यथेष्टान् पुरुषप्रधानः” ।

वामनद्वादशीव्रतं धरणीव्रते “एवमेव मुने ! माघि चैत्रे संकल्प्य द्वादशीम् । उपोष्य धारयेद्भक्त्या देवदेवं जनार्द्दनम् । वामनायेति पादौ तु विष्णवे कटिमर्च्चयेत् । वासुदेवाय जठरं उरः सङ्कर्षणाय च । कण्ठं विश्वभृते पूज्य शिरो वै व्योमरूपिणे । बाहू विश्वजिते पूज्य स्वनाम्ना शङ्खचक्रके । अनेन विधिनाभ्यर्च्च्य देवदेवं जनार्द्दनम् । प्राग्वच्चैनोदरं कुम्भं सयुग्मं पुरतो न्यसेत्” । युग्मं वस्त्रयुग्मम् । “पायुक्तपात्रे संस्थाप्य वामनं काञ्चनं बुधः । यथाशक्ति कृतं शुक्लं सितयज्ञोपवीतिनम् । कुण्डिकां स्थापयेत् पार्श्वे छत्रिकापादुके तथा । अक्षमालाञ्च संस्थाप्य यष्टिकां च विशेषतः । एतैरुपस्करैर्युक्तं प्रभाते ब्राह्मणाय तु । दापयेत् प्रीयतां विष्णुः ह्रस्वरूपीति कीर्त्तयेत् । मासनाम्ना तु तु संयुक्तं प्रादुर्भावाभिधानकम् । प्रीयतामिति सर्व्वत्र विधिरेष प्रकीर्त्तितः । मासनाम्ना मार्गशीर्षादिमासकेशवादिनाम्ना प्रादुर्भावाभिधानकं मत्स्यरूपी कूर्म्मरूपीत्येवमादि” ।

वायुव्रतं विष्णुधर्म्मोत्तरे “शुक्लपक्षे चतुर्द्दश्यां ज्यैष्ठादारभ्य यादव ! । वायुं सम्पूजयेद्देवं सोपवासो जितेन्द्रियः । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । संवत्सरान्ते दातव्यं वस्त्रयुग्मं द्विजातये । कृत्वा व्रतं वत्सरमेतदिष्टमासाद्य लोकं सुचिरं मनुष्यः । सुखानि भुक्त्वा सुचिरं महीयो मानुष्यमासाद्य भवेत्पुरोगः” ।

वारिव्रतं पद्मपु० “चैत्रादिचतुरो मासान् जले कुर्य्यादयाचितम् । ज्यैष्ठाषाढे तथा माघे पौषे वा राजसत्तम ! । व्रतान्ते मणिकं दद्यादन्नवस्त्रसमन्वितम् । तिलपात्रं

हिरण्मयञ्च ब्रह्मलोके महीयते । तदन्ते राजराजः स्यात् वारिव्रतमिहोच्यते" ।

वासुदेवद्वादशीव्रतं धरणीव्रते "आषाढेऽप्येवमेवन्तु सङ्कल्प्य विधिना ततः । अर्च्चयेत्परमं देवं गन्धपुष्पैर्विधानतः । वासुदेवाय पादौ तु कटिं सङ्कर्षणाय च । प्रद्युम्नायेति जठरमनिरुद्धाय वै उरः । चक्रपाणये च भुजौ कण्ठं भूपतये तथा । स्वनाम्ना शङ्खचक्रे तु पुरुषायेति वै शिरः । एवमभ्यर्च्च मेधावी प्राग्वत्तस्याग्रतो घटम् । विन्यसेद्वस्त्रयुग्मं तु तस्योपरि ततो न्यसेत् । काञ्चनं वासुदेवं तु चतुर्बाहुं सनातनम् । तमभ्यर्च्च विधानेन गन्धपुष्पादिभिः क्रमात् । प्राग्वत्तु ब्राह्मणे दद्याद्देवादिनि सुव्रते" इत्यादि ।

विजयाद्वादशीव्रतम् आदित्यपु० "पुष्यर्क्षेण समायुक्ता शुक्ला वै द्वादशी भवेत् । सा प्रोक्ता वासुदेवेन सर्व्वपापप्रणाशिनी । येऽर्च्चयन्ति नरास्तस्यां भक्त्या देवं जनार्द्दनम् । समुपोष्य विमुच्यन्ते पापैस्ते शतजन्मजैः । कर्म्मणा मनसा वाचा यत्पापं समुपार्ज्जितम् । तत् क्षालयति गोविन्दस्तिथौ तस्यां समर्च्चितः । स्नानं जपोऽथ वा होमः समुद्दिश्य जनार्द्दनम् । नरैर्यत् क्रियते तस्यां तदनन्तफलं भवेत् । यस्मान्नाशयते जन्तोः पापं जन्मशतोद्भवम् । पुष्यर्क्षैकादशी तस्मात् प्रोक्ता पापप्रणाशिनी । एवमेव पुरा प्राह भानुः सारथिनं प्रति" । भानुरुवाच "द्वादशी या परा ब्रह्मन् ! पुष्यर्क्षेणैव च संयुता । उपोष्या तु प्रयत्नेन द्वादशी पापनाशनी । पुष्यर्क्षेण द्वादशीयुक्ता शुक्ला वै फाल्गुनस्य च । विजया द्वादशी प्रोक्ता स्वयं या विष्णुना पुरा । तस्यां दत्तं तपस्तप्तं कोटिकोटिगुणोत्तरम् । एकादश्यां निराहारो द्वादश्यां विष्णुमर्च्चयेत् । रौप्यसौवर्णपात्रे वा दारवंशमयेऽपि वा । आच्छाद्य पात्रं वासोभिरहतैः सुपरीक्षितैः । मार्गैश्च विदलैश्चैव सिद्धिः स्याच्छक्त्यपेक्षया । तिलाढकेन विस्ताद्यैः प्रस्थेन कुडवेन वा । अलाभे चैव गोधूमैः फलं तुल्यं तिलैर्भवेत्" । ब्रह्मवैवर्त्ते "मासि भाद्रपदे शुक्ले पक्षे यदि हरेर्दिनम् । बुधश्रवणयोगश्च प्राप्यते तत्र पूजितः । प्रयच्छति सुतान् कामान् वामनो मनसि स्थितान् । विजया नाम सा प्रोक्ता तिथिः प्रीतिकरी हरेः । सङ्गमः सर्व्वतीर्थानां सङ्गमे तत्र जायते । शुक्ला भाद्रपदे स्वर्णं दत्त्वा मधुकमक्षयम् । गङ्गायमुनयोः पुण्ये नर्म्मदासरितस्सङ्गमे । सरस्वतीयमुनयोश्चैव सङ्गमे पापनाशने । ब्रह्मवल्मीकाख्याने कम्रधारेऽथ वा द्विज ! अन्येषु सङ्गमेष्वेव स्वयमायाति वामनः । तत्र सम्पूजितोऽयासौ जायते प्रेतमोक्षदः । दध्योदनसमायुक्तां वारिधानीं प्रदापयेत् । पूजय त्वं जगन्नाथं वामनः प्रीयतामिति । महापुण्यप्रदा ह्येषा सङ्गमे विजया तिथिः । सर्व्वपापक्षयो नूनं जायते च उपोषणात् । गृहीत्वा नियमं प्रातर्गत्वा नद्यादिसङ्गमे । सौवर्णं वामनं कृत्वा सौवर्णमाषकेण वा । यथा शक्त्या तु विन्यस्य कुम्भोपरि जगत्पतिम् । पूर्णपात्रे स्थापयित्वा मन्त्रैरेतैः प्रपूजयेत् । एवं कृते तु विजयाव्रतेऽस्मिन् विजया दिने । न दुर्लभतरं किञ्चिदिह लोके परत्र च । दुर्लभा विजया नृणां दुर्लभस्तत्र सङ्गमः" । अग्निपु० "विधानं शृणु राजेन्द्र ! यथादृष्टं मनीषिभिः । यथोक्तं नियमं कुर्य्यादेकादश्यामुपोषितः । दन्तकाष्ठं प्रगृह्यादौ वाग्यतो नियतेन्द्रियः । श्रवणद्वादशीयोगे समुपोष्य जनार्द्दनम् । अर्च्चयित्वा विधानेन अन्यं भोक्ष्ये परेऽहनि । नदीनां सङ्गमे स्नायादर्च्चयेत् यत्र वा मनः । सौवर्णं रत्नसंयुक्तं द्वादशाङ्गुलसम्मितम् । पीतवस्त्रैः शुभैश्च भृङ्गारं निर्व्रणं नवम् । हिरण्मयेन पात्रेण अर्घ्यपात्रं प्रकल्पयेत् । दध्यक्षतफलैश्चैव सहिरण्यं सचन्दनम् । नमस्ते पद्मनाभाय नमस्ते जलशायिने । तुभ्यमर्घ्यं प्रयच्छामि बालवामनरूपिणे । मायावी वामनः श्रीशः सौत्रात्मा तु जगत्पतिः । एवं सम्पूजयित्वा तु द्वादश्यामुदये रवेः । भृङ्गारसहितं वस्त्रं संवत्सरं प्रपूजयेत् । वामनः प्रतिगृह्णातु वामनोऽहं ददामि तम् । वामनं सर्व्वतोभद्रं विजयायै निवेदयेत् । जलधेनुं तथा दद्याच्छत्रं चैव तु पादुके । सहिरण्यानि वस्त्राणि धेनुं चानडुहं नृप ! । यत्किञ्चिद्दीयते तत्र तदानन्त्याय कल्पते । श्रवणद्वादशीयोगे सम्पूज्य गरुड़ध्वजम् । दत्त्वा दानं द्विजातिभ्यो वियोगे पारणं ततः । सिंहस्थिते तु मार्त्तण्डे श्रवणस्थे निशाकरे । श्रवणद्वादशी ज्ञेया न स्यात् भाद्रपदादृते । दशम्येकादशी यत्र सानुपोष्या भवेत्तिथिः । श्रवणेन तु संयुक्ता सा शुभा सर्व्वकामदा" । श्रवणेन युक्तायां दशमी साप्युपोष्यैव । "पारणं तिथिवृद्धौ तु द्वादश्यामृक्षसंक्षयात् । ऋक्षौ कुर्य्यात्त्रयोदश्यां तत्र दोषो न विद्यते" । द्वादशीलङ्घ्ये नक्षत्रे द्वादश्यां पारणम् अपि त्रयोदश्यामित्यर्थः" ।

विजयासप्तमीव्रतं भविष्योत्तरे "शुक्लपक्षे तु सप्तम्यां यदादित्यदिनं भवेत्। सप्तमी विजया नाम तत्र दत्तं महाफलम्। स्नानं दानं जपो होम उपवासस्तथैव च। सर्वं विजयसप्तम्यां महापातकनाशनम्। प्रदक्षिणं यः कुरुते फलैः पुष्पैर्दिवाकरम्। स सर्वगुणसम्पन्नं पुत्रं प्राप्नोत्यसंशयम्। प्रथमा नारिकेरैस्तु द्वितीया बीजपूरकैः। तृतीया नारङ्गैश्चतुर्थी कदलीफलैः। पञ्चमी त्वर्जुकुष्माण्डैः षष्ठी पक्वैश्च तेन्दुकैः। वृन्ताकैः सप्तमी ज्ञेया शतेनाष्टोत्तरेण तु। मौक्तिकैः पद्मरागैस्तु तिलैः कर्कटकैस्तथा। गोमेदैर्वज्रवैदूर्यैः शतेनाष्टाधिकेन तु। इङ्गुदैर्बदरैर्बिल्वैः करमर्दैः सचिर्भटैः। आम्रातकैश्च जम्बीरैर्जम्बूकर्कटिकैः फलैः। पुष्पैर्धूपैः फलैः पत्रैर्मोदकैर्घृतपाचितैः। एभिर्विजयसप्तम्यां भानोः कुर्यात् प्रदक्षिणम्। अन्यैः फलैश्च कालोत्थैरखण्डैर्व्रणवर्जितैः। रवेः प्रदक्षिणं देयं फलेन फलमादिशेत्। नारी वा कुरुते या तु सापि तत्फलभागिनी। नित्यं महीतलजयप्रतिपादयित्री या सप्तमी मुनिवरैः प्रवरा तिथीनाम्। सा भानुपादकमलार्चनचिन्तकानां पुंसां सदैव विजया विजयं ददाति"। भविष्योत्तरे "माघे मासि सिते पक्षे सप्तम्यां कुरुनन्दन!। निराहारो रविं भक्त्या पूजयेद्विधिना नृप!। पूर्वोक्तेन जपेज्जप्यं देवस्य पुरतः स्थितः। शुद्धेनात्ममना राजन्! जितक्रोधो जितेन्द्रियः"। इत्यादि "एवं संवत्सरं यावत् कुर्याद्विजयसप्तमीम्। स जयेदखिलाञ्छत्रून् सूर्यलोकं स गच्छति"। भविष्यपु० "शुक्लपक्षस्य सप्तम्यां सूर्यवारो भवेद्यदि। सप्तमी विजया नाम तत्र दत्तं महाफलम्। स्नानं दानं जपो होम उपवासस्तथैव च। सर्वं विजयसप्तम्यां महापातकनाशनम्। पञ्चम्यामेकभक्तं स्यात् षष्ठ्यां नक्तं प्रचक्षते। उपवासस्तु सप्तम्यामष्टम्यां पारणं भवेत्। उपवासपरः षष्ठ्यां खगजस्य पूजयेद्रविम्"। उपवासपरः विजयसप्तम्यामुपवासं करिष्यन्। "गन्धपुष्पोपहारैश्च भक्त्या श्रद्धासमन्वितः। प्रकल्प्य पूजां भूमौ च देवस्य पुरतः स्वपेत्। जपमानस्तु गायत्रीं सौरसूक्तमथापि वा। त्र्यक्षरं वा महाश्वेतं षडक्षरमथापि वा। विबुद्धस्त्वथ सप्तम्यां कृत्वा स्नानं गणाधिपम्। षडेशं पूजयित्वा तु होमं कृत्वा विधानतः। ब्राह्मणान् भोजयेत् पश्चाद्भक्त्या च गणनायकम्। शाल्योदनमपूपांश्च खण्डवेष्टांश्च शक्तितः। दत्त्वा तु दक्षिणां शक्त्या ततो विप्रान् विसर्जयेत्। इत्येषा कथिता देव! पुण्या विजयसप्तमी। यामुपोष्य नरो गच्छेत् परं वैरोचनं पदम्।

विजयासप्तमीसत्रव्रतं भविष्यपु० "नैमित्तिकान् ततो वक्ष्ये यज्ञांस्तत्र समाहितः। सप्तम्यां पर्वणि चैव संक्रान्तिषु विशेषतः"। नैमित्तिकान् ततो वक्ष्ये इत्यनेन श्लोकेन षडयसंक्रान्तिषु साधारण्येन यज्ञप्रतिज्ञा कृता सत्रसप्तमीयज्ञं तावदाह शुक्लपक्षस्येत्यादिना "शुक्लपक्षस्य सप्तम्यां हविर्भुक्तैकदा दिवा। सन्ध्यागायत्र्य सन्ध्यायां वरुणं प्रणिपत्य च"। वरुणोऽत्र सूर्यः "इन्द्रियाणि तु संयम्य स तं ध्यात्वा स्वपेद्बुधः। दर्भशय्यागतो रात्रौ प्रातः स्नातः सुसंयुतः। सन्ध्यादौ तथैवान्ते पूर्ववद्वरुणं यजेत्। जुहुयाद्वह्नौ चरुमग्निं सूर्याग्निं परिकल्प्य वै। सूर्याग्निकरणं वक्ष्ये तर्पणं च समासतः। अस्त्रेणोङ्कारयुक्तेन सावित्र्याभ्युक्ष्य वानले"। अस्त्रेण अस्त्रमन्त्रेण सावित्र्या सूर्यगायत्र्या एतच्च सर्वं निक्षुभासप्तम्यामेवाभिहितं वेदितव्यम्। "प्रक्षिप्याकीर्य्य दर्भांश्च देशे भूमौ यथेप्सितम्। प्रागग्रैरुदगग्रैश्च पात्राण्यालभ्य चक्रवत्। पवित्रं द्विकुशं कृत्वा साग्रं प्रादेशसम्मितम्। तेन पात्राणि संप्रोक्ष्य संशोध्य च विलोड्य च। उदग्भागस्थिते पात्रे साग्निना चोल्मुकेन च। पर्य्यग्निकरणं कृत्वा ततश्चोत्पवनं त्रिधा। परिस्तृत्य स्रुचादींश्च दर्भैः सम्प्रोक्षितैश्च तैः। जुहुयात् प्रोक्षिते वह्नौ तत्रार्कं पूर्ववद्यजेत्। भूमौ स्थितेन पात्रेण विस्तरेण तु पाणिना। वामेन यदुशार्दूल। नान्तरिक्षे तु हूयते"। अन्तरिक्षे त्रिकादौ "दक्षिणेन स्रुचौ गृह्य जुहुयात् पावकं बुधः। हृदयेन क्रियाः सर्वाः कर्त्तव्याः पूर्वचोदिताः"। हृदयेन हृदयमन्त्रेण "अनेन हुत्वा सन्तर्प्य दद्यात् पूर्णाहुतिं ततः। वरुणायादरान्माघे सप्तम्यां वरुणं यजेत्। यथा शक्त्या तु विप्रेभ्यः प्रदद्यात् खण्डवेष्टकान्। दद्याच्च दक्षिणां शक्त्या प्राप्यते यागजं फलम्। एवञ्च फाल्गुने सूर्यं चैत्रे चैवांशुमालिनम्। वैशाखे मासि धातारं इन्द्रं ज्यैष्ठे यजेद्रविम्। आषाढे श्रावणे मासि भगं भाद्रपदे तथा। आश्विने चापि पर्जन्यं त्वष्टारं कार्त्तिके यजेत्। मार्गशीर्षे तु मित्रञ्च पौषे विष्णुं यजेद्यदि। संवत्सरेण यत् प्रोक्तं फलमिष्टा दिने दिने। तत् सर्वं प्राप्नुयात् क्षिप्रं भक्त्या श्रद्धा-

समन्वितः। एवं संवत्सरे पूर्णे कृत्वा वै काञ्चनं रथम्। सप्तभिर्वाजिभिर्युक्तं नानारत्नोपशोभितम्। आदित्यप्रतिमां मध्ये शुद्धहेम्ना कृतां शुभाम्। रत्नैरलङ्कृतां कृत्वा हेमपद्मोपरिस्थिताम्। तस्मिन् रथवरे कृत्वा सारथिं चाग्रतः स्थितम्। वृतं द्वादशभिर्विप्रैः क्रमान्मासाधिपात्मभिः। सर्वकल्पसमाचार्य्यं पूजयित्वा रथाग्रतः"। मासाधिपाः प्रतिमासोक्ताः सूर्य्याः। अतस्तद्भक्तिभावितैर्द्वादशभिर्विप्रैर्वृतमाचार्य्यं पूजयेदित्यर्थः।

विद्याप्रतिपद्व्रतं गरुडपु० "अथ त्वं प्रतिपत्कृत्यं शृणु सम्पत्करं व्रतम्। यत् कुर्वाणः श्रियं विन्देद्दुर्लभं मानुषैरिह। शालितण्डुलसंसिद्धे मण्डले चतुरस्रके। श्रीशं श्रियमथावाह्य पूजयेत् ससुरासुरम्। अपक्वतण्डुलैः पद्मैरयुतैस्तां प्रपूजयेत्"। अपक्वतण्डुलैः विकसितैः "अक्षतैर्वा यथायोगं पयसा पायसेन च। ततश्च विधिनाभ्यर्च्य पार्श्वे देवीं सरस्वतीम्। अथातः पूजयेदिन्दुं गुरुं पश्चादनन्यधीः। परिवारनियोगेन तांश्च सत्कारयेदथ"। प्रार्थनामन्त्रः "मम विद्यां प्रदिशतु देवो वागीश्वरो हरिः। विद्याधिदैवतं देवी विद्यां दिशतु मे स्थिराम्। सरस्वती प्रदिशतु वागृद्धिमतिशालिनीम्" इत्यादि। "यस्त्वेवं कुरुते विन्दते विद्वान् विद्याव्रतमनन्यधीः। समस्तविद्यानिपुणो वैष्णवं पदमृच्छति"।

विद्यावाप्तिव्रतं विष्णुधर्मोत्तरे "पौषस्यान्तु समतीतायां प्रतिपत्प्रभृतिक्रमात्। प्राग्वत्तु पूजयेद्देवं तुरङ्गशिरसं हरिम्"। प्राग्वदिति रूपावाप्तिव्रतोक्तविधिवत् तुरङ्गशिरसं हयग्रीवम्। "तिलांश्च जुहुयाद्वह्नौ तिलैर्देवं समर्चयेत्। निराहारोपोषितो माघे तिलान् कनकमेव च। दद्याद् ब्राह्मणमुख्याय सम्यक्प्रयतमानसः। सूक्ष्मान् यज्ञोपवीतांश्च प्रभूतमपि चन्दनम्। कृत्वा व्रतं मासमिदं यथोक्तं विद्यान्वितः स्यात् पुरुषः सदैव। स्वर्लोकमासाद्य सुखानि भुक्त्वा कामानभीष्टान् पुरुषोऽश्नुते च"।

विधानद्वादशसप्तमीव्रतम् आदित्यपु० "निरुक्तसप्तमीनान्तु शृणु नारद! निर्णयम्। यः शान्तिमधिगच्छेत स्वर्गस्थात् सर्वकिल्बिषैः। शातनी सर्वपापानां शातनीं नन्दितां विदुः। तस्योपवासविधिना धातारं य उपासते। चैत्रमासे तु सप्तम्यामतिरात्रफलं लभेत्। वैशाखमासे सप्तम्यां पर्जन्यं यस्तु पूजयेत्। षाण्मासिकस्य यज्ञस्य फलं प्राप्नोति तत्र वै। विना विभावसोर्दृष्टा आपस्तो व्याप्तिदीप्तिषु। विभानाम निरुक्तश्च स्वयमेव विभावसोः। सप्तम्यां ज्यैष्ठमासन्तु वरुणं यः समर्चयेत्। आप्नोत्यमितदानानान्तु फलं विन्दति मानवः। अस्तार्थे यदा देवा जयशब्देन निर्ययुः। पूजयन्ति जयां देवास्ततस्तस्माच्च तत् स्मृतम्। आषाढमासे सूर्य्यन्तु सप्तम्यां पूजयेन्नरः। अश्वमेधमवाप्नोति कुलञ्चैव समुद्धरेत्। सप्तम्यां निर्जिता देवैरसुरा दानवास्तथा। समाराध्य सुरैः सेन्द्रैः संग्रामे तारकामये। त्रैलोक्ये विजयप्राप्ते तस्माद्विजयसप्तमी। यः पूजयति मां भक्त्या तस्मिन्नहनि मानवः। स्नात्वा सम्यगुपस्पृश्य शुक्लवासाः कृताञ्जलिः। सदा यज्ञोपवीती च ब्रह्मचारी जितेन्द्रियः। अक्रोधनो ह्यचपलः स्थिरचित्तः समाहितः। ध्यायमानस्तथा साम्ब! तत्परः संजितेन्द्रियः" इत्यादि।

विभूतिद्वादशीव्रतं मत्स्यपु० "शृणु राजन्! प्रवक्ष्यामि विष्णोर्व्रतमनुत्तमम्। विभूतिद्वादशी नाम सर्वाभरणभूषिता। कार्त्तिके चाथ वैशाखे मार्गशीर्षेऽथ फाल्गुने। आषाढे वा दशम्यान्तु शुक्लायां लघुभुङ्नरः। कृत्वा सायन्तनीं सन्ध्यां गृह्णीयान्नियमं बुधः। एकादश्यां निराहार समभ्यर्च्य जनार्दनम्। द्वादश्यां द्विजसंयुक्तः करिष्ये भोजनं ततः। तदविघ्नेन मे यातु साफल्यं मधुसूदन!। ततः प्रभाते चोत्थाय कृत्वा स्नानजपं शुचिः। पूजयेत् पुण्डरीकाक्षं शुक्लमाल्यानुलेपनैः"।

वि(बि)ल्वत्रिरात्रव्रतं स्कान्दपु० "ज्यैष्ठे मासि च संप्राप्ते पूर्णमास्यां द्विजोत्तम!। ज्येष्ठानक्षत्रदिने कुर्य्यात् सिद्धार्थैः स्नानमुत्तमम्। श्रीवृक्षं सिञ्चयेत् पश्चाद्गन्धपुष्पैश्च पूजयेत्। वत्सरन्त्वेकभक्तन्तु हविष्यान्नेन कारयेत्। श्वशूकरखरादीनां दर्शने भोजनं त्यजेत्। अनेन विधिना सम्यक् मासि मासि समाचरेत्। ततः संवत्सरे पूर्णे गत्वा वि(बि)ल्वसमीपतः। गृहीत्वा वालुकां पात्रे प्रस्थमात्रं महामुने!। अथ वा धान्यमादाय यवशालितिलादिकम्। ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टयेत्। उमामहेश्वरं हैमं शक्त्या कुर्य्यात् सुभूषितम्" इत्यादि।

विशोकद्वादशीव्रतं पद्मपु० "पुण्ये चाश्वयुजे मासि विशोकद्वादशीव्रतम्। यच्चीर्त्वा शोकदौर्गत्यभाजनं न नरो भवेत्। दशम्यां लघुभुक् रात्रौ कृत्वा वै दन्तधावनम्। उदङ्मुखो प्राङ्मुखो वा वाक्यमेतदुदीरयेत्। एकादश्यां निराहारः समभ्यर्च्य च केशवम्। श्रियं च जगतां भूतिं भोक्ष्याम्यपरेऽहनि। एवं नियम-

मास्थाय सुप्ता रात्रौ जितेन्द्रियः । प्रभाते विमले गत्वा मध्याह्ने तु जलाशयम् । स्नानं सर्व्वौषधैः कुर्य्यात् पञ्चगव्यजलेन च । शुक्लमाल्याम्बरधरः समभ्यर्च्य स्वगृहं ततः । पूजयेज्जगतां नाथं लक्ष्मीदयितमुत्पलैः” इत्यादि ।

विशोकषष्ठीव्रतं भविष्योत्तरे “विशोकषष्ठीमधुना वक्ष्यामि मनुजोत्तम ! । यामुपोष्य नरः शोकं न कदाचिदिह स्पृशेत् । माघे कृष्णतिलैः स्नानं पञ्चम्यां शुक्लपक्षतः । कृताहारः कृशरया दन्तधावनपूर्ब्बकम्” । कृशरया, तिलतण्डुलान्नेन “उपवासव्रतं कृत्वा ब्रह्मचारी भवेन्निशि । ततः प्रातः समुत्थाय कृतस्नानजपः शुचिः । कृत्वा तु काञ्चनं पद्ममर्कोऽयमिति पूजयेत् । करवीरेण रक्तेन रक्तवस्त्रयुगेन च । यथा विशोकं भुवनस्तुदिते त्वयि जायते । तथा विशोकता मे स्यात्त्वद्भक्तिः प्रतिजन्मनि । एवं सम्पूज्य षष्ठ्यान्तु द्विजान् भक्त्या प्रपूजयेत् । सुप्यात् संप्राश्य गोमूत्रं समुत्थाय ततः शुचिः । सम्पूज्य विप्रान् दानेन गुडपात्रेण संयुतम् । वस्त्रेणाच्छाद्य गुरवे सर्व्वमेतन्निवेदयेत्” इत्यादि ।

विशोकसंक्रान्तिव्रतं स्कान्दपु० “अतःपरं प्रवक्ष्ये विशोकसंक्रान्तिमुत्तमाम् । अयने विषुवे पुण्ये व्यतीपातो भवेद्यदि । एकभक्तं नरः कुर्य्यात्तिलैः स्नानन्तु कारयेत् । काञ्चनं भास्करं कृत्वा यथाविभवशक्तितः । स्नापयेत्पञ्चगव्येन गन्धपुष्पैः सुपूजयेत् । वेष्टयेद्रक्तवस्त्राभ्यां ताम्रपात्रे निधापयेत्” इत्यादि ।

विशोकसप्तमीव्रतं भविष्यपु० “विशोकसप्तमीं तद्वत् वक्ष्यामि मुनिपुङ्गव ! । यामुपोष्य नरः शोकं न कदाचिदिहाश्नुते । माघे कृष्णतिलैः, स्नातः पञ्चम्यां शुक्लपक्षतः । कृताहारः कृशरया दन्तधावनपूर्ब्बकम् । उपवासव्रतं कृत्वा ब्रह्मचारी भवेन्निशि । ततः प्रभाते चोत्थाय कृतस्नानजपः शुचिः । कृत्वा तु काञ्चनं पद्ममर्कोऽयमिति पूजयेत् । करवीरैश्च पुष्पैश्च रक्तवस्त्रयुगेन च । यथा विशोकं भुवनं त्वयैवादित्य ! सर्व्वदा । तथा विशोको मे चास्तु त्वद्भक्तिः प्रतिजन्मनि । एवं संपूज्य षष्ठ्यां तु भक्त्या संपूजयेद्द्विजान् । सुप्त्वा संप्राश्य गोमूत्रमुत्थाय कृतनित्यकः । संपूज्य विप्रं यत्नेन गुडपात्रसमन्वितम् । तच्च वस्त्रसंयुक्तं ब्राह्मणाय निवेदयेत् । अतैललवणं भुङ्क्ते सप्तम्यां मौनसंयुतः । ततः पुराणश्रवणं कर्त्तव्यं भूतिमिच्छता । अनेन विधिना सर्व्वमुभयोरपि पक्षयोः । कुर्य्यात् यावत् पुनर्माघशुक्लपक्षस्य सप्तमीम् । व्रतान्ते कलसं दद्यात् सुवर्णकमलान्वितम्” ।

विश्वव्रतं भविष्यपु० “एकादश्यां यथोद्दिष्टा विश्वेदेवाः प्रपूजिताः । प्रजां पशून् धनं धान्यं प्रयच्छन्ति महीं तथा । मूलमन्त्रः स्वसंज्ञाभिरङ्गमन्त्राः प्रकीर्त्तिताः । पूर्ब्बवत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः । गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा । आज्यधाराभिरद्भिश्च दधिक्षीरान्नमाक्षिकैः । पूर्ब्बोक्तफलदो होमः कृतः शान्तेन चेतसा” । एतद्व्रतं वैश्वानरप्रतिपद्व्रतवद्व्याख्येयम्” ।

विश्वरूपव्रतं कालोत्तरे “रेवतीशनियोगस्तु सिताष्टम्यां यदा भवेत् । भूतायां वा महासेन ! तदा जातमिदं शृणु ! महास्नानं प्रकर्त्तव्यं नित्यकृत्यादनन्तरम् । चन्द्रं गौवाङ्गरागन्तु रत्नपूजान्तु कल्पयेत् । सितपद्मानि देयानि भूषणानि बहून्यपि । चन्द्रमेवं दहेद्धूपं नैवेद्यं पायसगुडम् । श्वेताम्बरयुगं सौम्यं शिवाय विनिवेदयेत् । अश्वाष्टसं कुञ्जरञ्च आचार्य्याय प्रदापयेत् । ऋग्यजुःसामाथर्व्वाणः प्रत्यक्षकुञ्जरं तथा । राज्यार्थी लभते राज्यं यावदाहूतसंप्लवम् । पुत्त्रार्थी लभते पुत्त्रान् वायुतुल्यपराक्रमान् । भोगार्थी लभते भोगान् विद्यातत्त्वेन शाश्वतान् । यान् यान् कामयते कामान् तांस्तान् कामानवाप्नुयात् । विश्वरूपमनन्तेन व्रतमेतदुदाहृतम् । कुशोदकप्राशनन्तु रात्रौ जागरणं ततः” ।

विष्टिव्रतं भविष्योत्तरे विष्टिस्वरूपमुक्त्वा “एवमेषा समुत्पन्ना विष्टिरिष्टविनाशिनी । तस्मात्तरेण कौन्तेय ! वर्जनीया फलार्थिना । येनोपवासविधिना व्रतेन च युधिष्ठिर ! । पूजिता तोषमायाति तदेव कथयामि ते । यस्मिन् दिने भवेद्भद्रा तस्मिन्नहनि भारत ! । उपवासश्च नियमं कुर्य्यान्नारी नरोऽथ वा । यदि रात्रौ भवेद्विष्टिरेकभक्तं दिनद्वयम् । कार्य्यस्तेनोपवासः स्यादिति पौराणिको विधिः । प्रहरस्योपरि यदा स्याद्विष्टिः प्रहरत्रयम् । उपवासस्तथा कार्य्य एकभक्तमतोऽन्यथा । सर्व्वौषधिजलस्नानं सुगन्धामलकैरथ । नद्यान्तडागेऽथ स्वगृहे स्नानं सर्व्वत्र शस्यते । देवान् पितॄन् समभ्यर्च्य ततो दर्भमयीं शुभाम् । विष्टिं कृत्वा पुष्पधूपैर्नैवेद्यादिभिरर्च्चयेत । होमन्तु नामभिर्विष्टेः शतमष्टोत्तरं नृप ! । भुञ्जीत दत्त्वा विप्राय तिलान् पायसमेव च । सतैलं कृशरं भुक्त्वा पश्चाद्भुञ्जीत कामतः । छायासूर्य्यसुते ! देवि ! विष्टिरिष्टार्थनाशिनि ! । पूजितासि यथाशक्त्या

भद्रे ! भद्रप्रदा भव । उपोष्य विधिनानेन दश सप्त यथा क्रमात् । उद्यापनं ततः कुर्य्यात् पूर्ववत् पूज्य भामिनीम् । स्थापयित्वायसे पीठे कृशरान्नं निवेद्य च । परिधाय कृष्णवस्त्रयुगं मन्त्रेण तं पुनः । आघ्रापाय पुनर्दद्याद् लौहतैले तिलांस्तथा । कृष्णां सवत्सां गामेकान्तथैव कृष्णकम्बलाम् । दक्षिणाञ्च यथाशक्त्या दत्त्वा भद्रां विसर्जयेत् । य एवं कुरुते पार्थ ! सम्यग् भद्राव्रतं नरः । विघ्नं न जायते तस्य कार्य्यारम्भे कथञ्चन” ।

विष्णुदेवकीव्रतं विष्णुधर्म्मोत्तरे “प्रथमे कार्त्तिकस्याह्नि सम्प्राप्ते देवकि ! स्वयम् । पञ्चगव्यकृतस्नानः पञ्चगव्यकृताशनः । बाणपुष्पैः समभ्यर्च्य वासुदेवमजं विभुम् । दत्त्वा च चन्दनं धूपं परमान्नं निवेदयेत् । घृतं निवेदयेद्विप्रे दत्त्वा चाद्य ततो व्रतम् । अद्यप्रभृत्यहं मासं विरतः प्राणिनां बधात् । असत्यवचनात् स्तेयान्मधुमांसादिभक्षणात् । स्वपन् विबुध्यन् गच्छंश्च स्मरिष्याम्यहमच्युतम् । परापवादं पैशुन्यं परपीडाकरन्तथा । सच्छास्त्रदेवतायज्ञनिन्दामन्यस्य वा भुवि । न वक्ष्यामि जगत्यस्मिन् पश्यन् सर्वगतं हरिम् । अशक्तो वाऽधिशक्तोऽपि यस्मिन् वोढुं यशस्विनि ! । कुर्वीत नियमं तस्य त्यागो धर्म्मोपपत्तये । कृत्वैवं पुरतो विष्णोर्निर्वृतिं याति शुभे । नैवेद्यं स्वयमश्नीयान्मौनी नित्यमुदङ्मुखः । मार्गशीर्षे तथा मासि जातीपुष्पैर्जनार्दनम् । समभ्यर्च्य पुनर्धूपं चन्दनञ्च निवेदयेत् । परमान्नञ्च देवाय विप्राय च पुनर्घृतम् । दत्त्वा तथैव दद्यादपि यद्यो योऽस्य रोचते । तथैव नक्तं भुञ्जीत नैवेद्यं कुलनन्दिनि ! । सर्वेष्वेव चतुर्मासं पञ्चगव्यादिकं समम् । पुष्पधूपोपहारेषु विशेषो दक्षिणासु च । स्नानप्राशनयोः साम्यं तथैव नक्तभोजनम् । अर्च्चयेत् प्रतिमासन्तु यैः पुष्पैस्तानि मे शृणु ! । ये च धूपाः प्रदातव्या नैवेद्यान्नञ्च यत्तथा । बाणैश्च जातिकुसुमैः तथैव च सकुन्दजैः । कुन्दातिमुक्तकै रक्तै रक्तवीरैश्च रक्तकैः । श्वेतैः शुभ्रैर्मल्लिकायास्तथा मल्लिकया ततः । दधिपद्माभकेतक्याः पद्मरक्तोत्पलेन च । क्रमेणाभ्यर्चितो विष्णुर्ददाति मनसि स्थितम् । कार्त्तिके मार्गशीर्षे च धूपं पौषे च चन्दनम् । माघफाल्गुनचैत्रेषु दद्याद्विष्णोस्तथाऽगुरुम् । वैशाखादिषु मासेषु त्रिषु देवकि ! भक्तितः । कर्पूरं देवदेवाय गुग्गुलं श्रावणादिषु । कार्त्तिकादिषु मासेषु परमान्नं शुभे ! त्रिषु । कासारं माघपूर्वेषु यवान्नञ्च ततस्त्रिषु । घृतं तिलान् जलघटं हिरण्मथ वा व्रती । प्रतिमासं तथा दद्याद् ब्राह्मणाय शुभव्रते ! । यथोक्तनियमानाञ्च धर्म्मं प्रतिमासिकम् । कुर्वन् जगत्पतिर्विष्णुः प्रीयतामिति मानवः । योषिदप्यचलप्रज्ञा व्रतमेतद् यथाविधि । करोति सापि सकलान् अवाप्नोति मनोरथान् । व्रतेनाराधितो विष्णुरनेन जगतःपतिः । ददात्यभिमतान् कामान् क्षिप्रकालेन भामिनि ! । धन्यं यशस्यमायुष्यं सौभाग्यारोग्यदन्तथा । व्रतमेतत् प्रियतरं व्रतेभ्योऽव्यक्तजन्मनः” ।

विष्णुपदव्रतं विष्णुधर्म्मोत्तरे “आचष्ट दुःखक्षयदं व्रतं विष्णुपदत्रयम् । सर्व्वारम्भविनिष्पत्तिकारकं पापनाशनम् । संसारोच्छेदकैर्धीरैर्यदिष्टं स्थिरबुद्धिभिः । तदहं तव राजेन्द्र ! व्रतानामुत्तमोत्तमम् । कथयामि समाचष्ट यथापूर्वं समासतः । आषाढ़े मासि राजेन्द्र ! पूर्वाषाढ़ासु पार्थिव ! । समभ्यर्च्य जगन्नाथमच्युतं नियतः शुचिः । पुष्पैर्धूपैस्तथा हृद्यैर्गन्धैः सागुरुचन्दनैः । यथाविभवतश्चान्यै रत्नैर्वासोभिरेव तु । क्षीरस्थे हस्थितं तद्वद्द्रव्यैर्विष्णुपदत्रयम् । समभ्यर्च्य यथाशक्त्या केशवस्याग्रतो न्यसेत् । यथाञ्च दद्याद्विप्राय श्रीपतिः प्रीयतामिति । नक्तं भुञ्जीत राजेन्द्र ! हविष्यान्नं सुशोभनम् । तथैवोत्तराषाढ़ासु श्रावणे मासि मानवः । तथैवाभ्यर्च्य गोविन्दं तथा विष्णुपदत्रयम् । विप्रायात्र घृतं दत्त्वा प्रीणयित्वा भुवःपतिम् । भुञ्जीत गोरसप्रायं मानवो मौनमास्थितः । स्त्री वा राजेन्द्र ! पूर्वासु तथा भाद्रपदासु वै । फाल्गुने फाल्गुनीपूर्वा भवेदिति यदा नृप ! । त्रिविक्रमं तदा देवं पूर्वोक्तविधिनार्चयेत् । पदत्रयन्तु देवस्य समभ्यर्च्य तु पार्थिव ! । हिरण्यं दक्षिणां दद्यात् स्वर्गतिः प्रीयतामिति । नक्तं भुञ्जीत राजेन्द्र ! आज्यपाकविवर्जितम् । एष एवोत्तरायोगे चैत्रे मासि विधिः स्मृतः । अपुत्रो लभते पुत्रमपतिर्लभते पतिम् । समागमं प्रवासाञ्च तथा प्राप्नोति बान्धवैः । भद्रमैश्वर्य्यमारोग्यं सौभाग्यं चानुरूपताम् । प्राप्नुयादखिलानेतान् पूजयित्वा पदत्रयम् । यान् यान् कामान्नरः स्त्री वा हृदयेनाभिवाञ्छति । तांस्तानाप्नोति निष्कामो विष्णुलोकं प्रपद्यते । पूर्वं कृत्वापि पापानि नरः स्त्री वा नराधिप ! । पदत्रयव्रतं कृत्वा मुच्यते सर्वकिल्बिषैः” ।

विष्णुप्रीतिद्वादशीव्रतं भविष्यपु० “द्वादश्यामुपवासन्तु ये वै कुर्वन्ति ते नराः । मासेन प्रतिपद्यन्ते मम भक्तिपरा-

यथाः । कृत्वा चैवोपवासन्तु गृहीत्वा च जलाञ्जलिम् । नमो नारायणायेति आदित्यं चावलोकयेत् । यावन्तो विन्दवः केचित् पतन्त्यञ्जलितो जलात् । तावद्वर्षसहस्राणि स्वर्गलोके महीयते । तथैव तस्यां द्वादश्यां कृत्वा कर्म यथाविधि । पायसैश्चैव पुष्पैस्तु स्नेहैर्गन्धैश्च धूपनैः । य एवं कारयेद्भूमे ! तस्यापि शृणु यां गतिम्" इत्यादि ।

विष्णुव्रतं भविष्यपु० "द्वादश्यां विष्णुमिष्ट्वेह सर्वदा विजयी भवेत् । पूज्यश्च सर्वलोकानां यथा गोपतिगोकरः" । गोपतिः सूर्य्यो गोकरो नेत्ररश्मिर्यस्य स गोपतिगोकरो विष्णुः "मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः । पूर्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः । गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा । आज्यधाराभिरद्भिश्च दधिक्षीरान्नमाक्षिकैः पूर्वोक्तफलदो होमः कृतः शान्तेन चेतसा" । एतत्तु व्रतं वैश्वानरप्रतिपद्व्रतवद्व्याख्येयम् । पद्मपु० "द्वादश द्वादशीर्यस्तु समाप्योपोषणैर्नरः । गोवत्सं काञ्चनं विप्रानर्चयेद्भक्तितः । परं पदमवाप्नोति विष्णुव्रतमिदं स्मृतम्" । विष्णुधर्मोत्तरे "विष्णुव्रतमिति ख्यातं दर्शितं विष्णुना स्वयम् । पौषशुक्लद्वितीयादि कृत्वा मासचतुष्टयम् । सर्वकामधारणप्रायं गृह्णीयात् परमं व्रतम् । पूर्वं सिद्धार्थकैः स्नानं ततः कृष्णतिलैः स्मृतम् । वचयाथ तृतीयेऽह्नि सर्वौषध्या ततःपरम् । नाम्ना कृष्णाच्युताख्येन तथा तं तेन पूजयेत् । तथैव च चतुर्थेऽह्नि हृषीकेशं च केशवम् । देवमभ्यर्च्य पुष्पैश्च पत्रैर्धूपानुलेपनैः । उदङ्मुखस्तु बालेन्दोर्दद्यादर्घ्यं समाहितः । पुष्पैः पत्रैः फलैश्चैव सर्वधान्यैश्च भक्तितः । दिनक्रमेण चैतानि चन्द्रनामानि कीर्त्तयेत् । शशी चन्द्रः शशाङ्कश्च निशापतिरिति क्रमात् । नक्तं भुञ्जीत सततं यावत्तिष्ठति चन्द्रमाः । अस्तङ्गते न भुञ्जीत व्रतभङ्गभयाच्छुभे ! । एवं सर्वेषु मासेषु ज्यैष्ठान्तेषु यशस्विनि ! । कर्त्तव्यं वै व्रतश्रेष्ठं द्वितीयादिचतुर्द्दिनम् । विप्राय दक्षिणां दद्यात् पञ्चम्यां च यशस्विनि ! । एवं समापयेन्मासैः षड्भिः प्रथमपारणम् । पारणान्ते च देवस्य प्रीणनं भक्तितः शुभैः । यथाशक्त्या तु कर्त्तव्यं वित्तशाठ्यं विवर्जयेत् । आषाढादिद्वितीयासु षण्मासेन तपोधन ! । पारणं वै समाख्यातं व्रतस्यास्य शुभप्रदम्" ।

वृषव्रतं पद्मपु० "कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । वैष्णवं पदमवाप्नोति वृषव्रतमिदं स्मृतम्" ।

वेदव्रतं विष्णुधर्मोत्तरे "इदमन्यत् प्रवक्ष्यामि चतुर्मूर्त्तिव्रतं तव । विद्याकामेन यत्कार्य्यं नरेण सुविपश्चिता । बहिःस्नानं नरः कृत्वा कृतऋग्वेदपूजनः । ऋग्वेदं पूजयान्नित्यं मासद्वयमतन्द्रितः । चैत्रादारभ्य धर्मज्ञ ! नित्यं नक्ताशनो भवेत् । ततो नृपवर ! प्राप्ते ज्यैष्ठस्य चरमेऽहनि । वासोयुगं हिरण्यञ्च तथा धेनुं पयस्विनीम् । घृतपूर्णं कांस्यपात्रं हिरण्यन्तु दक्षिणाम् । आषाढादिषु मासेषु यजुर्वेदव्रतं चरेत् । आश्विनादिषु मासेषु सामवेदव्रतं चरेत् । तथाथर्वव्रतं नाम पौषादिषु विधीयते । सर्वेषु सर्वं कर्त्तव्यमृग्वेदव्रतकीर्त्तितम् । वेदात्मनो वासुदेवस्य पूजां कृत्वा नरो द्वादशवत्सराणि । विष्णोर्लोकं याति लोकैर्विशिष्टं यस्मिन् प्राप्ते सर्वदुःखं जहाति" । वेदपञ्चकार्थं वेदव्रतं विधानपा० द्रष्टव्यम् ।

वेश्याव्रतं पद्मपु० "अथाप्यन्यत् व्रतं सम्यक् उपदेक्ष्यामि तत्त्वतः । अविचारेण सर्वाभिरनुष्ठेयञ्च तत् पुनः । संसारोत्तरणायालमेतद्वेदविदो विदुः । यदा सूर्य्यदिने हस्तः पुष्यो वाथ पुनर्वसुः । भवेत् सर्वौषधीस्नानं सम्यक्कारी समाचरेत् । तदा पञ्चशरस्यापि सान्निधानमिहेष्यते । अर्च्चयेत् पुण्डरीकाक्षमनङ्गस्यापि कीर्त्तनम् । तस्मादिमाय दातव्यं हृच्छयः प्रीयतामिति । यथेच्छाहारभुग्नक्तं तमेव द्विजसत्तमम् । रत्यर्थं कामदेवोऽयमिति चित्तेन धारयेत् । यद्यदिच्छति विप्रेन्द्रस्तत्तत् कुर्य्याद्विलासिनी । सर्वभावेन चात्मानमर्पयेत् स्मितभाषिणी । एवमादित्यवारेण सदा तद्व्रतमाचरेत् । तण्डुलप्रस्थदानादि यावन्मासास्त्रयोदश । ततस्त्रयोदशे मासि संप्राप्ते तस्य कामिनी । विप्रस्योपस्करैर्युक्तां शय्यां दद्याद्विलक्षणाम् । सोपधानकविश्रामां स्वास्तरावरणां शुभाम् । दीपकोपानहच्छत्रपादुकासनसंयुताम् । सपत्नीकमलङ्कृत्य हेमसूत्राङ्गुलीयकैः । सूक्ष्मवस्त्रैः सकटकैर्धूपमाल्यानुलेपनैः । कामदेवं सपत्नीकं गुडकुम्भोपरिस्थितम्" । कामदेवरूपन्तु मदनत्रयोदशीव्रतोक्तं विज्ञेयम् । "ताम्रपात्रासनगतं हैमसूत्रपटावृतम् । सकांस्यभाजनोपेतमिक्षुदण्डसमन्वितम् । दद्यादनयोक्तविधिना तथैकां गां पयस्विनीम्" ।

वैतरणीव्रतं भविष्योत्तरे "एकादशी तिथिः कृष्णा मार्गशीर्षगता नृप ! । तामासाद्य नरः सम्यक् स्नात्वा-

यान्नियमं शुचिः । एकादशी तिथिः कृष्णा नाम्ना वैतरणी शुभा । सा व्रतेन मया कार्य्या वर्षं नक्तपरायणः । मध्याह्ने तु नरः स्नात्वा नित्यं निर्वर्त्तितक्रियः । रात्रौ सुरभिमानीय कृष्णामर्चेत् यथाविधि । पूर्व्वाभिमुख्यपि धातव्या कृष्णा गौर्विप्रभूतले । अग्रपादादितः पूज्या पश्चात्पादद्वयावधि । गोपुच्छन्तु समासाद्य कुर्य्यात् वै पितृतर्पणम् । ततः पूजा प्रकर्त्तव्या शास्त्रदृष्टविधानतः । गाञ्चैव श्रद्धया युक्तश्चन्दनेनानुलेपयेत् । गन्धतोयेन चरणौ शृङ्गे प्रक्षाल्य भक्तितः । ततोऽनुपूजयेद्भक्त्या पुष्पैर्गन्धादिवासितैः । मन्त्रैः पुराणसम्प्रोक्तैर्यथास्थानं यथाविधि" । "मार्गशीर्षादिकेऽब्दं यावन्मासचतुष्टयम् । अन्यन्मासचतुष्कन्तु यावकाशनमेव च । श्रावणादिषु मासेषु चतुर्ष्वन्नाच्च पायसम् । तदन्नस्य त्रयोभागाः गोगुरुस्वार्थमेव च । नैवेद्यं हि मया दत्तं सुरभी प्रीयतामिति । द्वितीयं गुरवे दद्यात् तृतीयं स्वयमेव च । मासान्मासं प्रकुर्व्वीत मासद्वादशकं व्रतम् । उद्यापनन्ततः कुर्य्यात् पूर्णे संवत्सरे तदा । शय्या सतूलिका भार्य्यादम्पत्योः परिधानकम् । सवत्सा कृष्णवर्णा तु धेनुः कार्य्या पयस्विनी । सौवर्णीं सुरभीं कृत्वा स्थापयेत् तूलिकोपरि । सुरभीं पूजयेन्मन्त्रैः पूर्व्वोक्तैर्भक्तिसंयुतैः । ततस्तु गुरवे दद्यात् सर्व्वं तत्र समापयेत् । नारी वा पुरुषो वापि व्रतस्यास्य प्रभावतः । राज्यं बहुविधं भुक्त्वा स्वर्गलोके महीयते । भारो लोहस्य दातव्यः कार्य्योऽसौ द्रोणसम्मितः । वैतरण्याः समाप्त्यर्थं ब्राह्मणाय कुटुम्बिने" ।

वैनायकचतुर्थीव्रतं भविष्योत्तरे "चतुर्थ्यां नक्तभुग्दद्यादब्दान्ते हेमवारणम्" । वारणः, करी । "व्रतं वैनायकं नाम सर्व्वविघ्नोपशान्तिदम्" ।

वैशाखव्रतानि पद्मपु० "वैशाखे पुष्पलवणं वर्जयित्वा तु गोप्रदः । विष्णुलोकमवाप्नोति ततो राजा भवेदिह" । महाभारते "निरन्तरैकभक्तेन वैशाखं यो जितेन्द्रियः । नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत्" । विष्णुधर्म्मोत्तरे "यः क्षिपेदेकभक्तेन वैशाखं पूजयेद्धरिम् । नरो वा यदि वा नारी ज्ञातीनां श्रेष्ठतां व्रजेत् । अहिंसः सर्व्वभूतेषु वासुदेवपरायणः । नमोऽस्तु वासुदेवायेत्यक्षरं जपेत् । अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात्" ।

वैश्वानरप्रतिपद्व्रतं भविष्योत्तरे "अग्निमिष्ट्वा घृतेन च प्रतिपद्यामिति श्रुतम् । हविषा सर्व्वधान्यानि प्राप्नुयादक्षतं धनम्" । इष्ट्वा पूजयित्वा । प्रतिपद्यां प्रतिपदि । इति श्रुतं कामानुसारेण हिरण्यरेतस्त्वात्तया विदितम् । हविषा घृतेन । सर्व्वधान्यानि [illegible]न्यः । "मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः । पूर्व्ववत् पद्मपत्रस्थः कर्त्तव्यश्च तिथीश्वरः" । मूलमन्त्राः प्रधानमन्त्राः अङ्गमन्त्राः परिवारदेवतामन्त्राः अग्नये हृदयाय नम इत्येवमादयः । स्वसंज्ञाभिः ओँ अग्नये नम इत्यादिपूजायाम् । ओँ अग्नये स्वाहा इत्यादि होमे । पूर्व्ववत् सूर्य्यव्रतवत् । पद्ममध्यस्थः कर्णिकायां स्वमूर्त्त्या पत्रेषु परिवारमूर्त्त्या स्थितः । तिथीश्वरोऽत्र वह्निः । स च श्मश्रुधारी त्रिलोचनो रक्ताङ्गश्चतुर्भुजः दक्षिणे स्रुवं तदपरे ज्वाला । एतत्सङ्गतया अक्षपात्रहस्तायाः स्वाहायाः स्कन्धे च न्यस्तकरोऽपरो वरः । चत्वारः शुका रथस्य वोढारः । वायुः सारथिरित्येवं विष्णुधर्म्मोत्तराभिहितो वेदितव्यः । "गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते । पूजाऽशाठ्येन शाठ्येन कृतापि तु फलप्रदा । अशाठ्येन अकपटेन शाठ्येनेति स्तुतिः । "आज्यधाराभिसिक्तैश्च दधिक्षीराद्यसंयुतैः । पूर्व्वोक्तफलदो होमो विहितः शान्तचेतसा" । आज्यधारादिभिः षड्भिः पृथक्कृतो होमः पूर्व्वोक्तफलदो भवतः । माक्षिकं मधु । आदौ पूजा ततो हुताशनाज्यहोमस्ततो आज्यधारादिहोमः" ।

वैश्वानरव्रतं पद्मपु० "यस्त्वेकभक्तो हिमे वर्षादिचतुरस्त्वृतून् । घृतधेनुप्रदोऽन्ते च स परं ब्रह्म गच्छति । वैश्वानरव्रतं नाम सर्व्वपापप्रणाशनम्" ।

वैष्णवव्रतं पद्मपु० "आषाढादिचतुर्म्मासान् प्रातः स्नायी भवेन्नरः । विप्राय भोजनं दत्त्वा कार्त्तिक्यां गोप्रदो भवेत् । घृतकुम्भं तथा दद्यात् सर्व्वकामानवाप्नुयात् । वैष्णवव्रतमित्युक्तं विष्णुलोकप्रदायकम्" ।

व्यतीपातव्रतं वराहपु० "शुभे व्यतीपातदिने विगाहयेत् स पञ्चगव्येन महानदीजलम् । उपावसेद्दैवमनाः प्रजापको जपेत्तु शुभो व्यतिपात ! ते नमः । आदिते ताम्रपात्रे च शर्करापूरिते घटे । काञ्चनाञ्चं प्रतिष्ठाप्य हैममष्टभुजं नरम्" । अष्टभुजं अष्टादशभुजम् उत्पत्तिवाक्ये व्यतीपातमूर्त्तेरष्टादशभुजत्वात् उत्पत्तिवाक्यानुसारत्वाच्च विनियोगवाक्यस्य यथा भगवद्गीतासु "चत्वारो मनवस्तथेति" चत्वारश्चतुर्दश । "गन्धपुष्पादिभिर्धूपदीपभक्ष्यनिवेदनैः ।

भक्ष्यैर्भोज्यैः फलैश्चित्रैर्मासि मार्गशिरेऽर्च्चयेत्। नमस्तेऽस्तु व्यतीपात! सूर्य्यसोमहत! प्रभो!। यद्दानादि कृतं किञ्चित् तदनन्तमिहास्तु मे। इत्युक्त्वा पञ्चरत्नाढ्यं सपुष्पाक्षतमञ्जलिम्। प्रक्षिप्य तत्क्षणादेव सर्व्वपापक्षयो भवेत्। यदि द्वितीयेऽपि दिने व्यतीपातो भवेन्नहि!। तदा पूर्व्वोपवासस्तु दद्यात्तत् सकलं गुरोः। पारणं व्यतिपातान्ते कुर्य्यात् संप्राश्य गोमयम्। अथैकस्मिन्नेव दिने व्यतीपातो भवेद् यदि। तत्रैवाह्नि तदा दत्त्वा उपवासं समाचरेत्। कुर्य्यादेवं मासि मासि व्यतीपातस्त्रयोदश। व्यतीपाते तु संप्राप्ते कुर्य्यादुद्यापनं बुधः। व्यतीपाताय स्वाहेति क्षीरद्रुमसमन्वितम्। आज्यक्षीरतिलानाञ्च होतव्यं वै शतं शतम्"। नारदीयपु० "व्यतीपातव्रतस्यास्य विधानं शृणु तत्त्वतः। माघे वा फाल्गुने वापि अन्यस्मिन्मासि वा भवेत्। व्यतीपाते दिने यस्मात् प्रारभेद्व्रतमुत्तमम्। तिलैः पूर्णं शरावञ्च सगुड़ं गुरवेऽर्पयेत्। एवं द्वितीये दातव्यं तृतीये तु समापयेत्। सघृतं पायसञ्चैव दातव्यं चोत्तरोत्तरम्। एवं संवत्सरस्यान्ते देवस्यार्च्चान्तु कारयेत्। शङ्खचक्रगदापाणिं पद्महस्तं हिरण्मयम्। वस्त्रयुग्मेन संवेष्ट्य पूजयेद्गरुड़ध्वजम्। गोक्षीरेण च संपूर्णं कांस्यभाजनमुत्तमम्। स्थापयेद्देवदेवस्य स्थानन्तत्रैव कल्पयेत्। शय्या च सन्निधौ तस्य स्थाप्या देवमनुस्मरन्। अनन्तशायिनं देवमनन्तफलदं शुभम्। लक्ष्म्या सहान्वितं विष्णुं भक्त्या संपूजयेद्गुरुम्। वैदिकेनैव मन्त्रेण जातीपुष्पैः समर्च्चयेत्। पायसेनैव नैवेद्यं शर्करासंयुतेन च। दत्त्वा निवेद्य देवस्य प्रार्थनं प्रार्थयेद्व्रती"।

व्योमव्रतं भविष्यपु० अगस्त्यार्घ्यदानानन्तरम् "सितचन्दनतोयेन व्योम स्नाप्य विलिप्य च। कर्णिकाकल्पितैः पद्मैः संपूज्य प्रणिपत्य च"। कर्णिकाकल्पितैः कर्णिकामण्डितैः "बकुले विमले सौम्ये निश्छिद्रे पुष्पिते सति"। पुष्पिते विकसिते। "मध्ये केसरजालस्य व्योम स्थाप्यं सुशोभनम्। कुङ्कुमपर्व्वमालन्तु सर्व्वगन्धसमन्वितम्। अथ संस्थापयित्वा च भास्करस्य सुरोत्तम!। पूजयेत् करवीरैस्तु तथा रक्तैश्च चन्दनैः। धूपञ्च गुग्गुलं दद्यात् प्रणम्य शिरसा रविम्। कुङ्कुमं पूर्व्वपार्श्वे तु दद्याद्वत्स! समाहितः। दक्षिणे चागुरुं दत्त्वा पश्चिमे चन्दनं सितम्। चतुःसमञ्चोत्तरे तु दद्याद्व्योमविचक्षणः। दद्यान्मध्ये शुभं पुण्यं रक्तचन्दनमादरात्। पूजयेद्विविधैः पुष्पैस्तथा साऽगुरुचन्दनैः। धूपं कृष्णागुरुं दद्यात् सघृतं वापि गुग्गुलुम्। वासांसि च सूक्ष्माणि विशेषाणि निवेदयेत्। पायसं घृतसंयुक्तं घृतदीपांश्च दापयेत्। सर्व्वं निवेद्य मन्त्रेण ततो गच्छेत् प्रदक्षिणम्। प्रणम्य शिरसा भानुमुत्थायैनं क्षमापयेत्। सर्व्वोपहारसंयुक्तं बलिं देवाय चाहरेत्। अव्योमकायेति मन्त्रेण सूर्य्यायामिततेजसे। अनेन विधिवद्देवमर्च्चयित्वा पुरा रविम्। अहं ब्रह्मत्वमापन्नः प्रसादाद्भास्करस्य तु"।

व्योमषष्ठीव्रतं भविष्यपु० "भाजनं तत्र संपूर्णं मधुना च समन्वितम्। दद्यात् कृष्णतिलानां तु प्रस्थमेकन्तु मागधम्। त्रिगुणं तण्डुलानां च पृथक् प्रस्थं च कारयेत्"। भाजनं प्रस्थचतुष्टयपूरणीयं पात्रं त्रिगुणं प्रस्थत्रयम् पृथगिति घृतमधुतिलतण्डुलपात्राणि पृथक् कुर्य्यात्। "गन्धपुष्पैस्तथा धूपैर्नानाद्यैर्विशेषतः। ततः संपूजयेत् सूर्य्यं नानावाद्यसमन्वितम्। सूर्य्यं गगनस्थम्। "पूजयेच्च ततो व्योम बलिं दिक्षु प्रपूजयेत्। व्योमदेवगृहे चैव सर्व्वभूतानि योजयेत्। व्योमदेवगृहे तत्र यत्र व्योम प्रतिष्ठितम्"। व्योमनिर्माणं विष्णुधर्म्मोत्तरात् "चतुरस्रं भवेद्भूमौ तत्र वृत्तं महाभुजम्। ततोऽन्यत् चतुरस्रञ्च प्रथमे संस्थितं शुभम्। भद्रपीठमये प्रोक्तो व्योमभागस्तुरीयकः। तस्मिन् वैश्वानरोऽथास्य मध्यभागः प्रकीर्त्तितः। भद्रपीठवदन्यच्च तत्र पद्मं निवेशयेत्। शुभाष्टपत्रं तन्मध्ये कर्णिकायां दिवाकरः। पत्राष्टके न्यसेत्तस्य दिक्पालान् सर्व्वतो दिशम्"। "य एवं कुरुते षष्ठ्यां सन्ध्याकाले बलिं रवेः। स सूर्य्यलोकमासाद्य मोदते शाश्वतीः समाः"।

व्रतराजतृतीयाव्रतं देवीपु० "तृतीयायान्तु शुक्लायां लिखेद्वस्त्रयुगे शुभे। रोचनामितकर्पूरैः शिवोमां पूजयेत्ततः। हेमरत्नध्वजैर्वत्स! मन्त्रमुच्चमुदीरयेत्। सर्व्वकामफलदं यत्तत् पूर्व्वमुदाहृतम्। ततो जपार्च्चनं होमं कर्त्तव्यं द्विजसत्तम!। अवियोगाय नारीणां व्रतराजं सदा स्थितम्। सहेमपुष्परत्नाढ्यं वस्त्रं दापयेत्तु तम्। महापुण्यं महाभाग्यं सर्व्वकामप्रदायकम्। सुतस्नेहवियोगस्तु न भवेत्तेन भो द्विज!। न व्याधिर्नोपसर्गाश्च यावत्तन्तुरजो भवेत्। तावत्कालस्तु सा लोके राजते मोदते चिरम्"।

शक्रव्रतं विष्णुधर्मोत्तरे “आश्वयुज्यां व्यतीतायां पौर्णमास्यां नरो भुवि। सोपवासः सुरेन्द्रस्य देवं संपूजयेत्तथा। शचीमैरावतं वज्रं मातलिञ्च नराधिपः। गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा। संवत्सरान्ते कनकस्य दत्त्वा प्राप्नोति लोकं स पुरन्दरस्य। मानुष्यमासाद्य नरेन्द्रपूज्यो राजा भवेद्वा द्विजपुङ्गवो वा”। पद्मपु० “आकाशाशी समां दद्याद्धेनुमन्ते पयस्विनीम्। शक्रलोकमवाप्नोति शक्रव्रतमिदं स्मृतम्”।

शङ्करनारायणव्रत देवीपु० “कथितं शङ्करीनाम्न्यं व्रतं मनसि तुष्टिदम्। श्रोतुमिच्छाम्यहन्नाथ विष्णुशङ्करसंज्ञितम्”। मनुरुवाच “यथा धर्मेश्वरन्नाथ तथा कार्य्यमिदं व्रतम्। किन्तु पीतानि वासांसि केशवाय प्रकल्पयेत्। गन्धपुष्पं तथा धूपं सुगन्धञ्च जनार्दने। कार्य्यं पूजनसम्भारे लड्डुकादिरसं दधि। एवन्तौ पूजयित्वा तु प्रतिमास्थण्डिलेऽपि वा। आहूय ब्राह्मणौ वत्स! वेदवेदाङ्गपारगौ। यती वा व्रतसम्पन्नौ जटाकाषायधारिणौ। तौ भोजयेद्विधानेन स्मृत्वा पार्व्वतीजनार्दनौ। समाप्य विधिना वत्स! सर्वकामप्रसाधकौ। भूमाल्यं दक्षिणां विप्रमौलिकं शङ्कराय च। दत्त्वानुव्रजतो लोकौ क्रमाद्द्विजवरे ततः”।

शङ्करार्कव्रतं कालिकापु० “अथ चानेन मार्गेण शुभां तामेव चाष्टमीम्। समाप्यादित्ययोगेन प्राग्विधानेन वा नरः। किन्तु दक्षिणनेत्रस्य भास्करञ्चार्चयेद्बुधः। पद्मरागेण हैमेन योज्यं टङ्कलेपनं शृणु। नेत्रे न्यस्य ललाटाधः कुङ्कुमं रक्तचन्दनम्। वृत्तन्तु योज्य मध्ये तु हरं पूर्ववदर्चयेत्”। अर्द्धचन्द्राकारं तन्मध्ये वृत्तञ्च कृत्वा हेमनिबद्धं पद्मरागं वृत्तमध्ये निधाय सूर्य्यरूपनेत्रं कुर्य्यादित्यर्थः। “अभावे पद्मरागादेर्हैमं सर्वत्र योजयेत्। रुद्रवीजं परं पूतं यतस्तच्चैव सर्वदा। शुक्लमाल्याम्बरं वत्स नैवेद्यं च घृतप्लुतम्। शेषः पूर्वविधानेन कर्त्तव्यो विधिविस्तरः। किन्तु प्रोष्य प्रकुर्वीत सप्तम्यां विजितेन्द्रियः। शङ्करार्कयुतं पूज्य घृतं गव्यञ्च पारयेत्”।

शनिव्रतं भविष्योत्तरे “शनौ शनस्य दिवसे स्नानमभ्यङ्गपूर्वकम्। कार्य्यं देयञ्च विप्राय तैलमभ्यङ्गहेतवे। यस्तु संवत्सरं यावत् प्राप्ते शनिदिने नरः। तैलं ददाति विप्राणां श्रद्धयाप्यञ्जनस्य तु। ततः संवत्सरस्यान्ते प्राप्ते तस्य दिने पुनः। लोहपात्रार्पितं चीरं तैलकुम्भे विनिक्षिपेत्। लौहे वा मृण्मये चाथ कृष्णवस्त्रयुगान्वितम्” इत्यादि।

शर्करासप्तमीव्रतं पद्मपु० “शर्करासप्तमीं वक्ष्ये सर्वकल्मषनाशिनीम्। आयुरारोग्यमैश्वर्य्यं ययानन्त्यं प्रजायते। माधवस्य सिते पक्षे सप्तम्यां श्रद्धयान्वितः। प्रातः स्नात्वा तिलैः शुक्लैः शुक्लमाल्यानुलेपनः। स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम्। तस्मिन्नियमः सवित्रे धूपं पुष्पं निवेदयेत्। स्थापयेदव्रणं कुम्भं शर्करापात्रसंयुतम्। शुक्लवस्त्रेण संवेष्ट्य शुक्लमाल्यानुलेपनैः। सहिरण्यं यथाशक्त्या मन्त्रेणानेन पूजयेत्” इत्यादि।

शाकसप्तमीव्रतं भविष्यपु० “सप्तम्यां सोपवासस्तु रात्रौ भुङ्क्ते तु यो नरः। कृतोपवासः षष्ठ्यां तु पञ्चम्यामेककालभुक्। दत्त्वा तु संस्कृतं शाकं भक्ष्यभोज्यैः सुसंस्कृतम्। देवाय ब्राह्मणेभ्यश्च रात्रौ भुञ्जीत वाग्यतः। यावज्जीवं नरः कश्चिद्व्रतमेतच्चरिष्यति। तस्य श्रीर्विजयश्चैव त्रिवर्गश्च विवर्द्धते। मृतः स्वर्गमवाप्नोति विमानवरमास्थितः”। “शाकं सुसंस्कृतं कृत्वा भक्ष्यभोज्यसमन्वितम्। दत्त्वा विप्रे यथाशक्त्या पश्चाद्भुङ्क्ते निशि व्रती। कार्त्तिके शुक्लपक्षस्य चाद्योऽयं कुरुनन्दन!। चतुर्भिरपि मासैस्तु पारणं प्रथमं स्मृतम्। अगस्ति कुसुमैश्चात्र पूजा कार्य्या विभावसोः”। कार्त्तिकशुक्लसप्तम्यामारभ्य प्रतिमासं कुर्वता पुनर्मासचतुष्टयम् यावत् शुक्लसप्तमी तस्यां तस्याञ्च पारणं कार्य्यम्। एकस्मिन् वर्षे वारत्रयं पारणं भवति एवमेव वर्षान्तरेषु तादृशं व्रतं यावज्जीवं कर्त्तव्यम्”।

शान्ताचतुर्थीव्रतं भविष्यपु० “माघमासि तथा शुक्ला या चतुर्थी महीपते!। सा सर्वशान्तिदा नित्यं शान्तिं कुर्य्यात् सदैव हि। स्नानं दानं बलिः कर्म सर्वमस्यां कृतं विभो!। भवेत् सहस्रगुणितं प्रसादाद्दन्तिनः सदा। कृत्वोपवासं यस्तस्यां पूजयेद्विघ्ननायकम्। तस्यां होमादिकं कर्म भवेत् साहस्रिकं नृप!। लवणं गुडपूर्णञ्च घृताक्तं तत्र भारत!। दत्त्वा भक्त्या तु विप्रेभ्यः फलं साहस्रिकं लभेत्”।

शान्तितृतीयाव्रतं गरुडपु० “तृतीयायां महाभाग! कर्त्तव्यस्य व्रतं शृणु। येनानन्तभवारण्येन नः चापयति द्विज!। ग्रहपीडादिकैरन्यैरुपसर्गैः प्रपीडितः। यस्यां शान्तिं प्रकुर्वीत यतवाक्कायमानसः। स्थण्डिलं रचयित्वा तु नदीतीरजमृत्तिकैः। अष्टाङ्गं मण्डलं कुर्य्यादाश्रवपित-

तण्डुलैः । तत्र चावाहयेद्देवं नरसिंहाकृतिं विभुम् । प्रसन्नमधुरोदारवीक्षणाक्षपितार्त्तिकम् । अशेषभयविध्वंसचतुरं पुरुषं हरिम् । अभयं भयतप्तानां ददतं ददतं वरम्” इत्यादि । “होमाच्च द्विगुणं प्राज्ञस्तर्पणं मन्त्रनिश्चयः । तस्य तद्द्विगुणं प्राज्ञ जप एष विधिक्रमः । नियोगारम्भसमये नियमान् प्रतिपालयेत् । त्रयं चाहरहः कुर्व्वन् नक्तकालं समापयेत्” । नियमान् मौनादीन् । त्रयञ्चाहरहः पूर्व्वं नक्तकालं समापयेत् । त्रयं होमतर्पणजपान् अहरहः प्रतिदिनं संख्या च सङ्कल्पितहोमसंख्यापेक्षया । “हविष्याशी जितक्रोधो यतवाक्कायमानसः । नित्यं त्रिःषवणं स्नायात् सदाचाररतो मुनिः । न चानृतकथोऽनग्निर्ब्रह्मचारी जितश्रमः” । यस्त्वेतत् कुरुते मर्त्त्यः श्रद्धाभक्तिसमन्वितः । स सर्व्वार्त्तिविनिर्मुक्तो शान्तिमाप्नोति नैष्ठिकीम्” ।

शान्तिपञ्चमीव्रतं भविष्यपु० “तद्वद्भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः । यत्रालिख्य नरो नागान् कृष्णवर्णादिवर्णकैः । पूजयेद्गन्धधूपैस्तु सर्पिर्गुग्गुलपायसैः । तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः । आसप्तकुलात्तस्य न भयं नागतो भवेत् । तस्मात् सर्व्वप्रयत्नेन नागान् संपूजयेद्बुधः । तथैवाश्वयुजे मासि पञ्चम्यां कुरुनन्दन ! । कृत्वा कुशमयान्नागानिन्द्राण्या सह पूजयेत् । यस्तस्यां विधिवन्नागान् शुचिर्भक्त्या समन्वितः । पूजयेत् कुरुशार्दूल ! तस्य शेषादयो नृप ! । नागाः प्रीता भवन्तीह शान्तिमाप्नोति वा विभो ! । सशान्तिलोकमासाद्य मोदते शाश्वतीः समाः” ।

शान्तिव्रतं वराहपु० “शान्तिव्रतं प्रवक्ष्यामि शृणुष्वैकमना नृप ! । येन चीर्णेन शान्तिः स्यात् सर्व्वदा गृहमेधिनः । पञ्चम्यां शुक्लपक्षस्य कार्त्तिके मासि पार्थिव ! । आरभ्य वर्षमेकन्तु भुञ्जीयादम्लवर्जितम् । नक्तन्तु पूजयेद्देवं हरिं शेषोपरिस्थितम् । एवं यः कुरुते भक्त्या व्रतमेतन्नराधिप ! । तस्य शान्तिर्भवेन्नित्यं नागेभ्यश्चाभयं तथा । शेषाहिभोगशयनस्वपनप्रवृत्तं संपूज्य यः पुरुषं पतगेन्द्रकेतुम् । येनक्तमत्त्यमधुरं सितपञ्चमीषु तेषां न नागजनितं भयमस्ति किञ्चित्” ।

शाम्भरायणीव्रतं भविष्योत्तरे “तस्मात् पार्थ ! प्रयत्नेन प्रतिमासं समाहितः । मासि मास्यच्युतं पूज्य भवेयाख्यानास्तथा । ये शाम्भरायणिकयाचरितव्रतेन वर्षाणि सप्त विधिना सुधियो नयन्ति । ते स्वर्गलोकमभिलभ्य कृताधिवासाः कल्पायुतं सुतशतैरपि न च्यवन्ति” ।

शिलाचतुर्थीव्रतं भविष्योत्तरे “लवणैर्धान्यकैर्युक्तं जीरकं मरिचानि च । हिङ्गु शुण्ठीं हरिद्राञ्च सर्व्वं परिकरं तथा । चतुर्थ्यामेकभक्ताशी सकृद्दत्त्वा कुटुम्बिने । गृहेषु सप्तसु तथा शिलायुक्तानि भारत ! । एतच्छिलाव्रतं नाम लक्ष्मीलोकप्रदायकम्” ।

शिवचतुर्द्दशीव्रतं मत्स्यपु० “शृणुष्वावहितो ब्रह्मन् वक्ष्ये माहेश्वरं व्रतम् । त्रिषु लोकेषु विख्यातं नाम्ना शिवचतुर्द्दशी । मार्गशीर्षे त्रयोदश्यां सितायामेकभोजनः । प्रार्थयेद्देवदेवेशं त्वामहं शरणङ्गतः । चतुर्द्दश्यां निराहारः समभ्यर्च्च्य च शङ्करम् । सुवर्णवृषभं दत्त्वा भोजयेच्चापरेऽहनि । एवं नियमकृत् सुप्त्वा प्रातरुत्थाय मानवः । कृतस्नानजपः पश्चादुमया सह शङ्करम् । पूजयेत् कमलैः शुक्लैः गन्धधूपानुलेपनैः” । “पञ्चदश्यां ततः पूज्य विप्रान् भुञ्जीत वाग्यतः । तद्वत् कृष्णचतुर्द्दश्यामेतत् सर्व्वं समाचरेत् । चतुर्द्दशीषु सर्व्वासु कुर्य्यात् पूर्व्ववदर्च्चनम् । ये तु मासविशेषास्तु तान्निबोध क्रमादिह । मार्गशीर्षादिमासेषु क्रमादेतदुदीरयेत्” । आश्विनान्तेष्विति शेषः इत्यादि ।

शिवनक्तव्रतं भविष्यपु० “कृष्णाष्टमीं तु नक्तेन कृत्वा कृष्णचतुर्द्दशीम् । इह भोगानवाप्नोति परत्र शिवमृच्छति” ।

शिवरथव्रतं विष्णुधर्म्मोत्तरे “कृत्वैकभक्तं हेमन्ते माघमासे तु यन्त्रितः । माघान्ते च रथं कुर्य्याच्चित्रवस्त्रोपशोभितम् । श्वेतैश्चतुर्भिः संयुक्तं वृषभैः समलङ्कृतम् । शोभितं ध्वजमालाभिश्छत्रचामरदर्पणैः । तण्डुलाढकपिष्टेन लिङ्गं कृत्वा सवेदिकम् । विन्यस्य रथमध्ये तु पूजयेत् कृतलक्षणम् । तद्रात्रौ राजमार्गे च शङ्खभेर्य्यादिभिः स्वनैः । भ्रामयित्वा ततः पश्चाच्छिवायतनमानयेत् । तत्र जागरपूजाभिः प्रदीपाद्युपशोभितैः । प्रेक्षणीयप्रदानैश्च क्षपयेत् शनैर्निशाम् । प्रभाते स्नापनं कृत्वा तद्भक्तानाञ्च भोजनम् । दीनान्धकृपणानाञ्च यथाशक्त्या च दक्षिणाम् । रथं शोभासमायुक्तं शिवाय विनिवेदयेत् । भुक्त्वा च बान्धवैः सार्द्धं प्रणम्येशं गृहं व्रजेत्” ।

शिवरात्रिव्रतं स्कन्दपु० नागरखण्डे “माघस्य कृष्णपक्षीया तिथिस्त्वेव चतुर्द्दशी । तस्या रात्रिः समाख्याता शिव-

**शिक्षितावर** पु० शिक्षितान्यक्षराणि येन । १व्यासे २शिक्षादातरि गुरौ च त्रिका० ।

**शिख** गतौ भ्वा०पर०सक०सेट् इदित् । शिङ्खति अशिङ्खीत् ।

**शिखण्ड** पु० शिखामम्मति अम–ड तस्य नेत्त्वम्, ६त० । शक० वा । १मयूरपिच्छे अमरः । २चूडायाञ्च मेदि० ।

**शिखण्डक** पु० शिखण्ड इव कन् । १काकपक्षे अमरः । (काणजुल्फी) स्त्रीत्वमपि तत्र । सा च २चूडायाञ्च हेमच० । [स्त्रियां ङीप् ।

**शिखण्डिक** पुंस्त्री० शिखण्डोऽस्त्यस्य ठन् । कुक्कुटे हेमच०

**शिखण्डिन्** पु० शिखण्डोऽस्त्यस्य इनि । १मयूरे २द्रुपदराजस्य पुत्रभेदे मेदि० । ३मयूरपुच्छे ४कुक्कुटे ५वाणे च हेमच० । ६गुञ्जायां ७स्वर्णयूथिकायां राजनि० । ८विष्णौ विष्णुस० ९यूथिकायां स्त्री ङीप् मेदि० ।

**शिखर** न० शिखा अस्त्यस्य अरच् आलोपः । १पर्वताग्रे २अग्रमात्रे च । ३वृक्षाग्रे पु०न० अमरः । ४पुलके ५युग्मकटकादौ पक्वदाडिमवीजाभे ६रत्नभेदे ७सकलाग्रे मेदि० । ८कोटौ त्रिका० । ९मूर्वायां स्त्री शब्दच० ।

**शिखरवासिन्** त्रि०शिखरे वसति वस–णिनि ७त० । पर्वताग्रवासिनि स्त्रियां ङीप् । "देवी शिखरवासिनी" उद्भटः सा च हिमाचलवासिन्यां २दुर्गायां त्रिका० ।

**शिखरिन्** पु० शिखाऽस्त्यस्य इनि । १पर्वते २वृक्षे ३अपामार्गे मेदि० । ४कोट्टे ५कोयष्टौ हेमच० । ६वन्दाके ७कुन्दुरुके ८यावनाले ९कर्कटशृङ्ग्यां राजनि० । १०रसालायां खाद्यभेदे स्त्री । ११सप्तदशाक्षरपादके छन्दोभेदे स्त्री "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" वृ०र० १२मल्लिकायां १३रोमावल्यां १४नारीरत्ने च स्त्री मेदि० सर्वत्र ङीप् । [(कुक्कुरचुड़ा) क्षुपभेदे रत्नमा० ।

**शिखलोहित** पुं०शिखाग्रमस्य अच् तथाभूतः सन् लोहितः ।

**शिखा** स्त्री शी–खक् तस्य नेत्त्वम् पृषो० । १अग्निज्वालायां २मस्तकमध्यकेशगुच्छे च अमरः । "सुखं स्वपेत् सर्व गात्राणि कच्छोपस्पृशिखां बहिः" प्रा०त० । ३शाखायां ४बर्हिचूड़ायां ५लाङ्गलिक्याम् ६अग्रमात्रे ७चूड़ामात्रे ८प्रपदे च मेदि० । ९प्रधाने शिफायां १०वृद्धौ हेमच० । ११ज्वरज्वरे शब्दच० ।

"शिखी शिखी कर्म कुर्यात्" स्मृत्या शिखावत एव कर्मण्यधिकारः तत्रापि बद्धशिखस्य कर्मण्यधिकारः न मुक्तशिखस्य यथोक्तं "गायत्र्या तु शिखां बद्ध्वा नैर्ऋत्यां ब्रह्मरन्ध्रतः । जूटिकाञ्च ततो बद्ध्वा ततः कर्म समारभेत्" । "निबद्धशिख आसीनो द्विज आचमनं चरेत् । कृत्वोपवीतं सव्येऽंसे वाङ्मनःकायसंयतः" । मुक्तशिखस्याचमने दोषो यथा "शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा । अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्" आ०त० ।

**शिखाकन्द** न० शिखेव कन्दोऽस्य । गृञ्जने राजनि० ।

**शिखातरु** पु० शिखाया दीपशिखायास्तरुरिव । दीपवृक्षे (देलको) त्रिका० ।

**शिखाधर** पुंस्त्री० शिखां चूडां धरति धृ–अच् । १मयूरे रत्नमा० स्त्रियां ङीष् । २शिखाधारके त्रि० स्त्रियां टाप् । ३मञ्जुघोषे पु० त्रिका० ।

**शिखामूल** न०शिखेव मूलमस्य । गृञ्जने (गाँजर) राजनि०

**शिखालु** पु०शिखाऽस्त्यस्य आलुच् । मयूरशिखावृक्षे राजनि०

**शिखावत्** पु० शिखा ज्वालाऽस्त्यस्य मतुप् मस्य वः । १वह्नौ २चित्रकवृक्षे च अमरः । ३केतुग्रहे शब्दच० । ४शिखायुते त्रि०स्त्रियां ङीप् । सा च ५मूर्वायां शब्दच०

**शिखावर** पु० शिखां वृणोति वृ–अच् । पनसवृक्षे शब्दच०

**शिखावल** पुंस्त्री० शिखाऽस्त्यस्य वलच् । १मयूरे अमरः । स्त्रियां ङीष् । २मयूरशिखावृक्षे स्त्री राजनि० टाप् ।

**शिखावृद्धि** स्त्री प्रतिदिनमाशृद्धौ वृद्धिशब्दे दृश्यम् ।

**शिखिकण्ठ** न० शिखिनो मयूरस्य कण्ठस्तद्वर्णोऽस्त्यस्य अर्श आद्यच् । तुत्थे (तुँते) रत्नमा० ।

**शिखिग्रीव** पु० शिखिनो मयूरस्य ग्रीवा तद्वर्णोऽस्त्यस्य अच् । तुत्थे (तुँते) अमरः ।

**शिखिध्वज** शिखिनो वह्नेर्ध्वज इव । १धूमे त्रिका० । शिखी मयूरो ध्वजो यस्य । २कार्त्तिकेये शब्दच० ।

**शिखिन्** पु०शिखा अस्त्यस्य इनि । १मयूरे २वह्नौ ३चित्रकवृक्षे अमरः । ४केतुग्रहे ५कुक्कुटे ६वृक्षे ७वृषे ८शरे च मेदि० । ९अश्वे हेमच० १०अजलोम्नि रत्नमा० ११पर्वते १२ब्राह्मणे १३शितावरे १४मेथिकायां राजनि० १५शिखायुक्ते त्रि० १६मयूरशिखावृक्षे राजनि०स्त्री ङीप् ।

**शिखिप्रिय** पु०शिखिनं प्रीणयति प्री–क । लघुबदरे राजनि० ।

**शिखिमण्डल** पु० शिखिनां मण्डलमिव यत्र । वरुणवृक्षे शब्दर० । [अजमोदायां राजनि० ।

**शिखिमोदा** स्त्री शिखिनः अजलोम्न इव मोदो यस्याः ।

**शिखियूप** पु०शिखी शिखावान् यूप इव । श्रीकारिणि मृगे राजनि० । [कुष्माण्डे शब्दर०

**शिखिवर्द्धक** पु० शिखिनं वर्द्धयति वृध–णिच्–ण्वुल् ।

**शिखिवाहन** पु० शिखी मयूरो वाहनं यस्य। कार्त्तिकेये अमरः।

**शिखिव्रत** न० "प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः। वैश्वानरपदं याति शिखिव्रतमिदं स्मृतम्" गरुडपु० १२९ अ० उक्ते वह्निपददायके व्रतभेदे।

**शिग्रु** पु० शि–रक् गुक् च। (सजिना) १वृक्षे २शाकमात्रे च अमरः। "शोभाञ्जनो नीलशिग्रुस्तीक्ष्णगन्धो जनप्रियः। मुखमोदः कृष्णशिग्रुर्बहुमूलो रुचिराञ्जनः। शोभाञ्जनस्तीक्ष्णकटुः स्वादूष्णः पिच्छिलस्तथा। जन्तुवातार्त्तिशूलघ्नगुल्मघ्नो रोचनः परः। श्वेतशिग्रुः सुतीक्ष्णः स्यान्मुखभङ्गः सिताह्वयः। मधूकः श्वेतमरिचो रोचनो मधुशिग्रुकः। श्वेतशिग्रुः कटुस्तीक्ष्णः शोफानिलनिकृन्तनः। वक्त्रव्याधिहरो रुच्यो दीपनो मुखजाड्यनुत्। रक्तको रक्तशिग्रुः स्यान्मधुरो बहुलच्छदः। सुगन्धिः केशरी सिंहो मृगारिश्च प्रकीर्त्तितः। रक्तशिग्रुर्महावीर्यो मधुरश्च रसायनः। शोफाध्मानसमीरार्त्तिपित्तश्लेष्मापहारकः" राजनि०।

**शिग्रुज** न० शिग्रुतो जायते जन–ड। श्वेतमरिचे शोभाञ्जनबीजे अमरः हेम०। शिग्रुबीजमप्यत्र शब्दच०।

**शिघ** आघ्राणे भ्वा० पर० सक० सेट् इदित्। शिङ्घति अशिङ्घीत्।

**शिङ्घाण** न० शिघि–आनच् पृषो० णत्वम्। १काचपात्रे २लौहमले ३नासिकामले श्लेष्मणि च मेदि०। स्वार्थे क। नासिकामले न०।

**शिज** अस्फुटध्वनौ इदित् वा चु० उभ० पक्षे अदा० आत्म० अक०सेट्। शिञ्जयति ते शिङ्क्ते अशिशिञ्जत् त अशिञ्जिष्ट। भ्वादिरप्ययं पर० इत्येके तेन शिञ्जति अशिञ्जीत्।

**शिञ्जा** स्त्री शिजि–भावे अ। १भूषणशब्दे शब्दर०। शिजि-अच्। २धनुर्गुणे हेमच०।

**शिञ्जित** न० शिजि–भावे क्त। भूषणध्वनौ अमरः।

**शिञ्जिनी** स्त्री शिञ्जति शिजि–णिनि। धनुर्गुणे अमरः। २नूपुरे हेमच०।

**शिट** अनादरे भ्वा०पर०सक० सेट्। शेटति अशेटीत्।

**शिण्डाकी** स्त्री खाद्यद्रव्यभेदे यथा "शिण्डाकी राजिकायुक्तैः स्यान्मूलकदलद्रवैः। सर्षपस्तम्बसैर्वापि शालिपिष्टकसंयुतैः। शिण्डाकी रोचनी गुर्वी पित्तश्लेष्मकरी मता" राजनि०।

**शित** त्रि० शो–क्त। १दुर्बले २शाणिते च मेदि० ३कृशे विश्वः

**शितद्रु** पु० शतं द्रवति द्रु–कु–नि०। (शतद्रु) नदीभेदे अमरः। [२गोधूमे त्रिका०।

**शितशूक** पु० शितस्तीक्ष्णः शूकोऽग्रं यस्य। १यवे अमरः।

**शिति** पु० शि–क्तिच्। १भूर्जपत्रवृक्षे २शुक्लवर्णे ३कृष्णवर्णे च मेदि० ४तद्वति त्रि०। ५सारे पुंस्त्री० शब्दर०।

**शितिकण्ठ** पु० शितिः नीलः कण्ठो यस्य। १शिवे अमरः। २दात्यूहविहगे पुंस्त्री० त्रिका० स्त्रियां ङीष्।

**शितिचार** पु० शितिः सन् चरति चर–संज्ञायां कर्त्तरि घञ्। (सुषनि) शाकभेदे जटा०।

**शितिच्छद** पु० शितिः शुभ्रः छदो यस्य। हंसे शब्दर०।

**शितिसारक** पु० शितिः शुभ्रः सारो यस्य कप्। तिन्दुकवृक्षे राजनि०।

**शिथिल** त्रि० श्लथ–किलच् पृषो०। १श्लथे २अदृढे संयोगभेदे ३मन्दे च "शिथिलसंयोगश्च प्रचयः। "प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते" भाषा० "भूयोऽवयवावच्छेदेनावयवान्तरसंयोगिन्यवयवे वर्त्तमानः संयोगः प्रचयः" इति दीनकरी यथा तूलकादौ।

**शिनि** पु० शि–निक्। यदुवंश्ये क्षत्रियभेदे यस्य सात्यकिर्नप्ता।

**शिपि** पु० शो–क्विप् तां पाति पा–कि पृषो० ह्रस्वः। १रश्मौ २जले न० "शैत्यात् प्रवनयोगाच्च शिपि वारि प्रचक्षते। तत्पानाद्रक्षणाच्चैव शिपयो रश्मयो मताः। तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते" व्यासः।

**शिपिविष्ट** पु० ७त०। १खलतौ २दुश्चर्म्मणि च ३महेश्वरे अमरः। ४विष्णौ शिपिशब्दे दृश्यम्। "नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः" विष्णुस०। पृषो० शिपिविष्ट तत्रार्थे रमानाथः।

**शिप्र** पु० शि–रक् पुक् च। १सरोवरभेदे २नदीभेदे स्त्री। "एवं विवाह्य विधिवत् सौवर्णे मानसाचले। अरुन्धतीं वशिष्ठस्तु मोदमाप तया सह। तत्र यत् पतितं तोयं मानसाचलकन्दरे। विवाहावभृतार्थाय शान्त्यर्थं वसुधातले। ब्रह्मविष्णुमहादेवपाणिभिः समुदीरितम्। तत्तोयं सप्तधा भूत्वा पतितं मानसाचलात्। हिमाद्रेः कन्दरे सानौ सरस्याञ्च पृथक् पृथक्। तत्तोयं पतितं शिप्रे देवसौख्ये सरोवरे। तेन शिप्रा नदी जाता विष्णुना प्रेरिता क्षितिम्" कालिकापु० २२अ०। "ततो हिमवतः प्रस्थे प्रतीच्यां नरपुरस्य च। शिप्रं नाम सरः पूर्णं ददृशुर्हिमवादयः। तत्र हंसा मानसाद्या अब्जगन्धादयः सुराः। उपविष्टाः सुधान्वायु

पुरस्थय महेश्वरम्। तं शिप्रसंज्ञकासारं मनोज्ञं सर्वदेहिनाम्। शीतामलजलं सर्वैर्गुणैर्मानससम्मितम्। दृष्ट्वा क्षणं स्मरंस्तस्मिन् सकौतुक्योऽभूद्वेक्षणे। शिप्रां नाम नदीं तस्मान्निःसृतां दक्षिणोदधिम्। गच्छन्तीञ्च ददृशाते पावयन्तीं जगज्जनान्"। तत्रैव १६ अ०।

**शिफा** स्त्री शि–फक्। वृक्षाणां १जटाकारे मूले। (शिकड़) अमरः। २नद्यां ३मांसिकायां ४मातरि मेदि०। ५शतपुष्पायां ६हरिद्रायां राजनि०। ७पद्मकन्दे शब्दर०। जटाकारे मूले पु० विद्याविनोदः।

**शिफाक** पु० शिफेव स्वार्थे कन्। पद्ममूले शब्दच०।

**शिफाकन्द** पु० शिफेव कन्दः। पद्ममूले अमरः।

**शिफाधर** पु० शिफा अधरा यस्मात्। शाखायां शब्दच०।

**शिफारुह** पु० शिफायां रोहति रुह–क। वटवृक्षे राजनि०

**शिमुड़ी** स्त्री (चकोनि) ख्याते क्षुपभेदे राजनि०।

**शि(सि)म्बा** स्त्री शाम्यति समति वा शम–सम–वा बा० उन्वच पृषो०। (छिमी) ख्याते १पदार्थे शब्दच०। २चक्रमर्दे पु० शब्दच०।

**शि(म्बि)म्बी** स्त्री शम–बि नि० वा ङीप्। १शिम्बायां (शिम्) लतायां हेमच० "महापापकरी शिम्बी" ति०त० २वरकायाञ्च भावप्र०। स्वार्थे क। तत्रैव।

**शिम्बीधान्य** न० शिम्बीजातं धान्यं शा०त०। मुद्गादौ धान्यभेदे भावप्र०। [शब्दर० कप् तत्रैव।

**शिम्बीपर्णी** स्त्री शिम्बीव पर्णमस्याः ङीप्। मुद्गपर्ण्यां

**शिर** न० शॄ–क। १मस्तके जटा० "पिण्डं दद्यात् गयाशिरे" वायुपु०। २पिप्पलीमूले मेदि०। ३शय्यायाम् ४अजगरे च संक्षिप्तसा०।

**शिरःफल** पु० शिर इव फलमस्य। नारिकेले त्रिका०। [शब्दच०

**शिरःशूल** न० शिरसः शूलमिव तापकत्वात्। शूलरोगभेदे

**शिरज** पु० शिरे जायते जन–ड। केशे शब्दच०।

**शिरस्** न० शॄ–असुन् नि०। १मस्तके २शिखरे अमरः। ३प्रधाने ४सेनाग्रे मेदि०।

**शिरसिज** पु० शिरसि जायते जन ड वा अलुक् समासः। केशे जटाध० लुकि शिरोजोऽप्यत्र। [केशे शब्दच०।

**शिरसिरुह** पु० शिरसि रोहति रुह–क वा अलुक् समा०।

**शिरस्क** न० शिरसि कायति प्रकाशते कै–क। शिरस्त्राणे हेमच०

**शिरस्त्र** न० शिरस्त्रायते त्रै–क। शिरोरक्षके उष्णीषे अमरः

**शिरस्त्राण** न० शिरस्त्रायते अनेन त्रै–करणे ल्युट्। शिरोरक्षणे उष्णीषे हेमच०।

**शिरस्य** पु० शिरसि भवः यत्। १निर्मलकेशे अमरः २शिरोभवमात्रे त्रि०। [अस्य दन्त्यादित्वमपीत्यन्ये।

**शिरा** स्त्री शॄ–क। नाड्यां (शिर) मेदि०। स–किरच् डिच्च।

**शिरापत्त्र** पु० शिरेव पत्त्रं यस्य। हिन्तालवृक्षे राजनि०।

**शिराल** न० शिरोऽस्त्यस्य लच्। १कर्मरङ्गे शब्दच०। तत्फलस्य शिरायुक्तत्वात्तथात्वम्। २शिरायुक्ते त्रि०।

**शिरालक** पु० शिरायामलति पर्याप्नोति अल–ण्वुल्। (ङाड़योड़ा) वृक्षभेदे शब्दच०।

**शिरावृत्त** न० शिरेव वर्त्तते वृत–क्त। सीसके राजनि०।

**शिरि** पु० शॄ–कि। १खड्गे २शरे ३हिंस्रे त्रि० उणादि०। ४शलभे सि०कौ०।

**शिरीष** पु० शॄ–ईषन् किच्च। स्वनामख्याते वृक्षे अमरः। "शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः। दोषशोथविसर्पघ्नः कासव्रणविषापहः" भावप्र०।

**शिरीषपत्त्रिका** स्त्री शिरीषस्येव पत्त्रमस्या कप् कापि अत इत्त्वम्। श्वेतकिण्वीवृक्षे राजनि०।

**शिरोगृह** न० शिरःस्थमुपरिस्थं गृहम्। (चिलेघर) चन्द्रशालायां हेमच०।

**शिरोग्रह** पु० "रक्तमाश्रित्य पवनः कुर्य्यात् मूर्द्धधराः शिराः। रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः" भावप्र० उक्ते वातरोगभेदे "मूर्द्धधरा ग्रीवागताः स पवनः शिरोग्रहः स्यादित्यन्वयः" भावप्र०। [हेमच०।

**शिरोधरा** स्त्री शिरोमस्तकं धरति धृ–अच्। ग्रीवायां

**शिरोधि** स्त्री शिरो धीयतेऽत्र धा–कि। ग्रीवायाम् अमरः

**शिरोमणि** पुंस्त्री० शिरसि धार्य्यो मणिः शा०त०। शिरोधार्य्ये रत्ने चूडामणौ शब्दच०। स्त्रीत्वे वा ङीप्। शिरोरत्नादयोऽप्यत्र न०।

**शिरोमर्म्मन्** पु० शिरसि मर्म यस्य। शूकरे हेमच०।

**शिरोरुजा** स्त्री शिरो रुजति व्यथयति रुज–क। १महाश्वेतवृक्षे त्रिका०। ६त०। २मस्तकरोगे च।

**शिरोरुह** पु० शिरसि रोहति रुह–क। केशे अमरः।

**शिरोरोग** पु० ६त० सुश्रुतोक्ते मस्तकरोगभेदे तल्लक्षणं यथा "अथातः शिरोरोगविज्ञानीयमध्यायं व्याख्यास्यामः। शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः३। सन्निपातेन४ रक्तेन५ क्षयेण६ क्रिमिभि७स्तथा। सूर्य्यावर्त्तानन्तवात९र्द्धावभेदक१०शङ्खकैः११। एकादशप्रकारस्य लक्षणं संप्रवक्ष्यते। यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम्। बन्धोपतापैश्च भवेद्विशेषः शिरो-

ऽभितापः स समीरणेन१ । यस्योष्णमङ्गारचितं यथैव भवेच्छिरो धूमयतीव नासा । शीतेन रात्रौ च भवेद्विशेषः शिरोऽभितापः स तु पित्तकोपात्२ । शिरोगलं यस्य कफोपदिग्धं गुरु प्रतिष्टब्धमथो हिमञ्च । शूनाक्षिकूटं वदनं च यस्य शिरोऽभितापः स कफप्रकोपात्३ । शिरोऽभितापे त्रितयप्रवृत्ते४ सर्वाणि लिङ्गानि समुद्भवन्ति । रक्तात्मकः५ पित्तसमानलिङ्गः स्पर्शासहत्वं शिरसो भवेच्च । वसाबलासक्षतसम्भवानां शिरोगतानामिह संक्षयेण । क्षयप्रवृत्तः६ शिरसोऽभितापः कष्टो भवेदुग्ररुजोऽतिमात्रम् । संस्वेदनच्छर्दनधूमनस्यैरसृग्विमोक्षैश्च विवृद्धिमेति । निस्तुद्यते यस्य शिरोऽतिमात्रं संभक्ष्यमाणं स्फुरतीव चान्तः । घ्राणाच्च गच्छेत्सलिलं सरक्तं शिरोऽभितापः कृमिभिः७ स घोरः । सूर्य्योदयं या प्रतिमन्दमन्दमक्षिभ्रुवं रुक् समुपैति गाढम् । विवर्द्धते चांशुमता सहैव सूर्य्यापवृत्तौ विनिवर्त्तते च । शीतेन शान्तिं लभते कदाचिदुष्णेन जन्तुः सुखमाप्नुयाच्च । तं भास्करावर्त्तमुदाहरन्ति सर्वात्मकं कष्टतमं विकारम् । दोषास्तु दुष्टास्त्रय एव मन्यां संपीड्य घाटां सरुजां सुतीव्राम् । कुर्वन्ति साक्षिभ्रुवशङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु । गण्डस्य पार्श्वेषु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान् । अनन्तवातं८ तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम् । यस्योत्तमाङ्गार्द्धमतीव जन्तोः सम्भेदतोदभ्रमशूलजुष्टम् । पक्षाद्दशाहादथ वाप्यकस्मात्तस्यार्द्धभेदं१० त्रितयाद्व्यवस्येत् । शङ्खाश्रितो वायुरुदीर्णवेगः कृतानुयात्रः कफपित्तरक्तैः । रुजः सुतीव्राः प्रतनोति मूर्ध्नि विशेषतश्चापि हि शङ्खयोस्तु । सुकष्टमेनं खलु शङ्खकाख्यं११ महर्षयो वेदविदः पुराणाः । व्याधिं वदन्त्युद्धतमृत्युकल्पं भिषक्सहस्रैरपि दुर्निवारम्" ।

**शिरोवल्ली** स्त्री शिरसा वल्लीव । मयूरचूड़ायां शब्दच० ।

**शिरोवृत्त** न० शिर इव वृत्तं वर्त्तुलम् । मरिचे राजनि० ।

**शिरोवृत्तफल** पु० शिरोवृत्तं मरिचमिव फलमस्याः । रक्तापामार्गे भावप्र० । [त्रिका० ल्युट् । तत्रैव न० ।

**शिरोवेष्ट** पु० वेष्ट-घञ् शिरसो वेष्टः । (पागड़ी) उष्णीषे

**शिल** उञ्छे कणश आदाने तुदा० पर० सक० सेट् । शिलति अशेलीत् ।

**शिल** न० शिल-क । गृहीतशस्यात् क्षेत्रात्कणशो मञ्जर्य्या दानरूपायां वृत्तौ उञ्छशब्दे १०७० पृ० द्रष्टव्यम् ।

२पाषाणे ३द्वाराधःस्थितकाष्ठखण्डे च (गोबराट) स्त्री अमरः । ४स्तम्भशीर्षे ५मनःशिलायां स्त्री मेदि० ६कर्पूरे राजनि० । [पाषाणभेदवृक्षे स्त्री राजनि० ।

**शिलगर्भजः** पु० शिलाया गर्भे जायते संज्ञायां ह्रस्वः ।

**शिलाकर्णी** स्त्री शिलेव कर्णमस्य ङीप् । शल्लकीवृक्षे शब्दच०

**शिलाकुट्टक** पु० शिलां कुट्टयति कुट्ट-ण्वुल् । १पाषाणभेदके अस्त्रभेदे शब्दच० । शिलया कुट्टति विचूर्णीकरोति । २अश्मकुट्टके वानप्रस्थभेदे ।

**शिलाज** न० शिलातो जायते जन-ड । १शैलेये गन्धद्रव्ये शब्दच० । २लौहे राजनि० ।

**शिलाजतु** न० शिलाजातं जतु । १पर्वतजाते उपधातुभेदे अमरः । तदुत्पत्त्यादिकं भावप्र० उक्तं यथा

"निदाघे घर्मसन्तप्ता धातुसारम्धराधराः । निर्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्त्तितम् । सौवर्णं राजतन्ताम्रमायसन्तच्चतुर्विधम् । शिलाजत्वद्रिजतु च शैलनिर्य्यास इत्यपि । गैरेयमश्मजञ्चापि गिरिजं शैलधातुजम् । शिलाजं कटु तिक्तोष्णं कटुपाकं रसायनम् । छेदि योगवहं हन्ति कफमेदोऽश्मशर्कराः । मूत्रकृच्छ्रं क्षयं श्वासं वातार्शांसि च पाण्डुताम् । अपस्मारं तथोन्मादं शोथकुष्ठोदरकृमीन् । सौवर्णन्तु जवापुष्पवर्णं भवति तद्रसात् । मधुरं कटुतिक्तञ्च शीतलं कटुपाकि च । राजतं पाण्डुरं शीतं कटुकं स्वादुपाकि च । ताम्रं मयूरकण्ठाभं तीक्ष्णमुष्णञ्च जायते । लौहं जटायुपक्षाभं तत्तिक्तं लवणं भवेत् । विपाके कटुकं शीतं सर्वश्रेष्ठमुदाहृतम्" । [ङीप् । कालाञ्जनीवृक्षे राजनि० ।

**शिलाञ्जनी** स्त्री शिला अज्यतेऽनया अञ्ज-करणे-ल्युट्

**शिलाटक** पु० शिलेव अटति शिलामटति वा अट-ण्वुल् । १अट्टे २बिले च मेदि० ।

**शिलात्मज** न० शिलाया आत्मज इव । लौहे राजनि० ।

**शिलात्मिका** स्त्री शिलेव आत्मा यस्य कप् । (मूचि) मूषायां शब्दच० ।

**शिलादद्रु** पु० शिलाया दद्रुरिव । शैलेये गन्धद्रव्ये राजनि०

**शिलाधातु** पु० शिलाया धातुरधातुरिव शुभ्रत्वात् । १श्वेतोपले (खडी) त्रिका० । २पीतवर्णे गैरिकभेदे च राजनि० । [प्रस्तरखण्डभेदे शब्दच० ।

**शिलापुत्र** पु० शिलायाः पुत्र इव । (नोड़ा) पेषणसाधने

**शिलापुष्प** न० शिलायाः पुष्पमिव । शैलेये गन्धद्रव्ये राजनि०

**शिलाभव** न० शिलायां भवति भू-अच् ७त० । शैलेये जटाध०

**शिलाभेद** पु० शिलामपि भिनत्ति भिद–अण् । १पाषाणभेदिटङ्के रत्नमा० २पाषाणभेदकाख्ये च ।

**शिलारम्भा** स्त्री शिलेव रम्भा । काष्ठकदल्यां राजनि० ।

**शिलावल्का** स्त्री शिलेव कठिनः वल्को यस्याः । (शिलाबाक) इति प्रसिद्धे वृक्षभेदे शिलात्वगप्यत्र राजनि० [त्रिका०।

**शिलाव्याधि** पु० शिलाया व्याधिरिव । शैलेये गन्धद्रव्ये

**शिलासन** न० शिला आसनं यस्य । शैलेये गन्धद्रव्ये शब्दर० २शिलानिर्म्मिते आसने च ।

**शिलासार** न० शिलायाः सार इव । लौहे हेमच० ।

**शिलि** पु० शिल–कि । १भूर्जपत्त्रवृक्षे शब्दमा० । द्वाराधःस्थे २काष्ठे ( गोबराट ) स्त्री शब्दर० । ३भेक्यां ४छत्राकपुष्पे ५स्तम्भशीर्षे च मेदि० स्त्री ङीप् ।

**शिलिन्द** पुंस्त्री० शिलिं ददाति दा–क पृषो० । स्वनामख्याते मत्स्यविशेषे "शिलिन्दः श्लेष्मलो बल्यो विपाके मधुरो गुरुः । आमवातकरो हृद्यो वातपित्तहरो मतः" राजवल्लभः । स्त्रियां ङीष् ।

**शिलीन्ध्र** न० शिलीं धरति धृ–क पृषो० मुम् । १कदलीपुष्पे २कवके च मेदि० ३शिलपुटायां विश्वः । [हारा०।

**शिलीन्ध्रक** न० शिलीन्ध्र इव इवार्थे–कन् । गोमयच्छत्राके

**शिलीपद** पु० शिली द्वाराधःस्थकाष्ठमिव पदमस्मात् । रोगभेदे (गोद) शब्दर० पृषो० । श्लीपदमप्यत्र न० भावप्र० । तन्निदानादि भावप्र० उक्तं यथा "पुराणोदकभूयिष्ठाः सर्वर्त्तुषु च शीतलाः । ये देशास्तेषु जायन्ते श्लीपदानि विशेषतः" । विशेषत इति वचनेनान्यत्रापि श्लीपदं भवतीति बोध्यते । अथ श्लीपदस्य सामान्यलक्षणमाह "यः सज्वरो वङ्क्षणजो भृशार्त्तिः शोथो नृणां पादगतः क्रमेण । तत् श्लीपदं स्यात्करकर्णनेत्रशिश्नौष्ठनासास्वपि केचिदाहुः" । तच्च त्रिविधम् वातिकं पैत्तिकं श्लैष्मिकञ्चेति । तत्र तेषां क्रमेण लक्षणान्याह "वातजं कृष्णरूक्षं हि स्फुटितं तीव्रवेदनम् । अनिमित्तरुजञ्चास्य बहुशो ज्वर एव च । पित्तजं पीतसङ्काशं दाहज्वरयुतं भृशम् । श्लैष्मिकन्तु भवेत् स्निग्धं तथा पाण्डुरमस्थिरम् । त्रीण्यप्येतानि जानीयात् श्लीपदानि कफात् पुनः । गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति विना कफात्" । असाध्यमाह "वल्मीकमिव सञ्जातं कण्टकैरुपचीयते । अब्दात्मकं महत्तत्तु वर्जनीयं विशेषतः । यत् श्लैष्मिकाहारविहारजातैर्जातं तथाभूरिकफस्य पुंसः । सास्रावमत्युन्नतसर्वलिङ्गं सकण्डुकञ्चापि विवर्जनीयम्" अचिकित्स्यत्वादिति शेषः ।

[३युक्ते ४जडीभूते च शब्दर० ।

**शिलीमुख** पु० शिलीव मुखमस्य । १भ्रमरे २बाणे अमरः ।

**शिलोच्चय** पु० शिलानामुच्चयो यत्र । पर्वते अमरः ।

**शिलोञ्छ** पु० शिलेनोञ्छः उञ्छ–घञ् । उपात्तशस्यात् क्षेत्रात् शेषावचयने ।

**शिलोत्थ** न० शिलाया उत्तिष्ठति उद्–स्था–क । शैलेये गन्धद्रव्ये राजनि० । शिलोद्भवादयोऽप्यत्र ।

**शिल्प** न० शिल–पक् । १चित्रकलादिकर्म्मणि अमरः । २स्रुचि मेदि० । तदारम्भमुहूर्त्तः मु०चि० उक्तो यथा "मृदुध्रुवक्षिप्रचरे ज्ञे गुरौ वा ख१०लग्नगे । विधौ सजीववर्गस्थे शिल्पारम्भः प्रशस्यते" ।

**शिल्पकारिन्** त्रि० शिल्पं चित्रादिकलां करोति कृ–णिनि । चित्रादिकर्त्तरि ।

**शिल्पका** स्त्री शिल्पमिव कायति कै–क । तृणभेदे राजनि० ।

**शिल्पशाला** स्त्री ६त० । चित्रकरादीनां चित्रकरणगृहे अमरः ।

**शिल्पशास्त्र** न० शिल्पज्ञापकं शास्त्रम् । वास्तुविद्यादिज्ञापके शास्त्रे ।

**शिल्पिन्** त्रि० शिल्पं वेत्त्यधीते वा इनि । १चित्रादिकर्म्मकरे अमरः । २कोलदलौषधौ स्त्री मेदि० ङीप् ।

**शिव** न० शो–वन् पृषो० । १मङ्गले अमरः । २सुखे ३जले उणादि० । ४सैन्धवे सामुद्रे च ५लवणे ६श्वेतटङ्कणे च राजनि० । ७मङ्गलवति त्रि० ८महादेवे पु० अमरः । एवं ९मोक्षे १०कीलपट्टे ११वालुके १२गुग्गुलौ १३वेदे १४पुण्डरीकवृक्षे १५कृष्णधुस्तूरे १६पारदे राजनि० । १७देवे शब्दर० १८लिङ्गे उणादि० १९विष्कुम्भादिषु मध्ये विंशतितमे योगे च पु० ज्यो०त० । "शिवमद्वैतं तुरीयं मन्यन्ते" श्रुत्युक्ते २०अद्वैतब्रह्मणि न० ।

**शिवक** पु० शिव–इव इवार्थे कन् । १कीलके अमरः गवां गात्रकण्डूयनार्थं गोष्ठे निखाते २काष्ठे च भरतः ।

**शिवकाञ्ची** स्त्री ६त० । पुरीभेदे ।

**शिवघर्म्मज** शिवघर्म्माज्जायते जन–ड । मङ्गलग्रहे "पुरा दक्षविनाशाय कुपितस्य त्रिशूलिनः । अपतन् भीमवक्त्रस्य स्वेदबिन्दुर्ललाटजः" इत्यादिना वीरभद्रोत्पत्तिमुक्त्वा तस्यैव मङ्गलग्रहरूपतामाह "शान्तिप्रदानात् सर्वेषां ग्रहाणां प्रथमो भव । प्रेक्षिष्यन्तो जनाः पूजां करिष्यन्ति मतं मम । अङ्गारक इति ख्यातिं गमिष्यति धरात्मज !" मत्स्यपु० ६८अ० ।

**शिवज्ञान** न॰ मासभेदे दण्डभेदेन माहेन्द्रादियोगज्ञापके शास्त्रभेदे “माहेन्द्रे विजयो नित्यममृते कार्य्यशोभनम्। वक्रे कार्य्यविलम्बः स्यात् शून्ये च मरणं भवेत्। वैशाखादिश्रावणान्तमेकभावेन संवदेत्। अमृतादि दिवारात्रौ चतुर्मासं यथाक्रमम्। यामभानं दिवामाने ज्ञेयं सर्व्वत्र मासके। तत्प्रमाणेन ज्ञातव्यं दण्डमान विचक्षणैः। रात्रिमानप्रमाणेन ज्ञेयं दण्डप्रमाणकम्। न वारतिथिनक्षत्रं न योगः करणं तथा। शिवज्ञानं समासाद्य सर्वं सुनिविचारणम्। भाद्रादिमासपर्य्यन्त मन्त्रवारे समादिशेत्। शून्यवक्रादियोगं हि पौषादिचैत्रतस्तथा” ज्योति॰।

**शिवचतुर्द्दशी** स्त्री शिवप्रिया चतुर्द्दशी। फाल्गुनकृष्णचतुर्द्दश्याम्। व्रतशब्दे शिवचतुर्द्दशीव्रतं दृश्यम्।

**शिवताति** स्त्री शिव+तातिल्। मङ्गलपरम्परायां हेमच॰

**शिवदारु** न॰ शिवो देवस्तदादिकं दारु। देवदारुवृक्षे राजनि॰

**शिवदूती** स्त्री शिवो दूतो यस्याः। १दुर्गामूर्त्तिभेदे त्रिका॰ २योगिनीभेदे च “यदा जघान जगतां रक्तवीजं हिताय वै। महादेवी महामाया तदास्याः कायतः सृता। दूतं प्रस्थापयामास शिवं शुम्भाय चाम्बिका। तेन सा शिवदूतीति देवैः सर्वैः प्रगीयते” कालिकापु॰ ६०अ॰। “यः शिवाविरुतं श्रुत्वा शिवदूतीं शिवप्रदाम्। प्रणमेत् साधको भक्त्या तस्य कामाः करे स्थिताः” तत्रैव। “ब्रह्माणी प्रथमा प्रोक्ता ततो माहेश्वरी परा। कौमारी वैष्णवी चैव वाराही पञ्चमी तथा। नारसिंही तथैवैन्द्री शिवदूती तथाष्टमी। एताः पूज्या महाभागाः योगिन्यः कामदायिकाः” तत्रैव। “कौशिक्याः हृदयाद्देवी निःसृता ध्यानतो हरेः। शिवदूतीति विख्याता शिवायतसुसंहृता” तत्रैव।

**शिवद्रुम** पु॰ शिवप्रियः द्रुमः। विल्ववृक्षे राजनि॰।

**शिवद्विष्टा** स्त्री ६त॰। केतक्यां राजनि॰।

**शिवधर्म्म** न॰ शिवस्य तदुपासनार्थो धर्मो यत्र। उपपुराणभेदे “चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम्” कूर्मपु॰।

**शिवधातु** पु॰ ६त॰। पारदे पारदशब्दे दृश्यम्।

**शिवनाभि** पु॰ शिवस्य नाभिरिव। शिवलिङ्गभेदे “शिवनाभिमयं लिङ्गं प्रतिपूज्य महर्षिभिः। श्रेष्ठस्य सर्वलिङ्गेभ्यस्तस्मात् पूज्यं विधानतः” वीरमि॰। अथ समा॰। शिवनाभः शालग्रामशिलाभेदे शालग्रामशब्दे दृश्यम्।

**शिवपुरी** स्त्री ६त॰। काश्यां हेमच॰ शिवनगर्य्यादयोऽप्यत्र।

**शिवप्रिय** न॰ ६त॰। १रुद्राक्षे २महादेववल्लभे त्रि॰ राजनि॰। ३वकवृक्षे जटा॰। ४धुस्तूरे ५स्फटिके च पु॰ राजनि॰। ६दुर्गायां स्त्री शब्दमा॰। [अर्जुनवृक्षे राजनि॰।

**शिवमल्लक** पु॰ शिवः कल्याणकरः मल्ल इव कायति कै–क। 

**शिवमल्ली** स्त्री शिवस्य मल्लीव प्रियत्वात्। वकवृक्षे अमरः।

**शिवरात्रि** स्त्री शिवप्रिया तदुपासनार्था रात्रिः। माघात्परस्यां कृष्णचतुर्द्दश्याम्। तद्रात्रौ हि शिवपूजनव्रतादिकं क्रियते इति तस्याः रात्रेस्तत्प्रियत्वम्। २तद्दिवसकर्त्तव्ये व्रते च। तद्विधानकालादि ति॰त॰ उक्तं यथा कालमाधवीये स्कान्दे नागरखण्डम् “माघमासस्य शेषे या प्रथमे फाल्गुनस्य च। कृष्णा चतुर्द्दशी सा तु शिवरात्रिः प्रकीर्त्तिता”। अत्रैकस्याश्चतुर्द्दश्या माघीयत्वफाल्गुनीयत्वे मुख्यगौणचान्द्रत्वाभ्यां भविष्यतः। ततस्तु माघानन्तरा चतुर्द्दशी शिवरात्रिः। अस्यामुपवासः प्रधानम् “न स्नानेन न वस्त्रेण न धूपेन न चार्च्चया। तुष्यामि न तथा पुष्पैर्यथा तत्रोपवासतः” इति शङ्करोक्तेः। स्कान्दे “तत्र रात्रौ प्रकर्त्तव्यं शिवप्रीणनतत्परैः। प्रहरे प्रहरे स्नानं पूजा चैव विशेषतः”। अत्र वीप्सया प्रहरचतुष्टयसाध्यं प्रतीयते। नरसिंहाचार्य्यधृतेश्वरसंहितायाम् “शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः। सर्वं पूजाफलं हन्ति शिवरात्रिबहिर्मुखः”। संवत्सरप्रदीपे “दुग्धेन प्रथमे स्नानं दध्ना चैव द्वितीयके। तृतीये च तथाज्येन चतुर्थे मधुना तथा”। ईशानसंहितायाम् “माघे कृष्णचतुर्द्दश्यां रविवारो यदा भवेत्। भौमो वापि भवेद्देवि! कर्त्तव्यं व्रतमुत्तमम्। शिवयोगस्य योगेन तद्भवेदुत्तमोत्तमम्। शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम्। आचाण्डालात् मनुष्याणां भुक्तिमुक्तिप्रदायकम्”। नागरखण्डे “उपवासप्रभावेण बलादपि च जागरात्। शिवरात्रौ तथा तस्य लिङ्गस्यापि प्रपूजया। अक्षयान् लभते लोकान् शिवसायुज्यमाप्नुयात्”। पाद्मे “वर्षे वर्षे महादेवि! नरो नारी पतिव्रता। शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत्”। ईशानसंहितायाम् “एवमेव व्रतं कुर्य्यात् प्रतिसंवत्सरं व्रती। द्वादशाब्दिकमेतद्धि चतुर्विंशाब्दिकं तथा। सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः”। हेमाद्रिधृता स्मृतिः “प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्द्दशी”। प्रदोषमाह वत्सः “प्रदोषोऽस्तमयादूर्द्ध्वं घटि-

काद्वयमिष्यते" । अर्द्धं मनन्तरम् । वायुपुराणे "त्रयोदश्यस्तगे सूर्य्ये चतसृष्वपि नाड़िषु । भूतविद्धा तु या तत्र शिवरात्रिव्रतञ्चरेत्" । ईशानसंहितायाम् "माघे कृष्णचतुर्द्दश्यामादिदेवो महानिशि । शिवलिङ्गतयोद्भूतः कोटिसूर्य्यसमप्रभः । तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः । अर्द्धरात्रादधश्चोर्द्ध्वं युक्ता यत्र चतुर्द्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्याद् व्रतं नरः" । अत्र "महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः" इति देवलोक्ता महानिशा ग्राह्या । घटिका एकदण्डः । एवञ्च यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्द्दशी तद्दिने व्रतम् उभयव्याप्त्यनुरोधात् । कालमाधवीयोऽप्येवम् । एतेन परदिने उभयव्यापित्वेऽपि पूर्व्वदिवसीयरात्रिद्वितीययामप्रभृतिचतुर्द्दशीसत्त्वे बहुप्रहरव्यापित्वेन पूर्व्वदिन एव व्रतमिति निरस्तम् । यदा तु पूर्व्वेद्युर्निशीथमात्रव्याप्तिः परेद्युः प्रदोषमात्रव्याप्तिस्तदा पूर्व्वेद्युर्व्रतं प्रधानकालव्याप्त्यनुरोधात् । "पूर्व्वेद्युरपरेद्युर्वा महानिशि चतुर्द्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्य्याद् व्रतं नरः" इतीशानसंहितावचनाच्च । एतद्विषय एव भविष्यपु० "अर्द्धरात्रात् पुरस्तात्तु जयायोगो भवेद्यदि । पूर्व्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः" । विष्णुधर्म्मोत्तरे "जयन्ती शिवरात्रिश्च कार्य्ये भद्रजयान्विते । कृत्वोपवासं तिथ्यन्ते तदा कुर्य्याच्च पारणम्" । तिथ्यन्तेपारणं जयन्तीमात्रपरं तत्र चतुर्द्दश्यामेव तत् "ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै । पूजितानि भवन्तीह भूतायां पारणे कृते" इति स्कान्दात् । "दिनमानप्रमाणेन या तु रात्रौ चतुर्द्दशी । शिवरात्रिस्तु सा ज्ञेया चतुर्द्दश्यान्तु पारणम्" इति गौतमीयाच्च । यदा तु पूर्व्वदिने न निशीथव्याप्तिः परदिने प्रदोषमात्रव्यापिनी तदा परा ग्राह्या प्रदोषव्यापिनीति प्रागुक्तत्वात् तिथेस्त्रिसन्ध्यव्यापित्वाच्च । एतद्विषय एव लिङ्गपुराणम् "शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत् । एकेनैवोपवासेन ब्रह्महत्यां व्यपोहति" । अमावास्यायामेव पारणम् "शिवाऽघोरा तथा प्रेता सावित्री च चतुर्द्दशी । कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम्" । इति वचनात् । तदयं संक्षेपः । यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्द्दशी तद्दिने व्रतम् । यदा तु पूर्व्वेद्युर्निशीथव्यापिनी परेद्युः प्रदोषमात्रव्यापिनी तदा पूर्व्वेद्युर्व्रतम् । यदा तु न पूर्व्वेद्युर्निशीथव्याप्तिः परदिने प्रदोषव्यापिनी तदा परदिने । पारणन्तु परदिने चतुर्द्दशीलाभे चतुर्द्दश्यां, तदलाभे अमावास्यायाम्" ति०त०रघु०

**शिवलिङ्ग** न०६त०। शिवस्य लिङ्गाकारे प्रस्तरादिमये पदार्थे तदाविर्भावपूज्यतादिकं यथा

"तत्रापि गत्वा मदनो ददर्श वृषकेतनम् । दृष्ट्वा प्रहर्त्तुं कामोऽथ ततः स प्राद्रवद्धरः । ततो दारुवनं घोरं मदनाभिद्रुतो हरः । विवेश ऋषयो यत्र सपत्नीका व्यवस्थिताः । ते चापि ऋषयः सर्व्वे दृष्ट्वा मूर्द्ध्ना नताभवन् । ततस्तान् प्राह भगवान् भिक्षां मे प्रति दीयताम् । ततस्ते मौनिनस्तस्थुः सर्व्व एव महर्षयः । तदाश्रमाणि पुण्यानि परिचक्राम नारद ! । तं प्रविष्टं तदा दृष्ट्वा भार्गवात्रेययोषितः । प्रक्षोभमगमन् सर्व्वा हीनसत्त्वाः समन्ततः । ऋते त्वरुन्धतीमेकामनसूयाञ्च भाविनीम् । एताभ्यां भर्त्तृपूजासु ततं वै सुस्थिरं मनः । ततः संक्षुभिताः सर्व्वा यत्र याति महेश्वरः । तत्र प्रयान्ति कामार्त्ता मदविह्वलितेन्द्रियाः । त्यक्त्वाश्रमाणि शून्यानि स्वानि ता मुनियोषितः । अनुजग्मुर्यथा मत्तं करिण्य इव कुञ्जरम् । ततस्तु ऋषयो दृष्ट्वा भार्गवाङ्गिरसो मुने ! । क्रोधान्विताब्रुवन् सर्व्वे लिङ्गोऽस्य पततां भुवि । ततः पपात देवस्य लिङ्गं पृथ्वीं विदारयत् । अन्तर्द्धानं जगामाथ त्रिशूली नीललोहितः । ततः स पतितो लिङ्गो विभिद्य वसुधातलम् । रसातलं विवेशाशु ब्रह्माण्डं चोर्द्धतोऽभिनत् । ततश्चचाल पृथिवी गिरयः सरितो नगाः । पातालभुवनाः सर्व्वे जङ्गमाऽजङ्गमाः स्थिताः । संक्षुब्धान् भुवनान् दृष्ट्वा भूर्लोकादीन् पितामहः । जगाम माधवं द्रष्टुं क्षीरोदं नाम सागरम् । तत्र दृष्ट्वा हृषीकेशं प्रणिपत्य च भक्तितः । उवाच देव ! भुवनाः किमर्थं क्षुभिता विभो ! । अथोवाच हरिर्ब्रह्मन् शार्व्वो लिङ्गो महर्षिभिः । पतितस्तस्य भारार्त्ता संचचाल वसुन्धरा । ततस्तदद्भुततमं श्रुत्वा देवः पितामहः । तत्र गच्छामि देवेश एवमाह पुनः पुनः । ततः पितामहो देवः केशवश्च जगत्पतिः । आजगाम तमुद्देशं यत्र लिङ्गं भवस्य तत् । ततोऽनन्तं हरिर्लिङ्गं दृष्ट्वारुह्य खगेश्वरम् । पातालं प्रविवेशाथ विस्मयात् त्वरितो विभुः । ब्रह्मा पद्मविमानेन ऊर्द्धमाक्रम्य सर्व्वतः । नैवान्तमलभद् ब्रह्मा विस्मितः पुनरागतः । विष्णुर्गत्वाथ पातालं सप्तलोकपरायणः । चक्रपाणिर्विनिष्क्रान्तो लेभेऽन्तं न महामुने !" इत्युपक्रमे "दृष्ट्वा च

यच्चार्च्चयन्ति त्रिदशा मम लिङ्गं सुरोत्तमौ !। तदेतत् प्रतिगृह्णीयां नान्यथेति कथञ्चन। ततः प्रोवाच भगवानेवमस्त्विति केशवः। ब्रह्मा स्वयञ्च जग्राह लिङ्गं कनकपिङ्गलम्। ततश्चकार भगवांश्चातुर्वर्ण्यं हरार्च्चने। शास्त्राणि चैषां मुख्यानि नानोक्तिविदितानि च। आद्यं शैवं१ परिख्यातमन्यत् पाशुपतं२ मुने !। तृतीयं कालवदनं३ चतुर्थञ्च कपालिकम्४। शैव आसीत् स्वयं शक्तिर्वशिष्ठस्य प्रियः सुतः। तस्य शिष्यो बभूवाथ गोपायन इति श्रुतः। महापाशुपतश्चासीद्भारद्वाजस्तपोधनः। तस्य शिष्योऽप्यभूद्राजा ऋषभः सोमकेश्वरः। कालास्यो भगवानासीदापस्तम्बस्तपोधनः। तस्य शिष्यो वभौ वैश्यो नाम्ना क्राथेश्वरो मुने। महाव्रती च धनदस्तस्य शिष्यश्च वीर्य्यवान्। कुन्दोदर इति ख्यातो जात्या शूद्रो महातपाः। एवं स भगवान् ब्रह्मा पूजनाय शिवस्य च। कृत्वा तु चातुराश्रम्यं स्वमेव भवनं गतः। गते ब्रह्मणि शर्वोऽपि ततः संहृत्य तं तदा। लिङ्गं चित्रवनं, सूक्ष्मं प्रतिष्ठाप्य चचार ह"। वामनपु० ६ अ०। एकगृहे लिङ्गद्वयार्च्चननिषेधो यथा "गेहे लिङ्गद्वयं नार्च्च्यं शालग्रामद्वयं तथा। द्वे चक्रे द्वारकायास्तु नार्च्च्ये सूर्य्यद्वयं तथा"। तन्निर्म्माल्यभक्षणविधिनिषेधौ यथा "अभक्ष्यं शिवनिर्म्माल्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलायोगात् पावनं तद्भवेत् सदा"। "लिङ्गपूजां विना देवि ! अन्यपूजां करोति यः। विफला तस्य पूजा स्यादन्ते नरकमाप्नुयात्। तस्माल्लिङ्गं प्रयत्नेन प्रथमं परिपूजयेत्"। तत्पूजनप्रशंसा यथा "यद्गृहं लिङ्गपूजायां रहितं सततं प्रिये !। तद्गृहं पतितं ज्ञेयं विष्ठामूत्रसमं स्मृतम्"। "ब्रह्मा विट् क्षत्रियो देवि ! यदि लिङ्गं न पूजयेत्। तत्क्षणात् परमेशानि ! तयं चाण्डालतां व्रजेत्। शूद्रश्च परमेशानि ! सदा शूकरवत् प्रिये !। पूजयेत् परमेशानि ! चत्वारो ब्रह्मणादयः। शिवार्च्चनन्तु पूजासु यद्गृहे वर्जितं सदा। विष्ठागर्त्तसमं देवि ! तद्गृहं विद्धि पार्व्वति !। शाक्तो वा वैष्णवो वापि शैवो वा परमेश्वरि !। आदौ लिङ्गं समभ्यर्च्च्य बिल्वपत्रैर्वरानने !। पश्चादन्यं महेशानि ! शिवं प्रार्थ्य प्रपूजयेत्। शिवपूजां विना देवि ! अन्यपूजां करोति यः। स एव रसनाहीनः कुष्ठीरो जायते प्रिये !। निर्माय पार्थिवं लिङ्गं रुद्रं संहारकपिणम्। आशुतोषं महादेवं शङ्करं वृषभध्वजम्। निर्माय पार्थिवं लिङ्गं विधिवत् पूजयेत् शिवम्। शिवपूजा महेशानि ! यद्गृहे सततं प्रिये !। काशीपुरं महेशानि ! तद्गृहं वरवर्णिनि !। शिवलिङ्गं प्रपूज्याथ सर्वपूजाफलं लभेत्"। चतुर्विधलिङ्गं यथा "चतुर्द्धा पार्थिवं लिङ्गं वर्णभेदेन पार्व्वति !। शुक्लं रक्तं तथा पीतं कृष्णञ्च परमेश्वरि !। शुक्लन्तु ब्राह्मणे शस्तं, क्षत्रिये रक्तमिष्यते। पीतं च वैश्यजातौ तु कृष्णं शूद्रे प्रकीर्त्तितम्। चान्द्रनञ्च महेशानि ! सर्वजातिषु शस्यते"। लिङ्गार्च्चनतन्त्रे १।२।३ प०। अस्य पञ्च वक्त्राणि यथा "तत् सर्वं शृणु चार्वङ्गि पार्थिवस्य सुखं प्रिये !। विभाव्य सुखपञ्चकं शिवस्य वरवर्णिनि !। सद्योजातं वामदेवमघोरञ्च ततः परम्। तत्पुरुषं तथेशानं पञ्चवक्त्रं प्रकीर्त्तितम्। सद्योजातञ्च वै शुक्लं शुद्धस्फटिकसन्निभम्। पीतवर्णं तथा सौम्यं वामदेवं मनोहरम्। कृष्णवर्णमघोरञ्च वक्त्रं भीमविवर्द्धनम्। रक्तं तत्पुरुषं देवं दिव्यमूर्त्तिं मनोहरम्। श्यामलञ्च तथेशानं सर्वदेवशिवात्मकम्। चिन्तयेत् पश्चिमे चाद्यं द्वितीयन्तु तथोत्तरे। अघोरं दक्षिणे देवं पूर्वे तत्पुरुषं तथा। ईशानो मध्यतोध्येयं चिन्तयेत् भक्तितत्परः"। तत्रैव ६ पटलः। अथ रौद्रलिङ्गलक्षणम्, वीरमित्रोदयधृते "नदीसङ्गमं रौद्रमन्योन्यस्य विमर्दनात्। नदीवेगात् समं स्निग्धं संजातं रौद्रमुच्यते"। वस्तुत्रयेऽपि "सरित्प्रवाहसंस्थानं बाणलिङ्गसमाकृति। तदन्यदपि बोद्धव्यं रौद्रलिङ्गं सुखावहम्। नदीसागरनर्म्मदायां बाणलिङ्गसमाकृति। तदन्यदपि बोद्धव्यं लिङ्गं रौद्रं भविष्यति। रौद्रलिङ्गं तथाख्यातं बाणलिङ्गसमाकृति। श्वेतं रक्तं तथा पीतं कृष्णं विप्रादिपूजितम्। स्वभावात् कृष्णवर्णं वा सर्वजातिषु सिद्धिदम्। नर्म्मदासम्भवं रौद्रं बाणलिङ्गवदीरितम्"। दैवलिङ्गमधिकृत्य सिद्धान्तशेखरे "करसंपुटसंस्थं शूलटङ्केन्दुभूषितम्। रेखाकोटरसंयुक्तं निम्नोन्नतसमन्वितम्। दीर्घाकारञ्च यल्लिङ्गं मृदाभामादिवर्जितम्"। अथ गोललिङ्गलक्षणम् "लिङ्गं गोलमिति प्रोक्तं गोलकं प्रोच्यतेऽधुना। कुष्माण्डस्य फलाकारं नागरङ्गफलोपमम्। काकडिम्बफलाकारं गोललिङ्गमितीरितम्"। अथार्षलिङ्गलक्षणम्। तत्रैव "मालाकोलफलाकारं ब्रह्मसूत्रविवर्जितम्। मूले स्थूलञ्च यल्लिङ्गं कपित्थफलसन्निभम्। नालस्य वा फलाकारं मध्ये स्थूलञ्च यद्भवेत्। मध्ये स्थूलं परं लिङ्गं

ष्टिलिङ्गमुदीरितम्”। लिङ्गं च द्विविधमकृत्रिमं कृत्रिमञ्च अकृत्रिमं स्वयम्भुबाणलिङ्गादि स्वयम्भूतम्। कृत्रिमं धातुलिङ्गादिनिर्म्मितम्। सिद्धान्तशेखरे “तल्लिङ्गं द्विविधं ज्ञेयमचलञ्च चलं तथा। प्रत्येकं त्रिविधं ज्ञेयं लिङ्गं तदुभयात्मकम्। प्रासादे स्थापितं लिङ्गमचलं तच्छिलादिजम्। स्थापितमचलं गेहे स्थिरं लिङ्गमयोजिते। पञ्चधा तत स्थितं लिङ्गं स्वयम्भु दैवपालितम्। आर्षञ्च मानसं लिङ्गं तेषां लक्षणमुच्यते। नानाच्छिद्रसुसंयुक्तं नानावर्णसमन्वितम्। अदृष्टमूलं यल्लिङ्गं कर्कशं भुवि दृश्यते। तल्लिङ्गन्तु स्वयम्भूतमपरं लक्षणाच्युतम्। स्वयम्भुलिङ्गमित्युक्तं तच्च नानाविधं मतम्। शङ्खाभमस्तकं लिङ्गं वैष्णवं तदुदाहृतम्। पद्माभमस्तकं ब्राह्मं छत्राभं शाक्रमुच्यते। शिरोयुग्मं तथाग्नेयं त्रिपदं याम्यमीरितम्। खड्गाभं नैरृतं लिङ्गं वारुणं कलशाकृति। वायव्यं ध्वजवल्लिङ्गं कौवेरन्तु गदान्वितम्। ईशानस्य त्रिशूलाभं लोकपालादि निःसृतम्। स्वयम्भुलिङ्गमाख्यातं सर्व्वशास्त्रविशारदैः”। मत्स्यसूक्ते “दृष्ट्वा लिङ्गं महेशस्य स्वयम्भूतस्य पार्व्वति!। सर्व्वपापविनिर्मुक्तः परे ब्रह्मणि लीयते”। एतेषां पूजाफलन्तु तत्रैव “विशेषाच्छैलजं मुक्त्यै भुक्तये चानुरक्ततः। पार्थिवं भुक्तये शस्तं मुक्तये चानुरक्ततः। एवं वै दारुजं ज्ञेयं धातुलिङ्गं तथा पुनः। श्रीलक्ष्मीप्रदं ज्ञेयं हैमं राज्यप्रदञ्च तत्। पुत्रवृद्धिकरं ताम्रं राङ्गमायुःप्रवर्द्धनम्” पद्मपु० “पारदञ्च महाभूत्यै सौभाग्याय च मौक्तिकम्। चान्द्रकान्तं मृत्युजित् स्याद्वाटकं सर्व्वकामदम्”। वी०मि०धृत कल्पोत्तरेऽपि “सर्व्वा फलप्रदा भूमिर्मणयस्तद्वदेव हि। अनन्ताद्याः स्मृता ह्यष्टौ मणयो विद्युदुज्ज्वलाः। रात्रौ प्रकाशकाः सर्व्वे विषाद्याघातकारिणः। नानावर्णास्तु विज्ञेया रत्नैरन्यैश्च रूपतः। वज्राद्याः स्फाटिकाद्याश्च गुडान्नादिविनिर्म्मितम्। सर्व्वकामप्रदं पुंसां लिङ्गं तात्कालिकं मतम्”। लक्षणसमुच्चये “गान्धं सौभाग्यदं लिङ्गं पौष्पं मुक्तिप्रदायकम्”। तथा “नानागुणोद्भवं लिङ्गं नानाकामप्रदायकम्। सैकतं गुणदं लिङ्गं सौभाग्याय च लावणम्। उच्चाटने तु पालाशं भास्म शत्रुक्षयावहम्। तात्कालिकं दरिद्रस्य कृत्वा भक्त्या समर्च्चयेत्”। तथा “कस्तूरिकाया द्वौ भागौ चत्वारश्चन्दनस्य च। कुङ्कुमस्य त्रयश्चैव शशिना च चतुःसमम्।

एतद्वै गन्धलिङ्गन्तु कृत्वा संपूज्य भक्तितः। शिवसायुज्यमाप्नोति बन्धुभिः सहितो नरः। कार्य्यं पुष्पमयं लिङ्गं हृद्यगन्धसमन्वितम्। नवखण्डां धरां भुक्त्वा गणेशोऽधिपतिर्भवेत्। रजोभिर्निर्म्मितं लिङ्गं यः पूजयति भक्तितः। विद्याधरपदं प्राप्य पश्चात् शिवसमो भवेत्। श्रीकामो गोमयलिङ्गं कृत्वा भक्त्या प्रपूजयेत्। स्वच्छेन कापिलेनैव गोमयेन प्रकल्पयेत्। कार्य्यं च पिष्टजं लिङ्गं यवगोधूमशालिजम्। श्रीकामः पुष्टिकामश्च पुत्रकामस्तदर्च्चयेत्। सिताखण्डमयं लिङ्गं कार्य्यमारोग्यवर्द्धनम्। वश्ये लवणजं लिङ्गं तच्च त्रिकटुकान्वितम्। गव्यघृतमयं लिङ्गं संपूज्य बुद्धिवर्द्धनम्। लवणेन च सौभाग्यं पार्थिवं सर्व्वकामदम्। कामदं तिलपिष्टोत्थं तुषोत्थं मारणे स्मृतम्। भस्मोत्थं सर्व्वफलदं गुडोत्थं प्रीतिवर्द्धनम्। गन्धोत्थं गुणदं भूरिशर्करोत्थं सुखप्रदम्। वंशाङ्कुरं वंशकरं गोमयं सर्व्वरोगदम्। केशास्थिसम्भवं लिङ्गं सर्व्वशत्रुविनाशनम्। क्षोभणे मारणे पिष्टसम्भवं लिङ्गमुत्तमम्। दारिद्र्यदं द्रुमोद्भूतं पैष्टं सारस्वतप्रदम्। दधिदुग्धोद्भवं लिङ्गं कीर्त्तिलक्ष्मीसुखप्रदम्। धान्यदं धान्यजं लिङ्गं फलोत्थं फलदं भवेत्। पुष्पोत्थं दिव्यभोगायुर्मुक्त्यै धात्रीफलोद्भवम्। नवनीतोद्भवं लिङ्गं कीर्त्तिसौभाग्यवर्द्धनम्। दूर्व्वाकाण्डसमुद्भूतमपमृत्युविनाशनम्। कर्पूरसम्भवं लिङ्गं कलायैर्भुक्तिमुक्तिदम्। आयस्कान्तं चतुर्द्धा तु ज्ञेयं सामान्यसिद्धिषु” गरुडपु०। “सर्व्वं मणिमयं श्रेष्ठं तत्र वाञ्छसिद्धिदे। यमलिङ्गं महाभूत्यै सौभाग्याय च मौक्तिकम्। पुष्टिमूलं महानीलं ज्योतिस्तीरसमुद्भवम्। सार्द्धकं कुलसम्पत्त्यै तैजसं सूर्य्यकान्तजम्। चन्द्रापीडं मृत्युजिते स्फाटिकं सर्व्वकामदम्। मूलाख्यमणिजं शत्रुक्षयार्थं मौक्तिकं तथा। आपत्स्यं हीरकं ज्ञेयं रोगहृन्मौक्तिकोद्भवम्। शुभकृत् पुष्कलं नीर्थे वैदूर्य्यं शत्रुदर्पहृत्। नीलं लक्ष्मीप्रदं ज्ञेयं स्फाटिकं सर्व्वकामदम्”। सारसंग्रहे “महाभुक्तिप्रदं हैमं राजतं भूतिवर्द्धनम्। आरकूटं तथा कांस्यं त्रपु सामान्यमुक्तिदम्। त्रपुसीसायसं लिङ्गं शत्रूणां नाशने हितम्। कीर्त्तिदं कांस्यजं लिङ्गं राजतं पुत्रवर्द्धनम्। पैत्तलं भुक्तिमुक्त्यर्थं विम्बजं सर्व्वसिद्धिदम्” कालोत्तरतन्त्रम्। तत्रैव शिवनारदसंवादे “पितॄणां मुक्तये लिङ्गं पूज्यं रजतसम्भवम्। हैमजं सत्यलोकस्य प्रा-

शये पूजयेत् पुमान् । पूजयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः” । मत्स्यसूक्ते “ताम्रलिङ्गं कलौ नार्च्यं रैत्यस्य सीसकस्य च । रक्तचन्दनलिङ्गस्य शङ्खकांस्यायसं तथा” । मातृकाभेदतन्त्रे १२पटले “पार्थिवे शिवपूजायां सर्वसिद्धियुतो भवेत् । पाषाणे शिवपूजायां द्विगुणं फलमीरितम् । स्वर्णलिङ्गे च पूजायां शत्रूणां नाशनं मतम् । सर्वसिद्धीश्वरो रौप्ये फलं तस्माच्चतुर्गुणम् । ताम्रे पुष्टिं विजानीयात् कांस्ये च धनसंचयः । गङ्गायाश्च लक्षगुणं लाक्षायां रोगवान् भवेत् ।। स्फाटिके सर्वसिद्धिः स्यात् तथा मारकते प्रिये !। लौहलिङ्गे रिपोर्नाशं कामदं भस्मलिङ्गकम् । बालुकायां काम्यसिद्धिर्गोमये रिपुहिंसनम् । सर्वलिङ्गस्य माहात्म्यं धर्मकामार्थमोक्षदम् । संस्कारेण विना देवि ! पाषाणादौ न पूजयेत्” । “मृत्तिकातोलकं ग्राह्यमथ वा तोलकद्वयम् । एतदन्यन्न कुर्वीत कदाचिदपि पार्वति !” मातृकाभेदतन्त्रे ७प० । “मृत्तिकातोलकं ग्राह्यमथ वा तोलकद्वयम् । लिङ्गस्य प्रमाणेन घटनं कारयेद्बुधः । अङ्गुष्ठपर्वमानन्तु कृत्वा लिङ्गं प्रपूजयेत्” विश्वसारतन्त्रम् । लिङ्गलोकरणमुक्तं कालान्तरे “लिङ्गे वेद्यां तथा पीठे समस्तनिपातनात् । समञ्चैव विजानीयात् लिङ्गलोकरणं त्विदम्” । ब्राह्मणादीनां मृत्तिकाभेदेन पूजाफलप्रशंसा तत्रोक्ता यथा “शुक्लं हि पार्थिवं लिङ्गं निर्माय यस्तु पूजयेत् । स एव विप्रो देवेशि ! त्रिवर्गफलभाग्भवेत् । क्षत्रियस्तु वरारोहे ! रक्तं निर्माय पार्थिवम् । पूजयेत् सततं यस्तु त्रिवर्गफलभाग्भवेत् । पीतं तु पार्थिवं देवि ! निर्माय यस्तु पूजयेत् । स च वैश्यो महेशानि ! त्रिवर्गफलभाग्भवेत् । कृष्णं हि पार्थिवं लिङ्गं निर्माय यस्तु पूजयेत् । स शूद्रः परमेशानि ! त्रिवर्गफलभाग्भवेत् । शिलादौ च महेशानि ! स्थूलञ्च फलदायकम् । अङ्गुष्ठमानं देवेशि ! यदा हेमाद्रिमानकम् । क्रमेण देवदेवेशि ! फलं बहुविधं स्मृतम् । स्थूलात् स्थूलतरं लिङ्गं रुद्राक्ष परमेश्वरि !। पूजनाकारणाद्धापि फलं बहुविधं स्मृतम्” । स्थूलतरमिति पार्थिवलिङ्गेतरपरम् मृत्तिकातोलकं ग्राह्यमित्यभिधानात् । शिलास्फाटिकमरकतादीनां पञ्चसूत्रीकरणकम् वैष्णवे “शिवलिङ्गस्य यन्मानं तन्मानं दृष्टमव्ययः । योऽन्यपरमपि यन्मानं तदन्योऽपि तथा भवेत्” । “लिङ्गस्य चार्द्धविस्तारः परिणाहोऽपि तादृशः । लिङ्गस्य द्विगुणा वेदी योनिस्तदर्द्धसंमिता । कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचिदपि क्वचित् । रत्नादिशिवनिर्माणे मानमिच्छावशाद्भवेत्” । तन्त्रान्तरम् । लिङ्गशब्दव्युत्पत्तिर्यथा “आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका । आलयः सर्वदेवानां लयनाल्लिङ्गमुच्यते” स्कान्दपु० ।

“एकहस्तेन निर्माय पार्थिवं लिङ्गमर्चयेत् । तल्लिङ्गपूजनस्य फलमाप्नोत्यसंशयम् । तदेव स्यात्शतगुणं वामहस्तेन निर्मितम् । रुद्राक्षरणकेशादि शोधनञ्चैव पाणिना । “एवं कृते तु गृहिणां संसारात् स विमुक्तितः । द्व्याधिकैर्विंशतिपलैर्लिङ्गैः शैवं प्रयत्नतः । लिङ्गं निर्माय देवेशि ! पूजयेद्भक्तिसंयुतः” तन्त्रसारः ।

**शिवलोक** पु० ६त० । कैलासनामके स्थाने ।

**शिववल्लभ** त्रि० ६त० । १महादेवप्रिये २शतपत्र्यां स्त्री राजनि० । [२श्रीवल्ल्यां च राजनि० ।

**शिववल्ली** स्त्री० शिवप्रिया वल्ली शा०त० । १लिङ्गिनीलतायां

**शिववाहन** न० शिवं वाहयति वह–णिच्–ल्यु । वृषभे राजनि० । [२शिवस्य शुक्रे च ।

**शिववीज** न०६त० । १पारदे राजनि० । शिववीर्य्यादयोऽप्यत्र ।

**शिवशेखर** पु० शिवस्य शेखर इव । १धुस्तूरे राजनि० । २वकपुष्पे च जटा० ।

**शिवसुन्दरी** स्त्री ६त० । दुर्गायां तन्त्रसा० ।

**शिवा** स्त्री शी–वन् नि० । १मङ्गलवत्यां स्त्रियां २दुर्गायां “शिवा मुक्तिः समाख्याता योगिनां मोक्षदायिनी । शिवाये यां यजेद्देवीं शिवा लोके ततः स्मृता” देवीपु० ४५अ० । ३मुक्तौ ४शृगाले ५हरीतक्यां ६शमीवृक्षे ७तामलक्याम् अमरः । ८आमलक्यां मेदि० । ९हरिद्रायां १०दूर्वायां ११गोरोचनायाञ्च राजनि० १२श्टगाल्याम् अमरः । [राजनि० ।

**शिवाटिका** स्त्री शिवायाटति अट–ण्वुल् । वंशपत्र्यां

**शिवात्मक** न० शिवो मङ्गल आत्मा यस्य कप् । १सैन्धवे लवणे राजनि० । २शिवमये त्रि० ।

**शिवानी** स्त्री शिवं कल्याणमानयति आ+नी–ड गौरा० ङीष् । १जयन्तीवृक्षे शब्दच० २दुर्गायाञ्च ।

**शिवाप्रिया** पु० ६त० । १छागे त्रि० २तस्याः प्रियमात्रे त्रि० ।

**शिवापीड़** पु० ६त० । वकवृक्षे राजनि० । [राजनि० ।

**शिवाफला** स्त्री शिवाया इव फलं यस्याः । शमीवृक्षे

**शिवाबलि** पु० शिवाभ्यो देयो बलिः शा०त० । तन्त्रसा-

रविच्छिते सन्ध्यायां शिवाभ्यो देये मांसादिबलौ तद्विधिस्तन्त्रसारे दृश्यः।

**शिवाराति** पु० शिवाया शृगालस्याऽरातिः। १कुक्कुरे शब्दमा० २शिवांशिवयोर्हरौ पापखण्डे च।

**शिवारुत** न० ६त०। शृगालीशब्दे दिग्भेदे तस्य शुभाशुभफलं वसन्तराजशाकुने उक्तं यथा

"शोभनं शुभफलाप्तिसूचकं कथ्यते त्ववितथं शिवारुतम्। शान्तदीप्तककुभां विशेषतो ज्ञानमत्र च सदोपयुज्यते। दग्धा दिगुक्ता दिननाथयुक्ता विवस्वताप्ता भवति प्रदीप्ता। सा धूमिता यां सविता प्रयातः शेषा दिगन्ताः किल पञ्च शान्ताः। दग्धा दिगैशी ज्वलिता दिगैन्द्री प्रधूमिता चानलदिक्क्रमेण। आद्ये दिनस्य प्रहरे प्रवृत्ते महेशदैवेशहुताशदिक्षु। शिवा रटन्ती कुरुते नराणां संतापकायव्ययबन्धनानि। अर्द्धे द्वितीये प्रहरस्य भागे महेन्द्रवैश्वानरकालदिक्षु। शिवा रटन्ती कुरुते इत्यादि। अर्द्धे तृतीये प्रहरे दिनस्य हुताशवैवस्वतयातुदिक्षु। शिवा रटन्ती कुरुते इत्यादि। समागतेऽह्नः प्रहरे तुरीये प्रेतेशरक्षःपतिपाशिदिक्षु। शिवा रटन्ती कुरुते इत्यादि। आद्ये निशायाः प्रहरे प्रवृत्ते रक्षोऽधिपादःपतिवातदिक्षु। शिवा रटन्ती कुरुते इत्यादि। ततो द्वितीयप्रहरे रजन्यास्तोयाधिनाथानिलसोमदिक्षु। शिवा रटन्ती कुरुते इत्यादि। यामेऽतृतीयेऽपि च यामवत्याः समीरदोषाकरशम्भुदिक्षु। शिवा रटन्ती कुरुते इत्यादि। समागते रात्रितुरीययामे निशाकरेशानसुरेशदिक्षु। शिवा रटन्ती कुरुते इत्यादि। इतीरितं दिक्त्रययामयोगात् फलं विरुद्धं विरुतैः शिवायाः। ब्रूमोऽथ दिक्पञ्चकयामयोगात् फलानि पुंसां क्रमतः शुभानि। कृतान्तरक्षोवरुणानिलेन्दुदिक्ष्वाद्ययामे रविते शृगाल्याः। स्यादिष्टवार्त्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः। रक्षःप्रचेतोऽनिलसोमशम्भुदिक्षु द्वितीये प्रहरे रुतेन। स्यादिष्टवार्त्ताश्रुतिरित्यादि। जलेशवातेन्दुशिवामरेशदिक्षारवेण प्रहरे तृतीये। स्यादिष्टवार्त्ताश्रुतिरित्यादि। समीरसोमेशसुरेशवह्निदिक्षु स्वरेण प्रहरे चतुर्थे। स्यादिष्टवार्त्ताश्रुतिरित्यादि। शशाङ्करुद्रेन्द्रहुताशकालदिक्षारवैः पञ्चमयामभागे। स्यादिष्टवार्त्ताश्रुतिरित्यादि। ईशानशक्राग्निकृतान्तरक्षोदिक्षु स्वरेण प्रहरे च षष्ठे। स्यादिष्टवार्त्ताश्रुतिरित्यादि। इन्द्राग्निकालासृपपाशपाणिदिक्षारवैः सप्तमयामकाले। स्यादिष्टवार्त्ताश्रुतिरित्यादि। अत्यन्तकालैऋतपाशिवातदिक्ष्वष्टमे च प्रहरे रवेण। स्यादिष्टवार्त्ताश्रुतिरित्यादि। "एकादिकानां निधनाष्टमानां शिवारुतानामधुना यदर्थम्। प्राच्यादिकास्वष्टसु दिक्ष्वशेषं यद्यत् फलं तत्तदुदीरयामः। धनान्यभीष्टाप्तिमभीष्टलाभं ध्रुवं ततोऽर्थस्य फलं शुभञ्च। भयं प्रलापं सकलस्य सौख्यमेकादिशब्दैः कुरुते प्रशान्ते। भयान्यनिष्टश्रुतिरर्थहानिरिष्टैर्वियोगो महती च भीतिः। स्याद्विग्रहाप्तिर्मरणञ्च दीप्ते त्वेकादिना चेत् कृतसप्तकेन। ऐशान्यां निनादे प्रथमेऽर्थलाभो भवेद्द्वितीये निधिदर्शनञ्च। कन्यां तृतीये लभते चतुर्थे त्वध्वागमं पञ्चमकेऽथ विघ्नम्। षष्ठे रवे क्रुध्यति भूमिनाथो भीः सप्तमे स्यादिफलोऽष्टयस्तु। आशोऽग्निभागे प्रथमे द्वितीये नराधिपः क्रुध्यति भीस्तृतीये। घातश्चतुर्थे नगरस्य शब्दे शिवाकृते पञ्चमके च युद्धम्। वदन्ति तज्ज्ञाः कलहञ्च षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु। आद्ये शुभं स्यादशुभं द्वितीये याम्ये महाव्याधिभयं तृतीये। स्वरे चतुर्थे स्वजनागमः स्यात् पुत्रो भवेत् पञ्चमफेरुतेषु। जायेत कन्या रटिते च षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु। आनन्त्य घातो दिशि राक्षसानामाद्ये द्वितीयेऽपि च गोकुलस्य। मृत्युस्तृतीये द्विचतुष्पदानां हानिश्चतुर्थेऽपि च पञ्चमेऽत्र। चौराद्भयं राजभयञ्च षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु। शब्दे शिवाया वरुणस्य भागे आद्ये भयं हानिरथ द्वितीये। स्याद्राजदूतागमनं तृतीये यादश्चतुर्थे खलु चौरभीतिः। स्यात् पञ्चमे राजभयञ्च षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु। वायव्यभागे भयमेकशब्दे भयातिरेको भवति द्वितीये। वृष्टिस्तृतीये महती चतुर्थे मेघागमे वर्षति पञ्चमे च। क्रोधं विधत्ते नृपतेश्च षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु। दिश्युत्तरस्यां विहिते विरावे म्रियेत कश्चित् प्रथमे द्वितीये। महाभयं, विप्रवधस्तृतीये चान्नं चतुर्थे खलु लभ्यते च। विट् पञ्चमे षष्ठरवे च शूद्रा भीः सप्तमे स्यादिफलोऽष्टमस्तु। राहोस्तथा दर्शनमाद्यशब्दे कतो द्वितीये च तथोत्तरेण। उल्कापपातस्त्रिषु दुर्दिनञ्च चतुर्षु भद्रं खलु पञ्चमे च। सङ्गो भवेद्वैरिजनैश्च षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु। आद्ये भवेद्दुर्दिनमीशदेशे वृष्टिर्द्वितीये च रवे शिवायाः। वातस्तृतीये तुषारश्चतुर्थे म्रियेत कश्चित् खलु पञ्चमे च। लभेत

पृष्ठे निनदे च षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु" "क्षेमलाभपुनरागमनानां निश्चयं यमधिगम्य विशङ्कः । येन याति पथिकः परदेशं तं शिवारुतमथ प्रथयामः । यं यं देशं गन्तुमभ्युद्यतानां पुंसां शब्दानुच्चरन्ती शृगाली । शान्तायां सा सिद्धये वाञ्छितानां दीप्तायान्तु स्यादभीष्टक्षयाय । प्राचीं दिशं सम्मुखभानुबिम्बं प्रतिष्ठमानस्य नरस्य यस्य । शब्दं शृगाली पुरतः करोति बन्धं बधं वा प्रकरोति तस्य । प्राचीदिगीशाभिमुखस्य पुंसः प्रस्थानकामस्य शिवा सशब्दा । भियेऽर्थनाशाय च दक्षिणा स्याद्वामा पुनर्वाञ्छितकार्य्यसिद्ध्यै । प्रत्यक्कषायां चलितस्य पूर्वां शिवा विरावं पुरुषस्य यस्य । करोति पृष्ठे प्रकरोति तस्य सर्व्वप्रकारामभिलाषसिद्धिम् । प्रस्थायिनो यस्य च दक्षिणाशां शिवा रुतं मुञ्चति दक्षिणेन । आदित्यदृष्टा यदि नो तदानीं ध्रुवं भवेत्तस्य महीपतित्वम् । वैवस्वताशाचलितस्य यस्य दिवाकरस्तिष्ठति दक्षिणेन । शिवा च वामा कुरुते विरावं सम्पद्यते तस्य समस्तमिष्टम् । पुमान् यदा याम्यककुप्प्रयायी करोति शब्दं पुरतः शृगाली । आस्ते विवस्वानपि सम्मुखश्चेत् भवेत् तदानीमचिरेण मृत्युः । नरस्य याम्यां ककुभं यियासोः शृगालभार्य्या यदि पृष्ठभागे । फेत्कारमामुञ्चति मानवस्य मृत्युः पुत्रेण भवत्यवश्यम् । दिशं प्रतीचीं व्रजतः शृगाली नरस्य यस्याभिमुखी विरौति । शान्तास्थिता शान्तफलप्रदात्री दीप्तास्थिता दीप्तफलं तनोति । प्राचेतसीं सञ्चलितस्य काष्ठां शृगालिका जल्पति दक्षिणेन । यदा तदानीं सुबहूननर्थान् करोति चार्थानपि हन्ति पुंसः । दिशं प्रचेतःपरिपाल्यमानां नरस्य यस्य व्रजतः शृगाली । वामा विरावं प्रकरोति शान्ता भवन्त्यभिप्रेतफलानि तस्य । यो वारुणीं याति दिशं मनुष्यः शृण्वन् शिवायारटितानि पृष्ठे । गतस्य तस्याशु हुताशभीतिरसंशयं स्यात् द्रविणक्षयश्च । यक्षोत्तराशां चलितस्य पुंसः प्राच्यां शिवा मुञ्चति फेत्कृतानि । आहुः प्रतीच्यां विहितस्थितिश्चेदपेक्षितं सिध्यति तत्क्षणेन । सञ्चत्युदीचीं चलितस्य पृष्ठे शिवा विरावं पुरुषस्य यस्य । आस्ते च मध्ये नभसो विवस्वांस्तस्यार्थहानिर्मरणं प्रदिष्टम् । कुबेरकाष्ठां प्रति यः प्रयाति ज्वालामुखी चाभिमुखी विरौति । तस्याध्वगस्याभिमतार्थसिद्धिर्भवेच्च सम्यक् पुनरागमश्च । तिष्ठति तीव्रकरो दिशि यस्यां फेत् कुरुते यदि तत्र शृगाली । तद्व्रजतः पथिकस्य भवेतां निश्चयतो धनजीवितनाशौ । दक्षिणतः प्रथमं यदि पश्चात् वामगता पथिकस्य शृगाली । फेत् कुरुते कुरुते तदवश्यं क्षेमधनाभिमतागमनानि । चयाख्य शान्तां ककुभं नरस्य वामा शृगाली यदि वा रटन्ती । तदार्थलाभं वितरत्यवश्यमर्थक्षयं दक्षिणतो रटन्ती । वामा प्रदीप्ते ककुभः प्रदेशेऽलाभं तथानर्थमुदादिशन्ति । शिवा रटन्ती पथि दक्षिणा तु क्षिपत्यनर्थानयसङ्कटेषु । शान्ते दिगन्ते यदि वा प्रदीप्ते पृष्ठे प्रयाणे प्रतिषेधयित्री । शब्दायमाना तु शिवा पुरस्तात् निमज्जयत्यापदगाधसिन्धौ । वामेऽपसव्ये पुरतोऽथ पृष्ठे पुंसः शिवा जल्पति यत्र तत्र । आयान्ति चौराः प्रथमे विरावे द्वयोर्भवेत्तस्करदर्शनञ्च । नृपादरोऽर्थागमनं तृतीये तुर्य्ये क्षतिः पञ्चमकेऽर्थलाभः । वाणिज्यसेवादिफलाय षष्ठे भीः सप्तमे स्यादिफलोऽष्टमस्तु । हाहारवं मुञ्चति हृष्टभावा हास्यं तु तस्यास्तदुदाहरन्ति । चक्रेसरा वा पथि या यियासोः सा द्विप्रकारापि मनोरथाप्त्यै । नृपस्य यात्रासमये पुरस्तात् प्रयाति चेद्वर्त्मनि वेदयन्ती । कुर्य्याच्छिवा वैरिपराभवं तज्जयश्रियश्चाभिमतं विदध्यात् । कार्य्यान्तरेष्वप्यनुगम्यमाना श्रेयःप्रदा शान्तदिशि प्रदिष्टा । शिवा प्रदीप्ते तु दिशि प्रदेशे समारटन्ती महते भयाय । भयोद्गमे दीप्तदिशि प्रदीप्तैर्नादैर्न्नृणां हन्ति भयानि देवी । महान्ति सर्व्वाण्यपि, शान्तनादा शान्तस्थिता सर्व्वभयप्रदात्री । यदा च नद्युत्तरगा नराणां शब्दं शृगाली कुरुते कदाचित् । तटद्वये तत्परिरक्षणीयं महद्भयं भावि जलेचरेभ्यः"। "स्थानस्थितानामपि योगभाजां नैमित्तिकानामुपदिश्यते तु । शिवाविरावैरशिवं शिवञ्च सुनिश्चितार्थं सुनिसम्मतेन । करोति फे फे इति सर्व्वदिक्षु यदा तदा स्थानविघातयुक्ते । शिवा विधत्ते क्षुधिता त्वसंख्यान् रौद्रान् स्वरान् मुञ्चति चेदुपेक्ष्याम् । निरन्तरं रौति विदिक्षु दिक्षु समन्ततः कण्ठस्वरातुरा चेत् । अपत्यमोहेन यदा शृगाली त्यक्तस्पृहा सा कथितेह मज्ञैः । स्थित्वा प्रदीप्ते ककुभो विभागे ज्वालामुखी फेत्कुरुतेऽतिरौद्रम् । ग्रामस्य तस्य प्रकरोति नाशं तस्याथ वा तिष्ठति यस्य मध्ये । ग्रामस्य मध्यं समवाप्य यस्य ज्वालामुखी मुञ्चति फेत्कृतानि । स शून्यतां गच्छति निश्चयेन लोकस्य वा स्यादसुखं प्रभूतम् । ग्रामान्तिके सप्तदिनानि यावत् महाभयोत्पादितफेत्कृतानि । विरौति चेत्तत् कुरुते शृगाली तद्वाधिलोकस्य भयं

प्रभूतम् । मध्यंदिने यावदहानि पञ्च शिवा समीपे नगरस्य यस्य । विरौति घातं विदधाति तस्य भयञ्च वह्निप्रभवं प्रभूतम् । पश्चार्द्धरात्राणि कथञ्चिदेषा क्रूरारवा व्याहरते शृगाली । यस्यान्तिके तं बहवो हठेन मुष्णन्ति चौरा जनसन्निवेशे । स्थानस्य यस्योपगता समीपं दिनानि पञ्चोच्चरति प्रभाते । स्वरेण रौद्रेण शृगालभार्य्या स्यात्तत्र हानिर्महती नराणाम् । सुरक्षितस्यापि मनुष्यलक्षैर्यामस्य शीघ्रं हरणं विधत्ते । त्रयं दिनानां दिवसावसाने शिवा रटन्ती परुषस्वरेण । दिक्ष्वारटन्ती सकलासु रौद्रं भ्रमत्यखिन्ना परितः पुरस्य तु । शृगालभार्य्या खलु तद्ब्रवीति युद्धं महत्तत्र महाभिघातम् । ज्वालां विमुञ्चत्यतिरौद्रनादा समाकुला धावति या समन्तात् । कौमारकं या जनयत्यकस्मात् कुर्य्याच्छिवा सा युवराजपातम् । रोमोद्गमं या जनयत्यकस्मात् फे इत्यतिक्रूररवा नराणाम् । मूत्रं पुरीषन्तु तरङ्गमाणां सा सर्वदा स्यादशिवा शिवेह । तरङ्गिणीरोधसि सौम्यरूपांस्तोन् पञ्च वा मुञ्चति या निनादान् । शिवां शिवां तां नृपतिस्तदानीं वन्देत देवीमभिवन्दनीयाम् । श्मशानभूमौ दिनमध्यभागे मध्ये रजन्याः स्वच्छप्रदेशे । या रौति तस्यै बलिमर्घ्ययुक्तं भक्त्या प्रदद्यात्तु यदि भद्रमिच्छेत् । सर्वेषु कार्येषु समुद्यतेषु बलिः शिवाया विनिवेदनीयः । गृह्णाति यस्मिन् विषयेऽभ्युपेत्य देवी बलिं जल्पति तत्र सिद्धिम्” “कथ्यते बलिविधानमिदानीं शाकुनागमसतेन शिवायाः । दिव्यमन्त्रबलिबाधितदोषं साधिताखिलसमुद्यतकार्यम् । शून्यालयं रुद्रगृहं श्मशानं चतुष्पथं मातृगृहं जलान्तम् । वल्म्यावनिस्तत्परसेवनाद्या बलिप्रदानाय मताः प्रदेशाः । तेषान्तु मध्यादुचितप्रदेशे विशोधितं मण्डलकं विदध्यात् । पौराणिकश्लोकपरीक्षितायाः संस्थाप्य गोर्गोमयमन्तरीक्षात् । अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः । रोगार्त्तनवसूताया न गोर्गोमयमाहरेत् । तस्मिन् विचित्रं विततं विदध्यात् पिष्टाक्तकेनाष्टदलं सरोजम् । संपूजयेत् तत्र हराधिपादीन् क्रमेण सर्वानपि लोकपालान् । मध्ये सुतैः पञ्चभिरभ्युपेता शिवान्विता पिष्टमयी प्रसन्ना । पूज्या शिवा तुष्यति भक्तियोगात् प्रभूतपुष्पाक्षतधूपदीपैः । साज्यगुडौदनमाषकुलत्थैर्यावकपूपलिकामिषमद्यैः । संस्थितेन नरासनमात्रं बुद्धिमता बलिकर्मणि कार्यम् । प्राप्याष्टमीं वामचतुर्दशीं वा संमन्त्र्य मन्त्रेण च सप्तकृत्वः । बलिं शिवाया निशि निश्चयेन दद्यान्मनुष्यो यदि भद्रमिच्छेत्” ।

**शिवालय** न० शिव आलीयतेऽत्र ली—अच् । १श्मशाने हारा० । ३त० । २रक्ततुलस्यां शब्दर० । ३महादेवगृहे च पु० ।

**शिवालु** पु० शिवायालति अल—उन् । शृगाले राजनि० ।

**शिवास्मृति** स्त्री शिवायाः स्मृतिर्यस्याः ५ब० । जयन्तीवृक्षे शब्दच० तन्नामोच्चारणे हि जयन्तीनामकदुर्गायाः स्मरणमिति तस्यास्तथात्वम् ।

**शिवाह्लाद** पु० शिवमाह्लादयति आ+ह्लद—णिच्—अण् । १वकवृक्षे राजनि० । ६त० । २तत्सन्तोषे च ।

**शिवाह्वा** स्त्री शिवस्येवाह्वा यस्याः । रुद्रजटावृक्षे राजनि० । ६त० । २महादेवाह्वाने च ।

**शिवि** पु० शि—वि नि० न गुणः । १हिंस्रपशौ त्रिका० । २भूर्जवृक्षे ३उशीनरराजसुते नृपभेदे च मेदि० ।

**शिविका** स्त्री शिवं करोति शिव+णिच्-ण्वुल् अत इत्त्वम् । यानभेदे ( डुली ) अमरः ।

**शिविर** न० शी+किरच् वुक् च । कटके सैन्यनिवासस्थाने । शिविरलक्षणमुक्तं यथा

“शिविरं परिखायुक्तमुच्चैःप्राकारवेष्टितम् । युक्तद्वादशद्वारञ्च सिंहद्वारपुरस्कृतम् । युक्तं चित्रैर्विचित्रैश्च कृत्रिमैश्च कपाटकैः । निषिद्धवृक्षरहितं प्रसिद्धैश्च पुरस्कृतम् । सुलक्षणं चन्द्रवेधं प्राङ्गणञ्च तथैव च” । तत्र विहितनिषिद्धवृक्षादि यथा “आश्रमे नारिकेलश्च दक्षिणाञ्च धनप्रदः । शिविरस्य यदीशाने पूर्वे पुत्रप्रदस्तरुः । सर्वत्र मङ्गलार्हश्च तरुराजो मनोहरः । रसालवृक्षः पूर्वस्मिन् नृणां सम्पत्प्रदस्तथा । शुभप्रदश्च सर्वत्र सुरकारो ! निशामय । विल्वश्च पनसश्चैव जम्बीरो बदरी तथा । प्रजाप्रदश्च पूर्वस्मिन् दक्षिणे धनदस्तथा । सम्पत्प्रदश्च सर्वत्र यतो हि वर्द्धते स्त्री । जम्बुवृक्षश्च दाड़िम्बः कदल्याम्रातकस्तथा । बन्धुप्रदश्च पूर्वस्मिन् दक्षिणे मित्रदस्तथा । सर्वत्र शुभदश्चैव धनपुत्रशुभप्रदः । हर्षप्रदो गुवाकश्च दक्षिणे पश्चिमे तथा । ईशाने सुखदश्चैव सर्वत्रैव निशामय । सर्वत्र चम्पकः शुभ्रो भुवि भद्रप्रदस्तथा । अलाबुश्चापि कुष्माण्डं मायाम्बुश्च सुकाकुकः । खर्ज्जुरी कर्कटी चापि शिविरे मङ्गलप्रदाः । वास्तूकः कारवेल्लश्च वार्त्ताकुश्च शुभप्रदाः । । लताफलञ्च शुभदं सर्वं सर्वत्र निश्चि-

**सर्वकर्तृ** पु॰ सर्वं करोति कृ-तृच्। १चतुर्मुखे ब्रह्मणि शब्दर॰। २परमेश्वरे च।

**सर्वकर्मीण** त्रि॰ सर्वकर्मभ्योऽलं ख। सर्वकरणसमर्थे पदार्थे "संग्रामे सर्वकर्मीणावि"ति भट्टिः। [नटे शब्दर॰।

**सर्वकेशिन्** पु॰ अभिनेयानां सर्वेषामिव केशोऽस्त्यस्य इनि।

**सर्वक्षार** पु॰ सर्वः क्षारमयः। (सावान) ख्याते पदार्थे राजनि॰

**सर्वग** न॰ सर्वं गच्छति गम-ड। १जले २शिवे ३परमेश्वरे पु॰ मेदि॰। ४वायौ ५आत्मनि च पु॰ शब्दमा॰। ६सर्वगामिनि त्रि॰। ७प्रियङ्गुवृक्षे स्त्री शब्दच॰ टाप्।

**सर्वगन्ध** न॰ सर्वे गन्धा अत्र। "चातुर्जातककर्पूरकक्कोलागुरुकुङ्कुमम्। लवङ्गसहितञ्चैव सर्वगन्धं प्रकीर्त्तितम्" भावप्र॰ उक्ते १गन्धद्रव्यसमूहभेदे। सर्वान् गन्धयति हिनस्ति संहारकाले गन्धत्यच् सर्वगन्धा उत्पाद्यतया सन्त्यस्य वा। २परमेश्वरे सर्वनाशकत्वात् सर्वगन्धहेतुत्वाद्वाऽस्य तथात्वम्।

**सर्वग्रन्थि** पु॰ सर्वत्र ग्रन्थिरिवास्य। १पिप्पलीमूले राजनि॰।

**सर्वङ्कष** पु॰ सर्वं कषति कष-खच् मुम् च। १पापे २सर्वातिरेकिणि त्रि॰। [शि॰कौ॰।

**सर्वजनीन** त्रि॰ सर्वजनेषु विदितः ख। सर्वत्र विख्याते

**सर्वज्ञ** पु॰ सर्वं जानाति ज्ञा-क। १शिवे २बुद्धे अमरः। ३परमेश्वरे च "यः सर्वज्ञः सर्वविद्" श्रुतिः। ४सर्वज्ञानकर्त्तरि त्रि॰। ५दुर्गायां स्त्री "सर्वज्ञा सर्ववेत्तृत्वात्" देवीपु॰ ४८अ॰।

**सर्वतःशुभा** स्त्री सर्वतः शुभं यस्याः। प्रियङ्गुवृक्षे शब्दच॰।

**सर्वतस्** अव्य॰ सर्व+तसिल्। समन्तत इत्यर्थे अमरः।

**सर्वतिक्ता** स्त्री सर्वतः तिक्ता। काकमाच्यां राजनि॰।

**सर्वतोभद्र** पु॰न॰ सर्वतो भद्राणि सुखानि यस्य। १चतुर्द्वारयुक्ते १गृहभेदे प्रतिष्ठादौ पूज्यदेवतानां २मण्डलभेदे सर्वतोभद्रमण्डलशब्दे दृश्यम्। ज्योतिषोक्ते ३शुभाशुभज्ञानार्थे चक्रभेदे चक्रशब्दे २८१५ पृ॰ दृश्यम्। अलङ्कारोक्ते बन्धभेदात्मके ४चित्रकाव्ये च। अलङ्कारशब्दे ४०७ पृ॰ दृश्यम् सर्वतो भद्रमस्मात्। ५निम्बवृक्षे पु॰ अमरः। ६गाम्भार्य्यां ७नटयोषिति च स्त्री मेदि॰।

**सर्वतोभद्रचक्र** न॰ सर्वतो भद्रं यत्र तादृशं चक्रम्। ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे चक्रशब्दे २८१५ पृ॰ दृश्यम्। [भेदे अलङ्कारशब्दे ४०७पृ॰दृश्यम्।

**सर्वतोभद्रबन्ध** पु॰ सर्वतो भद्राकारेण बन्धः। चित्रकाव्य-

**सर्वतोभद्रमण्डल** न॰ सर्वतो भद्रनामकं मण्डलम्। शारदातिलकाद्युक्ते प्रतिष्ठादौ—पूज्यदेवतामण्डलभेदे तल्लेखनप्रकारस्तु हेमाद्रौ स्कान्दे "प्रागुदीच्यां गता रेखाः कुर्य्यादेकोनविंशतिम्। खण्डेन्दुवह्निपात् कोणे ष्टङ्खला पञ्चभिः पदैः। एकादशपदा वल्ली भद्रन्तु नवभिः पदैः। चतुर्विंशत्पदा वापी परिधिर्विंशत्या पदैः। मध्ये षोडशभिः कोष्ठैः पद्ममष्टदलं स्मृतम्। श्वेतेन्दुः ष्टङ्खला, कृष्णां वल्लीं नीलेन पूरयेत्। भद्रारुणा सिता वापी परिधिः पीतवर्णकः। बाह्यान्तरदलैः श्वेता कर्णिका पीतवर्णिका। परिध्यावेष्टितं पद्मं बाह्ये सत्वरजस्तमः। तन्मध्ये स्थापयेद्देवान् ब्रह्माद्यांश्च सुरासुरानिति"। शारदायामन्यथोक्तं यथा "चतुरस्रचतुःकोष्ठे कर्णसूत्रसमन्विते। चतुर्ष्वपि च कोष्ठेषु कोणसूत्रचतुष्टयम्। ततः कोष्ठेषु मत्स्याः स्युस्तेषु सूत्राणि पातयेत्। यावत् शतद्वयं सन्ति षट्पञ्चाशत् पदान्यपि। तावत्तेनैव विधिना तत्र सूत्राणि पातयेत्। षट्त्रिंशता पदैर्मध्ये लिखेत् पद्मं सुलक्षणम्। बहिःपङ्क्त्या भवेत् पीठं पङ्क्तियुग्मेन वीथिका। द्वारशोभोपशोभास्रान् शिष्टाभ्यां परिकल्पयेत्। शास्त्रोक्तविधिना मन्त्री ततः पद्मं समालिखेत्। पद्मक्षेत्रस्य सन्त्यज्य द्वादशांशं बहिः सुधीः। तन्मध्यं विभजेद्वृत्तैस्त्रिभिः समविभागतः। आद्यं स्यात् कर्णिकास्थानं केशराणां द्वितीयकम्। तृतीयं पद्मपत्राणामुक्तांशेन दलाग्रकम्। बाह्यवृत्तान्तरालस्य मानेन विधिना सुधीः। निधाय केशराग्रेषु परितोऽष्टनिशाकरान्। लिखित्वा सन्धिसंस्थानि तत्र सूत्राणि पातयेत्। दलाग्राणाञ्च यन्मानं तन्मानाद्वृत्तमालिखेत्। तदन्तरालतन्मध्यसूत्रस्योभयतः सुधीः। आलिखेद्वाह्यवृत्तेन दलाग्राणि समन्ततः। दलमूलेषु युगशः केशराणि प्रकल्पयेत्। एतत् साधारणं प्रोक्तं पङ्कजं तन्त्रवेदिभिः। पदानि त्रीणि पादार्थं पीठकोणेषु मार्जयेत्। अवशिष्टैः पदैर्विद्वान् पीठगात्राणि कल्पयेत्। पदानि वीथिसंस्थानि मार्जयेत् पङ्क्तिभेदतः। दिक्षु द्वाराणि रचयेत् द्विचतुःकोष्ठकैस्ततः। पदैस्त्रिभिरथैकेन शोभाः स्युर्द्वारपार्श्वयोः। उपशोभाः स्युरेकेन त्रिभिः कोष्ठैरनन्तरम्। अवशिष्टैः पदैः षड्भिः कोणानां स्याच्चतुष्टयम्। रञ्जयेत् पञ्चभिर्वर्णैर्मण्डलं तन्मनोहरम्। पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम्। कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम्। बिल्वादिपत्रजं श्याममित्युक्तं वर्णपञ्चकम्। अङ्गुलोत्सेधविस्ताराः सीमारेखाः सिताः

शुभाः। कर्णिकां पीतवर्णेन केसरागयरुणेन च। शुक्लवर्णानि पत्राणि तत्सन्धीन् श्यामलेन च। रजसा रञ्जयेन्मन्त्री यद्वा पीतैव कर्णिका। केसराः पीतरक्ताः स्यु रक्तणानि दलान्यपि। सन्धयः कृष्णवर्णाः स्युः सितेनाप्यसितेन वा। रञ्जयेत् पीठमार्गांश्च पादाः स्युररुणप्रभाः। गात्राणि तस्य शुक्लानि वीथीषु चतसृष्वपि। आलिखेत् कल्पलतिकादलपुष्पफलान्विताः। वर्णैर्नाना विधैश्चित्राः सर्वदृष्टिमनोहराः। द्वाराणि श्वेतवर्णानि शोभा रक्ताः समीरिताः। उपशोभाः पीतवर्णाः कोणान्यसितभानि च। तिस्रो रेखा बहिः कार्य्याः सितरक्तासिताः क्रमात्। मण्डलं सर्वतोभद्रमेतत् साधारणं स्मृतम्"। अपरञ्च "चतुरस्रं भुवं भित्त्वा दिग्भ्यो द्वादशधा सुधीः। पातयेत् तत्र सूत्राणि कोष्ठानां दृश्यते शतम्। चतुश्चत्वारिंशदाढ्यं पश्चात् षट्त्रिंशताब्जम्। कोष्ठैः प्रकल्पयेत् पीठं पङ्क्त्या नैवात्र वीथिकाः। द्वारशोभे यथा पूर्वमुपशोभा न दृश्यते। अवशिष्टैः पदैः कुर्य्यात् षड्भिः कोष्ठानि तन्त्रवित्। विदध्यात् पूर्ववत् शेषमेवं वा मण्डलं स्मृतम्"। "चतुरस्रे चतुःषष्टिं पदान्यारचयेत् सुधीः। पदैश्चतुर्भिः पद्मं स्यात् मध्ये तत् पूरिताः पुनः। वीथीस्ततः कुर्वीत मण्डलान्तरशालिकाः। दिग्गतेषु चतुष्कोषु पङ्कजानि समालिखेत्। विदिग्गतचतुष्काणि भित्त्वा षोड़शधा सुधीः। मार्जयेत् स्वस्तिकाकारं श्वेतपीतारुणासितैः"। मार्जनमाह राघवभट्टधृतम् "विदिग्गतचतुष्कोणान् भित्त्वा षोड़शधा सुधीः। वक्राद्रिकोष्ठत्रितये मध्योर्ध्वमपि मार्जयेत्। रजोभिः पूरयेत्तानि स्वस्तिकानि शिवादितः। प्राक् प्रोक्तेनैव मार्गेण शेषमन्यत् समापयेत्। नवनाभमिदं प्रोक्तं मण्डलं सर्वसिद्धिदम्। पञ्चाब्जमण्डलं प्रोक्तमेतत् स्वस्तिकवर्जितम्। दीक्षायां देवपूजायां मण्डलानां चतुष्टयम्। सर्वतन्त्रानुसारेण प्रोक्तं सर्वसमृद्धिदम्"।

**सर्वतोमुख** न० सर्वतोमुखमस्य। १जले अमरः २आकाशे मेदि० ३शिवे ४ब्रह्मणि ५परमेश्वरे ६आत्मनि च पु० मेदि०। ७ब्राह्मणे शब्दच० ८स्वर्गे ९अग्नौ शब्दमा०। "सर्वतःपाणिपादान्तः सर्वतोऽक्षिशिरोमुखः। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु" ति०त० उक्तेः वह्नेस्तथात्वम्। [वेत्यर्थे।

**सर्वत्र** अव्य० सर्व-त्रल्। सर्वस्मिन् काले देशे सर्वस्यां दिशि

**सर्वत्रग** पु० सर्वत्र गच्छति गम-ड। १वायौ शब्दच० २सर्वत्रगामिनि त्रि०। [र्वत्र गन्तरि त्रि० स्त्रियां ङीप्।

**सर्वत्रगामिन्** पु० सर्वत्र गच्छति गम-णिनि। १वायौ २स-

**सर्वथा** अव्य० सर्वप्रकारम् थाल्। १सर्वप्रकारे २अत्यर्थे ३प्रतिज्ञायां ४हेतौ च शब्दर०।

**सर्वदम** पु० सर्वान् दमयति दम-णिच्-अण्। सर्वदमने शाकुन्तले भरतनृपे हेमच०।

**सर्वदमन** पु० सर्वान् दमयति दम-णिच्-ल्यु। १दुष्मन्तपुत्रे भरतनृपे त्रिका०। २सर्वदमनकर्त्तरि त्रि०।

**सर्वदर्शिन्** पु० सर्वं समभावेन पश्यति दृश-णिनि। १बुद्धे २परमेश्वरे च। ३सकलद्रष्टरि त्रि० स्त्रियां ङीप्।

**सर्वदा** अव्य० सर्वस्मिन् काले दाच्। सर्वस्मिन् काले इत्यर्थे।

**सर्वदुःखक्षय** पु० सर्वेषामाध्यात्मिकाधिदैविकाधिभौतिकानां दुःखानां क्षयः। आत्यन्तिकदुःखत्रयनिवृत्तौ मोक्षे हेमच० "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" सा० सू० "स्वसमानाधिकरणदुःखासमानकालीनत्वं दुःखध्वंसस्यपनिवृत्तेरात्यन्तिकत्वम्।

**सर्वदेवमुख** पु० सर्वेषां देवानां मुखं यत्र। अग्नौ रत्नमा०।

**सर्वद्र्यञ्च्** त्रि० सर्वमञ्चति पूजयति अञ्च-क्विप् अद्र्यागमः न नलोपः। सर्वस्य पूजके। भत्वे सर्वद्रीचः इत्यादि। गत्यर्थस्य नलोपे सर्वद्र्यच् इत्येव सर्वगामिनि। भत्वे सर्वद्रीच इति भेदः।

**सर्वधुरावह** त्रि० सर्वेषां धूः अच्समा० सर्वधुरा तां वहति वह-अच्। सर्वभारवाहके वृषादौ अमरः।

**सर्वधुरीण** त्रि० सर्वां धुरं वहति ख। सकलभारवाहके वृषादौ अमरः।

**सर्वनाम** पु० सर्वेषां नाम वाचकं संज्ञात्वेऽपि सुब्ना० न णत्वम्। व्याकरणोक्ते कार्य्यविशेषार्थं कृतसंज्ञायुते सर्वादिशब्दभेदे "सर्वादीनि सर्वनामानि" पा०सर्वनामशब्दार्थस्तु वक्तृबुद्धिविषयतावच्छेदकधर्मोपलक्षितधर्मविशिष्टः।

**सर्वपूर्णत्व** न० सर्वैः पूर्णत्वम्। मल्लारे रागभ्राम त्रिका०।

**सर्वप्रहरणायुध** पु० सर्वेषां प्रहरणानि सर्वाणि वा प्रहरणानि आयुधान्यस्य। विष्णौ "सर्वप्रहरणायुधः" विष्णु स० व्युत्पत्तिद्वययोगात् नामद्वयम् तेन नामसहस्रपूर्त्तिः" भा०। [भक्षके त्रि० २वह्नौ पु०।

**सर्वभक्षा** स्त्री भक्ष-अण् उप०। १अजायां हेमच० २सर्व-

**सर्वमङ्गला** स्त्री सर्वाणि मङ्गलान्यस्याः ५ब० सर्वाणि मङ्गलानि देयत्वेनास्त्यस्याः अच् वा। दुर्गायाम् अमरः। "सर्वाणि हृदयस्थानि मङ्गलानि शुभानि च। ददाति

चेपसितान् लोके सा तेन सर्वमङ्गला" देवीपु० ४५ अ० ।

**सर्वमय** त्रि० सर्वात्मकः मयट् । १सर्वात्मके २परमेश्वरे पु० ।

**सर्वमूल्य** न० ६त० । कपर्द्दके त्रिका० ।

**सर्वमूषक** पु०सर्वं मुष्णाति मुष-वुन् पृषो० । काले हेमच० ।

**सर्वरस** पु० सर्वोरसमयः । (धुना) १शालरसे अमरः ७ व० । २वीणादिवाद्ये मेदि० । ३पण्डिते शब्दच० । कर्म० । ४लवणे रसे । सर्वाणि रसयति रसि-अण् । ५परमेश्वरे सैन्धवघनवद् तस्य सर्वत आनन्दमयत्वात् तथात्वम् ।

**सर्वरसोत्तम** पु० सर्वेषु रसेषु उत्तमः । लवणे रसे हेमच० ।

**सर्वरात्र** पु० सर्वा रात्रिः अच् समा० । "रात्राह्नाहाः पुंसीति" पा० पुंस्त्वम् । सकलरात्रौ सि०कौ० । [दिरयम् ।

**सर्वरी** स्त्री सृ-वनिप् ङीप् र च । रात्रौ धरणिः तालव्या-

**सर्वर्त्तुपरिवर्त्त** पु० सर्वर्तूनां परिवर्त्तो यत्र । वत्सरे जटा०

**सर्वला(ली)** स्त्री सर्वं लाति ला-क वा गौरा० ङीष् । तोमरास्त्रे अमरः ।

**सर्वलिङ्गिन्** पु० सर्वेषां लिङ्गानि सन्त्यस्य इनि । वेदविरुद्धाचारिणां बौद्धादीनां लिङ्गवत्सु पाषण्डेषु अमरः

**सर्वलोह** पु० सर्वः लोहमयोऽवयवो यस्य । लौहमये बाणे हेमच० । [गान्धारीहक्षे जटा० ।

**सर्ववर्णिका** स्त्री सर्वं वर्णयति वर्ण-ण्वुल् अत इत्त्वम् ।

**सर्वविद्** पु० सर्वं वेत्ति विद-क्विप् । १परमेश्वरे २सर्वज्ञातरि त्रि० ।

**सर्ववेद** पु० सर्वान् वेदान् अधीते उक्थ्या० ठक् । "सर्वादेः सादेश्च लुक् वक्तव्यः" वार्त्ति० तस्य लुक् । १सर्ववेदाध्ययनकर्त्तरि । सर्वं वेत्ति विद-अण् उप० । २सर्वज्ञे त्रि० ।

**सर्ववेदस्** पु० सर्वाणि धनानि वेदयते लम्भयति पात्राय दक्षिणार्थं ददाति विद-लाभे णिच्-असि । सर्वस्वदक्षिणकविश्वजिन्नामकादियागकर्त्तरि अमरः ।

**सर्ववेदस** न० सर्वं वेदः गृहे विद्यमानं धनं नि० अच्समा० । सर्वस्वे गृहे विद्यमाने सर्वधने तच्च विश्वजिद्याग़े दक्षिणात्वेन विहितम् । "सहस्रं सर्ववेदसं विश्वजितः" कात्या०श्रौ० २२।१।८ सहस्रसर्ववेदसयोर्विश्वजिति विकल्पः । सर्ववेदसपक्षे इदमुच्यते । "ज्येष्ठं पुत्रमपभज्य भूमिशूद्रवर्जं योगाविशेषात् सर्वेषाम्" सू० । "ज्येष्ठपुत्रस्य विभागं दत्त्वा भूमिशूद्रवर्जं ददाति कुत एतत् सर्वमनुष्याणां हि भूम्या योगोऽविशिष्टः धारणचङ्क्रमणद्वारेण, शूद्रस्य च शुश्रूषोपनततेति" कर्क. "भूमिस्तावद्धारणशयनासनचङ्क्रमणादिसम्बन्धः सर्वेषा-

सविशिष्टः यः शूद्रो धर्मार्थं सेवां कुरुते स सर्वेषामविशिष्ट एव संप०व्या० । "शूद्रदानं वा दर्शनाविरोधाच्छास्त्रम्" सू० । वाशब्दः पक्षव्यावृत्तौ शूद्रस्य दानं च भवति इष्यन्ते हि शूद्रस्य दानं पुरुषमेधे "सपुरुषं प्राची दिग् धातुरिति" न च विरोधो गर्भदासस्य । तस्माच्छूद्रो दीयत एव अनेन च न्यायेन भूमेरप्येकदेशदानेनैव न विरोधः "परिमाणे सर्वसविशेषात्" सू० । सर्वस्वपरिमाणे यस्य यावत् स्वं तत्सर्वं गृह्यते सर्वं वेदः सर्ववेदसमिति तेन प्रागपि सहस्रात् सर्ववेदसं भवति एवं प्राप्ते आह । सर्वस्वपरिमाणे अपेक्षिते सर्वस्वं यस्य यावद्धनं गृहे सुवर्णादि तत्सर्वं देयम् कुतः अविशेषात् न च सर्वस्वं ददातीति (अस्य) वाक्यशेषः श्रुतः येन सहस्रान्न्यूनमतिरिक्तं वेति विशेष आश्रीयते । "अधिकं वा प्रकृत्यनुपहात् सू० । "अधिकं वा सहस्रात् सर्ववेदसं ग्रहीतव्यम् । प्रकृत्य हि सर्ववेदसं सहस्रेणानुपहं दर्शयति कोऽर्हति मनुष्यः सर्ववेदसं दातुं तस्मात् सहस्रं देयमिति एतच्च सहस्रादधिक उपपद्यते नेतरथेति एवं तावदत्र (विश्वजिति) सहस्रादधिकं सर्ववेदसमित्युक्तम्" कर्कः । "सर्वस्य प्रतिनिधिर्वा" सू० "दीयते अप्रसिद्धत्वादुच्यते" कर्क० "धेन्वनडुत्सारधान्यपल्यदासमिथुनमहानसारोहणविमितशयनानि" सू० । "धेन्वादीनि दासमिथुनान्तानि प्रसिद्धानि महानसोपयोगिकं द्रव्यं ताम्रचर्वादिमहानसशब्देनोच्यते आरोहणं च युग्यं विमितशयने प्रसिद्धे एव । धेनुः प्रसिद्धा अनड्वान् बलीवर्दः सीरं हलम् धान्यं गोधूमादिपल्यं पलादिमानार्हम् । दासमिथुनं दासीदासौ महानसं ताम्रचर्वादिगृहोपकरणम् आरोहणं हस्त्यश्वादि विमितं गृहम् शयनं खट्वादि एतानि दद्यात्" कर्कः ।

**सर्ववेशिन्** पु० सर्वेषां वेशो धार्य्यत्वेनास्त्यस्य इनि । नटे हेमच० । [२सर्वलोचिते त्रि० ।

**सर्वसङ्गत** पु० सर्वं सङ्गतमुचितं यस्य । १षष्टिधान्ये शब्दच०

**सर्वसंसर्गलवण** न० सर्वसंसर्गेण जातं लवणम् । औषरके लवणे राजनि० ।

**सर्वसन्नहन** न० सर्वेषां सन्नहनं युद्धार्थं सज्जीकरणं यत्र । चतुरङ्गसैन्यसज्जीकरणेन युद्धयात्रायाम् अमरः ।

**सर्वसह** पु० सर्वं सहते अच् । १गुग्गुलौ रत्नमा० २सर्वसहिष्णौ त्रि० । [२सकलार्थसाधने त्रि० ।

**सर्वसिद्धि** पु० सर्वेषां सिद्धिरस्मात् । १श्रीफले शब्दच० ।

**सर्वस्व** न० कर्म० । सकलधने सर्ववेदसशब्दे दृश्यम् ।

**सर्वस्वदक्षिण** पु० सर्वस्वं दक्षिणा यत्र । विश्वजिन्नामकयागभेदे सर्ववेदसशब्दे दृश्यम् । [२सकलहितहेतौ त्रि० ।

**सर्वहित** न० सर्वेषां हितम् । १मरिचे राजनि० ५व० ।

**सर्वाङ्गसुन्दर** पु० औषधभेदे "रसगन्धकतुल्यांशौ द्वौ भागौ टङ्कणस्य च । मौक्तिकं विद्रुमं शङ्खमवनीय समांशतः । हेमभस्मार्द्धभागञ्च सर्वं खल्ले निधापयेत् । निम्बूद्रवस्य योगेन पिष्टिकां कारयेद्भिषक् । पश्चात् गजपुटं दद्यात् शीतलञ्च समुद्धरेत् । हैमभस्मसमं तीक्ष्णं तीक्ष्णार्द्धो हरदो मतः । एकीकृत्य समस्तानि सूक्ष्मचूर्णानि कारयेत् । ततः पूजां प्रकुर्वीत भक्षयेत् दिवसे शुभे । सर्वाङ्गसुन्दरो ह्येष रोगराजनिकृन्तनः । वातपित्तज्वरे घोरे सन्निपाते सुदारुणे । अर्शःसु ग्रहणीरोगे मेहे गुल्मे भगन्दरे । निहन्ति वातजान् रोगान् शौथिकांश्च विशेषतः । पिप्पलीमधुसंयुक्तं घृतयुक्तमथापि वा । भक्षयेत् पर्णखण्डेन सितया चार्द्रकेण वा । गुडूचीरससहितं प्रमेहे च विशेषतः । रसरत्नाकरप्रोक्तः सिद्धयोगो रसोत्तमः । राजिकाहिङ्गुतैलाम्लं लवणाद्यं विवर्जयेत्" भैषज्यरत्ना० । अत्र हेमभस्मनः सर्वद्रव्यार्द्धत्वमिति मतान्तरम् ।

**सर्वाङ्गीण** त्रि० सर्वाण्यङ्गानि व्याप्नोति ख । सर्वावयवव्यापके "सर्वाङ्गीणो तरत्वचे" इति भट्टिः ।

**सर्वाणी** स्त्री सर्वेभ्य आनयति मोक्षं आ+नी-ड पूर्वपदादिति णत्वम् । दुर्गायाम् "सर्वान् मोक्षान् प्रापयति जन्ममृत्युजरादिकम् । चराचरांश्च विश्वस्थान् सर्वाणी तेन कीर्त्तिता" ब्रह्मवै० प्र० ५४अ० तन्निरुक्तिः ।

**सर्वानुकारिणी** स्त्री सर्वमनुकरोति अनु+कृ-णिनि ङीप् । १शालपर्ण्याम् राजनि० २सकलसदृशे त्रि० स्त्रियां ङीप् ।

**सर्वानुभूति** स्त्री सर्वेषामनुभूतिर्यत्र । १श्वेतत्रिवृतायाम् अमरः २तत्त्वज्ञानिनि त्रि० ३जिनभेदे हेमच० ।

**सर्वान्नभोजिन्** त्रि० सर्वेषामन्नं सर्वाण्यन्नानि वा भुङ्क्ते भुज-णिनि । सर्वान्नभक्षके अमरः । [भक्षके अमरः

**सर्वान्नीन** त्रि० सर्वेषामन्नं सर्वमन्नं वा भक्षक्ते ख । सर्वान्न

**सर्वाभिसन्धिन्** पु० सर्वत्र आचरणे अभिसन्धास्यस्य इनि । १सर्वत्राभिसन्धिमति जने २छद्मतापसे त्रिका० ।

**सर्वाभिसार** पु० अभिस्रियते अत्र अभि+सृ-भावे घञ् हत० । चतुरङ्गसैन्यसन्नाहेन युद्धयात्राभेदे ।

**सर्वार्थसिद्ध** पु० सर्वेषु अर्थेषु सिद्धः । १बुद्धे अमरः हेम० । २सकलाभीष्टसिद्धियुक्ते त्रि० ।

**सर्वार्थानुसाधिनी** स्त्री "धर्मादीन् चिन्तितान् यस्मात् सर्वलोकेषु यच्छति । ततो देवी समाख्याता सा सर्वार्थानुसाधिनी" देवीपु० ४५अ० निरुक्तायां दुर्गायाम् ।

**सर्वावसर** पु० सर्वेषां कर्मणामवसरोऽपहरणं यत्र । अर्द्धरात्रे त्रिका० । [२सकलास्त्रयुते त्रि० ।

**सर्वास्त्रा** स्त्री सर्वाणि अस्त्राणि यस्याः । १देवीभेदे हेमच०

**सर्वाह्ण** पु० सर्वमहः टच्समा० ह्णादेशः णत्वम् । सकलदिने

**सर्वौघ** पु० सर्वेषां चतुरङ्गसैन्यानामोघो छन्दमभिसारे यत्र । अयोभूतसर्वसैन्याभिसारे अमरः कर्म० । २सर्वजलवेगे मेदि०

**सर्वौषधि** स्त्री कर्म० । "कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः । मुराचम्पककर्पूरैर्मुस्तैः सर्वौषधिः स्मृता" इत्युक्ते कुष्ठादिद्रव्यवर्गे राजनि० । हेमाद्रौ छन्दोगपरिशिष्टे "कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचन्दनम् । वचा चम्पकमुस्तञ्च सर्वौषध्यो दश स्मृताः" ता एवोक्ताः । शब्दचन्द्रिकामेता एव सर्वौषधिगणत्वेनोक्ताः ।

**सर्वौषधिगण** पु० सर्वासामोषधीनां गणः । "मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम् । शठीचम्पकमुस्तञ्च सर्वौषधिगणः स्मृतः" शब्दच० उक्ते द्रव्यगणे ।

**सर्षप** पु० सृ-अप षुक् च । (सरिषा) १सस्यभेदे अमरः । "सर्षपस्तु रसे पाके कटुर्हृद्यः सभक्तिकः । तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्द्धनः । रक्षोहरो जयेत् कण्डूकुष्ठकोठकृमिग्रहान् । यथा रक्तस्तथा गौरः किन्तु गौरोवरो मतः" तच्छाकगुणाः "कटुकं सार्षपं शाकं बहुमूत्रमलं गुरु । अम्लपाकं विदाहि स्यादुष्णं रूक्षं त्रिदोषकृत् । सक्षारं लवणं तीक्ष्णं स्वादु शाकेषु निन्दितम् । तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्मव्रणापहम् । कण्डूकृमिहरं दद्रुकुष्ठघ्नं रुचिकारकम्" भावप्र० । "जालान्तरगते भानौ यच्चाणु दृश्यते रजः । तैश्चतुर्भिर्भवेल्लिक्षा लिक्षा षड्भिश्च सर्षपः" शब्दच० उक्ते २मानभेदे । ३खञ्जनिकायां स्त्री त्रिका० ङीष् ।

**सर्षपतैल** न० सर्षपस्य स्नेहः सर्षप+स्नेहार्थे-तैलच् । सर्षपस्नेहरूपे तैलभेदे "सर्षपतैलं तिक्तं कटुकं वातकफविकारघ्नम् । पित्तास्रदोषदं कृमिकुष्ठघ्नं तिलजवच्चक्षुष्यम्" राजनि० ।

**सल** न० सल-अच् । जले भरतः ।

**सलिल** न० सल-इलच् । १जले अमरः । तद्वैकृत्ये फलं जलवैकृतशब्दे २०७२पृ० दृश्यम् । ज्यो०उक्ते २जलदेवताके उत्तराषाढ़ानक्षत्रे लग्नावधिके ४चतुर्थस्थाने च

**सलिलकुन्तल** पु॰ सलिलस्य कुन्तल इव। शैवाले त्रिका॰।

**सलिलज** न॰ सलिले जायते जन–ड। १पद्मे राजनि॰। २जलजातमात्रे त्रि॰।

**सलिलनिलय** पु॰ सलिलं निलयो यस्य। १जलचरे २मीनकर्कटराशौ च "सलिलनिलयाभस्था वस्त्राः सरीसृपजातयः" ज्यो॰त॰।

**सलिलराशि** पु॰ ६त॰। समुद्रे सलिलनिध्यादयोऽप्यत्र।

**सलिलेन्धन** पु॰ सलिलमिन्धनमिव दाह्यं यस्य। वडवानले त्रिका॰।

**सल्लकी** स्त्री शल–वुन् लुक्च पृषो॰ शस्य सः गौरा॰ ङीष्। शल्लक्यां गजभक्ष्यायाम् अमरे पाठान्तरम्।

**सव** पु॰ सूयते सु–अच्। १यज्ञे अमरः। २सन्ताने मेदि॰। अच्। ४सूर्य्ये ४अर्कवृक्षे ५जले न॰ जटा॰।

**सवन** न॰सु–सू–वा ल्युट्। १यज्ञाङ्गे २स्नाने अमरः। सोमनिष्पीडने ४अभिषवे अमरः ५सोमपाने भरतः। ६यज्ञे ७प्रसवे च दशाद्यसन्ताने। यज्ञियसवनानि च त्रीणि प्रातर्मध्यतृतीयभेदात्। "हवींषि निर्वपत्याग्नेयमैन्द्रं वैश्वदेवं चरुं सवनकालेष्वेकैकम्" कात्या॰श्रौ॰२४।७।५। सू॰ "क्रतएतत् आग्नेयं प्रातःसवनम्, ऐन्द्रं माध्यन्दिनसवनम्, वैश्वदेवं तृतीयसवनमित्यर्थवादात्"। "प्रातर्मध्यन्दिनापराह्णेषु एकैकं हविर्निर्वपति" कर्कः।

**सवयस्** त्रि॰समानं वयो यस्य समानस्य सः। वयस्ये अमरः "सवयोभिरन्वितः" इति रघुः।

**सवर्ण** पु॰ समानोवर्णो यस्य। १तुल्यरूपे हेमच॰ २एकजात्याश्रये यथा विप्रस्य विप्रजातिः क्षत्रियस्य क्षत्रियजातिः "तुल्यास्यप्रयत्नं सवर्णमिति" पा॰ उक्ते स्थानप्रयत्नाभ्यां ३तुल्ये वर्णे च यथा ककारस्य स्थानेन तुल्यो गकारादिः, प्रयत्नसाम्येन तकारस्य चकारादिः, जकारस्य सकारः सकारस्य मकारः। हकारस्य वर्ग्यास्तुल्या वर्णाः। सह वर्णेन। ४वर्णसहिते त्रि॰।

**सवर्णन** न॰ सवर्ण+कृतौ णिच्–भावे ल्युट्। तुल्यरूपता सम्पादने "अंशसवर्णनं स्यात्" लीला॰।

**सवहा** स्त्री सह वहेन। त्रिवृतायां भरतः।

**सवासस्** त्रि॰ सह वाससा। १वस्त्रत्यागविलम्बस्याक्षमे वेगवति "सवासा जलमाप्लवेत्" स्मृतिः।

**सविकल्पक** न॰ सह–विकल्पेन कप्। वेदान्तोक्ते ज्ञातृज्ञेयभेदादिकल्पनासहिते १समाधिभेदे न्यायोक्ते एकत्र... [illegible] २ज्ञानभेदे च पात॰उक्ते सम्प्रज्ञाते ३समाधिभेदे असम्प्रज्ञातशब्दे ४७॰ पृ॰ दृश्यम्। निर्विकल्पकशब्दे ४१०३पृ॰ दृश्यम्।

**सविकाश** त्रि॰ सह विकाशेन। १प्रफुल्ले विकसिते २असङ्कोचे च "जगन्ति यस्यां सविकाशमासत" माघः।

**सविचारा** स्त्री पात॰ उक्ते समापत्तिरूपसमाधिभेदे निर्विचारशब्दे ४१०१ पृ॰ दृश्यम्।

**सवितर्का** स्त्री पात॰ उक्ते समापत्तिरूपसमाधिभेदे "तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः" सू॰ "तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यविभागेन विभक्तानामपि ग्रहणं दृष्टं विभज्यमानाश्चान्ये शब्दधर्मा अन्येऽर्थधर्मा अन्ये विज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः, तत्र समापन्नस्य योगिनोयोगवाद्यार्थः समाधिप्रज्ञायां समारूढः स चेत् शब्दज्ञानविकल्पानुविद्ध उपावर्त्तते सा सङ्कीर्णा समापत्तिः सवितर्केत्युच्यते। यदा पुनः शब्दसङ्केतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवावच्छिद्यते सा च निर्वितर्का समापत्तिः तत् योगिनां परं प्रत्यक्षं, तच्च श्रुतानुमानयोर्बीजं ततः श्रुतानुमाने प्रभवतः। न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनं तस्मादसङ्कीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति" भा॰।

**सवितृ** पु॰ सू–तृच्। १जगत्स्रष्टरि परमेश्वरे "तत्सवितुर्वरेण्यमि"ति श्रुतिः। २सूर्य्ये ३अर्कवृक्षे अमरः। ४तद्देवताके हस्तनक्षत्रे ज्यो॰। ५मातरि स्त्री हेमच॰ ङीप्। सवितुरिदं य सवित्रिय तत्सम्बन्धिनि त्रि॰। स देवताऽस्य अण्। सावित्र तद्देवताकचर्वादौ त्रि॰ स्त्रियां ङीप्।

**सविध** त्रि॰ सह विध्यति विध–क सहस्य सः। १निकटे अमरः "सविधेऽपि न सूक्ष्मसाक्षिणी" नैषधम्। सह विधया। २प्रकारयुते ३विधानयुक्ते च त्रि॰।

**सविस्मय** त्रि॰ सह विस्मयेन। विस्मयापन्ने हारा॰।

**सवीज** पु॰ पात॰ उक्ते समाधिभेदे "ताएव सवीजः समाधिः" सू॰ "तास्तस्रः समापत्तयो बहिर्वस्तु वीजरूपा इति समाधिरपि सवीजः तत्र स्थूलेऽर्थे सवितर्का निर्वितर्के सूक्ष्मेऽर्थे सविचारनिर्विचारे इति चतुर्धा उपसंख्यातः समाधिरिति" भा॰। [२वीजान्विते धरणिः।

**सवेश** त्रि॰ विशन्त्यत्र वेशोदेशः सह वेशेन। १निकटे अमरः

**सव्य** त्रि० षू-प्रेरणे यत् । १वामे २दक्षिणे च अमरः । ३प्रतिकूले हेमच० ४विष्णौ शब्दमा० ।

**सव्यभिचार** पु० सह व्यभिचारेण सहस्य सः । अनैकान्तिके दुष्टहेतुभेदे तल्लक्षणं तु "अनैकान्तिकः सव्यभिचारः" गौ०सू० "व्यभिचार एकत्राव्यवस्था सह व्यभिचारेण वर्त्तते इति सव्यभिचारः निदर्शनं नित्यः शब्दोऽस्पर्शत्वात्" वा०भा० । तच्च साध्यवन्निष्ठात्यन्ताभावप्रतियोगित्वे सति साध्याभाववन्निष्ठात्यन्ताभावप्रतियोगित्वम् चिन्ता० । सव्यभिचारपत्तदीधित्यादौ दृश्यम् ।

**सव्यसाचिन्** पु० सव्येन वामेनापि सचति सन्दधाति बाणं सच-णिनि । अर्जुने हेमच० "उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे । तेन देवमनुष्येषु सव्यसाचीति मां विदुः" भा०वि० ४४अ० ।

**सव्येष्ठ** पु० सव्ये तिष्ठति स्था-क अलुक्स० अम्बष्ठादि० षत्वम् । सारथौ हला० । [सारथौ अमरः ।

**सव्येष्ठृ** पु० सव्ये तिष्ठति स्था-ऋन् किच्च अलुक्स० षत्वम् ।

**सशल्या** स्त्री सह शल्येन । १नागदन्त्यां रत्नमा० २शल्ययुक्ते त्रि० । [त्रि० "न ससत्त्वेषु गर्त्तेष्वि"ति मनुः ।

**ससत्त्वा** स्त्री सह सत्त्वेन । १गर्भवत्यां स्त्रियां २प्राणियुक्ते

**स(श)सन** न०स(श)स-हिंसने ल्युट् । यज्ञार्थं पशुहनने अमरः

**सस्य** न०सस-यत् । १वृक्षादीनां फले अमरः २क्षेत्रगते धान्ये च हेमच० "सस्यं क्षेत्रं गतं प्रोक्तम्" स्मृतिः । "सस्यञ्च गृहमागतम्" चाणक्यः तालव्यादिरयमित्येके । ३शस्त्रे ४गुणे विश्वः ।

**सस्यक** पु० सस्यमिव कायति कै-क । "सस्यको नारिकेलान्तःसलिले मणिखड्गयोः" मेदि० उक्ते १मणिभेदे २खड्गे च ।

**सस्यमारिन्** पु० सस्यं मारयति मृ-णिच् णिनि । १मूषके राजनि० २सस्यघातके त्रि० । [अमरः ।

**सस्यसंवर** पु० सस्यं संवृणोति सम्+वृ-अच् । शालवृक्षे

**सस्यसंवरण** पु० सस्यं संवृणोति सम्+वृ-ल्युट् । अश्वकर्णवृक्षे राजनि० । [२धर्मयुक्ते त्रि० ।

**सस्वेदा** स्त्री सह स्वेदेन सहस्य सः । १दूषितकन्यायां शब्दर०

**सह** अव्य० सह-अच् । १साहित्ये अमरः २साकल्ये ३सादृश्ये ४यौगपद्ये ५विद्यमानत्वे ६समृद्धौ ७सम्बन्धे मेदि० । ८सामर्थ्ये शब्दमा० । सहशब्दार्थस्तु समभिव्याहृतक्रियाकालः स्वक्रियाकालीनक्रिया वा । तत्र तद्योगक्रियान्वयिनि तृतीया । पुत्रेण सहागता पिता ।

**सह** पु० सहते सह-अच् । १अग्रहायणमासे २भारादिसहिष्णौ त्रि० हेमच० ३गन्धतृणे ४बले पु०न० मेदि० ।

**सहकार** पु० सह युगपत् किरति सौरभम् दूरात् कृ-अण् । अतिदूरगामिसौरभान्विते १आम्रे अमरः । भावे घञ् । २सहकर्मकरणे पु० ।

**सहकारिन्** त्रि० सह सम्भूय करोति कार्य्यं कृ-णिनि । हेतुभेदे स्वभिन्ने स्वकार्य्यकारके हेतौ । [हगतौ च

**सहगमन** न०सह+गम-ल्युट् । १पत्या सहपत्न्या मरणे २स-

**सहचर** पु० सह चरति चर-अच् । १पीतझिण्ट्यां २नीलझिण्ट्यां च रत्नमा० । ३वयस्ये ४प्रतिबन्धके ५झिण्ट्यां हेमच० । ६सहाये ७अनुचरे त्रि० मेदि० "सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः" कुमारः । स्त्रियां ङीप् ।

**सहचरी** स्त्री सह चरति चर-ट ङीप् । १पीतझिण्ट्यां २सख्यां जटा० । सह चरति धर्मम् चर-ट ङीप् । धर्मपत्न्यां हेमच० । [करणद्वित्वे ।

**सहचार** पु० सह+चर-घञ् । सामानाधिकरण्ये तदधि-

**सहज** पु० सह जायते जन-ड । १सहोदरे अमरः २निसर्गजे स्वभावसिद्धे च "सहजप्राकृतावपि" माघः । ३सहोत्थिते त्रि० मेदि० ज्योतिषोक्ते जन्मलग्नात् ४तृतीयस्थाने । तत्र भ्रातुः शुभादिचिन्तनीयत्वम् ।

**सहजमित्र** न० सहजं स्वभावसिद्धम् मित्रम् । स्वभावतो मित्रे भागिनेयादौ त्रिका० ।

कतिचित् सहजमित्राणि शुक्रनी०परि० उक्तानि यथा "केचित् स्वभावतोऽमित्रामित्राणि सन्ति सर्वदा । माता मातृकुलं चैव पिता तत्पितरौ तथा । पितृपितृव्यात्मकन्या पत्नी तत्कुलमेव हि । पितृमातृात्मभगिनी कन्यका सन्ततिस्तथा । प्रजापालो गुरुश्चैव मित्राणि सहजानि तु" । २विद्यादौ च "विद्या शौर्य्यञ्च दाक्ष्यं च बलं धैर्य्यञ्च पञ्चमम् । मित्राणि सहजान्याहुर्वर्त्तयन्ति हि तैर्बुधाः" शुक्रनीतिपरिशिष्टम् ।

**सहजारि** पु० सहजः स्वभावसिद्धः अरिः । सापत्नभ्रातृपितृव्यपुत्रादौ त्रिका० ।

शुक्रनीतिपरिशिष्टे अन्येऽप्युक्ता यथा "स्वभावतो भवन्त्येतेऽरयो दुष्टाश्च एव च । ऋणकारी पिता शत्रुर्माता स्त्री व्यभिचारिणी । आत्मपितृभ्रातरश्च तत्स्त्रीपुत्राश्च शत्रवः । स्नुषा श्वश्रूः सपत्नी च ननान्दा यातरस्तथा । मूर्खः पुत्रः कुवैद्यश्चारश्चकश्च पतिः प्रभुः । चण्डदण्डा प्रजा शत्रुर्दाता धनिकश्च

निशि चन्द्रयोगात् व्यापार४१ आराजत्वमपास्य शम्बत् । पानीयपातः४२ शशिनं विशोध्य सौरेर्विलोमं निशि पूर्ववत् स्यात् । मन्दं कुजात् प्रोह्य रिपु४३र्विलोमं रात्रौ भवेज्जीर्णविहीनपुण्यात् । शौर्यं ४४ विलोमं निशि पूर्ववत् स्यादुपाय द्रव्यं ४५ शनितो विशोध्य । वामं निशि च तु विशोध्य पुण्यात् चयुग् विलोमं निशि तद्दरिद्रम्४६ । सूर्य्योच्चतः सूर्य्यमपास्य नक्तं चन्द्रं तदुच्चात् गुरुता४७ पुरोक्ता । शकार्द्धतः शनिं प्रोह्य स्याज्जलाध्वा४८न्यथा निशि । पुण्याच्चान्द्रिं विशोध्याङ्कि वामं निशि तु बन्धनम्४९ । चन्द्रं सितादपास्योक्ता सदा कन्याख्य५०सुतावत् । पुण्यादर्कमपास्याथ योगो लक्ष्योऽन्यथा निशि । स्वनाथहीनं सहमं तदंशाः स्वीयोदयघ्ना विहृताखिशत्या । तत्सद्मपाको दिवसैर्हि लक्ष्यैः स्यात् तद्दशायां तदसम्भवे वा । अथैषां फलानि । स्वोच्चादिवत्पदगतो यदि लग्नदर्शी वीर्यान्वितः सहमपो यदि नेचतेऽङ्कम् । नासौ बली रविशशिस्थितभेशदर्शी पुंसां तु लग्नपबलस्य विचारणीयम् । पञ्चवर्गीबलेनोनो न स्वस्थानमाश्रितः । अबलोऽयं लग्नदर्शी बली खलेऽस्ति चेत् पदे । स्वस्वामिना शुभखगैः सहितं च दृष्टं स्वामी बली च यदि तत्सहमस्य वृद्धिः । यत्स्वामिना शुभखगैश्च न युक्तदृष्टं तत्सम्भवो न हि भवेदिति चिन्त्यमादौ । अष्टमाधिपतिना युते क्षितं पापदृग्युतमपेत्यशालि तैः । सम्भवेऽपि विलयं प्रयाति तत् तेन जन्मनि पुरेदमीक्ष्यताम् । आदौ जन्मनि सर्वेषां सहमानां बलाबलम् । विमृश्यात्र सम्भवो येषां तानि वर्षे विचारयेत् । सबले पुण्यसहमे धर्मसिद्धिर्धनागमः । शुभस्वामीक्षितयुते व्यत्यये व्यत्ययं विदुः । लग्नात् षष्ठाष्टरिप्फस्थं धर्मभाग्ययशोहरम् । शुभस्वामिदृशा प्रान्ते सुखधर्मादिसम्भवम् । पापयुक् शुभदृष्टं चेदशुभं प्राक् ततः शुभम् । शुभयुक्तं पापदृष्टमादौ शुभमसत् परे । अब्दे पुण्यसहमे शुभं सोऽब्दः शुभावहः । अनिष्टेऽस्मिन् शुभो नेति पुत्रमादौ विचारयेत् । सूतौ षष्ठाष्टरिप्फस्थमब्दे पापक्षतं युतम् । पुत्रधर्मार्थसौख्यघ्नं पत्यौ दग्धे फलं तथा । सहमान्यखिलानीत्थं सूतौ वर्षे च चिन्तयेत् । तान्धारिकविस्तृत्यूनां व्यत्ययादादिशेत् फलम् । यशोऽभिधाने सहमे खलेन युतेक्षिते सद्यशसो विनाशः । प्रापार्जितस्यायशसोऽस्ति लाभो नष्टोजसि स्यात् कुल-

कीर्त्तिनाशः । कार्य्यसिद्धिसहमं युतं शुभैर्दृष्टमुथशिलगं जयप्रदम् । सङ्गरेऽथ शुभपापदृष्टियुक् क्षणतो जय उदीरितो बुधैः । कलिसद्म मित्रखगदृष्टसंयुतं यदि पापमुथशिलगं कलेर्हतिम् । अथ तत्र सौम्यसहितावलोकिते जयमेति मित्रदर्शितः कलिव्ययौ । विवाहसद्माधिपसौम्यदृष्टं युतं शुभैर्मुथशिलं तदाप्तिम् । कुर्य्यात्तदा मित्रखलेतदृष्टं कष्टादथ क्रूरकृतीश्वरैर्न । आशा तदीशश्च षडष्टरिपफविवर्जितः सौम्ययुतेक्षितश्च । स्याद्वाञ्छितार्थाम्बरवाहनादिलाभः खलेक्षायुतितोऽतिदुःखम् । मान्द्याधिपः पापयुतेक्षितश्च पापः स्वयं रोगकरो विचिन्त्यः । चेदित्थशाली स्मृतिपेन मृत्युस्तदा भवेद्धीनबलेऽतिकष्टात् । स्वस्वामिसौम्येक्षणभाजि मान्द्ये नाशे सवीर्येऽष्टषडन्त्यवर्ज्ये । रोगस्तदा नैव भवेद्विमिश्रं युतेक्षिते रुग्भयमस्ति किञ्चित् । अर्थाख्यं शुभनाथदृष्टसहितं द्रव्यागमात् सौख्यदं पापैर्दृष्टयुतं च वित्तविलयं कुर्य्याद्वयो पापयुक् । सद्दृष्टं च शुभेत्थशालसहितं पूर्वं हि तन्नाशनं पश्चादर्थसमुद्भवं च सुसुखं व्यत्यासतो व्यत्ययः । रिपुदृष्ट्या रिपोर्भीतिस्तस्करादेर्धनक्षयः । मित्रदृष्ट्या मित्रयोगाज्जनमानौ यशः सुखम् । सुतस्वामिदृष्टं सुतमात्मजस्य लाभं सुखं यच्छति पुत्रसद्म । पापान्वितं सौम्यखगेत्थशालं प्रागदुःखदं पुत्रसुखाय पश्चात् । पापान्वितं क्रूरकृतेशराफं नाशाय पुत्रस्य गतौजसीशे । सूतौ सुतेशः सहमेश्वरोऽब्दे पुत्रस्य लब्ध्यै शुभमित्रदृष्टः । पितृ सदोक्षितयुतं पतिदृष्टयुक्तं तातस्य यच्छति धनाम्बरमानसौख्यम् । पत्यौ गतौजसि सूतौ खलमूसरीफे नाशः पितुश्चरमके परदेशयानात् । शुभेत्थशाले खलखेटयोगे गदप्रकोपः प्रथमं महान् स्यात् । पश्चात् सुखं विन्दति पूर्णवीर्य्ये नाथे नृपान्मान्ययशोभिवृद्धिः । बन्धनाख्यसहमं युतेक्षितं स्वामिना शुभखगैः सुखाप्तये । राजगौरवयशोवराप्तयः पापवीक्षणयुते पदाच्च्युतिः । शुभाशुभैर्दृष्टयुतं खलैश्चेत् कृतेत्थशालं धनमाननाशम् । पूर्वं विधत्ते चरमे शुभेत्थशाले सुखं वाहनशास्त्रलाभम् । कर्मभावसहमाधिपः शुभैः स्वामिना कमूथशिलो बलान्वितः । हेमवाजिगजभूमिलाभदः पापदृष्टियुतितोऽशुभप्रदः । दग्धा वक्राः कर्मवैकल्यदास्ते युक्ता दृष्टाः शौरिणा ते विशेषात् । राज्यभ्रंशः कोषनाशश्च राजकर्मेशो चेत् मूशरीफो खलेन । उपदेष्टा गुरुस्थानं विद्या शास्त्रं स्मृतिः श्रुतिः । गोष्ठी

जाड्यं बलं सैन्यमङ्गं देहो जलं द्युतिः। गुरुता मण्डले सत्वं गौरवं मानशालिता। निग्रहानुग्रहविभूराजचिह्नादिलाञ्छनम्। माहात्म्यं मन्त्रगाम्भीर्य्यं छविर्वस्त्रादिशालिता। सामर्थ्यं देहजा शक्तिः शौर्य्यं तेजो विनिश्चये। आशेच्छोक्ता मतिर्धर्मे श्रद्धा, बन्धः पराश्रयः। पानीयपतनं दृष्टिर्जलेऽङ्कस्याम्बु मज्जनम्। आधिव्याधी तापमान्द्ये सपिण्डा बान्धवः स्मृताः। सत्यानृतं वणिग्वृत्तिरुपाधानं प्रसवः स्मृतः। दासत्वं परकर्म्मोक्तमन्यत् स्पष्टं स्वनामतः। निरूप्याणि यथायोगं कुलजातिस्वरूपतः। शुभयोगेक्षणात् सौख्यं पत्युर्वीर्य्यानुसारतः। दारिद्र्यरूक्षतिमान्द्यारिकलिघ्नानि विपर्य्ययः। प्रश्नकालेऽपि सकलं विचार्य्यं प्रष्टुरिच्छया। सर्वं शास्त्रप्रयोगोऽत्र चित्रं पश्यन्ति सज्जनाः"।

**सहमरण** न० सह मृतेन पत्या सह एकचितारोहणेन मरणम्। मृतपतिचितारोहणेन तत्सहितमरणे शु०त० "अङ्गिराः "मृते भर्त्तरि या नारी समारोहेद्धुताशनम्। साऽरुन्धतीसमाचारा स्वर्गलोके महीयते। तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे। तावन्त्यब्दानि सा स्वर्गे भर्त्तारं याऽनुगच्छति। व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्। तद्वद्भर्त्तारमादाय तेनैव सह मोदते। मातृकं पैतृकञ्चैव यत्र कन्या प्रदीयते। पुनाति त्रिकुलं नारी भर्त्तारं याऽनुगच्छति। तत्र सा भर्त्तृपरमा परा परमलालसा। क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश"। "ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वापि यो नरः। तं पुनाति च सा नारी इत्याङ्गिरसभाषितम्। साध्वीनामेव नारीणामग्निप्रपतनादृते। नान्यो धर्मो हि विज्ञेयो मृते भर्त्तरि कर्हिचित्" "या नारीत्युपादानात् सहमरणाभावपक्षोऽपि सूचितः नान्यो धर्म इति तु सहमरणस्तुत्यर्थम्। तथाच विष्णुः "मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा" इति। ब्रह्मचर्य्यं मैथुनवर्जनं ताम्बूलादिवर्जनञ्च यथा प्रचेताः "ताम्बूलाभ्यञ्जनञ्चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" स्मृतिः "एकाहारः सदा कार्य्यो न द्वितीयः कदाचन। पर्य्यङ्कशायिनी नारी विधवा पातयेत् पतिम्। गन्धद्रव्यस्य सम्भोगो नैव कार्य्यस्तया पुनः। तर्पणं प्रत्यहं कार्य्यं भर्त्तुः कुशतिलोदकैः"। एतच्च तर्पणं पुत्रपौत्राद्यभावविषयमिति मदनपारिजातः। "वैशाखे कार्त्तिके माघे विशेषनियमञ्चरेत्। स्नानं दानं तीर्थयात्रां विष्णोर्नामग्रहं मुहुः"। तत्र साध्वीमाह हारीतः। "आर्त्तार्त्ते मुदिता हृष्टे प्रोषिता मलिना कृशा। मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता" इति छन्दोगपरिशिष्टीयमिति कल्पतरुः। साध्वीप्रसादेन लोकधारणमप्याह मत्स्यपु० "तस्मात् साध्व्यः स्त्रियः पूज्याः सततं देववज्जनैः। तासां राज्ञ प्रसादेन धार्य्यते च जगत्त्रयम्"। महाभारते "अवमत्य च याः पूर्वं पतिं दुष्टेन चेतसा। वर्त्तन्ते याश्च सततं भर्त्तॄणां प्रतिकूलतः। भर्त्रनुमरणं काले याः कुर्वन्ति तथाविधाः। कामात् क्रोधात् भयात् मोहात् सर्वाः पूता भवन्ति ताः"। अत्र चैहिकब्रह्मप्रपतेर्दोहनिषेधात् जन्मान्तरीणतत्पापवत एव सहमरणेनोद्धारः" शु०त०। ब्रह्मपु० "देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम्। निधायोरसि संशुद्धा प्रविशेज्जातवेदसम्। ऋग्वेदवादात् साध्वी स्त्री न भवेदात्मघातिनी। त्र्यहाशौचे निवृत्ते तु श्राद्धं प्राप्नोति शास्त्रवत्"। ऋग्वेदवादात् "इमा नारीरविधवाः" इत्यादिमन्त्रात्। वृहन्नारदीये "बालापत्याश्च गर्भिण्यो ह्यदृष्टऋतवस्तथा। रजस्वला राजसुते! नारोहन्ति चितां शुभे!"। राजसुते! इति सगरमातुः सम्बोधनम्। वृहस्पतिः "बालसम्वर्द्धनं त्यक्त्वा बालापत्या न गच्छति। रजस्वला सूतिका च रक्षेद्गर्भञ्च गर्भिणी। एवमन्यतश्चेद् बालसम्वर्द्धनं स्यात्तदा तस्या अप्यधिकारः। व्यासः "दिनैकमन्यदेशस्था साध्वी चेत् कृतनिर्णया। न दहेत् स्वामिनं तस्या यावदागमनं भवेत्। भविष्यपुराणे "तृतीयेऽह्नि उदक्याया मृते भर्त्तरि वै द्विजाः। तस्यानुमरणार्थाय स्थापयेदेकरात्रकम्"। तस्य भर्त्तुः। तथा "एकां चितां समासाद्य भर्त्तारं यानुगच्छति। तद्भर्त्तुर्यः क्रियाकर्त्ता स तस्याश्च क्रियाञ्चरेत्। एतच्च पिण्डदानम्"। "एवञ्च अङ्गिरोब्रह्मपुराणवचनालोचनया ब्राह्मण्यादिसकलभार्य्याणां स्वगतभर्त्तृगतफलविशेषार्थिनीनां गर्भवतीबालापत्यादिव्यतिरिक्तानां सहमरणानुमरणयोरधिकारः न चात्र योगसिद्धकरणविरोधान्न तदुक्तफलसिद्धिरिति वाच्यम्। योगसिद्धिकरणे हि "यः पुत्रकामो यः पशुकाम" इत्यादिना यत्नकृतदुपक्रम्य "एकस्मै वा कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो दर्शपौर्णमासौ" इत्युक्तं तत्र तद्विधि-

वाक्येषु निरपेक्षफलश्रुतेः कामनाभेदाच्च कर्त्रैक्यं तत्र सर्वशब्देन प्रकृतवाचिना निरपेक्षाणामेव पुत्रादिफलानां दर्शपौर्णमाससम्बन्धोऽवगते प्रयोगभेदादेव भवतु तत्र तत्तत्फलसिद्धिः तथाच तदधिकरणसिद्धान्तसूत्रं "योगसिद्धिर्वा अर्थस्योत्पत्त्यसंयोगित्वात्" जैमि०। अस्यार्थः वाशब्दः सिद्धान्तद्योतनार्थः सर्वेभ्यो दर्शपौर्णमासावित्यस्यार्थस्य तत्तत्फलस्य योगेन प्रयोगभेदेन सिद्धिः उत्पत्त्यसंयोगित्वात् सर्वशब्दानुकर्षणीयानां यः पुत्रकामो यः पशुकाम इत्याद्युत्पत्तिवाक्ये फलानां युगपदसम्बन्धात्। न चार्थस्य नानाविधस्य उत्पत्त्यसंयोगित्वात् महेन्द्रादितत्तल्लोकवासादीनां एकदोत्पत्त्यसम्भवादिति व्याख्यानं युक्तमिति वाच्यं तडागोत्सर्गादौ एकस्मात् कर्मणः क्रमिकनानाफलोक्तेः"। "तथेहापि सर्वनामपदाभावादार्थवादिकफलानि समुच्चितान्येव कामनाविषयो लाघवात् आर्थवादिकसमुच्चितनानाफलविषयकविधिरप्येक एव कल्प्यते लाघवात् न हि निमित्तसाधारण्ये बाधकं विना नैमित्तिकानां पर्य्यायता सम्भवति वह्निसामीप्ये दाहप्रकाशयोः पर्य्यायताया अदर्शनात्। तस्मात् सकृदनुष्ठितेन कर्मणा यथैकं फलं निष्पाद्यते तथा बाधकं विना फलान्तरमपि विनिगमकाभावात्। ज्योतिष्टोमादेस्तु षष्टिवर्षावच्छिन्नफलश्रुतेः पृथगनुष्ठानादेव पृथक् फलसिद्धिः अन्यथा षष्टिसंख्याद्यभिधानं व्यर्थं स्यात्। यत्र तु कर्मफले कालविशेषो नोक्तस्तत्रापि तत्कर्मसम्पादकानुरूपेण कालविशेषो बोध्यः "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यादिति" न्यायात्। तेषां कर्मणां लोकवत् कृष्यादिवत्। तथाच भवदेवभट्टाः "एकस्मै वा कामायान्ये यज्ञक्रतव आह्रियन्ते" इति संकोच्य "सर्वेभ्यो दर्शपौर्णमासाविति" प्रयोगभेदविधानाद् भवतु तत्र पृथगनुष्ठानसाध्यत्वं ब्रह्मवधप्रायश्चित्ते तथाभूतपृथगनुष्ठानसाध्यत्वप्रतिपादकवचनाभावात् अनेकफलानाञ्च तन्त्रेण दशहरान्यायेन एककामनाविषयतासम्भवात तन्त्रत्वम्" इत्याहुः। हरिनाथोपाध्यायास्तु "इमोत्सर्गफलान्युद्दिश्यैतानि चार्थवादिकफलानि समुच्चितान्येव कामनाविषयः, पुरुषविशेषणत्वस्य कल्प्यत्वात् तथाच मिलितानामेककामनाविषयत्वकल्पना अग्नीषोमयोरिव देवतात्वे लाघवन्यायस्य विशिष्टत्वाद्" इत्याहुः। अथ वा "य एता रात्रीरधीयीत तस्य पितरो घृतकुल्याः मधुकुल्याः वा क्षरन्ते" इत्यत्रापि वैकल्पिकान्वयोपगमे जातेष्टिन्यायभङ्गप्रसङ्गात् लाघवाद्विकल्पेऽष्टदोषाच्च एकस्य कार्य्यस्य नियोज्याकाङ्क्षायां सकलार्थवादोपस्थितफलकामो यथैक एव नियोज्यः स्वीकृतस्तथात्रापीति। अथानुत्पन्नब्रह्महत्यादिपातकायास्तत्पूतत्वरूपफलबाधात् तत्तत्कामनाविरहेणानधिकारः स्यादिति चेत् उक्तयुक्त्या समुच्चितफलसिद्धेरन्यथासिद्धार्थवादबलेन सन्दिग्धपापकामनया एवाधिकारो मङ्गलवत्। सति जन्मान्तरीये तादृशपातके संसर्गादिकृते वा तद्ध्वंसोऽपि जायते असति तु न तथा प्रतियोगिरूपसहकारिविरहात् निर्विघ्नस्य कृतमङ्गलवत्" शु०त० रघु०। "समुच्चितफलककर्मणोऽपि प्रत्येकफलकामनया करणे तत्तत्कामनासहकारेण प्रत्येकफलजनकत्वम्" विधिस्वरूपे गदा०। [त्रि०।

**सहरसा** स्त्री सह रसेन। १मुद्गपर्ण्यां शब्दर० २रसान्विते

**सहर्ष** पु० सह हर्षेण समानो वा हर्षो यत्र। १स्पर्द्धने २हर्षे च त्रिका०। ३हर्षयुक्ते त्रि०।

**सहस्** न० सह—असि। १बले २ज्योतिषि च शब्दर० ३मार्गशीर्षे मासे पु० अमरः। "सहसा सहसा कृतवेपथुरिति" माघः।

**सहसा** अव्य० सह+सो—डा। १हठादित्यर्थे अमरः। २अकस्मादित्यर्थे शब्दर०। ३हासयुते त्रि० "न सहसा सहसा परिरभ्य तम्" माघः।

**सहस्य** पु० सहसे बलाय हितः यत्। पौषमासे अमरः।

**सहस्र** न० समानं हसति हस—र। १दशशतसंख्यायां २बहुसंख्यायां ३तत्संख्यान्विते च हेमच०।

सहस्रसंख्यकाश्च केचित् पदार्थाः कविकल्प० यथा "गङ्गावक्त्रं शेषमूर्द्धा पद्मदलम् रविकरः कार्त्तवीर्य्यबाहुः वेदशाखा शक्रनयनम्"। "तत्र बहुसंख्यात्वे सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपाद्"स्मृतिः। बहुशीर्षादिपरत्वमत्र भाष्यादावुक्तम्। संख्यासंख्येययोः परत्वेऽस्य सर्वदैकवचनत्वम् यथा घटानां सहस्रं सहस्रं घटा इत्यादि आवृत्तौ तु द्वित्वादिकं यथा द्वे सहस्रे त्रीणि सहस्राणीति "चत्वार्य्याहुः सहस्राणि" मनुः।

**सहस्रकर** पु० सहस्रं कराः किरणा अस्य। १सूर्य्ये सहस्रकिरणादयोऽप्यत्र हला०। २अर्कवृक्षे च।

**सहस्रकाण्डा** स्त्री सहस्रं बहवः काण्डा यस्याः। श्वेतदूर्वायां राजनि०।

**सहस्रदंष्ट्र** पुंस्त्री० सहस्रं बहुसंख्या दंष्ट्रा अस्य। पाठीन-

वृक्षे (बोयाब) अमरः स्त्रियां ङीप् । [मत्स्ये शब्दर०

**सहस्रदंष्ट्रिन्** पु० सहस्रं दंष्ट्राः सन्त्यस्य इनि । पाठीन-

**सहस्रधारा** स्त्री सहस्रगुणिता धारा । देवस्नानार्थं बहु-च्छिद्रयन्त्रनिःसृतबहुजलादिधारायाम् ।

**सहस्रनयन** पु० सहस्रं नयनान्यस्य । १इन्द्रे हला० सहस्र-नेत्रादयोऽप्यत्र । २मेचके च ।

**सहस्रपत्त्र** न० सहस्रं बहुसंख्यकानि पत्त्राणि यस्य । १पद्मे अमरः । सहस्रदलादयोऽप्यत्र । २सारसे खगे च ।

**सहस्रपाद्** पु० सहस्रं बहवः पादा अस्य अन्त्यलोपः समा० । १विष्णौ २परमेश्वरे च "सहस्राक्षः सहस्रपाद्" पुरुषसूक्तम् ।

**सहस्रपाद** पु० सहस्रं पादाः किरणाश्चरणा वा सन्त्यस्य अच् । १विष्णौ २सूर्य्ये ३अर्कवृक्षे च । ४कारण्डखगे पुंस्त्री० मेदि० स्त्रियां ङीप् ।

**सहस्रबाहु** पु० सहस्रं बाहवोऽस्य । १बाणासुरे "बाणः पुत्र-शतज्येष्ठो बलेरासीन्महात्मनः । सहस्रबाहुर्वाद्येन ता-ण्डवेऽतोषयत् शिवम्" भाग० १०।६२अ० । २कार्त्तवीर्य्या-र्जुने । ३विष्णौ च "सहस्रबाहो भव विश्वमूर्त्ते" ! गीता०

**सहस्रभुज** पु० सहस्रं बहवो भुजा अस्य । १विष्णौ २कार्त्त-वीर्य्यार्जुने च । ५महालक्ष्म्यां स्त्री "अष्टादशभुजा पूज्या सा सहस्रभुजा रणे" मार्कण्डेयपु० ।

**सहस्रमूर्द्धन्** पु० सहस्रं बहवो मूर्द्धानोऽस्य । १विष्णौ पुरुषसूक्तम् २सहस्रशीर्षादयोऽप्यत्र । [लतायां राजनि० ।

**सहस्रमूली** स्त्री सहस्रं बहूनि मूलान्यस्या ङीप् । द्रवन्ती-

**सहस्रवीर्य्या** स्त्री सहस्रं बहूनि वीर्य्याण्यस्याः । १दूर्व्वायाम् अमरः । २महाशतावर्य्यां च राजनि० । [भेदे राजनि० ।

**सहस्रवेध** न० सहस्रं बहवो वेधा यस्य । १चुक्रे २काञ्जिक-

**सहस्रवेधिन्** न० सहस्रं विध्यति विध-णिनि । १हिङ्गौ २अम्लवेतसे च मेदि० । ३कस्तूर्य्यां पु० राजनि० । ४सहस्रवेधकर्त्तरि त्रि० । [भावप्र० ।

**सहस्रा** स्त्री सहस्रं वनानि सन्त्यस्याः अच् । अम्बष्ठायां

**सहस्रांशु** पु० सहस्रमंशवो यस्य । १सूर्य्ये २अर्कवृक्षे च अमरः

**सहस्राणीक** पु० ६त० संज्ञात्वात् णत्वम् । शतानीकनृपसुते राजभेदे वह्निपु० ।

**सहस्राक्ष** पु० सहस्रमक्षीणि यस्य षच् समा० । १इन्द्रे २मेचके अमरः । ३विष्णौ पुरुषसू० ४ईश्वरे च ।

**सहस्रार** न० सहस्रमारा कोणा यस्य । शिरःस्थिते सुषुम्णा-नाडीमध्यस्थे सहस्रदलकमले तन्त्रसा० ।

**सहस्रिन्** पु० सहस्रं सैन्यानि सन्त्यस्य इनि । १सहस्रसैन्य-

युक्ते नृपादौ अमरः २सहस्रदंष्ट्रपाठीने मत्स्ये च

**सहा** स्त्री सहते सह-अच् । १मुद्गपर्ण्यां २हतकुमार्य्याम् अमरः । ३स्वर्णजीवन्त्यां ४पृथिव्यां ५नखभेषजे मेदि० । ६शुक्लझिण्ट्याम् ७सर्पकङ्काल्यां शब्दर० दण्डोत्पलायां स्वर्णचीर्य्यां रत्नमा० १०नारीपुष्पे राजनि० ।

**सहाचर** पु० सहा शुक्लझिण्टीव आचरति आ+चर-अच् । पीतझिण्ट्यां शब्दर० । [अमरः ।

**सहाय** पु० सह एति इण-अच् । १सहचरे २अनुकूले

**सहायता** स्त्री सहायानां समूहः तस्य भावो वा तल् । १साहाय्ये २सहायसमुदाये च अमरः ।

**सहार** पु० सह एकदैव ऋच्छति दूरं गच्छति सौरभेण ऋ-अच् । १सहकारे आम्रे उणा० । हारोहरणं सह हारेण । २महाप्रलये हारा० । ३हारेण सहिते त्रि० ।

**सहारोग्य** त्रि० सह आरोग्येण । रोगशून्ये हेमच० ।

**सहासन** न० सह आस्यतेऽत्र आस-ल्युट् । एकासने ।

**सहित** त्रि० सम्यक् हितः समोऽन्त्यलोपः । १सम्यग्हिते सह-क्त वा इट् सह+इतच् वा । २समभिव्याहृते सि० कौ० ३हितेन सहिते च । [वोढाप्यत्र स्त्रियां ङीप् ।

**सहितृ** त्रि० सह-तृच् वा इट् । सहनशीले । इडभावे

**सहित्र** न० सह्यतेऽनेन सह-इत्र । सहनसाधने धर्मभेदे ।

**सहिष्णु** त्रि० सह-इष्णुच् । सहनशीले अमरः ।

**सहिष्णुता** स्त्री सहिष्णोर्भावः तल् । १क्षमायाम् २शीतो-ष्णादिविरुद्धधर्मद्वयसहने ।

**सहुरि** पु० सह-उरि । १ सूर्य्ये उणादिकोषः । २अर्कवृक्षे च ।

**सहृदय** त्रि० सह-हृदयेन । १प्रशस्तचित्ते २काव्यार्थभाव-नाधीनपरिपक्वबुद्धौ सा० द० "परिष्कुर्वन्त्वर्थान् सहृद-यधुरीणाः कतिपये" रसगङ्गाधरः ।

**सहृल्लेख** पु० हृदयस्य लेखः कालुष्यकरणं हृल्लासः सह हृल्लेखेन । "विचिकित्सा तु हृदये यस्य यस्मिन् प्रजा-यते । सहृल्लेखन्तु विज्ञेयं पुरीषन्तु स्वभावतः" इत्युक्ते दूषितान्ने मा० त्रि० । २हृल्लेखा सहिते मन्त्रे च तन्त्र०

**सहोक्ति** स्त्री सह उक्तिः । सहकथने १एकोक्तौ सहशब्द-योन्निर्यत्र । २अर्थालङ्कारभेदे अलङ्कारशब्दे ४०७पृ० दृश्यम्

**सहोटज** पुं न० । सहते आतपाद्यत्र सह-अच् कर्म० । मुनीनां पर्णशालायाम् हारा० ।

**सहोढ** पु० सह ऊढया । "या गर्भिणी संस्क्रियते ज्ञाताऽ-ज्ञातापि वाऽसती । वोढुः स गर्भो भवति सहोढ इति चोच्यते" इति मनूक्ते अज्ञातगर्भायाः परिणीतायाः

स्त्रियाः गर्भे । सहोढे गर्भे । जायते जन—ड । सहोढज तज्जाते पुत्रभेदे ।

**सहोदर** न० सह समानमुदरं यस्य । एकगर्भजाते भ्रातरि जटा० १भगिन्यां स्त्री एकपितृजाते २भ्रातर्यपि उपचारात् । “देशे देशे कलत्राणि देशे देशे च बान्धवाः । तन्तु देशं न पश्यामि यत्र भ्राता सहोदरः” रामायणे लक्ष्मणविच्छेदे रामेण तस्य भिन्नोदरजातत्वेऽपि तथोक्तम्

**सहोर** त्रि० सह–ओर । साधौ उणादिकोषः ।

**सह्य** न० सहायस्य भावः यत् नि०। १साहाय्ये “तत्रार्थे सह्यमकरोत्” पुराणम् । सह भावे यत् । २आरोग्ये ३साम्ये ४माधुर्य्ये च शब्दर० । कर्मणि यत् । ५सोढव्ये त्रि० ६पुनाख्यदेशसमीपस्थे पर्वतभेदे पु० मेदि० । स च पर्वतः भारतवर्षस्य कुलाचलभेदः “माहेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारिपात्रश्च सप्तैते कुलाचलाः” मार्कण्डेयपु०५७अ० । स च अपरान्तदेशसन्निकृष्टो लवणसमुद्रात् कियद्दूरस्थश्च तदतिक्रमेणैव रघौ अपरान्तदेशगमनोक्तेः । “असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता । नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् । तस्यानीकैर्विसर्पद्भिः अपरान्तजयोद्यतैः । रामास्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णवः” रघु० । तत्पर्वतपादजा नद्यश्च “तापी पयोष्णी निर्विन्ध्या कावेरी प्रमुखा नदी । गोदावरीभीमरथीकृष्णवेण्वादिकास्तथा । सह्यपादोद्भूता नद्यः स्मृताः पापभयापहाः” विष्णुपु० उक्ताः “गोदावरी भीमरथी कृष्णवेण्यास्तथाऽपरा । तुङ्गभद्रा सुप्रयोगा सह्यात् कावेर्य्यापगाः” मार्कण्डेयपु० ।

**सह्यात्मजा** स्त्री सह्यस्य आत्मजेव तत्प्रभवत्वात् । कावेर्य्यां हेमच० । सह्यस्कन्दे दृश्यम् ।

**सा** स्त्री सो–ड । १गौर्य्यां २लक्ष्म्यां च शब्दर० ।

**सांक्रमिक** त्रि० संक्रमे साधुः गुडा० ठञ् । संक्रमसाधने कुष्ठादिरोगे । वा परसवर्णः । सांक्रमिकरोगाश्च भावप्र० दर्शिता यथा “प्रसङ्गाद्गात्रसंस्पर्शान्निःश्वासात् सहभोजनात् । एकशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात् । कण्डूकुष्ठोपदंशाश्च भूतोन्मादव्रणज्वराः (वसन्त) औपसर्गिकरोगाश्च संक्रामन्ति नरान्नरम् । स्रियते यदि कुष्ठेन पुनर्जातस्य तद्भवेत् । अतो निन्दितरोगोऽयं कुष्ठं कष्टं प्रकीर्त्तितम्” । प्रसङ्गोऽत्र मैथुनम् भावप्र०।

**सांख्य** न०संख्यायतेऽत्र संख्या सम्यग्ज्ञानं साऽस्त्यत्र अण् । १सम्यग्दर्शने “एषा तेऽभिहिता सांख्ये” इति गीता सङ्ख्या मूलप्रकृत्यादिपदार्थानां गणनात् प्रज्ञाद्यण् । २कपिलप्रणीते दर्शनशास्त्रभेदे परसवर्णे साङ्ख्यमप्यत्र ३सांख्योक्तयोगे पु० “पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् । प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्” भाग० १स्क० ३अ० । “सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते” मात्स्ये ३अ० ।

**सांख्यप्रवचन** न० सांख्योक्तमर्थं प्रवक्ति विस्तरेण कथयत्यनेन प्र+वच–करणे ल्युट् । तत्त्वसमासाख्यसूत्रार्थस्य विस्तरेण ज्ञापके १कपिलप्रणीते ।२ पातञ्जलप्रणीते ग्रन्थभेदे यथोक्तं सांख्यप्र०भा० यथा “नन्वेवमपि तत्त्वसमासाख्यसूत्रैः सहास्याः षडध्याय्याः पौनरुक्त्यमिति चेत् । नैवम् । सङ्क्षेपविस्तररूपेणोभयोरप्यपौनरुक्त्यात् । अत एवास्याः षडध्याय्या योगदर्शनस्येव सांख्यप्रवचनसंज्ञा युक्ता । तत्त्वसमासाख्यं हि यत् सङ्क्षिप्तं सांख्यदर्शनं तस्यैव प्रकर्षेणास्यां निर्वचनमिति । विशेषस्त्वयं यत् षडध्याय्यां तत्त्वसमासाख्योक्तार्थविस्तरमात्रं योगदर्शने त्वाभ्युपगमवादप्रतिषिद्धस्यैश्वरस्य निरूपणेन न्यूनतापरिहारोऽपीति” “संख्यां प्रकुर्वते चैव प्रकृतिं च प्रचक्षते । चतुर्विंशति तत्त्वानि तेन सांख्याः प्रकीर्त्तिताः” भा०

**सांग्रामिक** त्रि० संग्रामः प्रयोजनमस्य ठञ् । युद्धसाधने रथादौ । परसवर्णे साङ्ग्रामिक तत्रार्थे ।

**सांघातिक** त्रि० सङ्घाताय हितम् ठञ् । १सङ्घातकारके षड्नाडीचक्रस्थे २जन्मनक्षत्रावधिषोडशनक्षत्रे च “देहद्रविणबन्धूनां नाशः सांघातिके तथा” इति ज्योतिषम् । परसवर्णे साङ्घातिकमपि उभयत्र ।

**सांदृष्टिक** न० संदृष्टं प्रत्यक्षदृष्टमनुसरति ठक् । १दृष्टानुसारिन्यायभेदे संदृष्टं दृष्टमात्रं फलमस्य ठण् । २सद्यःफले त्रि० अमरः । परसवर्णे सान्दृष्टिकमप्युभयत्र ।

**सांयात्रिक** पु० सम्यक् यात्रार्थं द्वीपान्तरगमनाय वहनम् ठञ् । पोतेन वाणिज्यकारके अमरः ।

**सांयुगीन** त्रि० संयुगे युद्धे साधुः प्रतिजना० खञ् । रणकुशले अमरः । [ढक्कादिकोलाहले ।

**सांराविण** न०सम्+रु-भावे णिनि ततः स्वार्थेऽण् । व्याप्ते

**सांवत्सर** पु०संवत्सरं तज्ज्ञानोपयोगिशास्त्रं वेत्ति अधीते वा अण् । ज्योतिर्वेत्तरि १गणके अमरः ।२वर्षसम्बन्धिनि त्रि०

**सांवत्सरिक** त्रि०संवत्सरे भवः ठञ् । प्रतिवर्षं मृताहकर्त्तव्ये श्राद्धभेदे गोभिलः “अत ऊर्द्धं संवत्सरे संवत्सरे प्रेता-

श्राद्धं दद्यात् यस्मिन्नहनि प्रेतः स्यादिति"। "अत ऊर्द्ध्वं सपिण्डीकरणान्तश्राद्धनिमित्तादाद्यसंवत्सरादूर्द्ध्वं संवत्सरे संवत्सरे प्रतिवर्षं यस्मिन्नहनि मृतस्तस्मिन्नहनि मृताय दद्यात्। व्याघ्रः "प्रतिसंवत्सरं चैवमेकोद्दिष्टं मृताहनि"। एतेन सपिण्डीकरणापकर्षे आद्यसंवत्सरेऽपि मृताहे श्राद्धान्तरं कर्त्तव्यमिति मैथिलोक्तं हेयम्। यत आह हेमाद्रिधृतवचनम् "पूर्णे संवत्सरे श्राद्धं षोडशं परिकीर्त्तितम्। तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते"। अत्र पूर्णसंवत्सरक्रियमाणश्राद्धाद् यथोभयनिर्वाहस्तथापकृष्टसपिण्डीकरणश्राद्धादप्युभयनिर्वाहो न पूर्णसंवत्सरे आब्दिकान्तरम्। एवं पञ्चदशश्राद्धेऽप्यूह्यम्। मत्स्यपु० "ततः प्रभृति संक्रान्तावुपरागादिपर्वसु। त्रिपिण्डमाचरेत् श्राद्धमेकोद्दिष्टं मृताहनि"। ततः प्रेतत्वपरिहारात्, त्रिपिण्डं त्रैपुरुषम्। निरुपपदमृताहशब्दः मृतसम्बन्धिमासपक्षतिथिविशेषपरः। उपपदात्तु क्वचित्तिथिविशेषमात्रपरः। यथा मृताहे प्रतिमासं कुर्य्यादित्यादौ। शङ्खः "सपिण्डीकरणादूर्द्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्य्यात् वर्जयित्वा मृताहनि। अमावास्या क्षयो यस्य प्रेतपक्षेऽथ वा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणो विधिः" श्रा०त०। अधिकम् एकोद्दिष्टशब्दे १५२१पृ० पार्वणशब्दे ४३१८पृ० च दृश्यम्।

**सांवादिक** पु० सम्यग्वादायालं ठञ्। १नैयायिके जटा०। संवाददातरि च। [अमरः। २संशयविषये च।

**सांशयिक** त्रि० संशयमापन्नः ठञ्। १सन्दिहाने संशययुक्ते

**सांसारिक** त्रि० संसाराय हितम तत्र भवो वा ठक्। १संसारभवे २संसारोपयोगिनि वा पदार्थे।

**सांसिद्धिक** त्रि० संसिद्धिः स्वभावसिद्धिः तया निर्वृत्तं ठञ्। स्वभावसिद्धे "सांसिद्धिकमुदाहृतम्" भाषाप०।

**साकम्** अव्य० सह अकति अक-अमु सादेशः। १साहित्ये २सहार्थे अमरः। तद्योगे गौणक्रियान्वयिनि तृतीया।

**साकल्य** न० सकलस्य भावः ष्यञ्। १समुदाये। स्वार्थे ष्यञ्। २सकले होमार्थं मिश्रितेषु ३तिलादिद्रव्येषु च।

**साकाङ्क्ष** त्रि० सह आकाङ्क्षया सहस्य सः। १साभिलाषे शाब्दबोधोपयोग्याकाङ्क्षायुक्ते २पदभेदे च। [३सावयवे च।

**साकार** त्रि० सह आकारेण मूर्त्त्या। १मूर्त्तिविशिष्टे देवादौ

**[illegible]** पु० [illegible] इव स्वार्थे अण्। [illegible] ([illegible]) राजनि०।

**साकेत** न० आकित्यते आकेतः सह आकेतेन। अयोध्यापुरे शब्दर० "जनस्य साकेतनिवासिनस्तौ" इति रघुः।

**साक्तुक** पु० सक्तवे हितः गुडा० ठञ्। १यवे त्रिका०। सक्तूनां समाहारः तस्येदम् वा ठञ्। २सक्तुसमूहे न० ३तत्सम्बन्धिनि च त्रि०।

**साक्षात्** अव्य० सह अक्षति अक्ष-आति सादेशः, सह अक्ष सतति अत-क्विप् वा। १लौकिकप्रत्यक्षे २तुल्ये च अमरः साक्षादा० त्वि वा उप०समासः। साक्षात्कृत्य कृत्वा वा। ३तद्रूपे चैतन्ये च "यत्साक्षादपरोक्षाद्ब्रह्म" श्रुतिः।

**साक्षात्कार** पु० साक्षात्+कृ-घञ् साक्षादि० उप०। लौकिकसन्निकर्षजन्ये प्रत्यक्षे।

**साक्षिन्** त्रि० सह-अक्षि अस्य इनि "साक्षाद् द्रष्टरि" पा० इनि वा नि०। १साक्षाद्द्रष्टरि। स्त्रियां ङीप्। २परमेश्वरे पु० "साक्षी चेताः केवलोनिर्गुणश्च" श्रुतिः। अयमेव साक्षिचैतन्यत्वेन वेदान्तपरिभाषादौ स्वीकृतोऽनुपदं वक्ष्यते। व्यवहारे साक्षिलक्षणादिकं वीर०मि० निरूपितं यथा "तत्र प्रमाणभेदप्रमाणविषयव्यवस्थे क्रियापादप्रस्तावे विविक्ते। अधुना साक्षिप्रमाणस्यावान्तरभेदः प्रस्तूयते। तत्र साक्षिस्वरूपमाह मनुः "समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिध्यति"। समक्षदर्शनस्य साक्ष्यहेतुत्वं पाणिनिरपि स्मरति। "साक्षाद् द्रष्टरि संज्ञायामिति"। तत्तु व्युत्पत्तिमात्रमव्यापकत्वात्। श्रुतसाक्ष्यादीनामपि साक्षित्वव्यवहारविषयत्वात्। अतएव श्रवणादित्युपलक्षणं प्रमाणमात्रस्य, विवादविषयप्रमाता साक्षीति विवक्षितम्। साक्षिप्रयोजनमाह नारदः "सन्दिग्धेषु तु कार्य्येषु द्वयोर्विवदमानयोः। दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्शनम्" इति। दृष्टश्रुताभ्यामनुभूतत्वादित्यर्थः। यद्वा दृष्टत्वात् श्रुतत्वादनुभूतत्वाच्चेत्यर्थः। अनुभूतत्वादित्यनेन च गोबलीवर्दन्यायेन प्रमाणान्तरजन्योऽनुभवो गृह्यते। व्यक्तिदर्शनं विवेकज्ञानम्। कात्यायनः "अर्थिप्रत्यर्थिसान्निध्यादनुभूतन्तु यद्भवेत्। तद्ग्राह्यं साक्षिणो वाक्यमन्यथा न बृहस्पतिः" अर्थिप्रत्यर्थिसान्निध्यादनुभूतमिति मुख्यः कल्पः। तदसान्निध्येऽपि श्रवणादिना साक्ष्यस्य वचनान्तरैरनुमतत्वात्। तत्र साक्षिभेदनिरूपणे व्यक्तीभविष्यति। गौतमः "विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्था"। स च साक्षी प्रथमं द्विविधः कृतोऽकृतश्च। साक्षित्वेनार्थिप्रत्यर्थिभ्यां स्वरूपतः कृतः। अनिरूपितोऽकृतः। पुनश्च कृतस्य

